।। श्रीः ।।

चौखम्बा आयुर्विज्ञान ग्रन्थमाला

151

# वैदिकवाङ्मयस्येतिहासः


लेखक :

**डॉ. जगदीशचन्द्रमिश्रः**

साहित्याचार्यः, व्या. शा.

एम. ए. (द्वितय) पी-एच. डी., डिप्-इन-एड्-

सम्पादकः

**डॉ. ब्रह्मानन्द त्रिपाठी**

साहित्य-आयुर्वेद-आचार्यः

एम. ए., पी-एच. डी., डी. एस-सी. एवाइ.





**चौखम्बा सुरभारती प्रकाशन**

वाराणसी

**वैदिकवाङ्मयस्येतिहासः–आचार्य जगदीशचन्द्रमिश्र**

**ISBN : 978-93-83721-73-3**

प्रकाशक :
**चौखम्बा सुरभारती प्रकाशन**
(भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक)
के 37/117 गोपाल मन्दिर लेन, पोस्ट बॉक्स न. 1129
वाराणसी 221001
दूरभाष : (0542) 2335263, 2335264
e-mail : csp_naveen@yahoo.co.in
website : www.chaukhamba.co.in



संस्करण : 2018
₹ 180

वितरक :
**चौखम्बा पब्लिशिंग हाउस**
4697/2 ग्राउण्ड फ्लोर, गली न. 21-ए
अंसारी रोड़, दरियागंज
नई दिल्ली 110002
दूरभाष : (011) 23286537, (मो.) 09811104365
e-mail : chaukhambapublishinghouse@gmail.com

*

अन्य प्राप्तिस्थान :
**चौखम्बा संस्कृत प्रतिष्ठान**
38 यू. ए. बंगलो रोड़, जवाहर नगर
पोस्ट बॉक्स न. 2113
दिल्ली 110007

*

**चौखम्बा विद्याभवन**
चौक (बैंक ऑफ बड़ोदा भवन के पीछे)
पोस्ट बॉक्स न. 1069
वाराणसी 221001

मुद्रक :
डीलक्स ऑफसेट प्रिंटर्स, दिल्ली

THE

CHAUKHAMBA SURBHARATI GRANTHAMALA

151



# VAIDIKAVĀṄMAYASYETIHĀSA

*By*


Dr. Jagadish Chandra Mishra

Sahityacharya, V. S.

*M. A. (Double), Ph. D., Dip. in Ed.*


Edited by


Dr. Brahmananda Tripathi

Sahityacharya, Ayurvedacharya

M. A., Ph. D., D. Sc. A.





CHAUKHAMBA SURBHARATI PRAKASHAN

VARANASI

# उपोद्घातः

वैदिकवाङ्मयं समुद्रवदपारमगाधं हिमालयवत् ससारञ्च अत एव देवैरपि समादृतं सद्विराजते । तद्यथा—**'देवाधीनं जगत्सर्वं मन्त्राधीनाश्च देवताः'** । इत्यभियुक्तोक्त्या स्पष्टीभवति यत् सर्वेऽपि वेदा मन्त्ररूपा एव । यज्ञाद्यवसरेषु ब्राह्मणप्रयुक्तैस्तैस्तैर्मन्त्रैरावाहनादिविधिना आवाहिता देवास्तत्र तत्र आयान्त्यैवात्र श्रुतिरेव प्रमाणम् । तदहो ! आश्चर्यकरः प्रभावो वेदोक्तमन्त्राणाम् । एतेषां विलक्षणप्रभावान् दृष्ट्वा विचार्य संश्रुत्य च भारतीयैः किं वा वैदेशिकैश्च विद्वद्भिरेतेषां संरक्षणाय सम्यग्ज्ञानाय च समये-समये यद् यत् कृतं तेन वयं तेषामाजीवनमधमर्णभावमानतकन्धरेण वहामः । सद्गुणेषु सर्वेषां पक्षपातो भवत्येव । अत एव वैदिकवाङ्मयस्य संरक्षणे समुपबृंहणे च पाश्चात्यविपश्चितां यावान् श्रमो दृष्टिपथमायाति न तावान् भारतीयानाम् ।

प्राचीनासु भारतीयभाषासु यथा संस्कृतं सर्वातिशायि वर्वर्ति तथैव सर्वेषु वाङ्मयेषु वैदिकवाङ्मयं प्रामाणिकरूपेण स्वीक्रियते जोघुष्यते च सर्वैरपि सुधीभिः । सर्वत्र **'वेदाः प्रमाणम्'** इति मतं समानतयाङ्गीक्रियते । सर्वेऽपि मतावलम्बिनः स्वं मतं वेदोक्तैः प्रमाणैः परिपुष्टतां गमयित्वा स्वां कृतिं धन्यां, स्वं च धन्यं कलयन्ति, कथमियं वार्ता ? विषयेऽस्मिन् न केवलं भारतीया एव श्रद्धालवः, अपि तु पाश्चात्या अपि विद्वांसः श्रद्धावद्धावधाना दृश्यन्ते । नूनमत्र किमपि एतादृशं वैशिष्ट्यं वरीवृतीति येनास्य सम्मानं सर्वेऽपि समानरूपेण विदधति ।

भारतीयानामस्माकं समस्तं साहित्यं वेदैरेव परिबृंहितं सदेव महन्महत्त्वमावहति, महर्षिः बादरायणिः अत एव वेदव्यासनाम्ना सम्मानभागभवत् । यत्तेन महात्मना वेदानामेव व्याख्यानमष्टादशपुराणानां रूपेण विहितम् । मीमांसाशास्त्रे पुराणानां महन्महत्त्वं वर्णितमस्ति । **'भारतं पञ्चमो वेदः'** । इत्याकारिकासूक्तिस्तु विजृम्भत एव । यद्यपि भारतीया विद्वांसो वेदानामपौरुषेयत्वं साटोपं स्वीकुर्वन्ति तथापि वेदानां मन्त्राः तेषामुपदेशाश्च अपौरुषेयत्वेऽपि ईश्वरोक्तत्वादाप्तप्रमाणत्वेन स्वीक्रियन्त एव । अन्यत्रापि **'वेदो नित्यमधीयतां तदुदितं कर्मस्वनुष्ठीयताम्'** । इत्यादीनि वचांसि वेदोक्तीनां प्रामाण्यमेव साधयन्ति ।

अपरत्रापि दृगुन्मेषोविधीयतां यद्यपि वेदाश्चत्वार एव केचित् वेदत्रयीमपि स्वीकुर्वन्ति । इत्याकारकविवादस्य विचारो सुधिया ग्रन्थकर्त्रा विस्तृतरूपेण यथास्थानं समुपन्यस्तः । तथापि आयुर्वेदः, धनुर्वेदः, गान्धर्ववेदः, इत्यादि वेदानां गणना केवलं तेषां तेषां विषयाणां प्रामाणिकतां स्वीकारणार्थं तत् तद् ग्रन्थकर्तृभिः महर्षिभिः कृतेति निश्चप्रचम् ।

यद्यपि ग्रन्थेऽस्मिन् विषयस्य सम्यगवबोधाय ग्रन्थकर्त्रा बहुप्रयतितं तथापि याः काश्चन त्रुटयोऽवशिष्टाः स्युः ताः सर्वा अपि अग्रिमे संस्करणे दूरीभविष्यन्तीति नात्र सन्देहावसरः। उच्चकक्षासु संस्कृतभाषामाश्रित्य अध्ययनतत्परेभ्यश्छात्रेभ्य एवम्प्रकारेण क्रमबद्धलिखितस्य 'वैदिकवाङ्मयस्येतिहासस्य' नूनमितः पूर्वमभावः कष्टङ्कर आसीदेव। ग्रन्थमिमं विलिख्य विदुषा लेखकेन पिपठिषूणां महानुपकारः कृतः। प्रकाशकमहोदयैश्च महद्व्ययभारमङ्गीकृत्य ग्रन्थस्यास्य प्रकाशनं कृतमिति उभावपि धन्यवादार्हावित्युदीर्य विरम्यते विस्तरभयात्।

—डॉ० ब्रह्मानन्दत्रिपाठी

# प्राग्व्याहृतिः

विविधविचारसंवलितालङ्कारशास्त्रस्येतिहासप्रकाशनसमनन्तरमेवायमपरश्चेतिहासग्रन्थः चौखम्बासुरभारतीग्रन्थमालायाः सुरभारतीसुमनत्वेन प्रकाशमानीयते वेदशास्त्रप्रणयिजनमानसामोदी वैदिकवाङ्मयस्येतिहासो नाम ।

विदन्त्येव सर्वे विद्वांसो यद् वेदा एव भारतवर्षस्य भारतीयसंस्कृतेश्च मुख्यमवलम्बनमिति । ते च भगवता कृष्णद्वैपायनेन शिष्याणां ग्रहणसौकर्य्याय ऋग्यजुःसामाथर्वभेदेन चतुर्धा विभज्य यथाक्रमं पैलवैशम्पायनजैमिनिसुमन्तुभ्यः प्रदत्ताः । कालक्रमेण शिष्योपशिष्यैर्गृहीतास्ते बहुशाखात्वमापन्नाः । तदुक्तं व्याकरणमहाभाष्ये पस्पशाह्निके भगवता पतञ्जलिना—

**'एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः ।**
**एकविंशतिधाबह्वृचं, नवधा आथर्वणो वेदः ।।' इति ।।**

तत्रायं वेदः अस्माकं संस्कृत्या मूलस्रोतमस्ति । विश्वस्यागमेषु वेदाः प्राचीनतमाः, अत एव नृशास्त्रज्ञानां, मानवप्रकृतेरध्येतॄणां जगतो विभिन्नेषु धर्मेषु सश्रद्धं प्रवर्त्तमानानाञ्च जनानां सानुरागविषया इमे वेदा इति सर्वेषां विदितचरम् । ये जना वेदानामभ्यन्तरे सांसारिकसमस्तैश्वर्याणामन्वेषणमक्लान्तपरिश्रमेण कुर्वन्ति, ते न जानन्ति वेद-ज्ञानयोर्मध्येऽन्तरमस्ति । विद्-धातौ तथा ज्ञा-धातौ सामान्यतः एकत्वे सत्यपि मूलतः पार्थक्यमस्ति । भौतिकविद्यायामभिज्ञताया नामास्ति ज्ञानं तथा अध्यात्मशास्त्रस्य तथ्यानामवगत्या नामास्ति वेद इति । एकस्य लक्ष्यं बाह्यविषयाणामपरस्याभ्यन्तर विषयाणां विश्लेषणमस्ति । पार्थक्यमिदं संस्कृतेन सम्बद्धानेकयूरोपीयभाषागतशब्दानामनुशीलनेनापि स्पष्टतो ज्ञायते जर्मनभाषायां द्वौ सम्बद्धौ धातू स्तः—केन्नेन (Kennon) तथा वाइसेन ( Weisen ) । आङ्ग्लभाषायामपि द्वौ सम्बद्धौ शब्दौ स्तः—नालेज ( Knowledge ) तथा विजडम (Wisdom) । अनयोः 'केन्नेन' तथा 'नालेज' इत्यनयोः शब्दयोः साक्षात्सम्बन्धमस्ति संस्कृतस्य 'ज्ञा'-धातुना सह तथा 'वाइसेज' एवं 'विजडम' इत्यनयोः शब्दयोः सम्बन्धमस्ति 'विद्'धातुना सह । अतः 'वेद' इत्यस्य शब्दस्य मौलिकतात्पर्यमस्ति अध्यात्मविषयाणामन्वेषणम् । सायणाचार्यानुसारेण वेदस्य वेदत्वं प्रत्यक्षेणानुमानेन चागम्योपायस्य बोधने एवाऽस्ति—

**'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्धयते ।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।'**

विश्वस्याद्यो ग्रन्थः, भारतीयधर्मस्य कमनीयकल्पद्रुमः, आर्यसंस्कृत्याः प्राणभूतोऽयं वेद इति । वेदानां रूपस्य रहस्यस्य च, स्वरूपस्य सिद्धान्तस्य च ज्ञानं

भारतीयेभ्यो नितान्तमपेक्षितमावश्यकञ्चेति । तेन हि भारतवर्ष पावनाः पठनीयाश्चेमे ग्रन्था आलोच्यविषयापेक्षया अर्हणीयतामेवाधिकामाप्तवन्तः । रॉथ-मैक्समूलर-वेवर-आउफ्रेवट-गेल्डनर-स्टीवेन्सन-श्रोदर-वेनफी-ह्विटनी-ब्लूमफील्ड-गार्बे-लिण्डनर-वर्नेल-एर्टल-कैलेण्ड-गास्ट्रा-हिलेब्राण्ट-वनाउएरो-विल्सन-ओल्डनवर्ग-कीथ-लेनमेन-ग्रिफिथ-एगलिंग-मैक्डोनलप्रभृतयोऽनेके पाश्चात्यविपश्चितोऽप्येतेषां सम्यगध्ययनाय समाकृष्टा इव प्रवृत्ताः सत्यप्यन्तरायबाहुल्ये तैरधीत्य वेदान् अस्माकं पूर्वजैरारण्यकैर्महर्षिभिर्मुनिभिश्चादिकालादारभ्य दृष्टान् सुरक्षितांश्च वेदार्थानवगन्तुं प्रयतितम् । पाश्चात्या इमे विद्वांसोऽधीत्येमं वेदराशिं यद् गभीरमुल्लिखितवन्तस्तदर्थं नूनं ते श्लाघनीयाः कृतज्ञतया ग्राह्याश्चेति ।

वस्तुतो वैदिकवाङ्मयस्य सर्वेष्वपि क्षेत्रेषु स्तुत्यानि कार्याणि कुर्वाणा विपश्चितस्तेऽवलोक्यन्ते । वैदिकधर्मस्य धर्मान्तरेण तुलनां विधाय ते तुलनाप्रधानवैदिकधर्मविषयकान् ग्रन्थान् बहून् लिखितवन्तः । अस्मिन् क्षेत्रे मैक्समूलर-मैक्डोनल-हिलेब्राण्टमहाभागानां नामानि सन्त्युल्लेखनीयानि । हिलेब्राण्टस्य 'वेदिशे माथोलोजी' मैक्डोनलस्य च 'वैदिकमाथोलोजी' व्यापकत्वात् प्रामाणिकत्वाच्चोपादेये स्तः । फ्रेञ्चविदुषाञ्च श्रौतसम्बन्धिनोऽनेके ग्रन्था दृश्यन्ते ।

भारतीयानां हिन्दूनां पावनानामेतेषां ग्रन्थानामध्ययनानुसन्धानफलस्वरूपमेतैः पाश्चात्यैर्विद्वद्भिर्यत् सामान्यतया स्वीकृतं तत्रैतदतिरिक्तं नास्त्यन्यत् किञ्चिद्भ्रामकं यदथर्ववेदः केवलं वशीकरणादियातुकर्मणामेव वेदः शेषाश्च स्तुतिपरा यज्ञपराश्चेति । मनीषिणां विमर्शार्थं समुपस्थापिते प्रस्तुतेऽस्मिन् वैदिकवाङ्मयस्येतिहासे मदीयोऽयमेव प्रयासो यन्नायं निष्कर्षो निकषेण निर्घर्षितो रुचिरोऽङ्गीकार्यश्च ति ति, प्रत्युत सारतः सिद्धान्ततश्चाथर्ववेदोऽपि शेषैरन्यवेदैः तुल्य एवेति । तत्र सर्वेषां वेदानां सम्यगध्ययनेनालोचनेन चेदं स्पष्टमवगम्यते यत्परम्परया अङ्गीकृता अथर्ववेदस्यैव केवलार्था इति ।

चत्वारोऽपि वेदाः साधारण्येन मन्त्रब्राह्मणयोर्द्वयोर्भागयोर्विभक्ताः । वेदपदवाच्याः संहितारूपा एव वेदा इत्यपि नास्ति भारतीयपरम्परानुरूपो न्याय्यश्च विचारः । तत्र ऋग्वेदस्य, सामवेदस्य, शुक्लयजुर्वेदस्य, अथर्वणश्च मन्त्रभागाः संहितापदवाच्याः, किन्तु कृष्णे यजुर्वेदे संहितायामथवा ब्राह्मणे मन्त्राः ब्राह्मणानीत्येतावुभावपि सम्मिलितौ वर्त्तेते । प्रस्तुतेऽस्मिन्नितिहासेऽत एव मया संहिता ब्राह्मणमित्युभावप्याश्रित्य निदर्शनानि प्रदर्शितानि ।

अथायमुपक्रम्यते संस्कृतभाषासन्दृब्धः मुद्रयित्वा प्रकाशयितुं वैदिकवाङ्मयस्यायमितिहासः । यद्यपि बहोः कालादेवायं विषयः सर्वत्र पठनपाठनयोरपेक्ष्यते, एम. ए., आचार्यादिषु बह्वीषु च परीक्षासु पाठ्यत्वेन निर्धारितोऽस्ति तथाप्येतावता कालेनाप्यस्य ग्रन्थस्यैकमपि संस्कृतसंस्करणं न समुपलभ्यते, यथा काम्यते । किञ्च नाविदितचरमेतद् विद्वदग्रेसराणां यदस्य वेदशास्त्रस्य भाषान्त-

रेष्वनेका इतिहासग्रन्थाः बहुभिः सुप्रसिद्धपण्डितधौरेयैः प्राणायिषत, लोके च प्रसिद्धिं गताः । आङ्ग्लभाषायामपि वैदिकसाहित्यस्येतिहासविषये सुविदितास्त्रि-चतुरा ग्रन्थाः प्राप्यन्ते । डॉ० वेबरोऽप्येतस्मिन् विषये स्वां लेखिनीं प्रयुयोज । एतद्विषयकं यं ग्रन्थं स अजग्रन्थत् स विद्वज्जगति मान्योऽस्ति । 'हिस्ट्री आफ एनसिएण्ट संस्कृत लिटरेचर' ग्रन्थो मैक्समूलरस्य श्रौतग्रन्थानां गम्भीरमनु-शीलनं प्रकटीकरोति । मैक्डोनलस्य विण्टरनित्सस्य च एतद्विषयका ग्रन्थाः सर्वविदिताः सन्त्येव । एतदतिरिक्ता भाषान्तरेष्वपि बहवः प्रसिद्धा ग्रन्थाः सन्ति परं ते केचनातिविस्तृताः केचन चातिसंक्षिप्ता इति कृत्वा कोमलमतीनां विद्यार्थिनां नालं सुखबोधायेति, अपरञ्च छात्राः इतिहासविषयकप्रश्नानामुत्त-राणि संस्कृते दित्सन्ति पठन्ति च ते इतिहासमन्यस्यां भाषायाम् । परीक्षाभवने ते स्वकीयान् विचारान् यथावत् संस्कृते प्रकाशयितुं न क्षमन्ते । अपि चान्य-भाषायां लिखितेषु वैदिकसाहित्येतिहासपुस्तकेषु विचारा अतिविस्तृततया शैल्या प्रकटीकृताः, न च शक्नुवन्ति साधारणच्छात्राः विस्तृततयोक्तान् अर्थान् स्वयं सङ्क्षेप्तुम्, अत एव मया लिखितोऽयं वैदिकवाङ्मयस्येतिहासः ।

यद्यपि भाषान्तरेषु वैदिकसाहित्यस्य प्राचीना नवीनाश्च बहवः सुप्रसिद्धा इतिहासग्रन्थाः प्रकाशिताः सन्ति तथापि न ते साम्प्रतिकानां स्वल्पमतीनां श्रमपराङ्मुखानां विद्यार्थिनां बोधसौकर्याय तादृशमुपकारमावहन्तीति मन्यमा-नोऽहं तदुद्देश्यप्रेरितो भूत्वा प्राचीनग्रन्थेभ्यः सारमाहृत्य संस्कृतभाषायामभि-नवोऽयं ग्रन्थो निर्मितवानस्मि ।

वैदिकसाहित्यस्येतिहासलेखने यन्मया पदं न्यधायि तन्मम साहसमात्रम् । मयाऽत्र ग्रन्थे प्रथमं वेदस्य तदङ्गसमुदयस्य च परिचयं प्रदाय तदनन्तरं तेषां विवरणानि परिचायितानि । ऐतिहासिकपरिचयप्रदानकाले मया तदेव वस्तु लिखितं यद्वस्तु स्वकीये 'वैदिक साहित्य और संस्कृति' नामके ग्रन्थे पद्मभूषण-आचार्य-बलदेवोपाध्यायेन प्रामाणिकमिति स्वीकृतम् । इदं सम्भवति यन्मया समयादिनिरूपणे विषयवस्तुसङ्कलने च पाश्चात्येतिहासकारा अनुसृताः स्युः । अत्रोपायान्तराभावान्मया तेऽनुसृताः, अन्यथा विषयवस्तुविश्लेषणे मया स्वात्मैव साक्षीकृत इति । अस्य वागुम्फनं सरलपदविन्यासमूलकमिति छात्रबोधोप-योगि । विषयप्रतिपादनसरणिश्च छात्रोपकारिण्यपि सामान्यतो जिज्ञासुजन-शङ्कापनोदक्षमा भविष्यतीत्याशासे । येषामितिहासकृतां ग्रन्थानहं पर्यालोचयंस्ते सर्वेऽपि मया धन्यवादैः सत्क्रियन्ते । सन्त्विदं यद्यपि ते पथप्रदर्शका नाभविष्यं-स्तदेतिहासलेखनकार्यमिदं ममासाध्यमेवाभविष्यत् । तत्रापि विशिष्य धन्य-वादार्हाः पद्मभूषण-आचार्यश्री पं० बलदेवोपाध्यायाः, येषां 'वैदिक साहित्य और संस्कृति' नामकग्रन्थो ममादर्शः सर्वत्राऽऽसीत् ।

अतीवसावधानतया मया यथामति सर्वमस्य विषयजातं संशोध्य समालोच्य लिखितञ्च तथापि मम बुद्धेरपाटवाद् वा दृष्टिशक्तेः क्षीणतया वा नाहं प्रतिज्ञातुमुत्सहे यदिदं संस्करणमन्येभ्यः संस्करणेभ्यो विशिष्टतरं सञ्जातमिति परमेतद् वक्तुं प्रभवामि यदत्र यास्त्रुटयः समुपलप्स्यन्ते ताः पुनरन्यस्मिन् संस्करणे न स्थास्यन्तीति भ्रान्तेः पुरुषधर्मत्वात् स्खलनं सर्वत्रैव सम्भवदपि 'क्षमामात्रसारा दोषज्ञास्तादृशं स्खलनं सोढुं सर्वदा सन्नद्धा एव सन्ति' इति विचारेण समाश्वस्तं मम चेतः । तथापि भूयांसि स्खलितानि संशयानो महाशयांस्तान्यपोहितुमूहकुशलान् सङ्ख्यावतो विदग्धमूर्धन्यानभ्यर्थये ।

स चायं विशदीकृतो मुद्रणाय वितीर्णसर्वाधिकारो वैदिकवाङ्मयस्येतिहासः सर्वविधसंस्कृतपुस्तकमुद्रणानवरतप्रबद्धपरिकरेण वाराणसेयचौखम्बासुरभारतीपुस्तकालयाधिपतिना श्रेष्ठिना श्रीनवनीतदासगुप्तेन प्रकाशित इति तदीयेनाप्युपकारभरेण प्रेर्यमाणस्तस्मै शतमाशिषो वितरामीति—

गंगादशहरा
ई० २४-६-८८

निवेदयते
जगदीशचन्द्रः

# विषयानुक्रमणिका

---

॥ श्रीः ॥

# वैदिकवाङ्मयस्येतिहासः

## प्रथमोऽध्यायः

### विषय-प्रवेशः

अहिर्बुध्न्याय देवाय ब्रध्नाय परमात्मने ।
ब्राह्मचै च वक्रतुण्डाय विष्टरश्रवसे नमः ॥ १ ॥
वन्दे विघ्नहरं नित्यं वक्रतुण्डं विनायकम् ।
गणनाथमनाथस्य बन्धुमेकञ्च तुन्दिलम् ॥ २ ॥
शब्दब्रह्मस्वरूपिण्यै शब्दानां स्फोटमूर्त्तये ।
वाग्विभूत्यै स्वयम्भूत्यै सरस्वत्यै नमो नमः ॥ ३ ॥
नमो नित्यं महेशानं विधि-विष्णुसमर्चितम् ।
गौरीगजाननोपेतं शङ्करं लोकशङ्करम् ॥ ४ ॥
वेदवेदाङ्गतत्त्वानां नित्यमर्थावबोधिनीम् ।
वन्दे वाङ्मनसातीतां मातरं लोकमातरम् ॥ ५ ॥
वाणीविनायकौ नत्वा जगदीशेन यत्नतः ।
वैदिकवाङ्मयस्यायमितिहासो विरच्यते ॥ ६ ॥
क्वाऽसौ गभीरजलधेरिव वेदशास्त्रं
क्वाऽप्यस्ति मन्दधिषणस्य ममैष यत्नः ।
देवं यथा यजति विज्ञजनः सुमन्त्रै-
रज्ञस्तथैव भजते किल कीर्त्तनेन ॥ ७ ॥
भाषान्तरेषु विषयेऽस्मिन् सन्ति ग्रन्थारनेकशः ।
क्षमन्तां सुधयश्चैतन्मदीयमपि चापलम् ॥ ८ ॥

संस्कृतसाहित्ये वैदिकवाङ्मयस्य वैशिष्टचं को न जानाति । अत्युक्तिप्रतिष्ठा वैदिकवाङ्मयस्य विभूतिः इति तावद् वक्तुं न शक्यम् । अस्य हि वाङ्मयस्य वयोवर्षिष्ठत्वेन, महामहीखण्डमण्डलव्यापित्वेन, दुष्परिच्छेदेन परिमाणेन, निरतिशयेन वैभवेन, अनन्यतुल्येन सौन्दर्यप्रकर्षेण, संस्कृतीति वृत्तोपयोगिना, गुणेन च महति मौलिके पुरातने च वाङ्मयेऽस्मिन् अस्मदभिनिवेशः सर्वथा खलु सम-

र्थ्यते । न च केवलम् एतावन्मात्रम् । निमित्तान्तराण्यपि तावत् वैदिकवाङ्मयाध्ययने विद्याविलासिनां विशिष्टामभिरुचिं सञ्जनयन्ति ।

संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते । भारतीयदर्शनस्य धर्मस्य च जीवनं वेदा एव सन्ति । वैदिकवाङ्मयस्यानाद्यपौरुषेयमन्त्रब्राह्मणात्मकवेदवच्चरणाश्रितसकलसच्छास्त्रतात्पर्यस्य च प्राचीनतमत्वे, सर्वभाषासाहित्यानां दैशिकवैदेशिकानां मूलभूतत्वेऽत्यन्तमुपादेयत्वे च नाऽस्ति लेशतोऽपि सन्देहो भाषातत्त्वविदां विद्वन्मूर्धन्यानाम् । अस्यैतिहासिकाध्ययनस्य परमावश्यकत्वम्प्रतिक्षणमनुभवन्ति भाषातत्त्वविदो विद्वांसः । भारतीयानामनुपममक्षयं धनमयमस्त्यस्येतिहासः ।

आर्याणां सभ्यतासंस्कृतिश्च वेदानेवाधारीकृत्य विराजते । वेदाः न केवलं भारतीयैरपि तु वैदेशिकैः विद्वद्भिरपि श्रद्धयाऽवलोकिताः सन्ति । सत्यानुसन्धातृभिर्महर्षिभिरनुभूतस्य परमतत्त्वस्य बोधयितारो भूत्वा भुवि ते विभान्ति । भारतीयपरम्परानुसारेण वेदास्त्वपौरुषेयाः सन्त्येव । अतिप्राचीनकालादेवेष्टप्राप्तिरनिष्टपरिहृतेश्चालौकिका उपायास्तेभ्य एव विदिता जायन्ते । वेदेषु ज्ञान-विज्ञान-धर्म-दर्शन-सदाचार-संस्कृति-नैतिक-सामाजिक-राजनैतिकप्रभृतीनां जीवनोपयोगिविषयाणां सन्निवेशोऽस्ति । यत्र प्रत्यक्षस्य न चानुमानस्य प्रवेशस्तत्रापि ते प्रविशन्ति । स्मृतिपुराणादीनां मान्यत्वं तदनुगामित्वम् एवावतिष्ठते । एतान् विश्वकोष एव मन्यन्ते विद्वांसः । वेदास्त्वस्माकं श्रेय-प्रेयप्रभृतीनामपि साधनमस्ति । प्राचीनानि धर्म-समाज-व्यवहारप्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते । वेदास्तु धर्ममूलतयैव सर्वथा समादृताः सन्ति । मनुना प्रोक्तञ्च—

**'वेदोऽखिलो धर्ममूलम्' तथा 'वेदाद्धर्मो हि निर्बभौ ।'**

एवञ्च महाभाष्यकृता पतञ्जलिना ब्राह्मणेन षडङ्गवेदाध्ययनस्यानिवार्यत्वमुच्यतेस्म । तथाहि—

**'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च ।'**

वेदेष्वध्यात्मदर्शनस्योत्कृष्टभाण्डागारं निक्षिप्तमस्ति । किञ्च तेषां प्रतिपादनरीतिरर्वाचीनप्रतिपादनशैलीतः सर्वथा भिन्ना एव । मानवानां जीवनदर्शनं वेदेष्वेव दर्शनीयम् । विश्वसाहित्ये वेदानां महत्त्वं वैशिष्ट्यञ्च स्पष्टमेव प्रतिभाति ।

## वेदानां वैशिष्ट्यम्

अतिविशिष्टं व्यापकञ्चाऽस्ति वेदानां महत्त्वम् । वैदिकवाङ्मयस्य महत्ता न कोऽपि सामान्यतया वर्णयितुं समर्थः । अत्र सर्वाङ्गपूर्णतया मानवजीवनोद्देश्यभूताः धर्मार्थकाममोक्षाख्याश्चत्वारोऽपि पुरुषार्थाः विवेचिताः, अतः वैदिकवाङ्मये मानवजीवनोपयोगिनः सर्वेऽपि विषयाः साधु विवेचिताः, इति कथनं समुचितमेव । अत्र प्रेयःशास्त्रं श्रेयःशास्त्रञ्चोभयं समभावेन समेधितम् । अत एवात्र भोगमोक्षयोरुभयोः सत्तायाः सकलवाङ्मयापेक्षया विशिष्टता विद्यते ।

अतिमहत्त्वपूर्णमिदं वैदिकसाहित्यम्। इदं प्राचीनतायां सर्वातिशायीति पूर्वमावेदितमेव। अस्य व्यापकत्वं परिमाणमहत्त्वञ्चापि प्रसिद्धम्। तस्याऽध्ययनमिहापरिहार्यत्वेनानिवार्यत्वेन चाभ्युपगतम्। योहि द्विजो वेदमनधीत्यान्यत्र श्रमं विदधाति स इह शूद्रो मतः। यथा—

**'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥' —मनु०**

भारतीयविचारधाराया द्रढीयानयं विश्वासो यद्वेदतत्त्वज्ञ एव जनो ब्रह्म ज्ञातुमर्हति। यथा—

**'वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।**
**इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥'**

स्वकीयविशिष्टताभिः वैदिकवाङ्मयस्य महत्त्वं प्रतिष्ठितं विद्यते। वेदानां ज्ञानमन्तरा नान्त्यं जीवनस्य लक्ष्यमधिगम्यं भवति, अतोऽपि वैदिकवाङ्मयस्य पदं महत्त्वपूर्णमस्ति। ज्ञानस्य विमला धारा समस्तेऽपि क्षितिमण्डले सर्वास्वपि दिशासु वेदेभ्य एव निःसृत्य प्रसस्रुः। वेदाः न केवलं भारतीयानामपितु भुवः सर्वासामपि मानवजालीनां हितसाधनाय प्राचीनाः ग्रन्थाः सन्ति।

अस्मदीयाः पूर्वजाः केन प्रकारेण जीवनं यापयामासुः? काभिः क्रीडाभिस्ते स्वकीयं मनो मोदयामासुः? का देवतास्ते पूजयामासुः? विवाहसम्बन्धस्योद्देश्यं किन्ते निर्धारयामासुः? केन च विधिना ते प्रभाते अग्नावाहुतिं समर्पयामासुः? इत्यादिविषये चेज्जिज्ञासा हृदि विजृम्भते तदा तद्विषयकं ज्ञानं यथार्थं वेदेभ्य एव लब्धुं शक्यमस्ति।

अध्यात्मदर्शनस्य भारतीयदर्शनानाञ्च रहस्यं तेषां विकासस्य वैशिष्ट्यञ्च मूलतः वेदसाहाय्येनैव ज्ञेयं भवति। वेदानां वैविध्यञ्चापि अस्यैव साहाय्येनैव ज्ञेयं भवितुमर्हति। वेदोत्तरकालिकसाहित्ये—ब्राह्मणग्रन्थोऽयमेवं वदति, दर्शनशास्त्रमिदं ब्रवीति, वेदाङ्गभूतमिदं शंसति, अमुकः स्मृतिरिदं कथयति—इत्येवंविधायां स्थित्यां किं कार्यं, किं न कार्यम्, इत्येतत्कथयितॄणां कर्त्तव्यमिदं यत्ते वेदं शरणं यान्तु। तत्तच्छास्त्रादीनां तत्तत्कथनस्य रहस्यं वेद एवोन्मीलयिष्यति। तदेव तद्विधां शङ्कामपनोदयति।

वेदानामुपादेयत्वं महत्त्वञ्चापितु तदीया महत्तोपादेयता च भाषादृष्ट्याऽपि वरीवर्त्ति। वैदिकभाषेवेयं वर्त्तते या साम्प्रतिकं भाषाविज्ञानं द्रढीयसीं भूमिमध्यासयतिस्म, इयं वैदिकभाषेवाऽस्ति या भाषाविदां मध्ये प्रसृतं प्राचीनभाषाविषयकं मतभेदं निराकृतवती। चेत् भाषाशास्त्रपण्डिताः साम्प्रतिका अभिलषन्ते यत्तेषामभिमतो विषयो नितरां पूर्णतया परिपक्वतां गच्छेत् तदा ते वेदानधीयीरन् वेदज्ञानमधिगन्तुं च प्रयतेरन् वेदानधीत्यानुशील्य च ते तासु तासु भाषासु समागतानां पाड्रॅ-नाइट-फार्चूनप्रभृतिपदानां मूलरूपं तेषां तत्तद्रूपान्तरताञ्च साधु भोत्स्यन्ते। ज्ञास्यन्तीदञ्च भौतिकेऽर्थेषु प्रयुज्यमानानि पदानि

युगान्तरेण कस्मादाध्यात्मिकेऽर्थे प्रयुक्तानि भवितुमारभन्ते । भूयिष्ठप्रयोजनेन साधकत्वात् वस्तुतो वेदाः सन्ति परममहत्त्वभाजो ग्रन्थाः ।

## वेदानां महत्त्वम्

प्रतीच्या विपश्चितो वेदान् ऋषिप्रणीतान् मन्यन्ते । तेषां हि आधिभौतिकी दृष्टिस्तान् शब्दराशिमेव सामान्यग्रन्थमेवावगच्छति । परञ्च वेदमर्मज्ञाः भारतीयाः मेधाविनस्तान् न ऋषिकृतान् मन्यन्ते । तन्मते ऋषयो वैदिकमन्त्राणां द्रष्टारः सन्ति न तु कर्तारः । अलौकिकसामर्थ्यशालिन ऋषयो दिव्यया प्रतिभया मन्त्राणां दर्शनं लब्धवन्तस्तेषां प्रकाशस्तद्धियि अवततार । 'ऋषि' इत्येतस्य पदस्य व्युपत्तिलभ्यः 'ऋषति पश्यति इति ऋषिः' इत्यर्थ एव 'मन्त्रद्रष्टा' इत्यस्ति एव ऋषिः शब्दः इगुपधात् किदित्यनेनौणादिकेन सूत्रेण इनि कृते निष्पद्यते । निरुक्ते च विद्यमानाः—**'तद्येनास्तपस्यमानन् ब्रह्मस्वयम्भ्वभ्यानर्षत् ।'** इत्यादिकाः पङ्क्तयः ऋषेर्मन्त्रद्रष्टृत्वमुपपादयन्ति ।

प्रधानरूपेण वेदो द्विविधः—मन्त्ररूपो ब्राह्मणरूपश्चेति । मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः । ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव । स चायं ब्राह्मणभागो यागस्वरूप बोधकतया प्रथितः । ब्राह्मणग्रन्थोऽपि त्रिधा विभक्तो भवति—ब्राह्मणम्, आरण्यकम्, उपनिषदश्च । यज्ञस्वरूपप्रतिपादको ब्राह्मणभागश्च । अरण्ये पठिताः यज्ञस्याध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि । उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि, अयमेव भागो वेदस्यान्तरूपतया वेदान्त इत्युच्यते । ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम् उपनिषद्भागश्च संन्यस्तानामुपयोगीत्यपि कथयितुं शक्यते ।

## वैदिकवाङ्मयम्

भारतीयज्ञानगङ्गायाः स्रोतांसि वेदा एव सन्ति । एवंविधोऽन्यो न कोऽपि दीप्तपुञ्जः ग्रन्थोऽस्ति यः स्वप्रभया न केवलं स्वयं भासितः प्रत्युत तया प्रभया समस्तभारतीयवाङ्मय एव प्रभासितो वर्त्तते । वेदशब्देन यथा चतस्रो मन्त्रसंहिताः परिग्राह्याः भवन्ति तथैव वैदिकशब्देन वेदोत्तरकालिकसमस्तवैदिकवाङ्मयस्यावबोधो भवति । वैदिकशब्दस्तु वेदविषयकबहुविधज्ञानसामग्रीणां सूचकः द्योतको वा भवति । वेदविषयकसामग्रीपदेनाऽत्र षड्वेदाङ्ग-ब्राह्मण-आरण्यक-उपनिषदादीनां बोधो भवति । वेदाद्भिन्ना अप्येते वैदिकग्रन्थाः वेदोद्धृता एवेति । वैदिकवाङ्मयस्यान्तर्गता एवैते षड्वेदाङ्गादिकाः ग्रन्थाः सन्ति ।

न केवलं विषयसामग्रीदृष्ट्याऽपित्वैतिहासिकदृष्ट्याऽपि चत्वारो वेदाः पूर्ववैदिकयुगे तथा तदुत्तरकालिकवैदिकग्रन्थान्तरवैदिककाले विभाजिताः भवन्ति । आधुनिकाश्चेतिहासकारास्त्वनेनैव प्रकारेण वैदिकवाङ्मयस्य विभाजनं कृतवन्तः । वैदिकसाहित्यस्य चत्वारो भागाः वेदानामेवाङ्गभूताः सन्ति ।

यद्यपि साहित्यशब्दः सम्प्रति वाङ्मयमित्यर्थे प्रयुज्यते यत्राऽर्थे 'लिटरेचर'-शब्दो वैदेशिकैः प्रयुज्यते। तथाऽप्यत्र वेदशब्दस्य प्रयोगो मन्त्रब्राह्मणयोर्निमित्तेन विधीयते। आपस्तम्बे प्रोक्तश्च—**'मन्त्रब्राह्मणयोर्वेदनामधेयम्।'** येन हि यज्ञ-यागानामनुष्ठानं निष्पन्नतामुपैति देवतानाञ्च स्तुतिर्विधानं यत्रोल्लिखितमस्ति स मननात् मन्त्र इत्युच्यते। ब्राह्मणपदं तु ग्रन्थविशेषवाचकमस्ति। यज्ञानां विविधक्रियाकलापप्रतिपादकग्रन्था 'ब्राह्मणम्' इत्येतां संज्ञां भजन्ते। 'ब्राह्म-णम्' इत्येतस्य पदस्यार्थोऽस्ति—**'वर्धनं विस्तारो वा वितानो वा यज्ञ' इति।** ब्राह्मणमपि भागत्रये विभक्तमस्ति। प्रथमो भागः ब्राह्मणमिति, द्वितीयो भागः आरण्यकम् इति, तृतीयो भागस्तु 'उपनिषदि'ति कथ्यते।

वेदश्च स्वरूपभेदात् त्रिविधः—ऋग्वेदः, यजुर्वेदः सामवेदश्चेति। यत्रार्थ-वशेन पादव्यवस्थाऽस्ति तेषां छन्दोबद्धानां मन्त्राणां नाम 'ऋक्' इति वेद्यम्। ऋचां समूह एव 'ऋग्वेद' इति पदेन व्यवह्रियते। यजुः इत्येतत्पदं यज् धातोः उसि प्रत्यये कृते निष्पद्यते। यस्मिन् वेदे यज्ञयागादिक्रियाकलापानुरोधेन मन्त्राणां सन्निवेशोऽस्ति स 'यजुःवेद' इति निगद्यते। यत्र गीतिरूपा मन्त्राः विद्यन्ते स उपासनाकाण्डपरो वेदः 'सामवेद' इति गीयते। मन्त्राणां त्रिविधत्वात् वेदाः 'त्रयी' इति नाम्ना प्रसिद्धाः सन्ति।

मन्त्राणां समूहः 'संहिता' इत्येतेन व्यपदेशेन व्यपदिश्यते। यज्ञानुष्ठानं दृष्टौ निधाय विभिन्नर्त्विजां कृते संहितानां सङ्कलनं वेदव्यासश्चकार। मन्त्रसंहितानां सङ्कलनं चतुर्विधतया कृतं, तस्मात् संहिताः सन्ति चतस्रः—ऋक्संहिता, यजुः-संहिता, सामसंहिता, अथर्वसंहिताश्चेति। अत एव वेदाश्चत्वारः स्मृताः। विषयेऽत्र विशदतरं टिप्पणं वक्षमाणे द्वितीयस्मिन् खण्डे निरीक्षणीयम्।

अतिप्राचीनमिदं वैदिकवाङ्मयं तथापि आधुनिका इतिहासविदः दैशिका वैदेशिकाश्च तेषां कालनिर्धारणे बद्धादराः। यथा—लोकमान्यतिलकमहोदयो यद्गणिताधारेण वेदानां ६००० ई० पू० निर्मितत्वम्, ततोऽपि वा पूर्वकालिकत्वं निर्धारितवाँस्तत्र नास्ति सन्देहस्यावकाशः। वेदानां रचनायां जातायां तद्-व्याख्यानभूता ब्राह्मण ग्रन्था अरच्यन्त। ब्राह्मणग्रन्थेभ्यः पश्चात् आरण्यकानि, तदनन्तरमुपनिषदस्ततो रामायणमहाभारतादिकं लौकिकसाहित्यानि चेति।

अतिव्यापकं विस्तृतञ्चेति वैदिकवाङ्मयम्। इदञ्च सर्वाङ्गपूर्णम्, यतोऽत्र ानवजीवनोद्देश्यभूताः धर्मार्थिकाममोक्षाख्याश्चत्वारोऽपि पुरुषार्थाः विवेचिताः। ास्य हि वाङ्मयस्य वयोवर्षिष्ठत्वेन, महामहीखण्डमण्डलव्यापित्वेन, दुष्परि-च्छेदेन परिमाणेन, निरतिशयेन वैभवेन, अनन्यतुल्येन सौन्दर्यप्रकर्षेण संस्कृतीति वृत्तोपयोगिना गुणेन च महति मौलिके पुरातने च वैदिकवाङ्मयेऽस्मिन् अस्मदभिनिवेशः सर्वथा खलु समर्थ्यते। न च केवलम् एतावन्मात्रं निमित्तान्य-तराण्यपि तावद् वैदिकवाङ्मयाध्ययने विद्याविलासिनां विशिष्टविदुषां जिज्ञासु-

च्छात्राणाञ्चाभिरुचिं सञ्जनयन्ति । इत्थं विचार्यैवास्य ग्रन्थस्य नामकरणं **'वैदिकवाङ्मयस्येतिहासः'** इति कृतम् ।

वैदिकवाङ्मयेऽस्मिन् मानवजीवनोपयोगिनः सर्वेऽपि विषयाः साधु विवेचिता इति कथनं समुचितमेव । अत्र प्रेयःशास्त्रं श्रेयःशास्त्रञ्चोभयं समभावेन समेधितम् । अत एवात्र भोगमोक्षयोरुभयोः सत्तायाः सकलसाहित्यापेक्षया विशिष्टता विद्यते । वैदिकवाङ्मयस्येतिहासः समस्तपूर्वलिखितवैदिकसाहित्यबोधकस्य ग्रन्थस्य नामकरणमपि विद्यान्तरव्यावृत्तसाहित्यमात्रवाचकस्य वाङ्मयस्य प्रयोगं प्रमापयति । तदित्थं वाङ्मयशब्दोऽत्र समस्तवैदिकसाहित्यमात्रपरक इति प्रतिपत्तव्यम् ।

## अस्य वाङ्मयस्य विभूतिः

वैदिकवाङ्मयानामध्ययनं तावदैतिहासिकानां परमप्रीतये कल्पते । वाङ्मयञ्चैतन्न केवलं विशालभारताभिजनानां जनानामतिवर्षसहस्रपञ्चकमभिव्याप्नुवत्प्रातिभिकजीवनस्येतिवृत्तमद्यावधि गोपायति, प्रत्युत त्रिविष्टप( तिब्बत )-चीन-जापान-कोरियादीन् जनपदानपाच्येषु लङ्काद्वीपं प्राच्येषु मलयप्रायोद्वीपं प्रशान्तमहासागरस्थितानि दविष्ठानि, द्वीपान्तराणि च प्रतीच्येषु, अफगानिस्तान-तुरुष्कस्थान् प्रभृतीन् च देशान् अधिवसतां सङ्ख्यातीतनानापौरजानपदानां बौद्धिक-प्रवृत्तिष्वपि खल्वेतत् पुरा प्राज्यं प्रभावमपातयत् । प्रत्यग्रयुगप्रवर्त्तकोऽस्य वाङ्मयस्य प्रभावः परिलक्ष्यते ।

वैदिकवाङ्मयमेव भारोपीयभाषावर्गे ( तामिल-तेलगु-मलयालम-कनाडीति भाषाचतुर्वर्गवर्जं प्रायः सकलभारतीयभाषाः प्राच्यां यथा, तथा प्रायः सकलयूरोपीयभाषाः प्रतीच्यां, वैदिकसंस्कृतमन्विता भवन्तीति तासां वर्गो भाषासर्गे 'भारोपीयवर्गः' इति निरूढिमारूढोऽस्ति ) ज्येष्ठा भाषा, ततश्च वाङ्मयेऽस्याः एतस्य वर्गस्य प्राचीनतमसाहित्यस्य स्मृतयः ( Monuments ) सुरक्षिता इति न कस्यापि विमतम् । धर्मप्रज्ञायाः समुद्भवः सक्रमोपचयश्च यथा ह्येतत्साहित्याश्रयेण परिचीयते न तथा निखिलायामवन्यां साहित्यान्तराश्रयेण ।

धर्मदर्शनयोभयविकासज्ञानार्थञ्च वैदिकवाङ्मयस्याध्ययनं प्रायोऽपरिहार्यं भवति । मैकडोनलमहोदयेनोक्तम्—भारोपीयभाषाभाषिषु जनेषु भारतीयैरेव केवलं वैदिकधर्मो नाम महान् राष्ट्रियधर्मः, अस्य प्रतिपक्षी बौद्धधर्मो नाम महान् सार्वभौमधर्मश्च निरमायि । अप्रदर्शितधर्मविषयोपज्ञैर्जनान्तरैस्तु बहुतिथात्कालात्पूर्वमश्वदेशज एव धर्मः खलूरीकृतः । अथ महती मननशक्तिमभिव्यञ्जयन्ति स्वोपज्ञानि विविधदर्शनप्रस्थानानि अपि भारतीयैः सन्ततानि ।

उपज्ञासमृद्धं खलु वैदिकवाङ्मयमिति तु वाङ्मयान्तरादन्योऽस्य विशेषः । ख्रीष्टात्प्राक् चतुर्थशताब्द्यां भारतवर्षोपरि सञ्जाताद् यवनाक्रमणात्पूर्वमेव नूनमार्यसभ्यताप्रौढिमवाप, न च ततःप्रभृति जातुचिद्देशान्तरिणां केनचिदाक्रमणे-

नास्यां संसर्गदोष उदियाय। उपलभ्यमानेव वैदिकवाङ्मयं परिणामतुलया एकीकृतं समग्रमपि रोमयवनोभयवाङ्मयमतिशेतेतराम्। मेकडोलनेनोक्तम्—**'सर्वेषामपि सनातनानां साहित्यानां मध्ये वैदिकवाङ्मयं मौलिकतामूल्येन सौन्दर्यगुणप्रकर्षेण च महत्त्वपूर्णपदमवाप। मानवप्रकृतिविकाशानुशीलनस्य प्रधानसाधनता तु वेदेषु अन्यवाङ्मयेभ्यो निःसंशयम् उत्कृष्टा एव।'**

भारतीयसाहित्येतिवृत्तं तावत् वैदिककालः लौकिकसंस्कृतकालश्चेति कालद्वयेन द्विधा विभज्यते। पाणिनेः प्राक् प्रथमः कालः, परतश्चापरो कालः गण्यते। आद्ये हि वेदाः, ब्राह्मणानि, आरण्यकग्रन्थाः, उपनिषदः, कल्पाश्चेति सारस्वतं समावेश्यते। विलक्षणा खलु सातत्यगतिरार्यसभ्यतायाः दरीदृश्यतेऽस्मिन् वैदिकवाङ्मये। प्रार्थनोपासना, मन्त्रजपः, जननीजठरे शरीरग्रहणमारभ्याऽऽशरीरत्यागादार्यजीवनं विशिषन्तः षोडशसंस्काराः, अरणीभ्यां हव्यवाहोः जननं, श्रौतगृह्याणि, बहूनि विध्यन्तराण्यपि च खीष्टाद् बहुसहस्रवर्षपूर्वभवं विधिमनतिक्रम्यैव यावदद्य प्रवर्तन्ते।

न खलु तावतैवालम्। यूरोपीयसंस्कृतिदर्शनयोर्विकाशं विज्ञातुमपि वैदिकवाङ्मयस्याध्ययनं नितरां व्यपेक्षते। तथा चोक्तं विण्टरनिट्जमहोदयेन—**'यद्यस्माकं स्वसंस्कृतेरुपक्रमप्रक्रमाः बुभुत्सिताः, यदि चास्माकं पुराणतमभारोपीयसंस्कृतिः विविदिषिता तदा यत्र भारोपीयजनानां वर्षिष्ठं वाङ्मयं सुरक्षितं तदा भारतवर्षमेव खलु अस्माकं गतिरिति।'**

भारतीयैः खलु विशेषेणाध्येतव्यमिदं वाङ्मयम्। भारतीयानां प्राचीनवाङ्मयस्य संस्कृत्याश्च वैदिकवाङ्मयं श्रेष्ठं दर्पणम्। अपि चाधुनिकीनां हिन्दी-पंजाबी-बंगला-उडिया-गुजराती-मराठी-राजस्थानी-बिहारी-आसामीप्रभृत्युत्तरे भारते भाष्यमाणानां सर्वासां भाषाणां जननीयं भाषा। दक्षिणभारतेऽपि या तामिल-तेलगु-मलयालम-कन्नड़ादि आधुनिक्यो भाषाः सन्ति ता अपि वैदिकवाङ्मयेन भृशं प्रभाविताः। तथाहि सूत्रे मणिगणा इव ग्रथिताः वैदिकवाङ्मये भारतीयाः सर्वा भाषाः सन्ति। न हि वैदिकवाङ्मयज्ञानेन विनाऽऽधुनिकीनां भाषाणां सम्यक् ज्ञानं सम्भवम्।

'कोऽहम्? कुत आयातः? कथन्नु स्यात्सुखावाप्तिः? दुःखनिराकरणं वा कथं स्यात्? इति मानवानामध्यात्मविषयिणी सनातनी जिज्ञासा वैदिकवाङ्मये विशदीकृता। अतो वैदिकवाङ्मयस्येतिहासः संक्षेपेण वक्तुमस्माकं खलु एष यत्नः।

## वेदशब्दस्यार्थः

**'विद्यन्ते धर्मादयः पुरुषार्थाः यैस्ते वेदाः'** इति बह्वृक्प्रातिशाख्यम्। किञ्च वेदानां स्वरूपविषये चेज्जिज्ञासा हृदि विजृम्भते तदा तद्विषयकं ज्ञानं वेदेभ्य एव लब्धुं शक्यमस्ति। सायणस्तु अपौरुषेयवाक्यं 'वेद' इत्याह। इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स 'वेद' इति भाष्यभूमिकायामुक्तम्। तस्य प्रमाणमपि तत्रैवोक्तम्—

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥'

आम्नायः, आगमः, श्रुतिः, वेदः, इति सर्वे शब्दाः परस्परं पर्यायाः। ज्ञानार्थको वेद इत्येतत्पदं विद्धातोः घञि प्रत्यये कृते निष्पद्यते। वैयाकरण-सिद्धान्तकौमुद्यां तु चुरादिप्रकरणे चतुर्ष्वर्थेषु विद्धातोः प्रयोगोऽस्ति। तद्यथा—

'सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।
विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् ।'

उक्तार्थानां वाचकात् विद्धातोः वेद इत्येतत्पदस्य निष्पादनो भवति। सत्तार्थक-विद्धातोः घञ्प्रत्ययान्निष्पन्नस्य 'वेद' इत्येतत्पदस्याऽर्थो भवति— **'विद्यते सत्तां गृह्णाति वस्तु अनेन इति वेदः।'** ज्ञानार्थकात् विद्धातोः घञ्-प्रत्ययान्निष्पन्नस्य वेद इत्येतत्पदस्यार्थोऽस्ति—**'विदन्त्येभिः धर्मब्रह्मणी क्रिया-ज्ञानमयं ब्रह्म वा इति वेदः।'** विचारार्थकात् विद्धातोः 'अच्'-प्रत्ययान्निष्पन्नस्य वेदशब्दस्यार्थस्तु—**'विन्ते विचारयति धर्मब्रह्मणी क्रियाज्ञानमयं ब्रह्म वेति वेद इति।'** लाभार्थकात् विद्धातोः घञ्प्रत्ययान्निष्पन्नस्य वेद इत्येतत्पदस्यार्थस्तु— **'विदन्ते स्वरूपं लभन्ते वस्तु अनेनेति वेदः।'** ऋग्वेदभाष्यभूमिकायान्तु— **'विदन्ति जानन्ति, विद्यन्ते, भवन्ति, विन्ते, विचारयति, विदन्ते, लभन्ते सर्वे मनुष्याः सत्त्वविद्यां यैर्येषु वा तथा विद्वांसश्च भवन्ति ते वेदाः।'** आपस्तम्बा-नुसारेण—**'मन्त्रब्राह्मणयोर्वेदनामधेयम्।'**

वेदस्य स्वरूपविषये प्रतीच्या विपश्चितो वेदान् ऋषिप्रणीतान् मन्यन्ते। तेषां हि आधिभौतिकीदृष्टिस्तान् शब्दराशिमेव सामान्यग्रन्थमेवावगच्छति। फलतः यः ऋषि येन मन्त्रविशेषेण सम्बद्धोऽस्ति स तस्य कर्ता। ऋग्वेदेऽपि कर्तृत्वपदस्य स्पष्टत उल्लेखो मिलति—**'इदं ब्रह्मक्रियमाणं नवीयः' (ऋ० ७।३५। १४), 'ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः' (ऋ० ७।३७।४), 'ब्रह्मेन्द्राय वज्रिणे अकारि' ( ऋ० ७।९७।९ )** प्रभृतिमन्त्रेषु 'ऋषिप्रणीता एव वेदमन्त्राः सन्ति' अस्य कथनस्योल्लेखः स्पष्टतया प्रतिभाति। भाषाशास्त्रदृष्ट्या मण्डिताः, आध्या-त्मिकभावनाविहीनाः कतिपयाधुनिकभारतीयपण्डिता अपि 'ऋषय एव वैदिक-मन्त्राणां कर्त्तारः सन्ति' इति मन्यन्ते। किञ्च वेदमर्मज्ञा भारतीया मेधाविन-स्तान् न ऋणिप्रणीतान् मन्यन्ते। तेषां मतमिदं यद् ऋषयो वैदिकमन्त्राणां द्रष्टारः सन्ति न च कर्तारः। असङ्ख्येयवैदिकमन्त्राणामनुशीलनेन प्रतीतो भवति यदलौकिकसामर्थ्यशालिनः ऋषयो दिव्यया प्रतिभया मन्त्राणां दर्शनं लब्ध-वन्तः (द्रष्टव्यः—ऋ० ७।३३, ७।१३ मन्त्राः)। कतिपयेषु मन्त्रेषु मुनिवसिष्ठ-मलौकिकरीत्या प्रदत्तज्ञानस्योल्लेखो मिलति ( ऋ० ७।८७।४, ७।८८।४ ) ऋग्वेदेऽनेकत्र वाचः भव्यास्तुतिः दृग्गोचरी भवति। मन्त्राणां प्रकाशस्तद्धियि अवततार। तद्यथा—

'यज्ञेन वाचः पदवीयमायन्,
तामन्वविन्दन् ऋषिषु प्रविष्टान्'—ऋ० १०।७१।३

ऋषिदृष्टप्रार्थनायाः अलौकिकफलस्य निर्देशोऽपि वेदे एव मिलति ( ऋ० ३।५३।१२।७।३३।३ ) मन्त्रेष्वेव वैदिकवाण्याः नित्यतायाः प्रमाणं मिलति, तेषु प्रमाणेषु 'वाचा विरूपनित्यया' ( ऋ० ८।७५।६ ) मुख्योऽस्ति 'ऋषि' इत्येतस्य पदस्य व्युत्पत्तिलभ्यः ( ऋषति पश्यति इति ऋषिः ) अर्थ एव मन्त्र-द्रष्टा इत्यस्ति। एष 'ऋषि'-शब्द इगुपधात् कित् इत्यनेनौणादिकेन सूत्रेण इनि कृते निष्पद्यते। निरुक्ते च विद्यमानात् 'तद्येनास्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्...'। इत्यादिकाः पंक्तयः ऋषेर्मन्त्रद्रष्टृत्वमुपपादयन्ति। अत ऋषयः मन्त्राणां द्रष्टारः सन्ति न च कर्त्तारः।

'ऋषिर्मन्त्रद्रष्टा। गत्यर्थत्वात् ऋषेर्ज्ञानार्थत्वात् मन्त्रं दृष्टवन्तः ऋषयः।' ( श्वेतवनवासिरचितवृत्तौ उणादिसूत्रं ४।१२९ द्रष्टव्यम् ) एवञ्च निरुक्तेऽपि 'तद्यदेनांस्तपस्यमानां ब्राह्मस्वयम्भ्वभ्यानर्षत् त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते ऋषिदर्शनात्। मन्त्रान् ददर्श इत्यौपमन्यवः।'

न्यायवैशेषिकयोर्मतेन वेदाः पौरुषेयाः नित्याश्च सन्ति। परं सांख्य-वेदान्त-मीमांसानाञ्च मतेन ते अपौरुषेयाः सन्ति। नित्यत्वञ्च तेषां दर्शनानीमानि स्वीकुर्वन्ति स्मृतिपुराणेषु च वेदसम्बन्धिनी भावना तादृश्येव प्रायेण, यादृशी मीमांसायां विभावितास्ति। मनुर्वेदान् नित्यान् अपौरुषेयांश्च मन्यते। तेनोक्तम्—

'पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः॥'

## वेदरक्षा

वेदास्त्वाचूलमूलं धर्म्यप्रवृत्तिकम्। अतो वेदानां परमोपादेयत्वादतिशयतममहत्त्वशालित्वाच्च महर्षयस्तान् रक्षितुमपि पूर्णमुपायञ्चक्रुः। वेदा एतावद्दीर्घकालानन्तरमपि लोके समवाप्ताः सन्तीत्यत्र कारणमेव महर्षिकृतः प्रयत्न एवाऽस्ति। महर्षयो हि वेदरक्षार्थमष्टविकृतीनां व्यवस्थां विदधुः। ता विकृतयोऽधःस्थितेन श्लोकेनाभिव्यक्तीक्रियन्ते—

'जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः॥'

मन्त्राणां प्रकृतोपलब्धः पाठः 'संहितापाठ'-पदेन व्यवह्रियते। अत्र कतिपया एव विकृतयो हि वर्ण्यन्ते। पदच्छेदपूर्वकपाठः 'पदपाठ' इत्युच्यते। क्रमपाठः स भवति यत्र पदपाठगतं प्रतिपदं पूर्वोत्तरपदाभ्यां सङ्गमय्य द्विरुच्चार्यते जटापाठः स भवति यत्र क्रमपाठमालम्ब्य प्रतिपदयुगलं त्रिरुच्चार्यते एतावान् भेदो यच्छिखायामन्यच्चैकं पदमग्रे संश्लिष्टतां याति। उक्तञ्च—

**'पदोत्तरं जटामेव शिखामार्याः प्रचक्षते ।'**

घनपाठो नितरां विलक्षणः क्लिष्टश्च । तत्र पदानामावृत्तिरनुलोमविलोम-क्रमेणासकृज्जायते । घनस्तु चतुर्विधः भवति । तत्र प्रथमप्रकारको वदति—

**'शिखामुक्त्वा विपर्यस्य तत्पदानि पुनः पठेत् । अयं घन इति प्रोक्तः ।'**

प्रक्षेपच्युतव्यवसादादिविकारेभ्यः परित्रातुं श्रुतिं पद-क्रम-घनजटादिपाठा आविष्कृताः । एषां सद्भावेन न श्रुतिष्वद्यपर्यन्तमणुमात्रमपि दोषलेशः प्रविष्टो भवितुमशकत् । प्रातिशाख्यग्रन्था अपि वेदपाठस्य रक्षणार्थं विरचिता अभूवन् ।

**संहितापाठः**

**ओषधयः संवदन्ते सोमेन सह राज्ञा ।। ऋ० १०।९७।२२ ।**

**पदपाठः**

**ओषधयः[१] सं[२] । वदन्ते[३] । सोमेन[४] । सह[५] राज्ञा[६]**

**क्रमपाठः**

**ओषधयः[१] सं[२] । सं[२] वदन्ते[३] । वदन्ते[३] सोमेन[४] । सोमेन[४] सह[५] । सह[५] राज्ञा[६] । राज्ञेति राज्ञा ।**

**जटापाठः**

**ओषधयः[१] सं[२], समोषधयः[१], ओषधयस्[१], सम्[२] ।**
**सं[२] वदन्ते[३], वदन्ते[२], सं[२], सं[२], वदन्ते[३] ।**

**शिखापाठः**

**ओषधयः[१] सं[२], समोषधयः[१], ओषधयः[५] सं[१]—वदन्ते[२] ।[३]**
**संवदन्ते, वदन्ते सं, संवदन्ते—सोमेन ।।**

**घनपाठः**

**ओषधयः सं, समोषधय ओषधयः संवदन्ते,**
**वदन्ते समोषधय ओषधयः संवदन्ते ।।**
**संवदन्ते वदन्ते सं संवदन्ते सोमेन,**
**सोमेन वदन्ते सं, संवदन्ते सोमेन ।।**

अस्य घनपाठस्य परीक्षणेन ज्ञातो भवति यत् प्रथमपदन्तु पञ्चवारम्, द्वितीयपदन्तु दशवारम्, तृतीयपदं त्रयोदशवारम्, चतुर्थपदमपि त्रयोदशवारं समायाति । इयं हि मेधाशक्तेः पराकाष्ठा वर्त्तते । मेधाविनो मुनेः ज्ञानस्योत्कर्ष एवाऽस्ति । एतादृशं विषमपदपाठमपि अस्माकं वेदपाठिनः विद्वांसोऽनायासेन शुद्धस्वरेण पाठं कुर्वन्ति । ( अष्टविकृतीनामुदाहरणार्थं सातवले( या ळे )कर-सम्पादितस्य ऋग्वेदस्य ७९२-८०८ पृष्ठे विशेषरूपेण द्रष्टव्यमस्ति । )

सामवेदस्य मन्त्रस्थस्वराणां गणनासङ्केतस्त्वतीव प्रामाणिकतयैव सन्निविष्टो मिलति। अस्मिन् स्वरे स्तोकमपि स्खलनस्य सम्भावना न वर्त्तते। इयं स्वरगणनातीव समीचीनाऽस्ति। निम्नलिखितोदाहरणेनेयं वैज्ञानिकपरिगणना स्पष्टतया परिलक्षिता भवति—

३ १ २ २ ३ ३ १ २ ३ १ २
१०८४ रेवतीर्न सं ध मा द इन्द्र सन्तु तु विवाजाः
३२ ३ २३ १२
क्षुमन्तौ याभिमदेम
२ ३ २ ३ १ २ ३२ ३ १ २ ३ २
आ द्य त्वावान त्मना युक्तः स्तोतृभ्यो धृष्णवियानः
३ २ ३ १ ३क२
ऋणोरक्षं नु चक्र्यौः।

१ २ ३ १ २र ३ २
१०८६ आ यद् दुर्वः शतक्रतवा कामं जरि नृणाम्
३२ ३ १ २
ऋणो रक्षं न शचीभिः। ३।१४ ठी
(धा० १८।उ० २। स्व० ४)

अस्ति सामवेदस्योत्तरार्चिकस्येयं ऋच्। एतस्याः ऋचामुपर्युदात्तादि त्रयाणां स्वराणां विशिष्टचिह्नानि भवन्ति। ऋग्वेदे तूदात्तस्वरास्तथा प्रचयस्वराः चिह्नरहिता एव भवन्ति। अनुदात्तस्याधोभागे लम्बरेखा (—) तथा स्वरितस्योपरिभागे ऊर्ध्वंगा रेखा (।) भवति। तद्यथा—

अ॒ग्नि मीं ले पु रो हिं तम्
अ ऊ स्व प्र अ उ स्व प्र

किञ्च सामवेदस्य स्वराङ्कनप्रकारः भिन्नरूपेण भवति। अत्रोदात्तस्योपरि—१, स्वरितोपरि—२, तथाऽनुदात्तोपरि—३, अङ्कानां सङ्केतो भवति। कदाचिदेतद्भिन्नोऽपि चिह्नो भवति—

३ २
१. अन्तिमोदात्तस्योपरि—२ चिह्नो भवति। यथा—**गि रा** (साम० ८)।

२. २र, विशिष्टोऽयं चिह्नः। यदा एककालावच्छेदेनोदात्तद्वयस्य प्रयोगो भवति तदा प्रथमोदात्तोपरि—१, तथा द्वितीयोदात्तस्तु चिह्नविरहितो भवति। एवं तत्परे स्वरितोपरि २र चिह्नो भवति। यथा—

३ २ ३१ २र
**'उत द्विषो मर्त्यस्य'** (साम० ६)। अस्मिन् मन्त्रे 'षो' एवं 'म' उदात्तद्वयमस्ति। अत्र प्रथमोदात्तोपरि—१ चिह्नस्तथा द्वितीयोदात्तः 'म'त्वचिह्नितमेव। तत्परे 'र्यं' स्वरितोपरि '२ र' चिह्नो भवति।

(ख) अनुदात्तात्परे स्वरितोपरि '२ र' चिह्नो भवति तथा पूर्वोऽनुदात्तोपरि '३ क' चिह्नितो भवति। यथा—

३क २र ३क २र
**त न्वा (साम० ५२) च म्बोः।** अर्थात् जात्यस्वरितोपरि '२ र' चिह्नो

भवति । ३—'२ उ, यदोदात्तद्वयस्य युगपदेव प्रयोगो भवति तथा तत्पश्चादनुदात्तः समायाति तदा प्रथमोदात्तोपरि '२ उ' चिह्नितो भवति, द्वितीयस्त्व-

र २ऊउ

चिह्नित एव भवति । यथा—ऊ त्या व सो ( साम० ४१ ) अत्र 'त्या' एवं 'व' इति उदात्तद्वयस्य पश्चात् 'सो' इत्यनुदात्तः अस्ति । फलतः प्रथमोदात्तः 'त्या' इत्युपरि '२ ऊ' इति संकेतो मिलति ।

सामवेदे एतस्याः विशेषगणनायाः व्यवस्था विशेषरूपेण मिलति । उपरि-निर्दिष्ट ऋचि अष्टादशाक्षराण्यचिह्नितानि सन्ति । प्रथम ऋचि अचिह्नितान्य-क्षराणि चत्वारि सन्ति । द्वितीयेऽपि ऋच्यचिह्नितानि चत्वारि एवाक्षराणि सन्ति । तृतीये ऋचि दशाक्षराण्यचिह्नितानि सन्ति । एतेषां सङ्कलनमष्टादशाक्षराणि भवन्ति । यत् धा० '१८' धारी इति पदेन सूचितो भवति '२ उ' इति संकेतेन चिह्नितमक्षरद्वयमस्ति । (=उ० २ )। 'रकारचिह्नितस्वरितः (२ र) संख्यायां चत्वारः सन्ति । (=स्व० ४ ) । एतेषां त्रयाणां सूचना 'ठी' संकेतेन मिलति । ठी=ठ्+ई । ई' चतुर्थस्वरो भवति । तेनायं चतुर्णां सूचको भवति । ठकारस्तु टवर्गस्य द्वितीयवर्णोऽस्ति । अतोऽयं ( उ २ ) पदस्य संकेतं करोति । इयं व्यवस्थामात्रोत्तरार्चिकमन्त्राणां कृते एवाऽस्ति । पूर्वार्चिके तु स्वरितः, उदात्त-स्तथा धारीपदानाञ्च क्रमः पूर्वक्रमात् विपरीतो भवतीति । ( विशेषद्रष्टव्यः—साम० सं० औषधस्या० म० १९९६ )

वेददुर्गस्य रक्षार्थमियं दुर्भेद्या पंक्तिरस्ति । तेन हि अद्याऽपि अस्माकं वेदानां विशुद्धता प्रामाणिकता चाक्षुण्णा एवाऽस्ति । विश्वसाहित्ये घटनेयमतीव विलक्षणा विस्मयावहा चाऽस्ति ।

## वेदेषु स्वराणां महत्त्वम्

अनेकप्रयोजनसम्पादनहेतोः वेदेषु स्वराणामुपयोगो विधीयते । प्रथमं प्रयोजनं तु तेषां वेदपाठपरिरक्षणमस्ति, द्वितीयं प्रयोजनमिदं यत् तैस्तत्तत्पद-गतोऽर्थो निर्धार्यते । यथा चाह गोनर्दीयः—'याज्ञिकाः पठन्ति—स्थूलपृषतीं-माग्निवारुणीमनड्वाहीमालभेत' इत्यत्र सन्देहः—स्थूला चाऽसौ पृषती च स्थूल-पृषती इत्येष विग्रहोऽत्र ग्राह्यो वा स्थूलानि पृषन्ति यस्याः सा इति । एवंविधायाः शङ्कायाः निवृत्तिः स्वरेणैव भवितुं शक्याऽस्ति । अतः वेदार्थस्य निर्णयने स्वराः सहायकाः भवन्ति । वाक्यनिर्णयनार्थमपि स्वराणामपेक्षा भवति । यत्र क्व-चिन्मन्त्रेषु मुद्रणादिदोषवशात् विरामादिचिह्नानि नाङ्कितानि जायन्ते, तत्र कुतो वाक्यमारब्धं कुत्र च तदवसन्नमिति न परिज्ञातुं शक्यते, तत्र स्वरैरेव सत्स-माधानं भवति। यथा—'पत्नीवन्तं ग्रहं गृह्णान्यग्न' इत्यत्र 'पत्नीव' इह अन्तिमं पदद्वयं किं पूर्ववाक्यसम्बन्धि उत उत्तरवाक्यसम्बधि ? इत्येतस्मिन्सन्देहे प्राप्ते स्वरेणावधार्यते, यदि आमन्त्रितत्वादनुदात्तत्वं ततः पूर्वान्वयि, आद्युदातत्त्वे तु उत्तरान्वयीति ।

---

# द्वितीयोऽध्यायः

## वैदिकानुशीलनस्येतिहासः

### १. प्राचीनकालः

वेदा भारतीयानां हि आद्या धर्मग्रन्थाः सन्ति । तेषामाज्ञाऽत्र देशे धर्मत्वेन मताऽस्ति । को हि धर्म ? इति यदि जिज्ञासाऽस्ति तदा वेदास्तन्निमित्तेन द्रष्टव्याः—**'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।'** वर्त्तमाने भारते यावन्त्यपि मतान्युपमतानि भिन्नभिन्नानि प्रसृतानि सन्ति, तेषां मूलस्रोतो वेदेभ्य एव निर्गतमस्ति । तदर्थं पुनः पुनः अस्माभिर्वेदाः अध्ययनीयाः अनुशीलनीयाश्च । अनेन कारणेन संहितानां रचनायाः पश्चात् जनेषु वैदिकमन्त्राणामर्थावबोधनस्य प्रवृत्तिः परिलक्षिताऽभवत् । ब्राह्मणग्रन्थेष्वस्याः प्रवृत्त्याः प्रथमः प्रयासः दृग्गोचरो भवति । ब्राह्मणग्रन्थेषु यज्ञस्य विस्तृतवर्णनं तु अस्त्येव, मन्त्राणामप्यर्थस्य यत्र कुत्राऽपि स्पष्टीकरणमपि समुपलभते । तत्र शब्दानां व्युत्पत्तिरपि वर्त्तते । एताः प्रवृत्तिरत्यादरेण यास्केन **'इति ह विज्ञायते'** एवमुक्त्वा निरुक्ते समुद्धृतः । मन्त्राणां पदकाराः ऋषयोऽपि वेदार्थावबोद्धुम् अस्माकं साहाय्यं कृतवन्तः । प्रतिमन्त्रस्यावान्तर्भूतपदानां पृथक्करणं कृत्वा प्राचीनऋषयस्तत्तत् संहितानां पदपाठमपि निर्मितवन्तः । अनेन पदपाठेन मन्त्राणामर्थस्यातिसुलभतयाऽवबोधो भवति । एतेषां पदपाठानां कर्त्तारः ऋषीणां संक्षिप्तपरिचयोऽत्र मया दीयते ।

### पदकाराः

( १ ) **शाकल्यः**—अयं हि महानुभावः ऋग्वेदस्य पदपाठं प्रस्तुतवान् । बृहदारण्यकोपनिषदि जनकस्य सभायां याज्ञवल्क्येन सह शाकल्यस्य शास्त्रार्थस्य वर्णनमुपलब्धो भवति ( अ० ४ ) । पौराणिकगाथानुसारेणायं शाकल्यः ऋग्वेदपदपाठस्य रचयिताऽप्यस्ति । यथा—

**'शाकल्यः प्रथमस्तेषां तस्मादन्योरथीतरः ।**
**वाष्कलिश्च भरद्वाज इति शाखाप्रवर्त्तकाः ॥ ३२ ॥**
**देवमित्रश्च शाकल्यो ज्ञानाऽहङ्कारगर्वितः ।**
**जनकस्य स यज्ञे वै विनाशमगमद् द्विजः' ॥ ३३ ॥**

**—ब्रह्माण्डपुराणः, पूर्वभागस्य द्वितीयपादः, अ० ३४ ।**

शाकल्यस्योल्लेखः निरुक्ते, ऋक्प्रातिशाख्येऽपि च मिलति । अतोऽयमुपनिषत्कालिकः ऋषिः वर्त्तते । यास्केन क्वचित् क्वचित् निजनिरुक्ते अस्य महानुभावस्य पदपाठः नाङ्गीकृतः । यथा निरुक्ते ५।२१ **'अरुणो मासकृत्**

वृकः' ( १०।५।१८ ) यास्कस्त्वत्र 'मासकृत्' इत्येकपदं मत्वा 'मासानां कर्त्ता' इत्यर्थं कृतवान्। किञ्च शाकल्येनात्र 'मा + सकृत्' इति पदद्वयं स्वीकृतम्। निरुक्ते ( ५।२८ ) वने 'न वायो' ( ऋ० १०।२९।१ ) इति यास्केनोद्धृतः। अत्र शाकल्येन 'वा + यः = वायः' इति पदद्वयं मन्यते। किञ्चास्य पदस्योल्लेखं कृत्वा यास्कस्तु पदद्वयं न स्वीकृतवान् 'वायः' इत्येकपदस्य यास्कसम्मतार्थोऽस्ति 'पक्षीविशेष' इति। अनेन प्रकारेण निजनिरुक्ते यास्केन क्वचित्क्वचिच्छाकल्यस्यानुमोदनं न कृतम्। एतदतिरिक्तः रावणकृतपदपाठस्याप्यस्तित्वं यत्र कुत्राऽपि मिलति। रावणस्तु ऋग्वेदस्य भाष्यमपि रचयामास तथा तस्य पदपाठोऽपि कृतवान्। अयं हि पदपाठः शाकल्यस्य नानुकरणमस्ति, प्रत्युत नानास्थलेषु निजबुद्ध्यानुसारेणाऽसौ नवीनपदपाठस्यापि योजनां कृतवान्।

( २ ) **यजुर्वेदेऽपि** पदपाठश्चोपलब्धो भवति। माध्यन्दिनसंहितायाः पदपाठस्तु बम्बईनगर्यां मुद्रितोऽप्यभवत्। किञ्च काण्वसंहितायाः पदपाठस्त्वद्यावधि अमुद्रित एवाऽस्ति। अस्य रचयिताऽप्यज्ञात एवेति। तैत्तिरीयसंहितायाः पदपाठकारस्य नाम आत्रेयोऽस्ति। अस्य निर्देशः भट्टभास्करेण कृतः स्वकीय-'तैत्तिरीयसंहितायाः' भाष्यस्य प्रारम्भे एव। यथा—'**उखश्चात्रेयाय ददौ येन पदविभागश्चक्रे**' अतः 'काण्डानुक्रमण्यां' पदकाररूपेणात्रेयस्य चर्चा वर्त्तते। '**यस्याः पदकृदात्रेयो वृत्तिकारस्तु कुण्डिनः।**' बौधायनगृह्यसूत्रे ( ३।९।७ ) अपि ऋषितर्पणस्यावसरे पदकारः आत्रेय-तर्पणस्याऽप्युल्लेखो वर्त्तते। '**आत्रेयाय पदकाराय।**' अयमात्रेयः शाकल्यस्य समकालिकः प्रतीतो भवति।

( ३ ) **सामवेदस्य पदकारः गार्ग्योऽस्ति,** यस्य नाम्नः कार्यस्य च समर्थनम् अनेकेषु प्राचीनग्रन्थेषूपलब्धो भवति। निरुक्ते ( ४।३।४ ) 'मेहन'-शब्दस्य प्रसङ्गे एका रोचकवार्त्ताऽस्ति। दुर्गाचार्यस्यात्र कथनमस्ति यत् ऋग्वेदिनां मतानुसारेणायमेकमेव पदोऽस्ति, किञ्च सामवेदिनां मतानुसारेणात्र पदत्रयमस्ति ( म + इह + न )। यास्केन तु उभयोः पदकारयोः मतानामेकत्र समीकरणं कृतम्। यथा—'**बह्वृचानां 'मेहना' इत्येकं पदम्। छन्दोगानां त्रीण्येतानि पदानि—'म + इह + न' इति। तदुभयं पश्यता भाष्यकारेणोभयोः शाकल्य-गार्ग्ययोरभिप्रायावत्रानुविहितौ ( दुर्गवृत्ति-वेङ्कटेश्वरसंस्करणम्, पृ० २७६ )।**' स्कन्दस्वामिनोऽपीयमेव सम्मतिरस्ति—'**एकमिति शाकल्यः त्रीणीति गार्ग्यः।**' गार्ग्यस्य पदपाठानामियमेव विशेषताऽस्ति यदेतेषां पदानां छेदः अत्यधिकमात्रायां वर्त्तते। यथा 'मित्रस्य' पदपाठोऽस्ति—'मि + त्रम्' 'अन्ये' इत्येतस्य पदस्य 'अन् + ये' 'समुद्र' इत्येतस्य पदस्य 'सम् + उद्रम्' एतान् पदपाठान् प्रामाणिकं मत्वा यास्कस्तु स्वनिरुक्ते 'प्रमीतेः त्रायते इति मित्रः ( १०।२१ ) = मरणात्त्रायते इति, अर्थात् वर्षादानात् इति मित्रः = सूर्यः।' तथा—'समुद्द्रवन्ति अस्माद् आपः = जलम्, यस्मिन् प्रवहति असौ समुद्र इति ( २।१० )।'

गार्ग्यस्येयं विशेषता ध्यातव्या। अथर्ववेदस्य पदपाठस्तु ऋग्वेदस्य पदपाठानुरूपेणैवास्ति किञ्चास्य रचनाकर्त्तुर्नामाद्यावध्यज्ञात एवाऽस्ति।

परञ्च एषु पदकर्त्तृषु नास्ति ऐकमत्यम्। प्राचीनकाले अस्मिन् विषये कापि परम्परा आसीदित्यनुमीयते। आदित्यशब्दस्य विषये निरुक्तस्य भाष्यकारेण स्कन्दस्वामिना उक्तम्—

**'शाकल्यात्रेयप्रभृतिभिर्नावगृहीतम्; पूर्वनिर्वचनाभिप्रायेण। गार्ग्यप्रभृतिभिरवगृहीतम्। विचित्राः पदकाराणामभिप्रायाः। क्वचिदुपसर्गविषयेऽपि नावगृह्णन्ति, यथा शाकल्येन 'अधिवासन्' इति नावगृहीतम्, आत्रेयेण तु अधिवासमिति अवगृहीतम्'** (२।१३।) स्कन्दस्वामिनोऽभिप्रायः अयमेवास्ति यत्पदकाराणां तात्पर्यमपि विचित्रमेव भवति। उपसर्गानन्तरं कोऽपि पदकारः 'अवग्रहं' न ददाति, कोऽपि यच्छति सामान्यनियमेनैव। 'अधिवासः' इति पदे शाकल्यस्तु अवग्रहं न मन्यते, आत्रेयस्तु मन्यते एव। कारणं यद्भवतु वेदार्थानुशीलनस्य प्रथमः सोपानः पदपाठ एवाऽस्ति। वैदिकमन्त्राणां पदपाठं विना तेषामर्थज्ञानं कदापि भवितुं न शक्नोति। अस्मै पदपाठाय व्याकरणस्य नियमानामाविष्कारः पूर्वमेवाऽभवत्।

ब्राह्मणग्रन्थेषूपलब्धानां निरुक्तीनां व्युत्पत्तीनाञ्च आधारोपरि निघण्टु-निरुक्तप्रभृतिग्रन्थानां रचनावान्तरकाले एवाभवत्। मध्ययुगे बहवः वैदिकविद्वांसः वैदिकसंहितासु भाष्याख्यां रचनां कृतवन्तः। अनेन प्रयासेन ते वैदिकमत्राणामर्थान् बोधगम्यानकुर्वन्। अस्मिन् अर्थानुशीलनकार्ये ते वैदिकविद्वांसः निरुक्त-व्याकरण-पुराण-इतिहासप्रभृतीनां प्रमुखग्रन्थानामुपयोगं कृतवन्तः। एतादृशेषु भाष्यकारेषु माधवभट्ट-स्कन्दस्वामी-नारायण-उद्गीथ-वेङ्कटमाधव-आनन्दतीर्थप्रभृतयः विद्वांसः ऋग्वेदस्य मान्यभाष्यकर्त्तारः सन्ति। भवस्वामी-ग्रहदेव-क्षुर-भट्ट-भास्करमिश्रप्रभृतयः विद्वांसः तैत्तिरीयसंहितायाः, उव्वट-महीधरप्रभृतयः माध्यन्दिनसंहितायाः, माधव-भरतस्वामी-गुणविष्णुप्रभृतयः सामवेदस्यादरणीया भाष्यकाराश्च सन्ति। अस्मिन् विषये सायणाचार्यस्य कार्यं तु स्तुत्यमेवाऽस्ति। अयं हि विद्वान् पञ्च वैदिकसंहितानाम्, एकादश ब्राह्मणानाम्, कतिपयारण्यकाणामुपरि पाण्डित्यपूर्णभाष्यग्रन्थान् रचयामास। सायणाचार्यस्य भाष्यमेवाद्य वेदानामर्थावबोधने प्रकाशस्तम्भरूपेण विराजमानमस्ति। नास्त्यत्र लेशमात्रोऽपि सन्देहः।

## २. पाश्चात्यवेदज्ञानां कार्याणि

वेदानामनुशीलनं प्रति पाश्चात्यपण्डितानामष्टादशशतकस्यान्तिमे चरणे ध्यानाकृष्टोऽभवत्। १७८४ ख्रीष्टाब्दे सरविलियमजोन्सनाम्ना आङ्ग्लविदुषा सत्प्रयासेन कलकत्तानगर्याम् 'बंगाल-एशियाटिक-सोसाइटी'-नामक शोधसंस्थायाः स्थापनाऽभवत्। अयं हि महापुरुषः 'कलकत्ता'-उच्चन्यायालयस्य प्रधान-

न्यायाधीशः आसीत्। अस्मादेव कालात् आंग्लविदुषां संस्कृतभाषां प्रति ध्यानाऽऽकृष्टोऽभवत्। तस्मादेव कालादद्यपर्यन्तं तेषां प्रयासः प्रशंसनीयो वर्त्तते।

१८०५ ख्रीष्टाब्दे 'कोलब्रुक' नामकः कोऽपि पाश्चात्यविद्वान् 'एशियाटिक रिसर्चेज'-नामक पत्रिकायां भारतीयवेदानामुपरि एकं विस्तृतं विवेचनात्मकञ्च निबन्धं लिखितवान्। अस्मिन् निबन्धे वेदविषयकनानाग्रन्थानां विवरणेन सह तेषां महत्त्वमपि दर्शितवान्। आंग्लानां शासनसमये वेदाध्ययनस्य प्रबन्धः प्रारब्धः किन्तु आंग्लभाषामाध्यमेनैव। विद्यारसिकाः आंग्लाः अस्माकं प्राचीन-ग्रन्थरत्नानां वेदानां चान्वेषणं परिशीलनमनुवादञ्चाकार्षुः। वेदानुशीलन-विषये पाश्चात्यपण्डितानां प्रथमोऽयं प्रयासोऽस्ति। पूर्वमस्मात् फ्रेंचलेखकेन वाल्टेयरमहोदयेन हिन्दू-बुद्धीनां विद्यानाञ्चानेकशः प्रशंसा कृता। तस्य प्रशंसायाः आधारस्तु 'राबर्ट डी नोविलिस'-नामक ख्रीष्टधर्मप्रचारकमण्डलेन भारतात् समानीतमेकं यजुर्वेदनामकं कल्पितपुस्तकमासीत्। ऊनविंशतिख्रीष्टा-ब्दस्यान्तिमे चरणे कोलब्रुकनामकेन आङ्ग्लविदुषा संस्कृतभाषाया गाढानुशीलनं कृत्वा संस्कृतग्रन्थरत्नानाम् आंग्लविदुषां मध्ये प्रचारं कृतम्। अस्यैव प्रयत्नेन आंग्लविदुषां ध्यानं वैदिकवाङ्मयं प्रति समाकृष्टमभवत्। अस्मात् कालात् प्रायः पञ्चविंशतिवर्षानन्तरं जर्मनीयविदुषां 'रोजेन' अतीवोत्साहपूर्वकं ऋग्वेदस्य सम्पादनकार्यं समारब्धम्। किञ्च दैवदुर्विपाकात् १८३७ ख्रीष्टाब्दे एव तस्य मृत्युरभवत्। तेन हि ऋग्वेदस्य प्रथममष्टकमेव सम्पादितं तदेव प्रकाशितमभवत्। अस्मिन्नेव काले 'पेरिस'-नगरस्य संस्कृताध्यापकेन 'बरनू-फमहोदयेन' वेदस्यानुशीलने महत्त्वपूर्णं कार्यं कृतम्।

यूरोपे वैदिकानुशीलनस्येतिहासे १८४६ ख्रीष्टाब्दः चिरस्मरणीयो भवि-ष्यति। यतो ह्यस्मिन्नेव वर्षे 'रूडाल्फ-राथनामकः' एकः जर्मनविद्वान् 'वेदस्य साहित्यञ्चेतिहासश्चेत्यभिधानकमेकं लघ्वाकारं किञ्चातीव महत्त्वपूर्णं पुस्तकं प्रकाशितवान्। येन पुस्तकेन यूरोपदेशे वेदानुशीलनं प्रति अतीव गम्भीरा प्रवृत्तिः समुत्पन्नाऽभवत्। वेदस्यैतिहासिकपद्धत्याः समुद्भावकरूपेण चिरकालपर्यन्तं राथ-महोदयस्तु अविस्मरणीयः स्थास्यति। यतो हि अनेन वेदस्यार्थावबोधने सायण-प्रभृतीनां भारतीयभाष्यकाराणां व्याख्यानानि सर्वथाऽग्राह्यानीति कृत्वा पाश्चात्य-भाषाविज्ञानं तथा तस्य तुलनात्मकधर्ममेवाधारं कृत्वा वेदार्थबोधनस्य प्रयत्नो विहितः। दोषपूर्णाऽपीयं पद्धतिः वेदानामर्थज्ञानाय महत्त्वपूर्णाऽभवत्। अस्य महानुभावस्य दृष्ट्या वेदानां विभिन्नस्थलेषु समागतानां शब्दानां सूक्ष्मपर्या-लोचनेनैव वैदिकसन्दिग्धशब्दानामर्थाः स्वयमेवाभासिताः भवन्ति। अस्याः पद्धत्याः अनुसरणं कृत्वैव राथमहोदयः 'सेन्टपीटर्सबर्गसंस्कृत-जर्मन'-महाकोश-स्याऽपि निर्माणं कृतवान्। शब्दकोशोऽयमस्य महापुरुषस्य विद्वत्ता-प्रतिभा-अध्यवसायप्रभृतीनां पर्याप्तसूचकोऽस्ति। अस्मिन् ग्रन्थे प्रत्येकशब्दस्यार्थः विकासक्रमेण निर्वर्णितोऽस्ति। शब्दानामर्थनिर्णेतुमस्मिन् ग्रन्थे आवेदात् लौकिक-

ग्रन्थानामपि सन्दर्भः समुद्धृतोऽस्ति। अस्मिन् ग्रन्थे राथमहोदयेन स्वयमेव वैदिकशब्दानामर्थसङ्कलनं कृतम्। लौकिकसंस्कृतशब्दानामर्थनिर्णयः बोठलिंग-नामकः कोऽप्यन्यः जर्मनविद्वान् कृतवान्। शब्दकोशोऽयमद्यापि अतुलनीयोऽस्ति। संस्कृतशब्दानामैतिहासिकार्थावबोधनेऽतीवोपयोगी ग्रन्थोऽयमस्ति।

राथमहोदयस्य सहपाठिनां शिष्याणाञ्चैकाऽतिविस्तीर्णा परम्परा वर्त्तते। विद्वद्भिरेभिः वेदस्यार्थानुशीलने विशेषरूपेण कार्यं कृतम्। एतेषां पाश्चात्यविदुषां कार्याणि वयं कतिपयश्रेणीषु विभाजितुं शक्नुमः। प्रथमतः एभिः विद्वद्भिः वैदिकग्रन्थानां शुद्धसंस्करणं प्रकाशितं, तदनु वैदिकग्रन्थानामनुवादमपि कृतम्। तत्पश्चात् वेदार्थानुशीलनविषये तु एषां कार्याणि अतीवश्लाघनीयानि सन्ति।

## ग्रन्थानां संस्करणम्

वैदिकधर्मस्य पुण्यप्रकर्ष एव मन्ये मूर्त्तो भूत्वा पाश्चात्यदेशे मैक्समूलरनाम्ना प्रकटीभूतः, यो वेदविषयकान् नानाग्रन्थानलिखत्। अयं हि मैक्समूलरमहोदयः वेदार्थरहस्यज्ञः वैदिकसाहित्यस्य पारङ्गमश्चासीत्। पाश्चात्यदेशेषु वेदानां लोक-प्रियतायाः आधारस्तम्भोऽयं विद्वानासीत्। पाण्डित्येन सह सहानुभूतिरपि अस्य महोदयस्य विशेषगुणरासीत्। अनेन भारतीयसंस्कृति-धर्म-दर्शनादयोऽतीव सहा-नुभूतिपूर्वदृष्टचावलोकिताः। भारतीयानां मर्मस्थलपर्यन्तं गन्तुमचेष्टत्। अद्यापि तस्य ग्रन्थाः पाण्डित्येन सहोदारतायाः प्रतीकानि सन्ति। अस्य सर्वाधिक-महत्त्वपूर्णकृतिषु ऋग्वेदसायणभाष्यस्य सर्वप्रथमविवेचनापूर्णप्रकाशनम्। ग्रन्थोऽयं नितान्तप्रौढः प्रसिद्धश्चाऽभवत्। अस्य ग्रन्थस्य प्रकाशनेन पाश्चात्यदेशेषु वेद-विषयकाध्ययनाध्यापनेषु मूलाधारः सुदृढोऽभवत्। अस्य विशिष्टग्रन्थस्य लेखनारम्भः १८४९ खीष्टाब्देऽभवत् तथा समाप्तिश्च १८७५ खीष्टाब्देऽभवत्। १८९०–९२ खीष्टाब्देऽस्य ग्रन्थस्य परिष्कृतं द्वितीयं संस्करणं प्रकाशितमभवत्। पाश्चात्यपण्डितेषु डाक्टर वेवरोऽप्यस्मिन् कार्येऽतीव प्रसिद्धिमगमत्। अनेन हि न केवलं यजुर्वेदसंहितायास्तथा तैत्तिरीयसंहितायाः सम्पादनं कृतं प्रत्युत, 'इन्-दिशेस्तूदियन'-नामक जर्मनशोधपत्रिकायां वैदिकानुसन्धानमप्यग्रसरं कृतम्। रोमनलिप्यामतीवयोग्यतापूर्वकेन सम्पादितमेकं संस्करणं आंग्लविदुषः आउ-फ्रेक्टमहोदयस्योपलब्धो भवति। अस्य संस्करणस्य प्रकाशनं १८६२–६३ ई० समये जातमिति विदुषां निश्चयः। जर्मनविद्वान् श्रोदरोऽपि मैत्रायणीसंहितायाः योग्यतया सह सुष्ठु संस्करणं १८८६–८७ ई० समये प्रकाशितवान्, तथाऽनेनैव विदुषा काठकसंहितायाः समीचीनं संस्करणमप्येकं खीष्टाब्दस्य १९००–११ समये प्रकाशितम्। एताः संहिताः इदानीन्तने काले एव स्वाध्यायमण्डलात् (औंध) सातबलेकरजीमहोदयस्य सम्पादकत्वे प्रकाशिता अभवन्। एतदतिरिक्ताः वेदविषयकाः विविधाः ग्रन्थाः पाश्चात्यपण्डितानां प्रयासस्य परिश्रमस्य चोज्ज्व-लान्युदाहरणानि सन्ति। एषां पाश्चात्यविदुषां कृतिषु १८४२ खीष्टाब्दे स्टेवेन्स-

नमहोदयस्य राणायनीयशाखान्तर्गतसामसंहितायाः आंग्लभाषानुवादः, १८४८ ईशवीये वेन्फीमहोदयस्य कौथुम-शाखीय-सामसंहितायाः जर्मनभाषायामनुवादस्तथा १८५६ खीष्टाब्दे राथ एवं ह्विटनी नाम्नोः विदुषोः अथर्ववेदस्याभिनवसंस्करणश्चेति त्रयो ग्रन्थाः नितान्तप्रौढाः प्रसिद्धाश्चाभवन् । पिप्पलादशाखीयाथर्वसंहितायाः एकैव जीर्णा प्रतिः काश्मीरे समुपलब्धा बभूव । तां जीर्णां प्रतिमेवाधारं कृत्वाऽस्याः आलोकालेख्यम् ( फोटो ) विधाय १९०१ खीष्टाब्दे प्रो० ब्लूमफील्ड तथा डा० नार्वे नामभ्यां विद्वद्भ्यां तमेव छायाचित्रं खण्डत्रयेषु प्रकाशितम् । ब्राह्मण-श्रौतसूत्र-प्रातिशाख्यप्रभृतीनां ग्रन्थानां शुद्धवैज्ञानिकसंस्करणस्य प्रकाशनमेभिरेवाङ्ग्लपण्डितैः कृतमस्ति ।

प्रो० एम० हाग महोदयकृत-ऐत्तरेयब्राह्मणस्य विशुद्धसंस्करणं तथा तस्यैवांग्लानुवादः अद्यापि स्वभूमिकायै अतीवोपादेयमस्ति । डा० आउफ्रेक्ट-महोदयस्य रोमनाक्षरेषु प्रकाशितस्यास्य ब्राह्मणग्रन्थस्य संस्करणं विशुद्धं कथ्यते । अनेनैव प्रकारेण प्रो० बी० लिण्डनरमहोदयस्य कौषीतकिब्राह्मणस्य संस्करणमतीव सुष्ठुमस्ति । १८५५ खीष्टाब्दे माध्यन्दिनशतपथब्राह्मणस्य प्रथमं संस्करणं डा० वेवरमहोदयस्य सम्पादकत्वे प्रकाशितमभवत् । डा० वेवरमहोदयस्तु बर्लिननगरे १८५८ ईशवीये अद्भुतब्राह्मणस्य शुद्धसंस्करणं प्रकाशितवान्, तथा तेनैव महोदयेन वंशब्राह्मणस्यापि सम्पादनं कृतम् । डा० ए० सी० बर्नेलमहोदयस्तु लन्दननगरे १८७३ खीष्टाब्दे विविधसामवेदीय-ब्राह्मणग्रन्थानां सम्पादनं कृतवान् । वंशब्राह्मणस्य तथा देवताध्यायब्राह्मणस्य प्रकाशनं १८७३ ईशवीयेऽभवत् । आर्षेयब्राह्मणस्य प्रकाशनं १८७६ ईशवीयेऽभवत् तथा १८७७ खीष्टाब्दे संहितोपनिषद्ब्राह्मणस्य प्रकाशनं मंगलोरनगरेऽभवत् । डा० एच० ओर्टलमहोदयस्तु जैमिनीब्राह्मणस्य विशेषांशस्यांग्लभाषायामनुवादं कृतवान् तथा जर्मनभाषायामस्यैव ग्रन्थस्यानुवादः डा० कैलेण्डमहोदयेन प्रकाशितः । अस्य प्रथमः ग्रन्थः 'अमेरिकन ओरियण्टल जर्नल' नाम्नि पत्रे प्रकाशितोऽभवत् । १९१९ खीष्टाब्दे लण्डनस्य हालैण्डनगरे प्रो० गास्ट्रामहोदयः गोपथब्राह्मणस्यातीव सुष्ठु संस्करणं प्रकाशितवान् । संस्करणमिदं नागराक्षरेषु प्रकाशितमस्ति ।

अस्मिन् विषये आश्वलायनगृह्यसूत्रस्य तथा पारस्करगृह्यसूत्रस्य सम्पादकः स्टैन्जलरमहोदयस्य, शाखायनश्रौतसूत्रस्य सम्पादकः हिलेब्राण्टमहोदयस्य, बौधायनश्रौतसूत्रस्य सम्पादकः डब्ल्यू० कैलेण्डमहोदयस्य, आपस्तम्बश्रौतसूत्रस्य सम्पादकः आर० गार्वेमहोदयस्य, मानवश्रौतसूत्रस्य सम्पादकः क्नाउएर-महोदयस्य, कात्यायनश्रौतसूत्रस्य सम्पादकः वेवरमहोदयस्य तथा कौशिक-श्रौतसूत्रस्य सम्पादकः ब्लूमफील्डमहोदयस्य च नाम विशेषसमादरेण सहोल्लेखनीयमस्ति । राथमहाशयस्य शिष्याणाञ्चास्ति विशाला संख्या । सा वेदानु-

शीलनकर्मणि उल्लेखनीयं कार्यं जग्राह । एतेषु केचन वैदिकग्रन्थानां वैज्ञानिकानि संस्करणानि, इतरे वैदिकग्रन्थानामनुवादम्, अपरे वेदार्थावगाहनपरकग्रन्थान्, अन्ये च वैदिक संस्कृतिस्वरूपोद्भावनकारीणि व्याख्यात्मकानि पुस्तकानि प्राणैषुः ।

## प्रतीच्यप्रधीनामनुवादविषयकं कार्यम्

उपरिवर्णित प्रो० लिण्डनरः कौषीतकिब्राह्मणे, डा० बर्नेलः सामवेदीयेषु ब्राह्मणेषु, डा० एर्टलो, डा० कैलेण्डश्च जैमिनीयब्राह्मणे, प्रो० गास्ट्रा गोपथ-ब्राह्मणे, स्टेन्सलर आश्वलायनगृह्यसूत्रे पारस्करगृह्यसूत्रे च, हिलेब्राण्टः सांख्यायनश्रौतसूत्रे, कैलेण्डः बौधायनश्रौतसूत्रे, गार्बे आपस्तम्बश्रौतसूत्रे, क्नाउएरो मानवश्रौतसूत्रे, वेबरः कात्यायनश्रौतसूत्रे, ब्लूमफील्डः कौशिकश्रौतसूत्रे उल्लेखनीयानि कार्याणि अन्वतिष्ठन् ।

एतत्तु प्रतीच्यानां बुधानां प्रामुख्येन ग्रन्थप्रणयनविषयकोऽनुरागो दिङ्मात्रेण दर्शितः । चेत् तेषां तत्कार्यं प्रति, क्षणमपि दृष्टिः प्रयाति यद्धि कार्यं तेषामनुवादविषयकं वर्त्तते तदा तत्कार्यमपि मानसं विस्मितं विदधाति । प्रो० हॉग-महोदयस्य ऐतरेयब्राह्मणस्य संस्करणमथ च तदीय आंग्लानुवादोऽद्यापि स्वभूमिकाहेतोरुपादेयो वर्त्तते ।

पञ्चाशदधिकाष्टादशशततमेऽब्दे ईशवीये डा० एच० एच० विलसनो बुधेन्द्रः सायणभाष्यानुसारेण ऋग्वेदं पूर्णमेवांग्लभाषायामनूदितवान् । ऋग्वेद-स्यानुवादो जर्मनभाषायां श्रीमद्ग्रासमानलुड्विगाभ्याञ्च, एच० ग्रासमानस्य पद्यानुवादः १८७६–७७ ई० पर्यन्तं तथा ए० लुड्विगमहोदयस्य गद्यानुवादः विस्तृतव्याख्यया सह १८७६–१८८६ ईशवीये ) अक्रियत । बर्लिननगरात् १९०९–१९१२ ईशवीये जर्मनविदुषः डा० एच० ओल्डनबर्गस्य ऋग्वेदेकार्यं नितान्तमेव स्पृहणीयं दृश्यते । स द्वाभ्यां बन्धाभ्यां हि ऋग्वेदस्य मार्मिकव्याख्यां विहितवान् । ग्रन्थोऽयं ऋग्वेदस्यानुशीलनायातीव महत्त्वशाली, प्रामाणिकस्तथोपादेयश्चास्ति । अस्योपयोगिताऽद्यापि अक्षुण्णैवाऽस्ति ।

काशीतः १८८९ ईशवीये ग्रिफिथो यजुर्वेदस्य माध्यन्दिनसंहितायाः आंग्ल-भाषायां प्राञ्जलं पद्यानुवादं कृतवान् । डा० ए० बी० कीथमहोदयः तैत्तिरीय-संहितायाः प्राञ्जलमनुवादमकरोत् ( द्रष्टव्यः—हार्वर्ड ओरियन्टल सीरीज, बन्धसंख्या १८, १९, १९१४, अमेरिकातः ) । ग्रन्थारम्भे विविधोपयोगिन्या वार्त्तायाः मीमांसाऽनुवादकस्य विलक्षणप्रतिभायाः परिचायिका वर्तते । ग्रिफिथ-महोदयेनैव सामवेदस्याऽपि आंग्लभाषायां पद्यानुवादः कृतः । अथर्ववेद-स्याप्यांग्लभाषायां द्वावनुवादौ स्तः । १८९१-९८ ईशवीये काशीतः ग्रिफिथ-महोदयस्यानुवादः मूलार्थावबोधनेऽतीव सहायको वर्त्तते । सी० आर० लेनमेनेन पूर्णतां नीतो डब्लू० एच० ह्विटनी-कृतोऽथर्ववेदानुवादो विद्वत्तापूर्ण-

भूमिकावत्वात् अतितरामुपादेयो वर्त्तते। प्रतीच्यपण्डितस्य साध्यवसायं सश्रमञ्च कृतः शतपथब्राह्मणस्यानुवादो नितान्तमेव श्लाघनीयः। ऋग्वेदीययोरुभयोरपि ब्राह्मणयोरनुवादं डा० कीथमहोदयः (हा० ओ० सी०, बन्ध २४, १९२०ई०) कृतवान्। एष चानुवादो भूमिकावत्वान्महत्त्वपूर्णोऽस्ति। सामवेदीयसंहिताविषयभूमिकाभूषितत्वात् ताण्ड्यब्राह्मणस्य च डा० कैलेण्डकृतोऽनुवादः ( बिब्लि०, कलकत्ता १९३२ ईशवीये ) परमोपकारको विद्यते ( उपनिषत्सु प्रातिशाख्येषु निरुक्तादिवेदाङ्गेषु कृतमनुवादकार्यं प्रतीच्यकोविदानां निःसंशयमुपादेयं महनीयञ्च वर्त्तते।

## व्याख्या-ग्रन्थाः

प्रतीच्यानां मनीषिणां वैदिकसाहित्ये व्याख्याविषयकं स्वतन्त्रमपि कार्यं स्तुत्यमास्ते। डा० मैकडोनल-कीथयोर्वैदिक-'इण्डेक्स' इत्येतन्नामधेयो विश्वकोषः कं नोपकुर्वाणो दृग्पथमवतरति ? ये विद्वांसो वेदमधिकृत्य ग्रन्थान् अकार्षुस्तेषु मैक्समूलरः प्रतीच्यपण्डितकुलललामः। सः वेदविषयकान् बहून् ग्रन्थान् विरचय्य वैदिकं सिद्धान्तं धर्मञ्च लोकप्रियतां निनाय। तदीयमतिमहत्त्वपूर्णकार्यमस्ति सायणकृतस्य ऋग्वेदभाष्यस्य विवेचनपूर्णं सम्पादनम्। ततश्च सः 'प्राचीनवैदिकसंस्कृतसाहित्ये' वैदिकसाहित्यस्य वैदूष्यपूर्णां मीमांसाञ्चकार, 'पवित्रप्राच्यग्रन्थमालायां' स्वयं वैदिकग्रन्थान् अनूदितवान्, किञ्चान्येषां विदुषामपि स्वतन्त्रानुबन्धांस्तत्र प्रकाशयामास। डा० वेबरोऽपि प्रख्यातः प्रतीच्येषु प्रधीषु। स निजपाण्डित्येनालोचकान् विस्मापयामास। 'संस्कृतजर्मनमहाकोशस्य चर्चा तु पूर्वमेव कृताऽस्ति। ऋग्वेदीयग्रासमानस्य 'वैदिककोशः' ( १८७३–७५ ) कं नोपकरोति ? ग्रन्थेऽस्मिन् ऋग्वेदीयप्रत्येक-स्थलस्योल्लेखं कृत्वा शब्दानामर्थनिर्णयोऽपि ग्रन्थकारेण कृतः। येन पूर्वकृतऋग्वेदस्यानुवादस्य त्रुटेः परिमार्जनञ्चाभवत्। डा० मैकडोनलकीथयोः 'वैदिक-इण्डेक्स' वैदिकसंस्कृत्या सम्बद्धविषयाणामेकः लघ्वाकारो विश्वकोष एवाऽस्ति। ग्रन्थेऽस्मिन् भौगोलिकैतिहासिकविषयाणामतिरिक्तः सामाजिक-आर्थिकप्रभृतिविषयाणां पूर्णमीमांसा वर्त्तते।

१. वैदिकव्याकरणेऽपि सुविदितास्त्रिचतुराः ग्रन्थाः प्राप्यन्ते। ह्विटनीमहोदयस्य व्याकरणग्रन्थः मुख्यतया लौकिकसंस्कृतस्यैव ग्रन्थोऽस्ति तथापि वैदिकभाषया सह तुलनां विधाय वैदिकभाषायाः व्याकरणस्यापीयं रचनाऽस्ति।

२. डा० मैकडोनलकृत-वैदिकव्याकरणस्य ग्रन्थः ( वैदिकग्रामर १९१० जर्मनभाषायाम् ) सर्वतो मान्यः प्रामाणिकश्चाऽस्ति। अस्य ग्रन्थस्य संक्षिप्तरूपोऽपि छात्राणां कृते महत्त्वपूर्णोऽस्ति (वैदिक ग्रामर फार स्टुडेण्ट्स, आक्स्फोर्ड १९२० ई० )। अत्र वैशिष्ट्यमेकं दर्शनीयमस्ति वैदिकप्रयोगानां पाणिनीयव्याकरणे यत्र 'बहुलं छन्दसि' मध्ये निवेशोऽस्ति तत्राप्ययं नियमेन साधितुं प्रयत्नः कृतवान्।

३. डा० जे० वाकरनागलस्य व्याकरणग्रन्थः जर्मनभाषायां निबद्धोऽस्ति। कतिपयेषु खण्डेषु प्रकाशितोऽयं ग्रन्थः भाषाशास्त्रीयानुसन्धानस्य मार्गं प्रशस्तं कृतवान्। विदुषां सम्मतौ ग्रन्थोऽयं स्वविषये सर्वोत्कृष्टः प्रौढश्चास्ति।

अनेन प्रकारेण वैदिकव्याकरणविषयेऽपि पश्चिमीयाः संख्यावन्तः कार्यं कृतवन्तः। ह्विटनी-मैक्डोनल-वाकरनागलमहाशयानां वैदिकानि व्याकरणानि शिक्षासंसारे परमप्रियतां गतानि सन्ति।

वैदिकच्छन्दःस्वपि कार्यं कुर्वाणाः प्रतीच्याः सुधयो दरीदृश्यन्ते। प्रो० वेबरेण निज-'इब्देशेस्तूदियन'-नामकस्य शोधपत्रस्याष्टमे खण्डेऽस्मिन् विषये विस्तृतचर्चा कृताऽस्ति। प्रो० ई० वी० अर्नाल्डः ऋग्वेदीयानि छन्दांस्यधीत्य 'वैदिकमीटरम्' नाम ग्रन्थं गुम्फतिस्म। स मन्त्राणां कालनिर्णयस्य च प्रशंसनीये कार्ये आत्मानं नियोजयामास। अस्य महोदयस्य सिद्धान्तः परिश्रमसाध्ये सत्यपि विदुषां मध्ये मान्यो नाभवत्।

## वैदिकपुराणविज्ञानम्

वस्तुतो वैदिकवाङ्मयस्य सर्वेष्वपि क्षेत्रेषु स्तुत्यानि कार्याणि कुर्वाणा विपश्चितस्तेऽवलोक्यन्ते। वैदिकधर्मस्य धर्मान्तरेण तुलनां विधाय वैदिकविषयकान् तुलनाप्रधानान् बहून् ग्रन्थान् ( Comparetive mythology ) लिखितवन्तः। अस्मिन् क्षेत्रे मैक्समूलर-मैकडानल-हिलेब्राण्टमहाभागानां नामानि सन्त्युल्लेखनीयानि। हिलेब्राण्टस्य 'वैदिक-मीथोलोजी' मैक्डोलनस्य च 'वैदिक-मीथोलोजी' व्यापकत्वात् प्रामाणिकत्वाच्चोपादेये स्तः। फ्रेञ्चविदुषां च श्रौतसम्बन्धिनोऽनेके ग्रन्थाः दृष्टा भवन्ति। एतदतिरिक्तः जर्मनभाषायां हिलेब्राण्टस्य यज्ञविषयानधिकृत्यातीवोपादेयः प्रामाणिकश्च ग्रन्थः ( वैदिक रिचुआल लितरातुर, जर्मनी १९२५ ई० ) उपलब्धो भवति। फ्रेंचविद्वांसोऽपि श्रौतविषयकानेकग्रन्थानां रचनां फ्रेंचभाषायां कृतवन्तः। डा० कीथमहोदयस्यास्मिन् विषये ग्रन्थोऽस्ति। अस्य ग्रन्थस्य द्वौ खण्डौ स्तः। ग्रन्थेऽस्मिन् वैदिकधर्मस्य तथा औपनिषदिकतत्त्वज्ञानस्य प्रामाणिकमीमांसा वर्त्तते। अस्य प्रसिद्धग्रन्थस्य नाम 'Religion and Philosophy of Vedas and Upnisadas' अस्ति। अस्य ग्रन्थस्य प्रकाशनं हार्वर्डनगरादभवत्। ग्रन्थस्यास्य प्रथमभागस्य संख्या ३१–३२ एवं द्वितीयखण्डस्य संख्या ९३४–३५ वर्त्तेते। हिलेब्राण्टस्य वैदिक-मीथोलोजी, मैकडोलनस्य च वैदिक-मीथोलोजी व्यापकत्वात् प्रामाणिकत्वाच्चोपादेये स्तः।

## वैदिकसाहित्यस्येतिहासः

वैदिकसाहित्यस्येतिहासेऽपि सुविदितास्त्रिचतुराः ग्रन्थाः प्राप्यन्ते। डा० बेवर एतस्मिन्विषयेऽपि स्वां लेखनीं प्रयुयोज। एतद्विषयकं यं ग्रन्थं स अजग्रन्थद् विद्वज्जगति स मान्योऽभवत्। ग्रन्थोऽयं स्वविषयस्य प्रथमप्रतिपादकस्य

गौरवं लभते। मूलतः ग्रन्थोऽयं जर्मनभाषायां लिखितमस्ति। अस्यांग्लानुवादः ट्रुबनर-संस्कृत-सीरीज-लण्डननगर्यामुपलब्धोऽस्ति। लण्डननगरीत एव १८५९ खीष्टाब्दे मैक्समूलरस्य 'History of Ancient Sanskrit Literature' ग्रन्थः श्रौतग्रन्थानां गम्भीरमनुशीलनं प्रकटीकरोति। लण्डननगरीत एव विन्टरनित्समहोदयस्य ग्रन्थः 'History of Indian Literature' (मूलजर्मन-भाषायाः प्रकाशनं १९०४ खीष्टाब्दे समभवत्) अयं हि व्यापकदृष्ट्या सर्व-विदितः अस्त्येव।

## वैदिकसाहित्यस्यानुक्रमणी

प्राचीनकाले भारते तु 'अनुक्रमणी' इत्येतत्संज्ञकाः ग्रन्थाः प्रणीता अजायन्त एव परमस्मिन् वर्त्तमानानेहस्यापि प्रतीच्याः विचक्षणाः एतस्मिन् क्षेत्रेऽपि कार्यं कृतवन्तः। तत्र डा० ब्लूमफिल्डस्य 'वैदिककान्कार्डेन्सः' सुप्रसिद्धः ग्रन्थो विराजते। वेदे वैदिके च विषये लिखितानां ग्रन्थानां लेखानाञ्च पूर्णतया परिचय-कारी ग्रन्थो फ्रेञ्चभाषायां 'बिब्लियोग्राफी वैदिक' नामधेयो हि विदुषा लईरेना-महाभागेनालेखि। ग्रन्थश्चायमुपादेयः। इत्थं पाश्चात्यानां पण्डितानां वेदे, वेदाङ्गे अनेकेषु च वैदिकेषु विषयेषु प्रशंसनीयानि कार्याणि वीक्ष्यन्ते।

## ३. नव्यभारते वैदिकानुशीलनस्य कार्यम्

गतशतकस्य भारतीयविदुषामप्यस्यां दिशि सुतरां ध्यानमाकृष्टोऽभवत्। कारणञ्चास्य द्वौ नवीनौ धर्मसुधारकसमाजयोः संस्थापना वर्तते। प्राच्यां वंगीयक्षेत्रे राजाराममोहनरायमहोदयेन स्थापितः 'ब्रह्मसमाजः' तथा प्रतीच्यां पञ्चनदप्रदेशे स्वामिदयानन्दसरस्वतीमहोदयेन च प्रतिष्ठापितः 'आर्यसमाजः' मूलतः वैदिकसिद्धान्तमेव हिन्दूधर्मस्य विशुद्धं सिद्धान्तं मत्वा लोकानां ध्याना-कर्षणं कृतवन्तौ। ब्रह्मसमाजस्तूपनिषदामध्ययनमेव पुनरुज्जीवितमकरोत्। अयं समाजस्तु वैदिकसंहितायाः अध्ययनाध्यापनमेव हिन्दूधर्मस्य मूलमाधारं मत्वा सर्वत्र तस्यैव प्रचारमकरोत्। पाश्चात्यविदुषां वैदिकानुशीलनादपि भारत-वर्षेऽपि मनस्विनः प्रोत्साहनमाप्नुवन्। भारतीयविद्वांसोऽपि वैदिकग्रन्थानां विशुद्धं संस्करणं तथा तेषामैतिहासिकानुशीलनञ्च प्रस्तुतं कृतवन्तः। स्वामि-दयानन्दसरस्वत्या ऋग्वेदोपरि तथैव यजुर्वेदोपरि च निजपद्धत्यनुसारेण संस्कृत-भाषायां सुष्ठु भाष्याणां रचना कृता।

आधुनिकवेदज्ञेषु शङ्करपाण्डुरङ्गपण्डित-लोकमान्यबालगङ्गाधरतिलक-शङ्करबालकृष्णदीक्षित-सत्यव्रतसामश्रमीप्रभृतयः सुविदिताः सन्ति भूभुवने। शङ्करपाण्डुरङ्गपण्डितः बम्बईनगरीतः १९९५-९८ खीष्टाब्दे सायणभाष्येण सहाथर्ववेदस्यातीव विशुद्धं संस्करणं चतुर्षु खण्डेषु प्रकाशितवान्। अयं हि विद्वानभिनवपद्धत्यामेव ऋग्वेदस्य व्याख्याऽपि 'वेदार्थयत्न'नामकग्रन्थे विवे-चनात्मकटिप्पण्या सहांग्लभाषायां मराठीभाषायाञ्च प्रकाशितुं प्रारभत्।

श्लाघनीयेयं व्याख्या मध्ये एव विरराम। यतो हि दैवदुर्विपाकाद् व्याख्यातुरकालमृत्युरभवत्। लोकमान्यबालगङ्गाधरतिलकस्य उभौ ग्रन्थौ 'ओरायन' एवं 'आर्कटिक होम इन द वेदाज्' वैदिकालोचनायाः मौलिक-गवेषणापूर्णौ ग्रन्थौ स्तः। अनयोः ग्रन्थयोः ग्रन्थकर्त्तुः विद्वत्ता, तर्कोपन्यासता तथा बुद्धेर्विलक्षणताऽवलोकनीयाऽस्ति। ओरायननामके निजग्रन्थे वैदिकसंहितासु ब्राह्मणेषु च निर्दिष्टाः ज्यौतिषसम्बन्धिनीः सूचना अवगाह्य लोकमान्यबालगङ्गाधरतिलको वेदाविर्भूतस्य विक्रमपूर्वचतुःसहस्रवर्षाणि यातानीति मन्येते। सप्ताधिकैकोनविंशतिशततमेशवीये डा० ह्यूगो विन्कलर 'बोधाज कोइ' नामके स्थाने टर्कीदेशान्तर्गते खननकार्ये प्राचीनमेकं शिलालेखमवाप। तेन सिद्धयति यद् वेदस्य प्रादुर्भूतस्यैकविंशत्यधिकचतुस्त्रिशद् वर्षाणि जातानि न ततोऽधिकानि। डा० अविनाशचन्द्रदासः स्वकीये ऋग्वैदिक-इण्डियाऽभिधाने ग्रन्थे लिखति यद् भौगोलिकीः किञ्च भूगर्भसम्बन्धिनी घटनाः अवलम्ब्य ऋग्वेदीया रचनायाः अथ च तत्कालवर्तिन्याः सभ्यतायाः प्रादुर्भूतायाः प्रायेण सप्तविंशतिसहस्राब्दाः अतिक्रान्ताः। पण्डितदीनानाथशास्त्रीचुलेटस्तु स्वकीये वेदकालनिर्णये ज्योतिस्तत्त्वमीमांसके ग्रन्थे वेदकालमतितरां प्राचीनं साधयितुं श्लाघनीयं प्रयत्नं विदधानः समवाप्यते।

सत्यव्रतसामश्रमी वंगप्रदेशस्यैकः मान्यः वैदिक आसीत्। अयं हि विद्वान् सामवेदेन सम्बद्धानां ग्रन्थानां प्रामाणिकमेवं विशुद्धं संस्करणञ्च प्रकाशितवान्। अयं हि सामवेदस्य मार्मिको विद्वान् आसीत्। अस्य कीर्त्तिस्तम्भोऽस्ति—सामसंहितायाः गानसंहितायाश्च १८७७ ईशवीये कलकत्तानगरात् प्रकाशितं विशुद्धं प्रामाणिकञ्च संस्करणम्। आर्यसमाजस्यानेके विद्वांसः वैदिकग्रन्थानां विशुद्धसंस्करणस्य प्रकाशनं कृत्वा निजवेदप्रेम्णः परिचयं दत्तवन्तः। लब्धप्रतिष्ठार्यसमाजीविद्वान् श्रीपाददामोदरसातबलेकरः चतुर्णां वेदानां संहितायाः विशुद्धं संस्करणं प्रकाशितवान्। अस्यैव महोदयस्य काठकसंहिता-मैत्रायणीयसंहितागानसंहिता-दैवतसंहिताप्रभृतीनां प्रकाशनं तथैवोपादेयमस्ति।

वैदिकसंहितानां भाषानुवादोऽपि उपलब्धो भवति। रमेशचन्द्रदत्तस्य बंगीयभाषायामनुवादः, रामगोविन्दत्रिवेदीमहोदयस्य तथा श्रीरामशर्मा आचार्यपादस्य च हिन्दीभाषायामनुवादः ऋग्वेदस्यातीवोपयोगिनः सन्ति। जयदेवविद्यालङ्कारस्य सामवेदाथर्ववेदयोः हिन्दीभाषायामनुवादस्तथा श्रीधरपाठकस्य मराठीभाषायामनुवादस्तथैवोत्कृष्टौ वर्त्तेते।

वेदवेदाङ्गस्यार्थावबोद्धुं व्याख्येयग्रन्थानां प्रणयनमप्यतीव स्तुत्यं कार्यमस्ति। श्रीअरविन्दमहोदयेनाङ्ग्लभाषायां वैदिकमन्त्राणां रहस्यवादी वैज्ञानिकव्याख्या कृताऽस्ति। अस्य व्याख्या-पद्धत्याः अर्थावबोद्धुं संस्कृतभाषायामधुना द्वौ ग्रन्थौ कापालिमहोदयेन लिखितौ। श्रीविश्वबन्धुमहोदयस्य सम्पादकत्वे

प्रकाशिते 'शब्दार्थपारिजात'-नामके ग्रन्थे वैदिकशब्दानामर्थस्यालोचनात्मक-संग्रहोऽतीव सराहनीयो वर्त्तते। डा० लक्ष्मणस्वरूपकृतो निरुक्तस्यानुवादः, डा० मङ्गलदेवशास्त्री-रचितः ऋक्प्रातिशाख्यस्यानुवादः, डा० सूर्यकान्तशास्त्री-महोदयेन सम्पादितः 'अथर्वप्रातिशाख्यः' स्वविषयस्योपादेयाः ग्रन्थाः सन्ति। श्रीचिन्तामणिविनायकवैद्येनांग्लभाषायां लिखितः ( History of vaidik literature ) तथा श्रीभगवदत्तमहोदयेन रचितः 'वैदिकवाङ्मय का इतिहास' उभौ अपि ग्रन्थौ रोचकौ स्तः। होशियारपुरवैदिकशोधसंस्थानतः प्रकाशितः वैदिकपदानुक्रमकोषोऽप्यतीवोपयोगी ग्रन्थोऽस्ति। श्रीयुधिष्ठिरमीमांसकस्य 'वैदिकच्छन्द तथा वैदिकस्वरमीमांसा' नामकग्रन्थोऽप्युल्लेखनीयो वर्तते। आशास्यते अतोऽप्यधिकाः विषयविशेषज्ञाः भारतीयाः विद्वांसः सुष्ठु कार्याणि कृत्वा ऋषिऋणादात्मानमुद्धर्त्तुं यतिष्यन्ते।

---

# तृतीयोऽध्यायः

## वेदभाष्यकाराः

गुप्तकालिकभारतवर्षे वैदिकधर्मस्य महानभ्युदयोऽभवत् । इतिहासवेत्तारः पाठका विदाङ्कुर्वन्ति यत् गुप्तसम्राट् 'परमभागवतः' इत्युपाधिना स्वात्मानमलञ्चकार । एवंकर्त्तुमसावात्मानम् गौरवास्पदममन्यत । अयमेव वैदिकधर्मस्य पुनरुद्धारः कृतवान् । सप्तमशतके आचार्यकुमारिलेन मीमांसाशास्त्रस्य भूयसी प्रतिष्ठा कृता । अस्यैव व्यापकप्रभावात् वेदाध्ययनं प्रति पण्डितानां प्रवृत्तिः जागरूकाऽभवत् । बौद्धकालिकभारते वेदाध्ययनं प्रति जनानामुपेक्षादृष्टिरजायत । किञ्च कुमारिलेन सयुक्त्या बौद्धमतस्य सप्रमाणं खण्डनं कृत्वा वेदानां प्रामाणिकता पुनः स्थापिता । मयाऽनुमीयते कुमारिल-शङ्करयोः समये एव वेदार्थावबोधनं प्रति जनानां प्रवृत्तिः जागरूकाऽभवत् । वैदिकभाष्यकारेषु प्राचीनतमभाष्यकारः स्कन्दस्वामिनः प्रादुर्भावस्यायमेव काल इति सम्भाव्यते । अत्र मया संहिताक्रमेण भाष्यकाराणां संक्षिप्तवर्णनं क्रियते ।

### ( १ ) ऋग्वेदभाष्यकाराः

वेदभाष्यकृत्सु स्कन्दस्वामि-नारायण-उद्गीथ-माधवभट्ट-वेङ्कटमाधव-धानुष्कयज्व-आनन्दतीर्थ-आत्मानन्द-सायणप्रभृतयो भाष्यकाराः सुविदिताः सन्ति सर्वत्र । स्कन्दस्वामी ऋग्वेदे नितरां विशदं भाष्यञ्चकार । स निरुक्तेऽपि टीकां कृतवान् । ऋग्वेदसंहितायाः सर्वप्रथमभाष्यमस्यैव महापुरुषस्य सम्प्रति समुपलभ्यते । वैदिकसाहित्येऽतीवादरणीयेदं भाष्यमस्ति । ग्रन्थकारस्य पुरातनत्वेन सह ग्रन्थस्याप्यन्तरङ्गगुणेनेदं भाष्यं जनेषु श्लाघ्यं समादरणीयञ्चास्ति । स्कन्दस्वामी प्रतिभावान् प्रभाववांश्च विद्वानासीत् । स्कन्दस्वामिनः जन्म गुर्जरप्रदेशस्य विद्यापीठतया राजधानीभावेन च पुरा प्रथिते 'बलभी' इत्याख्यनगरेऽभवत् । अस्य पितुर्नाम भर्त्तृध्रुव आसीत् । ऋग्वेदभाष्यस्य प्रथमाष्टकस्यान्ते भाष्यकारेणास्य एतस्य चर्चा स्वयं कृताऽस्ति—

**'बलभीविनिवासस्येतामृगर्थागमसंहृतिम् ।**
**भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथा स्मृतिः ॥'**

**स्कन्दस्वामी**

आचार्यस्कन्दस्वामिनः समयस्याऽपि निर्णयः पर्याप्तपर्यालोचनेन निश्चित्य वक्तुं शक्यते । परवर्त्तिषु ग्रन्थेष्वस्य नामोल्लेखेनास्याविर्भावकालः सूचितो भवति । अयं शतपथब्राह्मणस्य विख्यातो भाष्यकारः हरिस्वामिनो गुरुरासीत् । अतोऽस्य समयः सप्तमशतकमिति निश्चित्य वक्तुं शक्यते । यतो हि स्वयं हरि-

स्वामिनोपपत्तिक्रमेण शतपथब्राह्मणस्य प्रारम्भे स्कन्दस्वामिनं निजगुरुं स्वीकृत्य स्वपरिचयश्च दत्तम् ।

**'नागस्वामी तत्र······श्रीगुहस्वामिनन्दनः ।**
**तत्र याजी प्रमाणयज्ञ आढ्यो लक्ष्म्या समेधितः ॥ ५ ॥**

**तन्नन्दनो हरिस्वामी प्रस्फुरद् वेदवेदिमान् ।**
**त्रयी व्याख्यानधौरेयोऽधीततन्त्रो गुरोर्मुखात् ॥ ६ ॥**

**यः सम्राट् कृतवान् सप्तसोमसंस्थास्तथार्कश्रुतिम् ।**
**व्याख्यां कृत्वाऽध्यापयन्मां श्रीस्कन्दस्वाम्यस्ति मे गुरुः ॥ ८ ॥**

हरिस्वामीस्वभाष्यरचनायाः समयोऽपि दत्तवान् । निदर्शनं यथा—

**'यदाब्दानां कलेर्जग्मुः सप्तत्रिंशत्शतानि वै ।**
**चत्वारिंशत्समाश्चान्यास्तदा भाष्यमिदं कृतम् ॥'**

कलियुगे ३७४० वर्षे व्यतीते सति हरिस्वामिना भाष्यमिदं कृतम् । कलियुगस्य प्रारम्भः विक्रमाब्दात् ३०४५ वर्ष पूर्वं मन्यते । अर्थात् ख्रीष्टाब्दात्पूर्वमयं कालः ३१०२ ईशवीयो भवति । तेन हरिस्वामी ३७४०–३०४५=६९५ विक्रमाब्दे अर्थात् ६३८ ख्रीष्टाब्दे शतपथब्राह्मणस्य भाष्यं रचयामास । पूर्वमस्मादेव स्कन्दस्वामिना ऋग्वेदभाष्यस्य रचना कृता तथा हरिस्वामिनं वेदमप्यध्यापितम् । अतः स्कन्दस्वामिनः कालः प्रायः ६८२ विक्रमाब्दस्तथा ६२५ ख्रीष्टाब्दः सिद्धो भवति । अन्येषामपीतिहासकाराणां कथनमस्ति यत् स्कन्दस्वामी ६२५ शततमेशवीयाब्दाभ्यर्णे भारतं विभूषयामास । अनेन रूपेणायं हर्षबाणयोः समकालिकः प्रतीतो भवति ।

पूर्वमेव निरूपितं यत्स्कन्दस्वामी यास्कस्य निरुक्तेऽपि टीकां कृतवान् । निरुक्तस्य टीकाकर्त्ता ऋग्भाष्यस्य च रचयिता एक एव स्कन्दस्वामी वर्तते । उभयोः ग्रन्थकारयोरभिन्नत्वं देवराजयज्वनः निम्नलिखितोद्धरणेन प्रमाणितो भवति ।

**'उपप्रायोभिरागत्' इत्यादिषु निरुक्तटीकायां स्कन्दस्वामिना प्रय इत्यन्नं नाम उच्यते, तथा च 'अग्नितिश्रवः' इत्यादि निगमेषु वेदभाष्ये 'श्रव' इत्यन्नं नाम इति स्पष्टमुच्यते ।**

एतस्योद्धरणस्याध्ययनेन प्रतीतो भवति यदुभयोः रचयिता स्कन्दस्वामी एक एवासीत् । अतो विषयेऽस्मिन् लेशमात्रोऽपि सन्देहस्यावकाशो नास्ति । यदेक एव स्कन्दस्वामी ऋग्भाष्यस्य निरुक्तटीकायाश्च रचयिताऽऽसीत् ।

ऋग्वेदे स्कन्दस्वामी नितरां विशदं विलक्षणञ्च भाष्यञ्चकार । भाष्येऽस्मिन् प्रत्येकसूक्तस्यारम्भे तस्य सूक्तस्य ऋषेः देवस्य चोल्लेखो वर्त्तते तथा तद्बोधकः प्राचीनानुक्रमणिग्रन्थानां श्लोकोऽप्युद्धृतमस्ति । निघण्टुनिरुक्तप्रभृतिवैदिकार्थोपबोधकेभ्यः ग्रन्थेभ्य उपयुक्तं प्रमाणमपि तत्रैव सङ्कलितमस्ति । भाष्यमिदमतीव

सरलं मिताक्षरञ्चास्ति । व्याकरण-विषयकतथ्यानामुल्लेखोऽपि अत्राऽस्ति संक्षेपेणैव । नास्त्यत्र सायणभाष्यस्य प्रथमाष्टक इव व्याकरणस्यातिविस्तरेण प्रदर्शनमिति । सायणस्य ऋग्भाष्योपरि स्कन्दस्वामिनः भाष्यस्य स्पष्टतः प्रभावः परिलक्षितो भवति । अस्यानेकान्युदाहरणानि सन्ति । स्कन्दस्वामिनः ऋग्वेदस्य चतुर्थाष्टकपर्यन्तमेव भाष्यं समुपलब्धं भवति । शेषार्द्धस्य सम्पूर्त्तिरन्येनाचार्यद्वयेन कृताऽस्ति । यस्य वर्णनमग्रे भविष्यति । अनन्तशयनग्रन्थावल्यामस्य भाष्यस्याधुना प्रकाशनं क्रमशः समारब्धोऽभवत ।

**नारायणः**

ऋग्वेदभाष्ये वेङ्कटमाधवेन लिखितमस्ति—

**स्कन्दस्वामी नारायण उद्गीथ इति ते क्रमात् ।**
**चक्रुः सहैकमृग्भाष्यं पदवाक्यार्थगोचरम् ॥'**

अनेन ज्ञातो भवति नारायण-उद्गीथौ स्कन्दस्वामिनः समय एव बभूवतुः । नारायणः ऋग्भाष्ये स्कन्दस्वामिनं प्रति साहाय्यं चकार इत्येतद् वेङ्कटमाधवो ब्रवीति । उद्गीथस्योल्लेखः सायणेन आत्मानन्देन च कृतः । तदीया भाष्यशैली स्कन्दस्वामिभाष्यशैलीव । उपरिलिखितेन श्लोकेनापि प्रमाणितो भवति यदृग्भाष्यरचनायां स्कन्दस्वामिनः साहाय्यमनेन नारायणेन कृतम् । श्लोकस्थक्रमाच्छब्देनानुमीयते यदृग्वेदस्य मध्यभागे नारायणेन स्वभाष्यं लिखितम् । कतिपयविद्वांसः सामभाष्यकर्त्तुः माधवस्य पितरं नारायणं तथा ऋग्भाष्यकर्त्तारं नारायणमेकमेव मन्यन्ते । किञ्चास्याद्यावधि न किमपि सबलप्रमाणं समुपलब्धं भवति । अस्याऽपि समयः विक्रमस्य सप्तमशताब्द्यामेव प्रमाणितो भवति ।

**उद्गीथः**

वेङ्कटमाधवस्य कथनानुसारेण उद्गीथः स्कन्दस्वामिनं प्रति ऋग्भाष्यलेखने साहाय्यं कृतवान् । अयं हि महापुरुषः ऋग्वेदस्यान्तिमभागस्य भाष्यं रचयामास । प्रत्येकाध्यायस्य परिसमाप्तौ तेन स्वविषये लिखितम्—**'वनवासीविनिर्गताचार्यस्य उद्गीथस्य कृता ऋग्भाष्ये····अध्यायः समाप्तः'** अनेन कथनेनोद्गीथाचार्यस्य वनवासिना सह कमपि सम्बन्धं प्रतीयते । प्राचीनकाले आधुनिककर्णाटकस्य प्रतीच्यभूखण्डः 'वनवासीप्रान्त' इति नाम्ना ख्यात आसीत् । अतो विचार्यते—उद्गीथाचार्यः अस्यैव प्रान्तस्य प्रायः निवासी आसीत् । अतोऽधिकं न किमपि ज्ञातो भवत्यस्य महापुरुषस्य विषये ।

उद्गीथस्य नामोल्लेखः सायणेनाऽऽत्मानन्देन च स्व-स्वभाष्ये कृतः । तदीया भाष्यशैल्यपि स्कन्दस्वामीभाष्यशैलीवाऽस्ति । अस्यापि प्रभावः सायणभाष्योपरि स्पष्टतः परिलक्षितो भवति । उद्गीथः सायणात् पूर्ववर्त्ती भाष्यकारः प्रतीतो भवति यतः सायणेन ऋग्वेदस्यैकस्मिन् मन्त्र( १०।४६।५ )भाष्ये उद्गीथस्य व्याख्यायारुल्लेखः कृतः । व्याख्येयं उद्गीथभाष्ये उपलब्धाऽस्ति । भाष्यमिदं ऋग्वेदस्य दशममण्डलस्य आपञ्चमसूक्तात् त्र्यशीतितमस्य सूक्तस्य पञ्चममन्त्र-

पर्यन्तं समुपलब्धं भवति । अस्य भाष्यस्य प्रारम्भिकार्द्धभागः पञ्चत्रिंशदधिकोनविंशतितमे ख्रीष्टाब्दे लाहौरनगरस्य डी० ए० वी० महाविद्यालयस्य शोधविभागेन प्रकाशितोऽभवत् । शेषार्द्धभागोऽद्याप्यमुद्रित एवाऽस्ति । सायणभाष्येण सहोद्गीथभाष्यस्य तुलनायां कृते सति ज्ञातो भवति यद् सायणेन भाष्यलेखनायोद्गीथभाष्यस्थविपुलसाधनानां साधूपयोगं कृत्वैव स्वभाष्यं प्रणीतम् । अत एव 'तिलकवैदिकसंशोधनमण्डलेन' प्रकाशितस्य सायणभाष्यस्य त्रुटितांशस्य किंवा सन्दिग्धपाठस्य च संशोधनायोद्गीथभाष्यादेव साहाय्यं स्वीकृतम् । अनेन प्रकारेण विश्रुतस्य सायणभाष्यस्य पाठसंशोधनार्थमप्यस्य भाष्यस्यातीवमहत्त्वमस्ति ।

**माधवभट्टः**

'माधव'-नामधेयाश्चत्वारो भाष्यकारारुल्लिख्यन्ते इतिहासकारैः । तेष्वेकः सामवेदसंहितायां किञ्चेतरे त्रय ऋग्वेदे भाष्यं लिलिखुः । केषाञ्चनमतेन माधवो नाम न कोऽपि भाष्यकारः सायणः किंवा वेङ्कट एव 'माधव' इत्येतेन नाम्नः ख्यात आसीत् । अन्ये चाहुः माधवः सायणात् वेङ्कटाच्च भिन्न आसीदतः माधवस्य व्यक्तित्वं स्वतन्त्रमेव । माधव ऋग्वेदे विलक्षणं पाण्डित्यं निदधौ । सायणो वेङ्कटश्चोभौ माधवस्य भाष्यमनुसस्रतुः । अन्योऽप्येकः माधवोऽस्ति । यस्य ऋग्वेदप्रथमाष्टकस्य टीका सम्प्रत्येव मद्रासविश्वविद्यालयतः प्रकाशितोऽभवत् । अतीवसारगर्भितेयं टीकाऽस्ति । अल्पाक्षरे सत्यपि मन्त्राणामर्थावबोधने नितान्तमहत्त्वपूर्णाऽस्तीयं टीकेति । द्वादशशततमेशवीयाब्दे वेङ्कटमाधवोऽभूदिति पण्डितसाम्बशिवशास्त्री मन्यते । वेङ्कटस्य भाष्यमतिसंक्षिप्तमस्ति । पर्यायवाचिपदान्युपस्थाप्य समन्त्रार्थमाकलयितुं श्लाघ्यं यत्नं कृतवान् ।

माधवभट्टोऽयं ऋग्वेदस्य महान् विद्वानासीन्नास्त्यत्र लेशतोऽपि सन्देहः । अस्याः टीकायाः लेखनात्पूर्वमेवायमेकादशानुक्रमण्यः लिलेख । यासु प्रत्येका कोषरूपेण स्थाप्य ऋग्वेदस्य शब्दार्थान् प्रकटयितुं समर्थाऽस्ति । एतासूपलब्धास्वनुक्रमणीषु द्वावेवानुक्रमण्यौ प्रकाशितौ स्तः । नामानुक्रमणी-आख्यातानुक्रमणी च । एतयोरध्ययनेन सहजानुमानोऽयं भवितुमर्हति यदृग्वेदस्येयं नामधात्वोरेकत्र संग्रहोऽस्ति । किञ्चातोऽधिकाप्यतिमहत्त्वपूर्णानुक्रमण्यः—निर्वचनानुक्रमणीस्वरानुक्रमणी-छन्दानुक्रमणीप्रभृतयः अद्याऽपि समुपलब्धाः न भवन्ति । एतास्वनुक्रमणीषु सर्वाधिकमहत्त्वपूर्णानुक्रमणी 'स्वरानुक्रमण्यप्युपलब्धा नाऽस्ति । अनेन ग्रन्थेन वैदिकस्वरस्य यज्ज्ञानं भवितुमर्हति तत्तु अन्यासु टीकासु भवितुं नार्हति । अस्य वैशिष्ट्यस्य सङ्केतः वेदमर्मज्ञाः विद्वांसः प्रथममेव देवराजयज्वानः निघण्टुनिर्वचनादाप्नुवन् । अनेन प्रतीतो भवति यद्देवराजयज्वा माधवेन सह निर्भ्रान्तिरूपेण परिचितो नासीत् । निजग्रन्थस्य प्रस्तावनायामसौ वेङ्कटमाधवस्य सङ्केतं कृतवान् । विषयेऽस्मिन् बहु सम्भाव्यताऽस्ति यदसौ वेङ्कटमाधवमेव माधवस्य निर्देशेन सम्बद्धं कृतवान् । अस्य ग्रन्थानुशीलनेन ज्ञातो भवति यन्माधवस्य निर्दिष्टविषयेष्वेकोऽपि निर्देशः वेङ्कटमाधवस्य ग्रन्थे समुपलब्धो नाऽस्ति । अपि

च कतिपयाः निर्देशाः सायणमाधवस्य बृहद्भाष्ये एव मिलन्ति, ग्रन्थोऽयं तस्य स्वकीयरचना नास्ति। देवराजयज्वनः सर्वे निर्देशाः अस्याभिनवमाधवस्य ग्रन्थे एव मिलितुं शक्यन्ते, यद्ययं समग्रग्रन्थः समुपलब्धो भवेत्। ग्रन्थस्यास्य यावदंशः समुपलब्धोऽभवत् तस्मिन् भागेऽर्द्धाधिकनिर्देशाः मिलन्त्येव, तेनायं माधवो वेङ्कटमाधवाद्भिन्न एवाऽस्तीति प्रमाणितोऽभवत्।

## टीकायाः वैशिष्टचम्

माधवस्यास्य टीका यथार्थतः भाष्यमेवाऽस्ति। अस्यानुसरणं सायणमाधवेन कृतम्। तद्वदेव वेङ्कटमाधवेनाऽपि स्वच्छन्दरूपेणास्यानुसरणं कृतम्। स्कन्दस्वामिनः टीकायामप्यस्यानुक्रमण्याः अनुकरणं प्राप्यते। किञ्च ऋक्संहितायाः अल्पाशंस्यैकाष्टकस्य भाष्यं समुपलब्धं भवति। तथाप्येतावदेवांशः पूर्वोक्तकथनस्य पर्याप्तप्रमाणमुपस्थापयति। देवराजयज्वना माधवस्य निर्देशं कृत्वा स्वग्रन्थे यत्स्वरवर्णनं कृतं तत्सर्वमस्मिनल्पकायिकांशे एवोपलब्धं भवति। देवराजयज्वा सर्वानपि स्वनिर्देशानस्मादेव संहिता-भाष्यादेवालिखत्। अनेन ज्ञातो भवति यद्देवराजयज्वनः सविधे प्रायः माधवस्य सम्पूर्णं भाष्यमासीत्, किञ्च 'कोऽयं माधवः' इति सोऽपि नाजानात्। अयमेव माधवः 'माधवभट्ट'-पदेन कथितुं योग्योऽस्ति। यतो ह्यस्य ऋग्वेदस्योच्चकोटेरर्थज्ञानमासीत्। सन्दिग्धस्थलस्य स्वरभेदेन प्रातिशाख्यभेदेन च विशदीकरणस्यास्य विचित्रा शैली वर्त्तते। यद्यपि भाष्यमिदं लघुकायमस्ति तथाप्यस्यार्थः निःसन्दिग्धोऽस्ति। अस्य भाष्यस्यानुसरणं स्कन्दस्वामी-वेङ्कटमाधव-सायणप्रभृतयः विद्वांसः कृतवन्तः। इतिहासकाराणां मते खीष्टाब्दस्य चतुर्दशशतके सायणाचार्योऽभवत्। खीष्टस्य दशमशतके वेङ्कटमाधवोऽभवत् तथा खीष्टस्य सप्तमशतके स्कन्दस्वामी आसीत्। अनेन प्रणीतस्य भाष्यस्योद्धरणानि स्कन्दस्वामिना, वेङ्कटमाधवेन सायणेन च स्वीयेषु ग्रन्थेषु दत्तानि, अतोऽयं खीष्टस्य षष्ठशतकोत्तरभागे अवर्त्ततेति कल्पनाकर्त्तुं शक्यते।

## वेङ्कटमाधवः

वेङ्कटमाधवोऽयं सम्पूर्णऋक्संहितायामुपरि स्वभाष्यं प्रणीतवान्। कतिपयैरालोचकैरनुमीयन्ते यदयं विद्वानृक्संहितायामुपरि भाष्यद्वयं लिलेख। अनेन स्वरचितस्य प्रथमभाष्यस्यान्तिमे भागे यः स्ववंशपरिचयः प्रदत्तस्तदनुसारेणायं कौशिकगोत्रे जन्म गृहीतवान्। अस्य विदुषः पूर्वजाः आन्ध्रप्रदेशस्थितस्य दक्षिणापथीयचोलदेशे न्यवसन्। अस्य पिता वेङ्कटाचार्यः माता च सुन्दरीदेवी आसीत्। अस्य च मातृगोत्रो वसिष्ठ आसीत्। अस्यैकः सङ्कर्षणाख्यः अनुजोऽप्यासीत्। वेङ्कटगोविन्दाख्यौ द्वौ पुत्रावास्ताम्। अस्य कालनिर्णयार्थमनेकान्युपकरणानि सन्ति, यत्साहाय्येनास्य समयः विशेषरूपेण निर्णेतुं शक्यते।

(१) सायणाचार्यः ऋग्वेदस्य (१०।८६।९) एकस्मिन् मन्त्रभाष्ये

माधवभट्टस्य सम्मत्याउल्लेखं कृतवान् । अनेन माधवस्यास्य सायणात् पूर्ववर्त्तित्वं सिद्धयति ।

( २ ) सप्तत्यधिकत्रयोदशविक्रमाब्दस्य पार्श्ववर्त्ती देवराजयज्वा स्वकीये भाष्यस्योपोद्घाते वेङ्कटाचार्यतनयमाधवस्योल्लेखं निम्नरूपेण कृतोऽस्ति—**'श्रीवेङ्कटाचार्यतनयस्य माधवस्य भाष्यकृतौ नामानुक्रमण्याः पर्यालोचनात्.... क्रियते ।'** अनेनोद्धरणेन वेङ्कटपुत्रमाधवस्य देवराजयज्वनः पूर्ववर्त्तित्वं स्वयं सिद्धो भवति ।

( ३ ) विक्रमस्य त्रयोदशशतकात् पूर्ववर्त्ती कोषकारः केशवस्वामी स्वकीये प्रसिद्धकोषे नानार्थार्णवसङ्क्षेपाख्ये माधवाचार्यसूरिनाम्ना माधवस्यैवोल्लेखः कृतवान्—

**'द्वयोस्त्वश्वे तथा ह्याह स्कन्दसाम्यृक्षु भूरिशः ।**
**माधवाचार्यसूरिश्च को अद्येत्यृचि भाषते ॥'**

अयमाशयोऽत्र यदुभयलिङ्गे 'गो'-शब्दस्यार्थः अश्वो भवति । स्कन्दस्वामी अपि ऋचां व्याख्यायामयमेवार्थं स्वीकृतवान् । यथा माधवाचार्यसूरिः 'को अद्य' ( ऋ० १।८।४।१६ ) इत्यस्याः ऋचः व्याख्यायां 'गो'-शब्दस्यार्थः 'अश्वः' एव कृतवान् । वेङ्कटमाधवस्योक्तऋचः भाष्ये अयमेवार्थो मिलति । अतोऽनेन निर्देशेन माधवस्य समयः विक्रमाब्दस्य त्रयोदशशतकात्पूर्वमेव सिद्धो भवति ।

आभिर्युक्तिभिः प्रमाणितो भवति यन्माधवस्य समयः विक्रमाब्दस्य त्रयोदशशतकात्पूर्वकालिकोऽस्ति । तथाऽस्य प्रामाणिकताऽपि स्कन्दस्वामिन इवाऽस्ति । अतोऽस्य समयो विक्रमीयद्वादशशतकस्य पार्श्ववर्त्ती इति निश्चीयते । पण्डितसाम्बशिवशास्त्रीमहोदयेन ऋग्वेदस्य स्कन्दस्वामीकृतभाष्यभूमिकायामस्य समयः ख्रीष्टस्य १०५०–११५० ई० उक्तोऽतोऽस्य समयः एकादशशतकस्यादिभाग इति निश्चीयते ।

माधवस्य भाष्यम् अत्यन्तसंक्षिप्तमस्ति । **'वर्जयन् शब्दविस्तारं शब्दैः कतिपयैरिति ।'** इति लिखित्वा तथ्यमिदमयं स्वयं स्वीचकार । भाष्येऽस्मिन् केवलमन्त्रपदानामेव व्याख्याऽस्ति । संक्षिप्तीकरणस्य भावनया प्रेरितो भूत्वा भाष्यकारेणात्र मूलपदानामपि समावेशः स्वभाष्येऽत्यल्पमेव कृतः । मात्रपर्यायवाचीपदानां सन्निवेशेनैव मन्त्राणामर्थान् स्पष्टयितुं माधवः श्लाघनीयं प्रयत्नं कृतवान् । भाष्यस्यास्याध्ययनेन मन्त्राणामर्थः सुगमतयैव ज्ञातो भवितुमर्हति । स्कन्दस्वामिनः भाष्यापेक्षयाऽपि भाष्योऽयमतिसंक्षिप्तोऽस्ति । व्याकरणजन्यतथ्यानां निर्देशस्त्वस्मिन् भाष्ये नास्त्येवेति । प्रायः सर्वत्र ब्राह्मणग्रन्थानां प्रामाण्यं सुष्ठुतया सन्निविष्टोऽस्ति, येन माधवस्य ब्राह्मणग्रन्थेषु विशेषव्युत्पत्तिः प्रतीतो भवति । वेदानां गूढार्थावबोधने ब्राह्मणग्रन्थाः नितान्तोपयोगिनो माधवेनोक्तम् । तस्य कथनमस्ति—

'संहितायास्तुरीयांशं विजानन्त्यधुनातनाः ।
निरुक्तव्याकरणयोरासीत् येषां परिश्रमः ॥
अथ ये ब्राह्मणार्थानां विवेक्तारः कृतश्रमाः ।
शब्दरीतिं विजानन्ति ते सर्वं कथयन्त्यपि ॥'

इयमेवाऽस्थाऽस्ति ब्राह्मणग्रन्थान् प्रति माधवाचार्यस्य । अनेन प्रकारेण ब्राह्मणानामनुकूलो वेदार्थप्रतिपादनस्य भाष्योऽयमुज्ज्वलमुदाहरणमस्ति । दिल्लीनगरीतो मोतीलालबनारसीदासेन प्रकाशितमिदं भाष्यम् अस्य सम्पादकः डा० लक्ष्मणस्वरूपोऽस्ति ।

## धानुष्कयज्वा

धानुष्कयज्वा त्रिषु वेदेषु भाष्यं प्रणिनायेत्येष उल्लेखो वेदाचार्यस्य सुदर्शनमीमांसायां दृश्यते । परञ्च न तदीयं भाष्यमाप्यते न च तस्यैव परिचयविशेषो लभ्यते । त्रयोदशशततमात् वैक्रमाब्दात् प्राक् स उद्बभूवेति कथ्यते । वेदाचार्येणायं 'त्रिवेदीभाष्यकारः' इति पदेन, 'त्रयीनिष्ठवृद्ध' इति पदेन च स्मृतोऽस्ति । वैष्णवाचार्योऽयं धानुष्कयज्वा आसीत् ।

## आनन्दतीर्थः

आनन्दतीर्थ एव 'मध्व' इत्येतेन नाम्ना ख्यातिं ययौ । अयं मध्वः स एव यो द्वैतवादं प्रवर्त्तयामास । एष बहून् ग्रन्थानजग्रन्थत् । कतिपयांश्च वैदिकान् मन्त्रानपि व्याचख्यौ । व्याख्येयं छन्दोबद्धाऽस्ति । ऋग्वेदप्रथममण्डलस्य कतिपयानां मन्त्राणाम् उपर्येवेयं व्याख्याऽस्ति । अस्मिन् सन्दर्भे राघवेन्द्रयतेः कथनमिदं पर्याप्तरूपेण प्रमाणितोऽस्ति—**'ऋक्शाखागतैकोत्तरसहस्रसूक्तमध्ये कानिचित् चत्वारिंशत् सूक्तानि भगवत्पादैः·······व्याख्यातानि ।'**

श्रीमद्भगवद्गीतायामात्मविषये श्रीकृष्णस्य कथनमिदमस्ति—**'वेदैश्च सर्वैरहमेव वेद्यः'** अर्थात् सर्वे वेदाः मदीयैव प्रतिपादनं कुर्वन्ति । तेन हि वैष्णवसम्प्रदायस्यानन्दतीर्थाचार्यस्य वेदेषु सर्वत्र नारायणस्य प्रतिपादनं युक्तितरमेव प्रतिभाति । स्वभाष्यारम्भे तेनैवोक्तम्—

**'स पूर्णत्वात् पुमान् नाम पौरुषे सूक्त ईरितः ।
स एवाखिलवेदार्थः सर्वशास्त्रार्थ एव च ॥'**

अर्थात् नारायणः पूर्णपुरुषोऽस्ति । अतः पुरुषसूक्ते—**'सहस्रशीर्षा पुरुषः'** इत्यादौ ऋचि 'स एव' पुरुषपदेनाभिहितोऽस्ति । समस्तवेदानां शास्त्राणाञ्चाभिप्रायस्तस्यैव पूर्णपुरुषस्य प्रतिपादनमेवाऽस्ति । अनया दृष्टचैव वैष्णवाचार्येणानन्दतीर्थेन वैदिकऋचामर्थः कृतः । जयतीर्थस्य कथनानुसारेण भाष्येऽस्मिन् आधिभौतिकाधिदैविकयोरर्थस्यातिरिक्तः आध्यात्मिकार्थस्याऽपि सुष्ठु प्रतिपादनमस्ति—**'ऋगर्थश्च त्रिविधो भवति—एकस्तावत् प्रसिद्धाग्निरूपः, अपरस्तदन्तर्गतेश्वरलक्षणः, अन्योऽध्यात्मरूपः, तत्त्रितयपरञ्चेदं भाष्यम् ।'** विलक्षणमिद-

मृग्वेदस्य माध्वभाष्यम्। द्वैतवादिष्वतीव प्रसिद्धोऽस्ति भाष्यमिदम्। अस्य मध्वभाष्यस्य रचनाकालात्त्रिशद्वर्षाभ्यन्तरे एव प्रसिद्धमाध्वाचार्येण जयतीर्थेनाऽस्य टीका कृतेति। अस्याः टीकायाः विवृत्तिः १७१८ विक्रमाब्दे नरसिंहेन लिखितेति। नारायणेनाऽप्यपराविवृत्तिः 'भावरत्नप्रकाशिका'-नाम्ना लिखिताऽस्ति। नारायणस्तु वैदिकसाहित्यस्य सुनिविष्टः विद्वान् प्रतीतो भवति। आनन्दतीर्थस्याविर्भावकालः विक्रमस्य पञ्चपञ्चाशदधिकद्वादशाब्दतः विक्रमस्य पञ्चत्रिंशदधिकत्रयोदशाब्दपर्यन्तं स्वीकर्तुं शक्यते। श्रूयते चानन्दतीर्थोऽयमशीतिवर्षपर्यन्तमैहिकसुखं भुक्त्वा परलोकं ययौ।

## आत्मानन्दः

आत्मानन्द ऋग्वेदस्य 'अस्यवामीयं' सूक्तं व्याख्यातवान्। भाष्येऽस्मिन् आत्मानन्दः सर्वप्रथमं स्कन्दस्वामिनः, भास्करस्य च मतमालोचितवान्, तदनन्तरं सायणाचार्येणाऽत्मानन्दस्य मतमालोचितम्। तदयमात्मानन्दः स्कन्दस्वामिनः भास्कराच्च परवर्त्ती सायणाचार्याच्च पूर्ववर्त्ती सिद्धो भवति। अनेनोद्धृतलेखकेषु मिताक्षरायाः कर्त्ता विज्ञानेश्वरस्य (ख्रीष्टस्य १०७० ईशवीतः ११०० ई० पर्यन्तम्) तथा स्मृतिचन्द्रिकायाः रचयिता देवणभट्टस्य त्रयोदशशतकस्य च नामोल्लेखेन प्रतीयते यदयमपि चतुर्दशशततमं संवत्सरं जन्मना गौरवान्वितं विदधौ।

अस्य भाष्यस्य निरीक्षणेन बोधो भवति यदयमात्मानन्दः स्वविषयस्य निविष्टज्ञाताऽऽसीत्। अनेन कृतमन्त्रस्यार्थः परमात्मानं प्रति लक्ष्यं करोति। इयमेवास्य भाष्यस्य विशिष्टता वर्त्तते। आत्मानन्देन स्वयं भाष्यान्ते भाष्यविषये लिखितम्—**'अधियज्ञविषयं स्कन्दादिभाष्यम्, निरुक्तमधिदैवतविषयम्, इदन्तु भाष्यमध्यात्मविषयमिति। न च भिन्नविषयाणां विरोधः। अस्य भाष्यमूलं विष्णुधर्मोत्तरम्।'**

## सायणाचार्यः

आचार्यसायणो विजयनगर-संस्थापकमहाराजबुक्कस्य महाराजहरिहरस्य च अमात्यः सेनानीश्चासीत्। सायणो वैदिकसम्प्रदायस्य यथार्थतया वेत्ताऽऽसीत्। तस्मात् तदीयं वेदभाष्यं वस्तुतस्तु वेदार्थोन्मीलनकारिषु भाष्येषु मूर्धन्यं भाष्यमस्ति। दुर्गमे तद्वेददुर्गे सरलतयैव प्रवेशयति वेदार्थजिज्ञासुम्।

महाराजबुक्कस्य प्रधानामात्यपदमनेन १३६४ ख्रीष्टाब्दतः १३७८ ख्रीष्टाब्दपर्यन्तमलङ्कार। तदनन्तरं १३७९ ख्रीष्टाब्दतः १३८७ ख्रीष्टाब्दपर्यन्तं महाराजहरिहरद्वितीयस्यामात्यपदमनेन मृत्युपर्यन्तमलङ्कृतम्। ख्रीष्टस्य चतुर्दशशताब्देरुत्तरार्द्धं एवास्य भाष्यस्य रचनाकालः मन्तुं शक्यते। निजज्येष्ठभ्रात्रा माधवाचार्येण प्रेरितो भूत्वा व्याख्याकार्येऽस्मिन् असौ प्रवृत्तोऽभूत्तेन भाष्यमिदं माधवीयनाम्ना विश्वविश्रुतमभवत्।

## ( २ ) सामभाष्यकाराः

यज्ञे चत्वारो ऋत्विजो भवन्ति—१. होता, २. अध्वर्युः, ३. उद्गाता, ४. ब्रह्मा च। होता—आह्वानकर्त्ता, स हि यज्ञावसरे प्रक्रान्तदेवतानां प्रशंसायां रचितान् मन्त्रान् उच्चारयन् देवताम् आह्वयति, तत्कार्याय सङ्कलिता मन्त्राः स्तुतिरूपतया ऋचः समाख्याताः, तेषां सङ्ग्रह एव ऋग्वेदः। अध्वर्युर्विधिवद्यज्ञं सम्पादयति, तत्राऽवश्यकमन्त्रा यजूंषि इति, तत्सङ्ग्रहो यजुर्वेदः। उद्गाता—उच्चस्वरेण गानकर्त्ता, स हि स्वरबद्धान् मन्त्रानुच्चैर्गायति, तदपेक्षितमन्त्रसंग्रहः सामवेदः। ब्रह्मा—यज्ञनिरीक्षकः, कृताकृतावेक्षणकर्मा, स हि सर्वविधमन्त्रज्ञस्तदपेक्षितो मन्त्रराशिरथर्ववेद इति कथ्यते।

सामवेदस्य गानप्रचुरता प्रथिता, ऋच एव गीयन्ते, सामवेदे १५४९ मन्त्राः सन्ति। तेषु ७५ मन्त्रा ईदृशा सन्ति ये 'ऋग्वेदे' न प्राप्यन्ते, शेषाः सर्वे उभयवेदसाधारणाः। सामवेदागतमन्त्राणां सप्त स्वराः, यतस्ते गीयन्ते, ऋग्वेदे पुनस्तेषामेव मन्त्राणां त्रय एव स्वराः। एतावानेवोभयवेदसाधारणानां सामवेदमन्त्राणामृग्वेदमन्त्रेभ्यो भेदः।

सामवेदो द्विधा विभज्यते—पूर्वार्चिकम्, उत्तरार्चिकञ्चेति। पूर्वार्चिक एव छन्दः, छन्दसी, छन्दसिका चेति त्रिभिरपि नामभिरभिधीयते। विषयानुसारं पूर्वार्चिकं चतुर्षु भागेषु विभज्यते—आग्नेयपर्व ( अग्निसम्बन्धिनीभिर्ऋग्भिर्युतो भवति ), पवनमानपर्व ( सोमविषयकम् ), ऐन्द्रपर्व ( इन्द्रसम्बन्धिनीभिर्ऋग्भिर्युतः ) आरण्यकपर्व चेति।

उत्तरार्चिकं तु अनुज्ञाननिर्देशकम्। तस्य बहवो विभागाः—दशरात्रम्, संवत्सरम्, ऐकाहम्, अहीनम्, सत्रम्, प्रायश्चित्तम्, क्षुद्रञ्चेति प्रमुखास्त भेदाः।

सामसंहितायाः सायणभाष्यात्प्राक् द्वित्रा एव भाष्यकारा आसन्।

### माधवः

माधवोऽयं सामसंहितायाः प्रथमभाष्यकारः प्रतीतो भवति। सामवेदस्योभयोः खण्डयोः—छन्दार्चिकोत्तरार्चिकयोरुपरि भाष्यं निरमात्। अस्य भाष्यस्य नाम विवरणम् अस्ति। छन्दार्चिकभाष्यस्य नाम 'छन्दसिकाविवरणम्' तथोत्तरार्चिकभाष्यस्य नाम 'उत्तरविवरणम'स्ति। अद्यावधि भाष्यमिदममुद्रितावस्थायामेवास्ति। किञ्चास्य भाष्यस्यान्वेष्टा सत्यव्रतसामश्रयीमहोदयः सर्वप्रथमस्वकीयसायणभाष्यसंस्करणेऽस्यापि भाष्यस्य किमप्यंशस्य 'टिप्पणी'-रूपेण सन्निवेशः कृतवान्।

माधवस्य पितुर्नाम 'नारायण' इत्यासीत्। कतिपये विद्वांसः स्कन्दस्वामिनः ऋग्भाष्यस्य पूरकः सहायकश्च नारायणादभिन्नत्वमेनं मन्यन्ते। किञ्च तयोरभिन्नताप्रदर्शकस्य प्रबलप्रमाणस्याद्यापि अभाव एवास्ति, तथाप्यस्याविर्भावकालोनिश्चितरूपेण वक्तुं शक्यते। द्वादशशतकस्य देवराजयज्वा स्वीयनिघण्टुभाष्यस्यावतरणिकायां कस्याऽपि माधवस्य निर्देशं कृतवान्। सम्भवतः माधवोऽयं

३ वं०

सामभाष्य-रचयिता माधव एवाऽस्ति। न तावदैतावता अपितु बाणभट्टस्य कादम्बर्याः श्लोकोऽयम्—

**'रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे।**
**अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः॥'**

माधवस्य 'सामविवरणे' मङ्गलाचरणरूपेण समुपलब्धो भवति। अस्य श्लोकस्य 'त्रयीमयाय'-शब्देन ज्ञातो भवति यदयं श्लोकः कस्यापि वैदिकग्रन्थस्यैव मङ्गलाचरणमासीत्। अतोऽनुमीयते—सर्वप्रथमं सामभाष्यस्य मङ्गलार्थं माधवेन श्लोकोऽयं प्रणीतः। भाष्यकारमाधवः बाणभट्टस्य कोऽपि पूज्याचार्यो भवितुं शक्यते। बाणभट्टस्य पूर्वपुरुषा अपि वेदपारङ्गता विद्वांस आसन्। हर्षचरितेन प्रमाणितो भवति यद् बाणभट्टस्य गुरुरपि कोऽपि वेदवेदाङ्गपारङ्गतो विद्वानेवासीत्। घटनेयं पूर्वानुमानस्य पुष्टिं करोति। अतः बाणभट्टस्य पूर्ववर्त्तिनो माधवस्य समयः विक्रमस्य सप्तमशतकपरवर्त्तित्वं स्वीकर्तुं न शक्यते। अतो यदि बाणभट्टः ख्रीष्टस्य सप्तमशतकस्य प्रारम्भकालिकस्तदायं माधवः षष्ठशतकवर्त्तीति वक्तव्यम्। माधवस्य भाष्यमिदमतीवमहत्त्वपूर्णमस्ति।

**भरतस्वामी**

भरतस्वामी सामसंहितोपरि भाष्यमलिखत्। इदमप्यप्रकाशितमेवाऽस्ति। भरतस्वामिना स्वकीयभाष्ये यः स्ववंशपरिचयः प्रदत्तस्तदनुसारेणायं काश्यपगोत्रे जन्म गृहीतवान्। अस्य पिता नारायणः, माता च यज्ञदादेवी आसीत्। अनेन सामवेदस्य सर्वेषामृचामुपरि व्याख्या लिखिता।

**'इत्थं श्रीभरतस्वामी काश्यपो यज्ञदासुतः।**
**नारायणार्यतनयो व्याख्यात् साम्नामृचोऽखिलाः॥'**

भरतस्वामिना ग्रन्थारम्भे स्ववंशपरिचयः प्रदत्तः—

**'नत्वा नारायणं तातं तत्प्रसादादवाप्तधीः।**
**साम्नां श्रीभरतस्वामी काश्यपो व्याकरोदृचम्॥**
**होसलाधीश्वरे पृथ्वीं रामनाथे प्रशासति।**
**व्याख्या कृतेयं क्षेमेण श्रीरङ्गे वसता मया॥'**

उपरिलिखितपद्येन ज्ञातो भवति यदयं भरतस्वामी काश्यपगोत्रीयनारायणस्य पुत्र आसीत्। होसलाधीश्वरस्य रामनाथनाम्नो नृपस्य छत्रच्छायायां निवसन् पुरा प्रथिते श्रीरङ्गाख्य-वैष्णवतीर्थे भाष्यमिदमयं निरमात्। अस्य समकालिकनृपस्य नामोल्लेखेन भाष्यप्रणेतुर्भरतस्वामिनः समयोऽपि सरलतयाऽवधारयितुं शक्यते।

होसलवंशोद्भवः रामनाथाख्यनृपतिः स्वसमयस्य प्रतापी, विख्यातो वीरश्चासीत्। रामनाथो मृदुप्रकृतिः क्षमाशीलश्चासीत्। अयं हि राजाऽन्तर्गूढधैर्यानुभावः, गम्भीरः शक्तिशाली चाभूत्। स हि गुणैरमीभिर्वाहिनीपतीन् समुद्रान् सेनापती-

श्चाधरीचकार। स चातिशयितं धार्मिकः होसलेषु वर्णाश्रमधर्माणां तथा प्रतिष्ठामकरोत् यथा प्रजातन्त्रसत्ययुगस्योदयं तत्र मेनिरे। रामनाथस्य पिता सोमेश्वरोऽस्य वंशस्योन्नायकेषु प्रधानोन्नायकः आसीत्। असौ स्वकीयेनातुलितेन शौर्यबलेन सर्वानपि चौलप्रदेशान् विजित्य स्वाधीनं कृतवान्। रामनाथः सोमेश्वरस्य द्वितीयपुत्रः आसीत्। 'केवलमहादेव्याः' गर्भादयं समुत्पन्नो बभूव। सोमेश्वरस्य प्रथमपुत्रः नरसिंहस्तस्य 'बिज्जला' नाम्न्याः राज्ञाः गर्भादजायत। सोमेश्वरः पैतृकसिंहासने नरसिंहं नाम रामनाथस्य वैमात्रेयं भ्रातरमभ्यषेचयत्। स्वराज्यकाले एव सोमेश्वरः रामनाथं दक्षिणप्रदेशानां प्रशासकपदे नियुक्तवान्। पितरि दिवंगतेऽपि रामनाथोऽस्य प्रान्तस्यैव शासकः आसीत्। श्रीरङ्गपुरमस्यैव राज्ये आसीत्। अतः भरतस्वामिना अस्योल्लेखः यथार्थ एवाऽकारि। असौ ज्येष्ठभ्रातुर्भिन्न एव स्वतन्त्ररूपेण दक्षिणप्रदेशे शासनमकरोत्। पित्रा विजितश्चोलप्रदेशोपरि अस्यैव शासनमासीत्। एकदा महीपुरस्य दक्षिणभागे स्वज्येष्ठभ्रात्रा सहास्य संग्रामोऽप्यभवत्। नरसिंहदेवस्य मृत्युः खीष्टस्य द्वानवत्यधिकद्वादशाब्देऽभवत्। किञ्चित्कालं व्यतीत्य खीष्टस्य पञ्चनवत्यधिकद्वादशाब्देऽयमपि स्वर्गं जगाम। ( विशेष द्रष्टव्यः—'कैम्ब्रिज हिस्ट्री आफ इण्डिया' तृतीयभागस्य ४८३–४८६ पृष्ठे )

अस्य विवरणस्याधारोपरि रामनाथनृपस्य शासनावसानकालः १२९५ ई० वर्त्तते। सम्भवतोऽस्यैव पार्श्ववर्त्ती भरतस्वामिनोऽपि भाष्यस्य रचनाकाल आसीत्। अतो रामनाथस्य शासनकालः १२७० ईशवीतः १२९५ ई० पर्यन्तम्। अतः भरतस्वामिनः समयः त्रयोदशशतकमिति निश्चित्य वक्तुं शक्यते। भरतस्वामिनः सायणस्य च भाष्ययोः प्रायः षष्टिः किं वा सप्ततिवर्षस्यैवान्तरमस्ति। भरतस्वामिनो भाष्यम् अतीव संक्षिप्तोऽस्ति। पूर्ववर्तिनो भाष्यकारात् माधवाद्भाष्येऽस्मिन् पर्याप्तसाहाय्यं गृहीतं भाष्यकारेणेति प्रतीतो भवति। सामब्राह्मणानामुपरि अप्यस्य भाष्यमस्ति। अतः सम्पूर्णसामसंहितायामुपरि अस्य भाष्यं भवितव्यम्।

**गुणविष्णुः**

गुणविष्णोः साममन्त्रव्याख्यानस्य नाम मिथिलायां बङ्गप्रदेशे चातिप्रसिद्धोऽस्ति। तत्र सामवेदिनां नित्यनैमित्तिकविधीनामुपयोगिनः साममन्त्राणां व्याख्यां कृत्वाऽनेनातिमहत्त्वपूर्णं कार्यं कृतम्। महापुरुषोऽयं मिथिलायाः बंगप्रदेशस्य वा कस्मिंश्चिदपि भागे न्यवसत्। अस्य छान्दोग्यमन्त्रभाष्यस्यैकमतीव सुष्ठु संस्करणं 'कलकत्ता-संस्कृत-परिषद्' नाम्नः संस्थातः प्रकाशितोऽभवत्। अस्य ग्रन्थस्य प्रस्तावनायां विद्वान् सम्पादकः गुणविष्णो विषयेऽनेकानां ज्ञातव्यविषयाणां विवेचनं कृतवान्।

छान्दोग्यमन्त्रभाष्येदं सामवेदस्य कौथुमशाखायामुपरि अस्ति। ( **'हलायुधेन काण्वे कौथुमे गुणविष्णुना'** ) 'सायणकृतमन्त्रभाष्यस्याधारः गुणविष्णोः भाष्य-

मेवाऽस्ति' इति प्रवदन्ति प्रत्यालोचकाः। हलायुधेनाऽप्यस्य ग्रन्थस्योपयोगः कृतः' इत्यपि प्रमाणो मिलति। गुणविष्णुः बल्लालसेनोऽथवा तस्य प्रसिद्धपुत्रः लक्ष्मणसेनस्य राज्यकाले विद्यमान आसीत्। अतोऽस्य समयः विक्रमस्य द्वादश-शतकस्य चरमभागः त्रयोदशशतकस्यादिमभागश्च निश्चीयते।

गुणविष्णोः 'छान्दोग्यमन्त्रभाष्यम्' नितान्तविख्यातः ग्रन्थोऽस्ति। अस्य द्वावन्यावपि ग्रन्थौ स्तः—मन्त्रब्राह्मणभाष्यम्, पारस्करगृह्यसूत्रभाष्यञ्चेति। अनेन ज्ञातो भवति यदयं महानुभावः स्वसमयस्य प्रख्यातवैदिक आसीत्।

## ( ३ ) शुक्लयजुर्वेदभाष्यकाराः

### ( क ) माध्यन्दिनसंहिताभाष्यम्

**उव्वटः**

उव्वटः काश्मीरिको विद्वानिति बहूनां मतम्। एतस्येदं नाम क्वचित् 'औवटः' क्वचिच्च 'उवट' इत्यपि पठ्यते। एतेन यजुर्वेदसंहितायाम् स्वनाम्ना भाष्यं रचितं यदधुनापि लभ्यते। एतदीयस्य पितुर्नाम 'वज्रटः' इत्यासीत्। 'अयं मम्मटस्य भ्राता' इति सुधासागरकारस्य भीमसेनस्य मतम्। परन्तु सन्त्युवटस्य विषये काश्चन विप्रतिपत्तयः। तथा हि तत्कृते यजुर्वेदसंहिताभाष्ये पद्यमेकमुपलभ्यते—

**'ऋष्यादीनश्च पुरस्कृत्य अवन्त्यामुवटो वसन्।**
**मन्त्रभाष्यमिदं चक्रे भोजे राष्ट्रं प्रशासति॥' इति॥**

तस्यैव भाष्यस्य पुस्तकान्तरेऽन्यदपि पद्यमेकमुपलभ्यते—

**'आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना।**
**मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति॥' इति॥**

एतेन पद्यद्वयेन 'उव्वटः' वज्रटस्य पुत्रो भोजसमकालिकश्चेति प्रतिपाद्यते। यदि अयमुव्वटो भीमसेनोक्तरीत्या मम्मटस्य भ्राताऽभविष्यत्, तर्हि मम्मटस्य जैयटपुत्रत्ववर्णनात् तद्भ्रातुरुव्वटस्यापि जैयटपुत्रत्वमभविष्यत् तथा च उव्वटस्य वज्रटपुत्रत्वं श्लोकोक्तं कथमिव सङ्गच्छेत्। यद्यपि काश्मीरदेशीयस्य जैयट-गोत्रस्य वज्रटाख्यस्य दत्तकपुत्रोऽयमिति कल्पनायां जैयटपुत्रस्याऽपि उव्वटस्य वज्रटपुत्रत्वमुपपद्यते, तथापि तस्य भोजसमकालिकत्वमनुपपन्नमेव। यतस्त-ज्ज्येष्ठभ्रातुर्मम्मटस्य भोजराजादर्वाक्तनत्वे स्थितेस्तत्कनिष्ठभ्रातुरुव्वटस्य सुतरां भोजराजादर्वाक्तनत्वं सिद्ध्यति। अवन्त्याम् ( उज्जयिन्याम् ) वसता तेन भाष्यं निरमायि इत्येकत्रोल्लेखः, गुर्जरदेशप्रसिद्धे 'आनन्दपुरे' वसता तेन भाष्यं तन्निरमायि इत्यपरोल्लेखः, एतदपि विप्रतिषिद्धमिव। यदि उव्वटस्य पिता वज्रट एवानन्दपुरवास्तव्य आसीत्, उव्वटस्तु उज्जयिन्यां वसन्नेव भाष्यं निरमाद् इति कल्प्येत तदपि वज्रटस्य काश्मीरिकत्वं सन्दिह्येतैव।

महाराजो भोजो धारानगरशासकः परमारवंश्यश्चासीत्। स हि १०१८ ईशवीये सिंहासनारूढो भूत्वा १०६३ ईशवीयपर्यन्तं राज्यं कृतवानिति। तस्य काल एकादशशतकम्। भोजस्य कविजनप्रियत्वं प्रसिद्धम्। शेखगिरिशास्त्रिणो लिखन्ति यदयं भोजो धारातः स्वां राजधानीम् उज्जयिनीमानीतवानिति 'आइने अकबरी' पुस्तके लिखितं वर्त्तते। तेन पूर्वोल्लिखितस्य भोजराजस्य समयः १०१८ ईशवीतः १०६३ ख्रीष्टीयो वर्त्तते। अतो भोजराजसमकालिकत्वेनोव्वटः ख्रीष्टीयैकादशशतकस्य पूर्वार्द्धे बभूवेति निश्चयेन वक्तुं शक्यते। अस्य भाष्यं लघ्वक्षरोऽपि सन् अतीव प्रोज्ज्वलम्, सरलं प्रामाणिकश्चास्ति। भाष्येऽस्मिन् अनेकमन्त्राणामध्यात्मपरकोऽर्थः दर्शितोऽस्ति। अनेन प्रतीतो भवति यदयं मध्ययुगस्यैकः नितान्त-प्रौढ-वेदज्ञः आसीत्। अस्यान्यकृतिषु—(क) ऋक्-प्रातिशाख्यस्य टीका, (ख) यजुःप्रातिशाख्यस्य टीका, (ग) ऋक्सर्वानुक्रमणीभाष्यम्, (घ) ईशावास्योपनिषद्-भाष्यञ्चेति चत्वारो ग्रन्थाः नितान्त-प्रौढाः, प्रसिद्धाः प्रकाशिताश्चेति।

## महीधरः

वैदिककालादेव संस्कृतविद्यायाः अन्यतमं प्रधानकेन्द्रं काशी आसीदिति तु विदुषां नाविदितमस्ति। अत्रैव गौतमप्रभृतयोऽन्ये च बहवो वेदमन्त्रद्रष्टारो विद्वांसो बभूवुः। इतिहासपुराणेष्वपि विशिष्टपण्डितमण्डलमण्डिता काशी आसीदित्यपि स्पष्टमेव।

आचार्यमहीधरस्य जन्म विद्वज्जनसेवितेऽस्यामेव काश्यामभूत्। तत्र च तस्य वासस्थानसन्निधावेका पुष्करणी अद्यापि वर्त्तते इति परम्परातः श्रूयते। नागर-ब्राह्मणवंशीयोऽयं विद्वानासीदिति। काश्यामेवाऽध्ययनं विधाय लब्धविद्वज्जनप्रतिष्ठो विरचितकतिपयग्रन्थो महीधरः काशीनरपतेः शरणं गतवान्। अत एव प्रायः 'यथा राजाश्रितः पण्डितः' इति तस्यैवोक्त्या सङ्गच्छते। तत्रैवानेन 'वेददीपस्य सामभाष्यस्य रचना कृतेत्याचार्येण। यद्यपि भाष्यमिदं न मौलिकं तथाप्यर्थस्य विशदतया दृष्टचा नितान्तोपादेयमस्ति। अस्य भाष्यस्य पाण्डुलिपिः सरस्वतीभवनपुस्तकालये संग्रहीताऽस्ति। अस्य भाष्यस्योपरि उव्वटभाष्यस्य स्पष्टच्छाया प्रतिलक्षिताऽस्ति। किञ्चानेन विदुषा निरुक्तश्रौतसूत्रादिग्रन्थेभ्यः उद्धरणानि दत्वा याज्ञिकक्रियायाः विधानं बोधगम्यतां नीतम्। काशीवासी महीधरोऽयं वैष्णवाचार्यस्तन्त्ररहस्यज्ञः वैदिकसाहित्यपारङ्गमश्चासीत्। अयञ्च प्रतिभावान् प्रभाववांश्च विद्वानासीत्। तन्त्रादिषु रहस्यमयेषु शास्त्रान्तरेष्वपि स सम्यगधीती विनयेन भक्त्या च गुरुजनान् तथा समप्रीणयत्, यथा तेऽस्मै गुह्याद् गुह्यतराण्यपि रहस्यवस्तूनि समुपादिशन्। परमविदुषे चास्मै सर्वविद्यापारङ्गत 'आचार्य' इति विरुदमुपाहरद्। अनेन तन्त्ररहस्यविवेचको 'मन्त्रमहोदधि'-नामा एकः ग्रन्थः विक्रमस्य १६४५ शतके (१५८८ ई०) प्रणीतः। अस्य ग्रन्थस्यान्ते भाष्यकारेण लिखितमिदम्—

'अब्दे विक्रमतो जाते बाणवेदनृपैर्मिते ।
ज्येष्ठाष्टम्यां शिवस्याग्रे पूर्णो मन्त्रमहोदधिः ॥'

अतोऽस्य भाष्यकारस्य समयः षोडशशतकस्योत्तरार्द्ध इति निश्चीयते । उव्वटाचार्यात् पञ्चाशत्वर्षानन्तरमयमभवत् । नरसिंहस्योपासकोऽयमासीत्, यस्योल्लेखः ग्रन्थेषु बहुशः उपलब्धो भवति ।

## ( ख ) काण्वसंहिताभाष्यम्

### हलायुधः

सायणस्य परवर्त्तिनः अनन्ताचार्य-आनन्दबोधप्रभृतयः बहुशः विद्वांसः काण्वसंहितायामुपरि भाष्यानि चक्रुः । किञ्च सायणात्पूर्ववर्त्तिषु प्रधानाचार्येषु हलायुध एव शुक्लयजुर्वेदस्य काण्वसंहितायामुपरि स्वविशिष्टभाष्यमस्ति । अस्य भाष्यस्य नाम 'ब्राह्मणसर्वस्वम्' इति अस्ति । भाष्यारम्भे एव हलायुधेन स्वविषये किञ्चित् वृत्तं लिखितम् । येन ज्ञातो भवति यत् बंगप्रदेशस्य अन्तिमहिन्दूनृपतेः सुप्रसिद्धलक्ष्मणसेनस्य व्यवहारमण्डपे धर्माधिकारिणः गौरवपूर्णपदेऽयं प्रतिष्ठापित आसीत् । बाल्ये एवायं राजपण्डितोऽभवत् । नवयौवने श्वेतच्छत्रधारणस्याधिकारः प्राप्तः । वार्द्धक्ये नृपलक्ष्मणसेनस्य धर्माधिकारीपदे च प्रतिष्ठापितः ।

'बाल्ये ख्यापितराजपण्डितपदं श्वेतार्चिबिम्बोज्ज्वल-
च्छत्रोत्सिक्तमहामहस्तमुपदं दत्वा नवे यौवने ।
यस्मै यौवनशेषयोग्यमखिलक्ष्मापालनारायणः
श्रीमान् लक्ष्मणसेनदेवनृपतिर्धर्माधिकारं ददौ ॥'

विख्यात-नृपबल्लालसेनादनन्तरं तदात्मजः 'लक्ष्मणसेनः' अतीवयोग्यतापुरःसरं गौडक्ष्मां ररक्ष । ख्रीष्टस्य सप्तत्यधिकैकादशाब्देऽयं राज्यसिंहासनारूढोऽभवत् ( द्रष्टव्यः—प्राचीनभारतस्येतिहासः—स्मिथः ) । त्रिंशद्वर्षाणि ( ३० व० ) स राज्यं चकार । सुप्रसिद्धलक्ष्मणसंवदब्दप्रतिष्ठापकोऽयं लक्ष्मणसेनोऽत्यन्तं कृत्याकृत्यविवेक्ताऽभूत् । तद्राजमन्दिरे कश्चिदपि मलिनच्छिन्नवस्त्रो वा निर्हेमभूषणो वाल्यपरिच्छदो वा न व्यलोकि । आर्त्तेभ्यो मुक्तहस्तो दानं ददौ । स पराक्रमे इन्द्रतुल्य आसीत् । तदीये शासनकाले प्रजाजनः सन्तोषस्य वृद्धेश्चाभ्युन्नतिमसाधयत् । असौ त्रिंशद्वर्षाणि शासनं विधाय ख्रीष्टस्य द्वादशशततमे वर्षे परलोकमयासीत् । हलायुधः गौडक्षितिपालस्य लक्ष्मणसेनस्य धर्माध्यक्ष आसीत् । लक्ष्मणसेनस्य समयः वि० स० १२२७–१२३७ ( ईशवीयस्तु ११७०-१२०० ) विद्यते, अतः हलायुधोऽपि तत्कालिक एवासीदिति ।

हलायुधः निजसमयस्यैकः प्रसिद्धो वैदिकविद्वानासीत् । वैदिकधर्मस्य पुण्यप्रकर्ष एव मन्ये मूर्त्तो भूत्वा हलायुधात्मना प्रकटीभूतो, यो ब्राह्मणसर्वस्वमलिखत् । अयं हलायुधः शैवदर्शनाचार्यः, वेद-मीमांसामर्मज्ञः, आगमपारङ्गमश्च । विशेषतः शैव-वैष्णवागमयोः रहस्यज्ञो विद्वान् आसीत् । अस्य कृतिषु—ब्राह्मण-

सर्वस्वम्, मीमांसासर्वस्वम्, वैष्णवसर्वस्वम्, शैवसर्वस्वम् , पण्डितसर्वस्वञ्चेति पञ्चग्रन्थाः नितान्तप्रौढाः प्रसिद्धाश्चासन् । स्वयोग्यताबलेनायं गौडराज्याधिपतेः लक्ष्मणसेनस्य सभापण्डितः धर्माध्यक्षश्चाभवत् ।

## सायणाचार्यः

सायणाचार्येण सम्पूर्णकाण्वसंहितायामुपरि स्वभाष्यमलेखि ।

## अनन्ताचार्यः

अनन्ताचार्य-नामा मनीषी काश्यां नगरे जनिं प्रापेति । अयं हि वैदिकविद्वान् माध्ववैष्णवः आसीत् । षोडशशतकोत्तरार्द्धमस्य विदुषः कालो निश्चितः । अनेन काण्वसंहितायारुत्तरार्द्धोपरि (एकविंशत्यध्यायादारभ्य चत्वारिंशदध्याय-पर्यन्तम्) स्वभाष्यं रचितम् । अस्य भाष्योपरि महीधरभाष्यस्य स्पष्टतश्च्छाया प्रतीता भवति । फलतः तस्मादुत्तरकालिकोऽयं भाष्यकार इति निश्चीयते । स्थाने स्थाने मन्त्राणां विष्णुपरकार्थः कृतोऽनेन विदुषा । सम्प्रदायानुसारीयं व्याख्या अस्य पाण्डित्यस्य पुराणज्ञतायाश्च विशेषद्योतिका विद्यते । शुक्ल-यजुर्वेदप्रातिशाख्यस्याप्येकां टीकामयं निरमात् ।

## आनन्दबोधभट्टोपाध्यायः

वाराणसेयसंस्कृतविश्वविद्यालयतः प्रकाशितायां सारस्वतसुषमापत्रिकायां आनन्दबोधभट्टोपाध्यायस्य काण्वसंहितायाः चतुर्थदशकस्य अर्थात् एकत्रिंशद-ध्यायादारभ्य चत्वारिंशदध्यायपर्यन्तस्य भाष्यं क्रमशः ( स० २००९–२०११ ) प्रकाशितमस्ति । ग्रन्थान्तपुष्पिकानुसारेण वासुदेव-पुरी-निवासी चतुर्वेदीयः जातवेदभट्टोपाध्यायस्यायं विद्वान् पुत्रः आसीत् । अस्य विदुषः सम्बन्धे एतावदेव सूचनोपलब्धाऽस्ति । आनन्दबोधभट्टोपाध्यायेन स्वभाष्ये देवता-ऋषि-छन्दः-प्रभृतीनां निर्देशः कृतः, यज्ञपरकमन्त्राणां विनियोगोऽपि यथास्थाने निर्दिष्ट एवेति । अस्य भाषाऽपि बोधगम्याऽस्ति । भाष्यस्य शैल्यपि सरला स्वच्छा चेति । शैलीगुणेनैव ग्रन्थोऽयं लोकप्रियत्वं प्राप्तवान् । ब्राह्मणग्रन्थानामुद्धरणानि अनेन स्वीयग्रन्थे दत्तानि । अस्य भाष्योपरि उव्वटस्य प्रभावो विशेषरूपेण परिलक्षितो भवति । तथापि भाष्येऽस्मिन् भाष्यकारेण स्वीया मौलिकताऽपि यत्र तत्र प्रदर्शिता । यथा—निम्नलिखितमन्त्रोऽयं द्रष्टव्यः—

**'केतुं कृण्वन् न केतवे पेशोमर्या अपेशसे ।**
**समुषद्भिरजा यथाः ॥'**

**( माध्यन्दिनसंहिता २९।३६, काण्व सं० ३१।१२ )**

अत्रोव्वटेन महीधरेण च 'मर्या'-पदम् विभक्तिव्यत्ययेन मर्याय=मनुष्याय एवार्थः गृहीतः किन्त्वानेन प्रथमान्तं 'मर्या' एव पदं स्वीकृतम् । अत्रार्थद्वैविध्यं मर्यादयः शब्दाः नूतनतया सिद्धान्तिताः ।

## ( ४ ) कृष्णयजुर्वेदीय-तैत्तिरीयभाष्यकाराः

### यजुर्वेदपरिचयः

यजूंषि गद्यानि । अध्वर्युना यज्ञे उपयुज्यमाना मन्त्रा एवात्र यजुर्वेदे सङ्कलिताः, यज्ञस्य वास्तविकं विधानमध्वर्युरेव करोति, अतोऽयं यजुर्वेदो यज्ञविधेरतिसन्निकृष्टं सम्बन्धं रक्षति । यजुर्वेदो द्विप्रकारकः-कृष्णयजुः, शुक्लयजुश्चेति ।

पौराणिकाः कथयन्ति—व्यासो वैशम्पायनाय वेदं प्रोवाच, स स्वशिष्याय याज्ञवल्क्याय । कस्मादपि कारणाद् रुष्टो वैशम्पायनो याज्ञवल्क्यमुवाच—'देहि मदधीतं वेदमिति।' याज्ञवल्क्यो गुरुवचनपालनाय ततोऽधीतं वेदं सद्यो वान्तवान् । अन्ये वैशम्पायनशिष्यास्तित्तिरिरूपं धृत्वा याज्ञवल्क्येन वान्तं वेदं गृहीतवन्तः । स एवायं वान्तगृहीतो वेदः कृष्णयजुर्वेदः ।

वैशम्पायने कुपिते ततोऽधीतं वेदं विसृज्य याज्ञवल्क्यः पुनर्वेदाधिगतये सूर्यमाराधयामास, ततश्च वेदमाप, ततोऽयं वेदः शुक्लयजुर्वेदनाम्नाऽप्रथत । अनयोर्वेदयोर्महदन्तरम् ।

शुक्लयजुर्वेदे विनियोगवाक्यरहिताः केवलाः मन्त्रा विद्यन्ते, कृष्णयजुर्वेदे तु विनियोगवाक्यानि मन्त्राश्च । अतोऽमिश्रितरूपतया शुक्लयजुर्वेदः, मिश्रितरूपतया च कृष्णयजुर्वेद इति संज्ञा जातेत्यपि लोकाः कथयन्ति ।

सोऽयं यजुर्वेदः ४० अध्यायान्, ३०३ अनुवाकान्, १९७५ कण्डिका ( मन्त्रान् ), २९६२५ शब्दान्, ८८८७५ अक्षराणि च बिभर्ति । अस्य वेदस्य प्रथमेऽध्याये दर्शपौर्णमासौ, पिण्डपितृयज्ञः, तृतीयेऽग्निहोत्रम्, चातुर्मास्येष्टिः, चतुर्थाध्यायादष्टमाध्यायपर्यन्तमग्निष्टोमविधानं सोमयागः, नवमे वाजपेयो राजसूयश्च, दशमे सौत्रामणिः, एकादशाध्यायादष्टादशाध्यायपर्यन्तमग्निचयनम्, उखाभरणम्, चितयः, रुद्रहः, शतरुद्रियम्, वसोर्धारा, राष्ट्रभिच्च । एकोनविंशतितमाध्यायात् परिशिष्टमारभ्यते, विंशे एकविंशे च सोमसम्पादनविधिः, तदनु पञ्चविंशतिपर्यन्तमश्वमेधः, ततः शेषे भागे पुरुषमेधसर्वमेधपितृमेधादिविवरणञ्च प्रपञ्चितम् । अन्तिमश्चाध्याय ईशावास्योपनिषद्रूपः ।

शुक्लयजुर्वेदस्य संहितैव वाजसनेयिसंहिता कथ्यते । तादृशनामकरणे बीजं त्विदं कथ्यते यत् याज्ञवल्क्येनाराधितः सूर्यो वाजी भूत्वा तस्मै वेदं प्रोक्तवान् । अतस्तदुक्ता संहिता वाजसनेयी-संहिता समाख्याता ।

शुक्लयजुर्वेदस्य—माध्यन्दिनशाखा कण्वशाखेति च द्वे शाखे । प्रथमा उत्तरभारते प्राप्यते, द्वितीया च महाराष्ट्रे । अनयोः शाखयोः संहिते भिन्ने सत्यावपि स्वल्पमेव भेदं धारयतः, बहुष्वंशेषु तुल्यता वर्त्तते । कृष्णयजुर्वेदस्य चतस्रः शाखाः प्राप्यन्ते—

( क ) तैत्तिरीयशाखा—इयं प्रधानशाखा, अत्र सप्त खण्डाः, ते च खण्डाः अष्टकशब्देन काण्डशब्देन च व्यवह्रियन्ते। प्रतिकाण्डं कतिपयेऽध्याया ये प्रपाठकनाम्ना ख्याताः। इमे प्रपाठका बहुष्वनुवाकेषु विभक्ताः सन्ति।

( ख ) मैत्रायणीसंहिता—इमे द्वे अपि संहिते तैत्तिरीयसंहितामनुकुरुतः।

( ग ) काठकसंहिता—केवलं क्रमे यत्र तत्र पार्थक्यं विद्यते।

सायणाचार्यस्तु सर्वप्रथममस्यामेव तैत्तिरीयसंहितायामुपरि स्वभाष्यं प्रणीतवान्। सायणभाष्यात्पूर्वमपि बहुशो विद्वांसः व्याख्याग्रन्थान् रचयामासुः। एतेषां व्याख्याकाराणां विषयेऽस्माकं ज्ञानमत्यल्पमस्ति। एतेषां भाष्याण्यप्यनुपलब्धान्येव। सायणपूर्वभाष्यकारेषु भट्टभास्करमिश्रस्य व्यक्तित्वमेव विशेषरूपेण परिस्फुटोऽस्ति।

**कुण्डिनः**

कुण्डिनस्तु तैत्तिरीयसंहितायाः वृत्तिमरचयत्। अस्यावबोधोऽस्माकमनुक्रमण्याः अस्मादर्द्धश्लोकाद् भवति—

**'यस्याः पदकृदात्रेयो वृत्तिकारस्तु कुण्डिनः।'**

पदपाठकारेणात्रेयेण सहायं वृत्तिकारोऽस्ति सम्बद्धः। तेनायमपि कोऽपि प्राचीनः आचार्य एवेति प्रमाणितो भवति। एतदतिरिक्तं किमप्यन्यदज्ञात एवाऽस्ति कुण्डिनस्य विषये। सम्भाव्यते यदयं वृत्तिकारः गुप्तकाले एव स्ववृत्तिं प्रणीतवान्।

**भवस्वामी**

भवस्वामी नाम कोऽप्याचार्यः 'तैत्तिरीयसंहितायाः भाष्यग्रन्थं प्रणीतवान्' इत्यपि सम्भाव्यते। यतो ह्यस्य भवस्वामिनः परिचयादिबोधमतस्योल्लेखः स्वकृतबौधायन-प्रयोगसार-नामकग्रन्थस्यारम्भिकभागे केशवस्वामिना कृतः। तद्यथा—

'भवस्वामिमतानुसारिणा मया तु उभयमप्यङ्गीकृत्य प्रयोगसारः क्रियते।' अनेनास्य भाष्यकारत्वं समर्थ्यते।

**गुहदेवः**

गुहदेवः नाम कोऽपि विद्वान् तैत्तिरीयसंहितायाः भाष्यं प्रणीतवान्। अस्य भाष्यस्योद्धरणं प्रतिष्ठितैराचार्यैः कृतमतोऽस्य प्रामाणिकता प्रमातुं शक्यते। सर्वाऽधिकनिश्चितप्रमाणमस्य भाष्यस्य सद्भावे देवराजयज्वनः निघण्टुभाष्ये समुपलब्धो भवति। देवराजयज्वा स्वभाष्यारम्भे एव गुहदेवं भाष्यकारत्वेन स्मृतवान्। तैत्तिरीयारण्यकस्थस्य—**'रश्मयश्च देवा गरगिरः'** इति मन्त्रगत-'गरगिरः' इति पदस्य गुहदेवकृतव्याख्यां समुद्धृतमनेन। तद्यथा—'**तथा च 'रश्मयश्च देवा गरगिरः' इत्यत्र गुहदेवः 'गरमुदकं गिरन्ति पिबन्तीति गरगिरः' इति भाष्यं कृतवान्।**'

अयमपि प्राचीनभाष्यकार एवाऽस्ति। आचार्यरामानुजः 'वेदार्थसङ्ग्रहाख्ये स्वग्रन्थे गुहदेवं स्मरति। तद्यथा—**'यथोदितक्रमपरिणतभक्त्ये लभ्य च भगवद्बोधायन-टङ्क-द्रमिडगुहदेवकर्पण्डभारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदवेदान्तव्याख्यानसुव्यतार्थश्रुतिनिकरनिर्दशितोऽयं पन्थाः।'** अतोऽस्य समयं विक्रमाष्टकशतकं नवमशतकं वेति अनेके विद्वांसः कल्पयन्ति।

## आचार्यक्षुरः

आचार्यक्षुरोऽपि तैत्तिरीयसंहितायामुपरि किमपि भाष्यं प्रणीतवान्। अस्याचार्यस्य विषये सायणाचार्यस्य 'माधवीयाधातुवृत्तौ प्रदत्तेन निर्देशेन ज्ञातो भवति। अस्मिन् निर्देशे क्षुरस्य नाम भट्टभास्करस्य नाम्ना पूर्वमेवोल्लिखितोऽस्ति—**'यथा त्रय एनां महिमानः सचन्ते** ( तै० सं० ४-३-११ ) **इत्यत्र क्षुरभट्टभास्करीययोः सचन्ते समन्ते इति।'** अतोऽयं क्षुरः भास्करभट्टस्य पूर्ववर्त्ती इति सम्भाव्यते।

## भट्टभास्करः

भट्टभास्करस्य समयनिर्धारणं वैदिकभाष्यकाराणामितिहासार्थं नितान्तमावश्यकमस्ति। सायणाचार्यः स्वभाष्ये भट्टभास्करमिश्रं स्मरति। एतेन विक्रमस्य पञ्चदशशतकपूर्ववर्त्तित्वमायाति। सायणपूर्ववर्त्ती लक्ष्मणापरनामको वेदाचार्यः स्वीये सुदर्शनमीमांसायां न केवलं भट्टभास्करमिश्रस्य नामोल्लेखं कृतवानपितु तस्य 'ज्ञानयज्ञनामकभाष्यग्रन्थस्याऽपि उल्लेखं कृतवान्। **'तत्र भाष्यकृता भास्करमिश्रेण ज्ञानयज्ञाख्ये भाष्ये एतत्प्रमाणव्याख्यानसमये चरणमिति देवताविशेष इति तदनुगुणमेव व्याख्यातम्।'** (सुदर्शनमीमांसा पृ० ४)। देवराजयज्वनाऽपि स्वग्रन्थेऽस्य भाष्यञ्चोद्धृतम्। प्रसिद्धवैदिकेन हरदत्तेन एकाग्निकाण्डस्य स्वभाष्ये भास्करकृतभाष्यात् साहाय्यं गृहीतम्। अतः भास्करमिश्रस्य समयः विक्रमस्यैकादशशतकं कथयितुं शक्यते। अनेन स्वभाष्ये आर्यटीय-अमरकोष-काशिकाप्रभृतिग्रन्थानां नामोल्लेखश्च कृतम्। तेनाऽपि हरदत्तादिभाष्यकारादस्य पूर्वकालिकत्वं प्रतीयते। एतदपि पूर्वकथितसमयकत्वमस्य साधयति।

भट्टभास्करः तैत्तिरीयसंहितायामुपरि ज्ञानयज्ञनामकं भाष्यं लिलेख। भाष्यमिदमतीव विद्वत्तापूर्णमस्ति। प्रमाणपुरःसरं कतिपयानां वैदिकग्रन्थानां मन्त्रस्योद्धरणमनेन समुपस्थापितमस्मिन्भाष्ये। लुप्तप्रायनिघण्टुग्रन्थादपि उद्धरणं संगृहीतमस्मिन्भाष्येऽनेन विदुषा। मन्त्राणामर्थप्रदर्शनक्रमे विभिन्नाचार्याभिमतानपि अयं प्रदर्शितवान्। अस्मिन् भाष्ये न केवलं यज्ञपरकार्थस्य निर्देशनमस्त्यपितु अध्यात्माधिदैवपक्षयोरप्यर्थस्य प्रदर्शनं कृतमनेन। यथा—**'हंसः शुचिषद् वसुरन्तरिक्षसत्'** प्रसिद्धमस्मिन् मन्त्रे 'हंस'-पदस्य त्रिभिः प्रकारैः व्याख्या कृताऽनेन। तद्यथा = अधियज्ञपक्षे हंसपदस्य व्याख्या—'हन्ति पृथिवीमिति हंसः'

अधिदैवपक्षे–हंसपदस्यार्थः आदित्यो भवति, तथा अध्यात्मपक्षे–'हंस'-पदस्यार्थः 'आत्मा' कृतोऽनेन । अतोऽस्य भाष्यस्य वैदिकसाहित्येऽतीवमहत्त्वमस्ति ।

## ( ५ ) अथर्वसंहिताभाष्यम्

### अथर्ववेदपरिचयः

अभिचारक्रियायाः प्राधान्येन प्रतिपादकोऽयं वेदः अथर्वनामकेन ऋषिणा दृष्टत्वात् अथर्ववेद इत्युच्यते । अत्र वेदे विंशतिकाण्डानि, एकत्रिंशदधिकसप्तशतकानि सूक्तानि, सप्ताशीत्यधिकोनत्रिंशत्शतमन्त्रा विद्यन्ते । एषु मन्त्रेषु द्वादशशतमन्त्रा ऋग्वेदेऽपि दृश्यन्ते । विंशकाण्डे त्रयःपञ्चाशदधिकशतमेकसूक्तानि सन्ति, तेषु द्वादशसूक्तानि अतिरिच्य शेषाणि सर्वाण्यपि ऋग्वेदस्य दशममण्डले समुपलभ्यन्ते ।

अथर्ववेदस्य नवशाखा आसन्, परं सम्प्रति शौनकपिप्पलादसमाख्ये द्वे एव शाखे प्राप्येते । प्रचलिता अथर्वसंहिता शौनकशाखान्तर्गता, पैप्पलादशाखासंहिताऽपि अनतिचिरेणैव मुद्रिता ।

### अथर्ववेदभाष्यम्

सायणात् पूर्ववर्त्ती अथर्वसंहितायाः न कोऽपि भाष्यकारोऽभवत् । सायणस्तु सम्पूर्णायाम् अथर्वसंहितायामुपरि भाष्यं लिलेख, किञ्च प्रकाशितग्रन्थेषु द्वादशकाण्डानाम् ( १–४, ६–८, ११, १७–२० ) एव भाष्यमुपलब्धं भवति । अनेन प्रकारेणास्य वेदस्य सायणभाष्यमप्यपूर्णमेवाऽस्ति ।

### ब्राह्मणग्रन्थ-परिचयः

वेदो द्विविधो—मन्त्ररूपो ब्राह्मणरूपश्चेति, तदयं ब्राह्मणभागोऽपि वेद एव । ब्रह्म वेदः, तदाख्या ब्राह्मण इति केचित् । वेदशेषभूताः इमे ब्राह्मणग्रन्थाः यज्ञानुष्ठानस्य विस्तृतं वर्णनं कुर्वन्ति । काश्चन कथा अपि ब्राह्मग्रन्थेषु प्राप्यन्ते । प्रत्येकवेदशाखानुसारेण ब्राह्मणा आरण्यकग्रन्थाश्च भिन्नाः सन्ति । तत्र ब्राह्मणा यथा—

ऋग्वेदस्य ऐतरेयब्राह्मण-कौषीतकिब्राह्मणञ्चेति ब्राह्मणद्वयम् । अनयोरैतरेये ब्राह्मणमिति प्रथिते । अत्र अष्टौ पञ्चिकाः, प्रतिपञ्चिकं पञ्चाध्याया इति मिलित्वा चत्वारिंशदध्यायाः सन्ति । कौषीतकिब्राह्मणे केवलं त्रिंशदध्यायाः ।

सामवेदस्य बहवो ब्राह्मणभागाः सन्ति, येषु ताण्ड्यब्राह्मणं प्रसिद्धतरम् । अयं ग्रन्थः पञ्चविंशदध्यायशाली, अत एव पञ्चविंशब्राह्मणसंज्ञयाऽपि प्रसिद्ध्यति ।

कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणानामा ब्राह्मणभागो विद्यते । शुक्लयजुर्वेदस्य शतपथब्राह्मणं नितान्तं प्रसिद्धम्, अत्र शतमध्याया विद्यन्ते ।

अथर्ववेदस्य गोपथब्राह्मणम् । अत्र खण्डद्वयमेव, प्रथमखण्डे पञ्चाध्यायाः, द्वितीये च षट् । ब्राह्मणग्रन्थेषु सर्वतो नवोऽयं ग्रन्थः कथ्यते ।

एवमेव ऋग्वेदस्याऽऽरण्यकद्वयम्—ऐतरेयारण्यकम्, शाङ्खायनारण्यकञ्च । कृष्णयजुर्वेदस्य तैत्तिरीयमारण्यकम् ।

सामवेदस्य जैमिनीयशाखायाः जैमिनीयोपनिषद्ब्राह्मणमेव तवलकाराण्यकमिति नाम्ना प्रसिद्धम् । अस्मिन् साममन्त्राणां शोभना व्याख्या कृता । इयं सामवेदारण्यसंहिता सत्यव्रतसामश्रमिणा १८७८ ई० वर्षे मुद्रापयित्वा प्रकाशिता ।

## ब्राह्मण-भाष्यम्

शतपथब्राह्मणस्योभयोः शाखयोः भाष्यान्युपलब्धानि सन्ति—( १ ) काण्वशतपथब्राह्मणस्य भाष्यं महाभारतस्य टीकाकर्त्रा नीलकण्ठेन कृतम् । भाष्यं त्वनुपलब्धमेवाऽस्ति, किन्तु तस्य निर्देशः महाभारत-वनपर्वस्य द्वाषष्टयधिकशतमध्यायस्यैकादशश्लोकस्य टीकायां तेनैव स्वयं कृतः ।

( २ ) माध्यन्दिनशतपथस्य टीका उव्वटेन लिखिता इति श्रूयते । उव्वटस्य पूर्ववर्त्तिनः हरिस्वामी सम्पूर्णशतपथब्राह्मणस्य भाष्यमरचयत् । महान् वैदिकोऽयमासीत् । पराशरगोत्रीयस्य नागस्वामिनः पुत्रोऽयमवन्तिनृपतेः विक्रमस्य धर्माध्यक्ष आसीत् । सौभाग्येनास्य लिखिते भाष्ये, भाष्यरचनाकालस्य निर्देशोऽपि मिलति । तदनुसारेणास्य भाष्यस्य निर्माणकालः ३७४० कलिवर्षः अर्थात् खीष्टस्य ५३८ ईशवीयः आसीत् । अनेन सिद्धो भवति यदयं विक्रमस्य षष्ठशतके विद्यमान आसीत् । भाष्यमिदं प्राचीनं प्रामाणिकञ्चास्ति ।

ऐतरेयब्राह्मणस्य निम्नलिखितानि भाष्यान्युपलब्धानि सन्ति ।

### गोविन्दस्वामी

त्रयोदशशतकोद्भवः 'दैवः' इति पदस्य टीका 'पुरुषकारः' इति कर्त्ता श्रीकृष्णलीलांशुकमुनिः १९८ कारिकायाः टीकायां गोविन्दस्वामिनः नामोल्लेखं कृतवान् । ग्रन्थोऽयमनन्तशयनग्रन्थमालायां प्रकाशितोऽस्ति । उद्धरणमिदं माधवीयाधातुवृत्तावपि मिलति । बौधायनीयधर्मविवरणस्य कर्त्ताऽपि सम्भवतः अयमेवाऽस्ति । अस्मिन् ग्रन्थे कुमारिलस्य निर्देशस्तथा तस्य ग्रन्थः 'तन्त्रवार्त्तिकस्योद्धरणमपि मिलति । अतोऽस्य समयः अष्टमशतकादनन्तरं, त्रयोदशशतकात्पूर्वमर्थात् सम्भवतः दशमशतक इति वक्तुं शक्यते ।

### षड्गुरुशिष्यः

अस्य विदुषः टीकानां सङ्ख्या नातिलघीयसी । ऐतरेयब्राह्मणस्य ऐतरेयारण्यकस्य, आश्वलायनश्रौतसूत्रस्य, आश्वलायनगृह्यसूत्रस्य च व्याख्या कृताऽनेन विदुषा । सर्वानुक्रमणीषूपरि व्याख्याऽपि लिखिताऽनेनेति । वेदार्थदीपिकाख्या कात्यायनस्य सर्वानुक्रमण्याः व्याख्याऽस्य विदुषः सरसरचनाशालित्वेन नितान्तप्रख्याता, आक्सफोर्ड-विश्वविद्यालयद्वारा सुसम्पादिता प्रकाशिता चाऽस्ति । ग्रन्थकारेण स्वयमस्या टीकायाः रचनाकालः १२३४ सं० तथा तदनुसारेण

ख्रीष्टस्य ११७७ ई० लिखितः। अतोऽस्य समयः ख्रीष्टीयद्वादशशतकस्य पूर्वार्द्धे एवाऽस्ति, इति निश्चयेन वक्तुं शक्यते।

**आचार्यसायणः**

आचार्यसायणस्य टीका आनन्दाश्रमपूनातः प्रकाशिताऽस्ति तथा च भरतस्वामिनः सामविधानब्राह्मणोपरि गुर्णविष्णोः छान्दोग्यब्राह्मणोपरि तथा द्विजराजभट्टस्य संहितोपनिषद्ब्राह्मणोपरि प्रकाशितानि भाष्यानि सन्ति।

## तैत्तिरीयब्राह्मणभाष्यम्

**भवस्वामी**

भट्टभास्करस्य कथनानुसारेणास्य भाष्यं वाक्यार्थपरकमासीत्। केशवस्वामी बौधायनप्रयोगसारनामकग्रन्थे भवस्वामिनं स्मरति। एकादशशतके निर्मिते त्रिकाण्डमण्डने केशवस्वामिनः उल्लेखो वर्त्तते। अतोऽस्य समयः दशमशतकस्य पूर्वार्द्धे वक्तुं शक्यते। तैत्तिरीयसंहितायास्तथा तैत्तिरीयब्राह्मणस्य भाष्यं केवलं निर्दिष्टमेवाऽस्ति न तूपलब्धमस्ति।

**भट्टभास्करः**

तैत्तिरीयसंहितायाः भाष्यं लिखित्वा तैत्तिरीयभाष्यमपि लिखितमनेन।

**आचार्यसायणः**

आचार्यसायणोऽपि तैत्तिरीयब्राह्मणस्य भाष्यं प्रणीतवान्। भाष्यमिदं नितान्तं लोकप्रियमस्ति।

## सामवेदीयब्राह्मणभाष्यम्

सामवेदस्य ब्राह्मणेषूपरि सायणात् पूर्ववर्त्तिनः कतिपया आचार्याः टीकां कृतवन्तः। हरिस्वामिनः पुत्रेण जयस्वामिना ताण्ड्यब्राह्मणोपरि, गुणविष्णुना मन्त्रब्राह्मणोपरि, भास्करमिश्रेण आर्षेयब्राह्मणोपरि तथा भरतस्वामिना सामविधानब्राह्मणोपरि भाष्यं रचितम्। आचार्यसायणस्तु निजपद्धत्यानुसारेण समग्रसामवेदीयब्राह्मणेषूपरि भाष्यानि प्रणीतवान्। गोपथब्राह्मणस्य न काऽपि व्याख्या समुपलब्धाऽस्ति।

**सायणस्य वेदभाष्यम्**

पदवाक्यप्रमाणपारावारपारीणः सायणाचार्यः प्रतिभावान् प्रभाववांश्च विद्वानासीत्। अस्य विदुषः वैदिकभाष्यान्तराणां ग्रन्थानां न तादृशं महत्त्वमस्ति यादृशं महत्त्वं वैदिकभाष्याणाम्। वैदिकभाष्याणां परेऽप्यस्याचार्यपादस्य ग्रन्था वर्त्तन्ते, सर्वसाधारणजना इत्यपि न जानन्ति। सायणाचार्यस्य वैदिकभाष्यनिर्माणप्रशंसायां विद्वांसः कथयन्ति—'वेदानां पुण्यप्रकर्ष एव मूर्त्तो भूत्वा सायणात्मना प्रकटीभूतः' इति। अद्याप्यस्य भाष्यग्रन्था एव कीर्त्तिप्रख्यापकाः सन्ति।

आचार्यसायणो विजयनगरसंस्थापकमहाराजबुक्कस्य महाराजहरिहरस्य चामात्यः सेनानीश्चासीत् । सायणो वैदिकसम्प्रदायस्य यथार्थतया वेत्ताऽऽसीत् । महाराजबुक्करायः संस्कृतसाहित्यस्यार्यधर्मस्य च संस्कर्ताऽऽसीत् । हिन्दूधर्मं प्रति तस्य विमलानुराग आसीत् । हिन्दूसभ्यताम्प्रति च तस्य गाढाऽनुरक्तिरासीत् । हिन्दूधर्मस्यादिमाः प्राणभूताः ग्रन्था वेदा एव सन्ति । तेषां प्रामाणिकव्याख्यार्थं तस्य मनसि सङ्कल्पः समजनि । तदर्थं तेन निजाध्यात्मिकं गुरुं तथा राजनीतिज्ञोऽमात्यं माधवाचार्यं तस्मिन् कर्मणि प्रतिनियोजितः । माधवाचार्यस्तु वेदार्थस्य मर्मज्ञः मीमांसक आसीत् । जैमिनीयन्यायमालायाः रचनां कृत्वाऽसौ निजमीमांसाज्ञानस्य प्रकृष्ट-परिचयं दत्तवान् । किञ्च माधवः नृपस्य नियोगोऽयं न स्वीचकार । तेन निवेदितम्—'राजन् ! मम कनिष्ठभ्राता सायणो वेदार्थतत्त्वज्ञस्तथा वेदार्थोन्मीलनकारिषु विद्वत्सु वैदिकसम्प्रदायस्य यथार्थतया वेत्ता मूर्धन्यश्चासीत् । अतस्तमेवाऽस्मिन् कर्मणि नियोजय ।' माधवाचार्यस्य वचनं श्रुत्वा महीपतिबुक्कः वेदार्थप्रकाशनार्थं सायणाचार्यं समादिशत् । नृपाज्ञया सायणाचार्यः अपि तस्मिन् दुर्गमे वेददुर्गे प्रवेशार्थं मूर्धन्यं वेदभाष्यं प्रणीतवान् । प्रौढवेदज्ञत्वेन सायणोऽनेकवैदिकग्रन्थेषु टीकां भाष्यं च कृतवान् ।

विवरणमिदं तैत्तिरीयसंहिताभाष्यस्यारम्भे दत्तमनेन । सायणस्य तारुण्यं कम्पन-सङ्गमयोः मन्त्रित्वसम्पादने व्यतीतोऽभवत् । नल्लूरस्य पार्श्ववर्त्तिनः क्षेत्रस्यायं शासकः प्रबन्धकश्चासीत् । विजयनगराद् बहिरन्यैः भूपालैः सह सायणोऽपि राज्यप्रबन्धे संलग्नश्चासीत् । तेनैव कारणेनास्य विजयनगरस्य प्रशासकः हरिहरेण महाराजबुक्केन सह च घनिष्ठपरिचयाभावः आसीत् । महाराजबुक्कोऽप्यस्य वैदुष्येन सर्वथाऽपरिचित एवासीत् । तेन हि माधवाचार्यस्य प्रार्थनया प्रत्यभिज्ञया चान्तःसन्तोषमवाप्यैव वैदिकभाष्यग्रन्थलेखनरूपकर्मणि चेतो दधौ ।

**इमे सन्ति तत्प्रणीता ग्रन्थाः—**

१. तैत्तिरीयसंहिता-भाष्यम् ( कृष्णयजुर्वेदस्य ) ।

२. ऋग्वेदसंहिता-भाष्यम् ।

३. सामवेदसंहिता-भाष्यम् ।

४. काण्वसंहिताभाष्यम् ( शुक्लयजुर्वेदीयः ) ।

५. अथर्ववेदसंहिता-भाष्यम् ।

**सायणाचार्येण व्याख्याताः ब्राह्मणग्रन्थाः आरण्यकग्रन्थाश्चेति—**

**( क ) कृष्णयजुर्वेदीयब्राह्मणभाष्यम्—**

**१. तैत्तिरीयब्राह्मणभाष्यम् ।**

**२. तैत्तिरीय-आरण्यकभाष्यम् ।**

**( ख ) ऋग्वेदस्य ब्राह्मणभाष्यम्—**

३. ऐतरेयब्राह्मण-भाष्यम् ।
४. ऐतरेयारण्यक-भाष्यम् ।
( ग ) सामवेदस्य ब्राह्मणभाष्यम्—
५. ताण्ड्यब्राह्मणभाष्यम् ( पञ्चविंश-महाब्राह्मणः ) ।
६. षड्विंशब्राह्मणस्य ।
७. सामविधानब्राह्मणस्य ।
८. आर्षेयब्राह्मणस्य ।
९. देवताध्याय-ब्राह्मणस्य ।
१०. उपनिषद्-ब्राह्मणस्य ।
११. संहितोपनिषद्ब्राह्मणस्य ।
१२. वंशब्राह्मणस्य ।
( घ ) शुक्लयजुर्वेदीयब्राह्मणस्य ।
१३. शतपथब्राह्मणस्य ।

अनेन प्रकारेण सायणाचार्येण पञ्चसंहितानां भाष्यग्रन्थानां निर्माणं कृतं तथा त्रयोदशब्राह्मणारण्यकयोः व्याख्या च निरमायि । सायणकृत-वेदभाष्याणां नामोल्लेखेन स्पष्टतः प्रतीतो भवति, यदयं महापुरुषः चतुर्णां वेदानां संहितायामुपरि स्वप्रामाणिकभाष्यमलेखीत् । शुक्लयजुर्वेदस्य सामवेदस्य च समग्रब्राह्मण-ग्रन्थोपरि सायणाचार्यः भाष्यग्रन्थं जग्रन्थ । अनेन विदुषा विरचिता शुक्लयजुर्वेदस्यैका एव शतपथब्राह्मणस्य वृत्तिरद्य समुपलभ्यते । विपुलकायग्रन्थोऽयं शताध्यायेषु विभक्तः अस्ति । माधवेन प्रेरितः सायणः सकलस्यास्य ग्रन्थस्य सुष्ठु व्याख्यानं निबबन्ध । सामवेदस्याद्याऽपि अष्टब्राह्मणा एव मिलन्ति । समुपलब्धेष्वष्टसु ब्राह्मणग्रन्थेषूपरि भाष्यं प्रणीतमनेन विदुषा । ऋग्वेदस्य द्वौ ब्राह्मणौ तथा द्वावेवारण्यकौ स्तः—ऐतरेयब्राह्मणस्तथा ऐतरेयारण्यकः, एवञ्च कौषीतकि-ब्राह्मणस्तथा कौषीतकि-आरण्यकश्चेति । एतेषु पूर्वोल्लिखितग्रन्थ-द्वयोरेव व्याख्यानं सायणेन कृतम् । कार्यमिदमेतावन्महत्त्वपूर्णमभवत् यस्य समत्वं न केनाऽपि प्राचीनाचार्येण सह भवितुं शक्यते नाऽपि केनाऽपि परवर्त्तिना आचार्येण सहैव । आचार्यः सायणो माधवाचार्यस्यानुरोधेन प्रथमं वेदभाष्यान्यलिखत् । ततश्च तस्मिन् शास्त्रे स्वप्रतिभां तेषां वेदानां व्याख्याने प्रदर्श्य गुरुप्रदर्शितां वेदशाखां व्याचख्यौ ।

**इमे आचार्यसायणकृताः भाष्यग्रन्थाः सन्ति—**

**१. तैत्तिरीयसंहिता ( कृष्णयजुर्वेदस्य ) ।**
**२. ऋग्वेदसंहिताभाष्यम् ।**
**३. सामवेदसंहिताभाष्यम् ।**
**४. काण्वसंहिताभाष्यम् ( शुक्लयजुर्वेदस्य ) ।**
**५. अथर्ववेदसंहिताभाष्यम् ।**

**सायणेन व्याख्याताः ब्राह्मणारण्यकग्रन्थाः—**

( क ) कृष्णयजुर्वेदीयब्राह्मणभाष्यानि—

१. तैत्तिरीय-ब्राह्मणभाष्यम् ।

२. तैत्तिरीय-आरण्यकभाष्यम् ।

( ख ) ऋग्वेदीयब्राह्मणग्रन्थाः—

३. एतरेय-ब्राह्मणभाष्यम् ।

४. एतरेय-आरण्यकभाष्यम् ।

( ग ) सामवेदीयब्राह्मणग्रन्थाः—

५. ताण्डयब्राह्मणः ( पञ्चविंशः, महाब्राह्मण )

६. षड्विंशब्राह्मणः ।

७. सामविधानब्राह्मणः ।

८. आर्षेयब्राह्मणः ।

९. देवताध्यायब्राह्मणः ।

१०. उपनिषद्ब्राह्मणः ।

११. संहितोपनिषद्ब्राह्मणः ।

१२. वंशब्राह्मणः ।

( घ ) शुक्लयजुर्वेदीयब्राह्मणः—

१३. शतपथब्राह्मणः ।

अनेन प्रकारेणायं सायणः पञ्चसंहिताभाष्यानि त्रयोदशब्राह्मणारण्यकानाञ्च व्याख्यामलिखत् । सायणकृतवेदभाष्याणां नामोल्लेखेन ज्ञातो भवति यदयं चतुर्णां वेदानां संहितानामुपरि स्वप्रामाणिकभाष्यान्यलिखत् तथा चतुर्णां वेदानां ब्राह्मणभागस्यापि व्याख्यां लिलेख । शुक्लयजुर्वेदस्य सामवेदस्य च सकलब्राह्मण-ग्रन्थानामुपरि सायणाचार्येण भाष्यग्रन्था लिखिताः । शुक्लयजुर्वेदस्यैक एव ब्राह्मण-भाष्यं मिलति, तत्तु शतपथब्राह्मणस्य भाष्यमस्ति । विपुलकायोऽयं ग्रन्थः शत-खण्डेषु विभक्तोऽस्ति । सायणेनास्य ग्रन्थस्य सुष्ठु व्याख्या लिखिता । सामवेद-स्याष्ट एव ब्राह्मणग्रन्थाः मिलन्ति । एतेषामष्टानां ब्राह्मणग्रन्थानामुपरि सायणेन भाष्यं लिखितम् । ऋग्वेदस्य द्वावेव ब्राह्मणौ तथा द्वावेवारण्यकौ मिलितौ । तद्यथा—एतरेयब्राह्मणम्, ऐतरेयारण्यकञ्च तथा कौषीतकिब्राह्मणम्, कौषीतकि-आरण्यकञ्चेति । अनयोः प्रथमद्वयोर्ग्रन्थयोरुपरि एव सायणेन व्याख्या लिखिता । अनेन प्रकारेण कृष्णयजुर्वेदस्यापि एक एव शाखातः सम्बद्धब्राह्मणस्यारण्यकं च व्याख्यामयमलिखत् । कृष्णयजुर्वेदस्यानेकशाखायाः ग्रन्थाः उपलब्धाः सन्ति । किञ्च सायणेन सर्वान् ग्रन्थान् विहाय स्वकीयतैत्तिरीयशाखायाः ब्राह्मणमुपरि आरण्यकमुपरि च स्वभाष्यं लिखितम् । अनेन रूपेण सायणाचार्यः वैदिक-साहित्यस्य विशालभागोपरि निजविस्तृतं प्रामाणिकञ्च भाष्यमलिखत् ।

## तैत्तिरीयसंहितायाः भाष्यम्

सायणाचार्येण निजभाष्याणामारम्भे कतिपयानि पद्यन्युपोद्घातरूपेण लिखितानि । एतेषां पद्यानां परीक्षणेन भाष्याणां रचनाक्रमस्य सुष्ठु प्रतिपादनं कर्त्तुं शक्यते । सायणाचार्यः सर्वप्रथमकृष्णयजुर्वेदीयतैत्तिरीयसंहितायाः भाष्यमलिखत् । अयं हि सायणाचार्यः तैत्तिरीयशाखाध्यायी आन्ध्रब्राह्मणः आसीत् । अस्य सर्वाधिकोपयोगित्वेनाऽपि अस्य भाष्यस्य रचना कृता अनेन सर्वप्रथमम् । अस्य प्रमाणन्तु—**'एवं सति अध्वर्युसम्बन्धिनि यजुर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशस्त्ररूपौ अवयवौ इतरेण वेदद्वयेन पूर्येते, इत्युपजीव्यस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तम्'** ( द्रष्टव्यम्—वेदभाष्यभूमिका, चौखम्बा संस्करणम्, पृ० १४ ) । सायणेन स्वयमस्य ग्रन्थस्यारम्भे पूर्वोक्तरचनाक्रमस्य स्पष्टतया प्रतिपादनं कृतम् । तद्यथा—

'व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता ।
तद्ब्राह्मणं व्याकरिष्ये सुखेनार्थविबुद्धये ॥'

\+ \+ \+

'व्याख्याता सुखबोधार्थं तैत्तिरीयकसंहिता ।
तद्ब्राह्मणञ्च व्याख्यातं शिष्टमारण्यकं ततः ॥'

## ऋग्भाष्यम्

पूर्वोक्तभाष्यनिर्माणानन्तरमेव अयं ऋग्वेदस्य भाष्यमलिखत् । अध्वर्योः कार्यानन्तरं होतुः कार्यस्य महत्त्वमस्ति । ऋग्वेदस्य भाष्यारम्भे एव सायणेन तथ्यमिदं स्वीकृतम् । यथा—**'ऋचात्वः पोषमास्ते पुपुष्वान् होतृनामकः एकः ऋत्विक् यज्ञकाले स्वकीयवेदगतानाम् ऋचां पुष्टिं कुर्वन्नास्ते । भिन्नप्रदेशेषु आम्नातानां ऋचां सङ्घातमेकत्र सम्पाद्यैतावदिदं शास्त्रमिति क्लृप्तिं करोति सेयं पुष्टिः'** ( द्रष्टव्यम्—भाष्यभूमिका, पृ० १३ ) । ऋग्भाष्यारम्भे सायणेन स्वयं लिखितम्—

**'आध्वर्यवस्य यज्ञेषु प्राधान्यात् व्याकृतः पुरा ।
यजुर्वेदोऽथ होत्रार्थमृग्वेदो व्याकरिष्यते ॥'**

सायणेन ऋग्वेदभाष्यात् प्रागेवास्य वेदस्य ऐतरेयब्राह्मणस्य, ऐतरेय-आरण्यकस्य च भाष्यं लिखितम् । ऋग्वेदभाष्यस्यारम्भे एव सायणेन तथ्यमिदं स्वीकृतम् ।

**'मन्त्रब्राह्मणात्मके वेदे ब्राह्मणस्य मन्त्राण्याख्यानोपयोगित्वात् आदौ ब्राह्मणमारण्यकाण्डसंहितं व्याख्यातम् । अथ तत्र तत्र ब्राह्मणोदाहरणेन मन्त्रात्मकः संहिताग्रन्थो व्याख्यातव्यः ।'**

सायणेन स्वकीयवेदभाष्यस्य नाम वेदार्थप्रकाशं लिखितम्, तथा भाष्यमिदं विद्यातीर्थाय गुरवे समर्पितम् ।

'वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः ॥'

सम्पूर्णऋग्भाष्यस्य प्रथमं संस्करणं डा० मैक्समूलरेण १८४९-७४ खीष्टाब्दे षट्सु खण्डेषु सम्पादितं प्रकाशितञ्चेति । अधुना तिलकविद्यापीठ-पूनातः अस्य भाष्यस्य विशुद्धसंस्करणं चतुर्षु खण्डेषु प्रकाशितमस्ति ।

## सामभाष्यम्

होतुरनन्तरमुद्गातृनामकस्य ऋत्विजः कार्यं भवति । उद्गाता उच्चस्वरेण साममन्त्रान् उद्गापयति ।

**गायत्रं त्वा गायति शक्वरीषु उद्गातृनामक एक ऋत्विक् गायत्रशब्दाभिधेयं स्तोत्रं शक्वरीशब्दाभिधेयासु ऋक्षु उद्गायति ।** ( वेदभा० भू० सं० पृ० १३ ) ।

सामवेदस्य गायकस्तस्य कार्यमिदं 'औद्गात्र'-शब्देन व्यवह्रियते । अनेनैव कारणेन सामवेदस्यावश्यकता भवति । ऋचामुपरि सामगानं भवति । अतः ऋग्वेदस्य पश्चात् सामवेदस्य व्याख्या युक्तिसङ्गतेवाऽस्ति । यजुर्वेदेन यज्ञस्वरूपस्य निष्पत्तिर्भवति । यथा समुत्पन्ने शरीरेऽस्य कटकादिविभूषणं भवति, तदाश्रितं मणिमुक्तादिकटकादौ शोभते तथैव वेदादीनां क्रमिकस्थानं भवति—

'जाते देहे भवत्यस्य कटकादिविभूषणम् ।
आश्रितं मणिमुक्तादिकटकादौ यथा तथा ॥ १२ ॥
यजुर्जाते यज्ञदेहे स्यादृग्भिस्तद्विभूषणम् ।
सामाख्या मणिमुक्ताद्या ऋक्षु तासु समाश्रिताः' ॥ १३ ॥

अतो व्याख्येयं क्रमिका तथा स्वाभाविका चाऽस्ति । सायणाचार्येण स्वयं वार्तेयं स्वीकृता । ऋग्भाष्यानन्तरमेव सामभाष्यस्य रचना कृताऽनेनेति । तद्यथा—

'यज्ञं यजुर्भिरध्वर्युर्निमिमीते ततो यजुः ।
व्याख्यातं प्रथमं पश्चादृचां व्याख्यानमीरितम् ॥ १० ॥
साम्ना मृगाश्रितत्वेन सामव्याख्याय वर्त्तते ।
अनुतिष्ठासु जिज्ञासावशाद् व्याख्याक्रमो ह्ययम्' ॥ ११ ॥

( तत्रैव, पृ० ६३ )

अष्टमवंशब्राह्मणस्य व्याख्यानारम्भे संहितात्रयाणामेव पश्चात् सामब्राह्मणभाष्यस्य निर्माणमभवत् । भाष्यकारेण स्वयं स्वीकृतमिदं तथ्यम् ।

'व्याख्याता ऋग्यजुर्वेदौ सामवेदोऽपि संहिता ।
व्याख्याता ब्राह्मणस्याथ व्याख्यानं सम्प्रवर्त्तते ॥'

( वंशब्राह्मणभाष्यम् )

सर्वप्रथमं ताण्डयब्राह्मणस्य तत्पश्चात् सर्वान्ते वंशब्राह्मणस्य व्याख्या कृता सायणेन—

'प्रौढानि ब्राह्मणान्यादौ सप्तव्याख्याय चान्तिमम् ।
वंशाख्यं ब्राह्मणं विद्वान् सायणो व्याचिकीर्षति ॥'

## काण्वभाष्यम्

सामवेदानन्तरं काण्वसंहितायाः भाष्यं लिखितं सायणेन । कृष्णयजुर्वेदस्य तैत्तिरीयसंहितायाः भाष्यं तु पूर्वमेव लिखितमनेन । शुक्लयजुर्वेदस्य द्वे शाखे स्तः—माध्यन्दिनीसंहिता, काण्वसंहिता चेति । सायणात् त्रीणि शतवर्षाणि प्रागेव राजाभोजस्य शासनकाले एव आनन्दपुरवास्तव्येनाचार्येण उव्वटेन माध्यन्दिनसंहितायाः भाष्यं निरमायि । एतदवशिष्टभागस्य काण्वसंहितायाः भाष्यं सायणेन निरमायि इति । तत्र पूर्वविंशतेः भाष्यस्य प्रकाशनं चौखम्वा-संस्कृत-ग्रन्थमालातः प्रागेवाऽभवत् । उत्तरविंशतेः भाष्यस्य प्रकाशनं तु संस्कृतविश्व-विद्यालय-काशीतः १९७८ ख्रीष्टाब्देऽभवत् ।

## अथर्वभाष्यम्

संहिताभाष्ये अथर्वभाष्यस्य रचना सर्वान्तेऽभवत् । अथर्वभाष्यस्योपोद्घाते सायणेन लिखितं पारलौकिकफलदायकं वेदत्रितयं प्रथमं व्याख्याय तत्पश्चाल्लोककल्याणप्रदमथर्ववेदस्य भाष्यं लिखितम् । तद्यथा—

'व्याख्याय वेदत्रितयं आमुष्मिकफलप्रदम् ।
ऐहिकामुष्मिकफलं चतुर्थं व्याचिकीर्षति ॥'

अथर्ववेदोपरि सायणाचार्यस्यैवैकं भाष्यं मिलति । किन्त्वद्याऽपि तस्य सम्पूर्णकोषोऽनुपलब्ध एवाऽस्ति । अंशोऽयमद्याऽपि त्रुटित एवाऽस्ति । अतिपरिश्रमेणास्य भाष्यस्य प्रथमसंस्करणं बम्बईनगरीतः पण्डितकाशीनाथपाण्डुरङ्गेन चतुर्षु खण्डेषु ख्रीष्टस्य १८९५-१८९८ ईशवीये प्रकाशितम् । अस्याथर्ववेदस्य विंशतिः काण्डेषु मात्रद्वादशकाण्डोपरि ( १, २, ३, ४, ६, ८, ११, १७-२० ) एव सायणभाष्यं मिलति । तेष्ववशिष्टान्यन्याष्टकाण्डानि ( ५, ९, १०, १२-१६ ) सायणभाष्यं विनैव प्रकाशितानि सन्ति । किञ्च श्रूयतेऽस्य भाष्यस्य सम्पूर्णहस्तलिखितप्रत्यपि ग्वालियरनगरेऽस्ति ।

## शतपथभाष्यम्

सायणाचार्यस्य भाष्येषु शतपथब्राह्मणस्य भाष्यमुत्तरकालिकमस्ति । वेदत्रितयभाष्यं तथाऽन्यब्राह्मणानां भाष्यञ्च सायणाचार्यः वीरश्रीबुक्कनृपतेः राज्यकाले एव निबबन्ध । अथर्ववेदस्य शतपथब्राह्मणस्य च भाष्यमयं हरिहरद्वितीयस्य राज्यकाले प्रणीतवान् । सायणस्तु सम्पूर्णशतपथब्राह्मणोपरि भाष्यं लिलेख, किन्त्वद्य तदुपलब्धं नाऽस्ति । अस्य भाष्यस्य संस्करणत्रयं प्रकाशि-

तम् । डा० वेबरस्य संस्करणे वेवरस्य भाष्यमपूर्णमेवाऽस्ति । स्थाने स्थाने च हरिस्वामिनः भाष्यं मिलति । कलकत्तानगरस्य 'एशियाटिक सोसायटी' नामक संस्थायाः संस्करणमपि अपूर्णमेवाऽस्ति । इतः वेङ्कटेश्वरयन्त्रालयात् 'शतपथ-ब्राह्मणभाष्यम्' पञ्चसु खण्डेषु प्रकाशितम् अभवत् । संस्करणमिदं विशुद्धं प्रतीतं भवति । ग्रन्थेऽस्मिन् यस्य काण्डस्योपरि सायणभाष्यमनुपलब्धमस्ति तत्र हरि-स्वामिनः भाष्यमस्ति । स्थाने स्थाने उभयोर्भाष्ययोः सङ्केतेन अद्य सम्पूर्ण-ग्रन्थोऽयं समुपलब्धो भवति । बृहदारण्यकोपरि वेवरमहोदयेन द्विवेदगङ्गस्य भाष्यं प्रकाशितम् । वेङ्कटेश्वरसंस्करणे 'वासुदेवब्रह्म'-भगवतः भाष्यमस्ति । वेदानुशीलनार्थमस्य संस्करणस्य प्रकाशनं परमोपयोगि इति कथ्यते ।

वेदभाष्यरचनाकालस्य निर्णयः नितान्तं महत्त्वपूर्णकार्यमस्ति । सायणाचार्येण कदा कस्य भाष्यस्य रचना कृता ? तदा तस्यावस्था का आसीत् ? इत्यादीनां प्रश्नानां समुचितमुत्तरमत्यन्तमहत्त्वपूर्णमस्ति । बहिरन्तःसाधनसाहाय्येनास्य रचनाकालस्य निर्णयं कर्त्तुमस्माभिः शक्यते ।

बडौदानगरस्य केन्द्रीयपुस्तकालये ऋग्वेदभाष्यस्यैका हस्तलिखिता प्रतिलिपिः सुरक्षिताऽस्ति । अस्यां हस्तलिप्यां ऋग्वेदस्य चतुर्थाष्टकस्यैव सायणभाष्य-मस्ति । अस्याः प्रतिलिपेः लिपिकालः विक्रमस्य द्वापञ्चाशदधिकचतुर्दशशतमस्ति । एतस्याः प्राचीनतरा न काऽप्यन्या पाण्डुलिपिः अद्यावधि सम्प्राप्ता । सायणाचार्य-स्यावसानकालः विक्रमस्य चतुश्चत्वारिंशदधिकचतुर्दशशतं कथ्यते । सायणस्य विषये उक्तादधिकं न किमपि कुत्रापि समुपलभ्यते । सायणस्यावसानकालादष्टमे वर्षे सम्भवतः अस्य भाष्यस्य स्वरूपं निश्चित्य तस्य लिपिबन्धोऽक्रियत । तस्या-वसानकालादष्टवर्षानन्तरमेवेयं लिपिः लिखिता इति ।

सायणः स्वकीयभाष्येषु ग्रन्थरचनाकालस्य कुत्राऽपि निर्देशं नाकरोत् । किञ्च कालनिर्देशाभावेऽपि स्वग्रन्थे निजाश्रयदातुर्नृपस्य चर्चा कृता सायणेन । तेनैव तस्य ग्रन्थस्य रचनाकालोऽपि सुष्ठुतयाऽवबुद्धो भवति । तैत्तिरीयादिचतसृणां संहितानाञ्च तैत्तिरीयब्राह्मणाद्युपरि-निर्दिष्टानां द्वादशब्राह्मणानां भाष्यस्यारम्भे बुक्कनरेशस्याज्ञया भाष्यमिदं लिखितं सायणेनेति, एवं घटनायाः उल्लेखं कृतं ग्रन्थकारेणेति । तद्यथा—

**'तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।**
**आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥'**

—सायणभाष्यस्योपोद्घातः ।

एतेषां भाष्याणां पुष्पिकायां सायणेन स्वात्मानं वैदिकमार्गप्रवर्त्तकस्य राजा-धिराजवीरबुक्कस्य साम्राज्यधुरन्धरं लिखितम् । यथा—

**'इति श्रीमद्राजाधिराजपरमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कसाम्राज्य-धुरन्धरेण सायणाचार्येण विरचिते-माधवीयवेदार्थप्रकाशऋक्संहिताभाष्ये प्रथ-माष्टके प्रथमोऽध्यायः ।'**

अथर्वसंहितायाः भाष्यावतरणिकायां सायणः श्रीबुक्कनृपतेः तनयस्य महाराजाधिराज-धर्मब्रह्माध्वन्यस्य षोडशमहादानकर्तुः विजयिनः श्रीहरिहर-द्वितीयस्योल्लेखं कृतवान् ।

'तत्कटाक्षेण तद्रूपं दधतो बुक्कभूपतेः ।
अभूद् हरिहरो राजा क्षीराब्धेरिव चन्द्रमा ।।'

—वे० भा० सं० पृ० ११९

शतपथब्राह्मणस्य भाष्यारम्भेऽस्यैव हरिहरस्य नामोल्लेखः प्रायः एतेष्वेव शब्देषु प्राप्तोऽभवत् । यथा—

'तत्कटाक्षेण तद्रूपं दधतो बुक्कभूपतेः ।
कृतावतरणः क्षीरसागरादिव चन्द्रमाः ।। ३ ।।
विजितारातिव्रातो वीरः श्रीहरिहरः क्षमाधीशः ।
धर्मब्रह्मध्वन्यः समादिशत् सायणाचार्यम् ।। ४ ।।

—शतपथभाष्योपोद्घाततः ।

एताभ्यः पुष्पिकाभ्यः ज्ञातो भवति यदेतेषां भाष्याणां रचनाकाले सायणः हरिहरद्वितीयस्य प्रधानमन्त्री आसीत् । तस्यैवादेशेन भाष्याणां रचना कृता तेनेति । एभिर्निदेशैः एतेषां वेदभाष्याणां रचनाकालस्य निर्धारणं कर्त्तुं शक्यते । तथा च प्रमाणपुरस्सरं स्थापितुं शक्यते यदयं सायणः ख्रीष्टस्य चतुःषष्टयधिक-त्रयोदशशतकादारभ्याष्टसप्तत्यधिकत्रयोदशाब्दपर्यन्तं श्रीबुक्कमहीपतेः प्रधान-मन्त्रिपदमलञ्चकार । तत्पश्चादूनाशीत्यधिकत्रयोदशशतकात् स्वमृत्युकालपर्यन्तम् अर्थात् सप्ताशीत्यधिकत्रयोदश ईशवीयपर्यन्तं हरिहरद्वितीयस्य प्रधानामात्य आसीत् । अनेन प्रतीतो भवति १३६४ ई०तः १३८७ ई० पर्यन्तं प्रायः चतुर्विंशतिवर्षपर्यन्तमुभयोः नृपयोः राज्यभारं सः प्रधानामात्यपदेन दधार । एतावद्दीर्घकालपर्यन्तं सायणः वेदानां भाष्यमरचयत् ।

अस्मिन् कालेऽयं वेदानां सकलगूढार्थप्रतिपादने पूर्णसमर्थ आसीत् । सायणः महावैयाकरणोऽपि सर्वशास्त्रेष्वप्रतिहतगतिर्विशेषतो वेदज्ञ आसीत् । तेन हि वेदानामुपरि महत्त्वपूर्णं भाष्यं व्यरचि । वेदानां ब्राह्मणानाञ्च स एव प्रथमो भाष्यकारः इति तु न वक्तुं शक्यम् तेनैवानेकेषां स्वपूर्वभवानां भाष्यकृता-मुल्लेखात् । किञ्च समस्ते वैदिकवाङ्मये तस्यैव भाष्यं प्राप्यते, इति तु निश्च-प्रचम् । अनेन प्रतीतो भवति यत् सायणाचार्यः स्वजीवनस्यान्तिमविंशतिचतुर्विंशतिवर्षाणि वाऽस्मिन्नेव महत्त्वपूर्णकार्ये व्यतीतवान् । पूर्वोक्तकथनानुसारेण वेदभाष्यानां रचनाकालोऽपि तथैवेति । विजयनगराधिपस्य राज्ञः बुक्कस्य तत्पुत्रस्य श्रीहरिहरद्वितीयस्य च राज्यकालः १३६४ ख्रीष्टाब्दमारभ्य १३७८ ख्रीष्टाब्दपर्यन्तम् इति तन्महामात्यस्य सायणाचार्यस्य वैदिकभाष्यस्याऽपि स एव समय इतिहासविदो वदन्ति ।

## माधवीयनाम्नः रहस्यम्

सायणाचार्यस्य कतिपयेषु ग्रन्थेषु 'माधवीय'-शब्दस्य प्रयोगो मिलति। तद्यथा--सायणनिर्मिता 'धातुवृत्तिः' माधवीयाधातुवृत्तिरिति नाम्ना ख्याताऽस्ति। सायणविरचितम् ऋक्संहिताभाष्यमपि माधवीयम्, इति नाम्ना एव ख्यातमस्ति। प्रयोगमिदं माधवीयं दृष्ट्वा कतिपयानामालोचकानां मते भाष्यमिदं माधवाचार्येणैव विरचितम्। किञ्च सायणाचार्यस्य ग्रन्थानां पर्यालोचनेन ज्ञातो भवति यदालोचकानां कथनमिदं भ्रमात्मक एवेति। एतेषां ग्रन्थानामारम्भिकभागस्यान्तिमांशस्य च परीक्षणेन ज्ञातो भवति यदेतेषां ग्रन्थानां रचयिताऽसन्दिग्धरूपेण सायणाचार्य एवासीत्। माधवीयशब्दप्रयोगस्य कारणमपि स्पष्टमेवाऽस्ति। एतेषां ग्रन्थानां रचनायाः आदेशः तत्कालिकविजयनगराधीशेन बुक्कनरेशेन श्रीमाधवाचार्यमेव प्रदत्तः। माधवाचार्येणाऽस्मिन् कार्ये नियोजनार्थं स्वानुजस्य सायणाचार्यस्य तत्सन्मुखे प्रशस्ता प्रशंसा कृता। तेन प्रभावितो भूत्वा बुक्कनरेशेनाऽस्य महत्त्वपूर्णकार्यस्य सम्पादनार्थं सायणाचार्यो नियुक्तः। अनेन प्रकारेण वेदभाष्यरचनायां माधवस्य प्रोत्साहनं नितान्तमावश्यकमासीत्। अतएवाग्रजस्योपकारभारेणावनतो भूत्वा सायणेन एतेषां ग्रन्थानां माधवीयनामकरणं कृतमिति। अतः माधवीय-नाम्ना माधवस्य ग्रन्थकर्त्तृत्वेन न किमपि सम्बन्धः प्रतीयते। सायणेन स्वग्रन्थो वेदार्थप्रकाशनाम्नाऽभिहितः। एते ग्रन्थाः श्रद्धया तेन स्वगुरवे विद्यातीर्थाय समर्पिताः। यथा—

'वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥'

## वेदभाष्याणामेककर्त्तृत्वम्

सर्वेष्वपि भाष्येषु प्रस्तावनायां सायणस्य नाम स्मर्यते। एतेनैषां भाष्याणामेककर्तृत्वं सिद्धम्। सर्वेषां ग्रन्थानां पुष्पिकायां समानः परिचयः प्रदत्तः ग्रन्थानामारम्भक्रमः सुसदृशः शैली च समाना, वर्णनक्रमस्यापि सादृश्यं चेति सर्वं मिलित्वा सर्वेषामपि भाष्यानामेककर्त्तृत्वं व्यवस्थापयति।

यच्च केचिद्राजकार्यासक्तस्य तस्य ग्रन्थप्रणयनेऽक्षमसमयाऽलाभं हेतुमुपस्थापयन्तस्तद्रचितग्रन्थानपलपन्ति, ते तु दयनीयाः। यदि वर्त्तमानयुगस्य प्रधानमन्त्रिणो ग्रन्थान् लिखितुं समयं लभन्ते, तदा तस्य युगस्य प्रधानमन्त्री समयं न लभेतेति कथनस्यामूलकत्वात्। तस्मात्ते ग्रन्थास्तत्कृता एव। यदि ते ग्रन्था नारायणवाजपेययाजीरचिता अभविष्यंस्तदा तदतिरिक्ता काचन नारायणकृतिरवश्यं प्रथिताऽभविष्यत्। पण्डरिदीक्षितेन यदि ते ग्रन्था रचिता अभविष्यंस्तदा तस्य शैली तेषु ग्रन्थेषु प्राप्स्यत। अतः सिद्धमिदं यत्ते सर्वेऽपि ग्रन्थाः सायणप्रणीता एवेति।

ख्रीष्टस्य षडशीत्यधिकत्रयोदशाब्दे लिखितः एकः शिलालेखो मिलति। तदनुसारेण वैदिकमार्गप्रतिष्ठापक-धर्मब्रह्माध्वन्य-महाराजाधिराजश्रीहरिहरो विद्यारण्यश्रीपादस्वामिनः समक्षे चतुर्वेदभाष्यप्रवर्तकेभ्यो नारायणवाजपेयी-नरहरिसोमयाजी-पण्डरिदीक्षितनामभ्यः ब्राह्मणेभ्योऽग्रहारं दत्वा सम्मानितान् कृतवान्। विद्यारण्यस्वामी तु सायणाचार्यस्यैवापरनाम आसीत्। अनेन प्रमाणितो भवति यदुपरिनिर्दिष्टब्राह्मणैः मिलित्वा भाष्यलेखने सायणस्य साहाय्यं कृतम्। अस्यैव शिलालेखस्याधारे नरसिंहाचार्यः एतान् विदुषः वेदभाष्यनिर्माणे सायणस्य सहायकाः मन्यन्ते। डा० गुणोऽपि भाष्याणामेककर्त्तृत्वे सन्दिहानोऽस्ति। परं सर्वमपीदं भ्रान्तिमूलकम्। नारायणाय नरहरये दीक्षिताय च महाराजहरिहरो बहुधनं दत्तवान्, इति कथनेन तदीयं विद्वत्प्रियत्वमात्रं सिद्धयति न सायणकृतिकर्त्तृत्वम्। कतिपयैरैतिहासिकसाक्ष्यैः च विद्यारण्यश्रीपादापरनामकस्य श्रीसायणाचार्यस्यैव तत्कर्त्तृत्वं सिद्धयतीति वृथैव कल्पनान्तरमिति।

---

# चतुर्थोऽध्यायः

## वेदानां व्याख्यापद्धतिः

### ( १ ) भारतीयपद्धतिः

भाषाविज्ञानपण्डितानां मते आर्यभाषा-सेमेटिकभाषयोश्चेति द्वयोरेव भाषयोर्व्यवहर्त्तारः सभ्यतां संस्कृतिञ्च सृष्टवन्तः । आर्यभाषाऽपि पाश्चात्य-पौरस्त्यभेदेन द्विविधा । अस्मिन्नार्यभाषायाः पाश्चात्यप्रभेदे यूरोपीयदेशस्य प्राचीना आधुनिक्यश्च ग्रीक-लैटिन-फ्रेञ्च-जर्मन-आङ्ग्लप्रभृतयो भाषाः समायान्ति । आर्य-भाषायाः पौरस्त्यप्रभेदे ईरानीभाषा संस्कृतभाषा च समागच्छतः । ईरानीभाषा 'जेन्द-अवेस्ता'-नाम्ना व्यवह्रियते, यत्र पारसीकानां धर्मग्रन्थाः निबद्धाः सन्ति । संस्कृतभाषायां भारतीयानां धर्मग्रन्था निबद्धा इति सुप्रसिद्धमेव ।

कालक्रमेणात्यन्तातीतकाले निर्मितस्य कस्याऽपि ग्रन्थस्याशयस्यावबोधस्त-दुत्तरकालिकसन्ततिक्रमेभ्योऽतीवदुरूहो व्यापारो भवति । यदा प्राक्तमत्वेन सह भावानां गाम्भीर्यं भाषायाश्च काठिन्यमपि समायाति तदा तु समस्येयमतीव विषमा भवति । वेदार्थानुशीलनस्य विषये कथनमिदमक्षरशः समुपयुक्तमस्ति । वेदास्तु प्रथमं तावत् स्वयं कस्यापि दूरालोकगतस्याऽतीतकालस्य कृतयस्सन्ति । तदुपरि भाषायाः वैषम्यं विचारधाराया गाम्भीर्यञ्च तेषामुपरि स्वप्रभुत्वं स्थापि-तम् । फलतः वेदार्थाऽवबोधनं, गवेषणं, मर्मान्वेषणञ्चैका दुर्बोधप्रहेलिकाऽभवत् । तथाऽप्यस्याः प्रहेलिकायाः अर्थावबोधनस्योचितोद्योगः प्राचीनकालादेव समा-याति । यास्कमहोदयस्य निरुक्तेऽस्योद्योगस्य किञ्चिदाभासोऽपि मिलति ।

**'षड्भावविकारा भवन्तीति वार्ष्यायणिः । जायतेऽस्ति विपरिणमते वर्धते-ऽपक्षीयते विनश्यतीति ।'** अस्मिन् प्रसङ्गे ( १।२०।१ ) वर्णनमपि यास्कस्य द्रष्टव्यम् । तस्य कथनानुसारेण प्राचीनऋषयः स्वकीयेन विशिष्टतपोबलेन धर्मस्य साक्षात्कारं कृतवन्तः । किञ्चार्वाचीनाः ऋषयस्तद्वद्धर्मस्य साक्षाद्दर्शनं कर्त्तुं नाशक्नुवन् । अपरकालिकानामृषीणामीदृशी शक्तिहीनतां दृष्ट्वा दयावशेन तैः मन्त्राणामुपदेशः तेभ्यः ग्रन्थतो वाऽर्थत उभयप्रकारेण दत्तः । प्राचीनऋषयस्तु श्रवणं विनैव धर्माणां साक्षाद्दर्शनं कृतवन्तः । अतः धर्मस्य साक्षाद्दर्शनकर्त्तृत्वेन तेषामृषित्वं स्वतः सिद्ध एवाऽऽसीत् । किञ्चार्वाचीनाः ऋषयस्तु ग्रन्थरूपेणार्थरूपेण च श्रवणं कृतवन्तस्तत्पश्चात्ते धर्मदर्शने कृतकार्या अभवन् । अतः श्रवणान्तरदर्शन-योग्यतासम्पादनेनैतेषामृषीणामुपयुक्ताभिधा 'श्रुतर्षि' एवाऽभवत् । **'अवरेभ्यो-ऽवरकालिकेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्यः । तेषां हि श्रुत्वा तत्पश्चादृषित्वमुप-जायते न यथा पूर्वेषां साक्षात्कृद्धर्माणां श्रवणमन्तरेणैव'** ( दुर्गाचार्यः ) । एते

श्रुतर्षय एव लोकहिताय वेदार्थाबबोधनस्योपयोगिनः शिक्षा-निरुक्तादि-वेदाङ्गानां रचनां कृतवन्तः। आधुनिकास्तु दुरूहतायाः दोषारोपणं कृत्वा वेदार्थानां विस्मरणं न कुर्युः, वेदमूलकाचाराद्धर्माद्वा विमुखाः न भवेयुरिति समुन्नतया भावनया प्रेरिता भूत्वा प्राचीना ऋषिगणाः वेदार्थोपदेशाय सन्ततं जागरूकाः आसन्। यास्कमहोदयस्यैते मानवाः शब्दाः दर्शनीयाः सन्ति—**साक्षात्कृद्धर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मेभ्य उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरे बिलमग्रहणाय इमं ग्रन्थं समाम्नाषिषुः वेदञ्च वेदाङ्गानि च।'**

वेदानां गम्भीरार्थबोधने प्रथमोद्योगः किमस्ति? कठिनमस्ति। अधुनोपलब्धाद् यास्कविरचितनिरुक्तादपि प्राचीनतरः निघण्टुग्रन्थोऽस्ति, तत्र वैदिकशब्दानां विस्तृतव्याख्याऽस्ति। निघण्टुशब्दस्याप्यर्थो भवति 'शब्दानां सूची' निघण्टुग्रन्थे संहितायाः कठिनाः सन्दिग्धार्थशब्दाश्चैकत्र समाहरणं कृत्वा तेषामर्थस्य तत्र सूचना मिलति। समुपलब्धग्रन्थेषु निघण्टुरेव वेदार्थस्फुटीकरणस्य प्रथमः प्रयासः परिलक्षितो भवति। प्रातिशाख्यानामपि रचना तत्कालिका किं वा तत्पूर्ववर्तिनी नैवासीत्। ग्रन्थेष्वेतेषु वैदिकभाषायाः विचित्रपदानां, स्वराणां सन्धिपदानाञ्चैव विवेचनमस्ति। साक्षाद्रूपेण पदार्थपर्यालोचनस्यास्मिन् ग्रन्थे नितान्त अभाव एवाऽस्ति। पुराऽनेकानां निरुक्तग्रन्थानां सत्ताऽऽसीत्। येषां सूचनाऽवान्तरग्रन्थेषु यत्र तत्रोद्धरणरूपेण समुपलब्धा भवति, तदपि वेदार्थविवेचनस्य विस्तृतयोजनायाः सर्वाधिकगौरवशालीग्रन्थः यास्कविरचितनिरुक्त एवाऽस्ति। ग्रन्थरत्नस्यास्य परीक्षणेनानेकविधानां ज्ञातव्यविषयाणां पर्याप्तबोधो भवत्यनायासेनेति। ग्रन्थेऽस्मिन् यत्र तत्र यास्कमहोदयेनाग्रायण-औपमन्यव-कात्थक्य-शाकटायन- शाकपूणि-शाकल्यप्रभृतीनां बहूनां निरुक्ताचार्याणां तथैतिहासिकयाज्ञिक-नैदानप्रभृति-व्याख्याकर्तॄणां क्रमशः व्यक्तिगतानां सामूहिकानाञ्च सम्मतया उल्लेखः समादरेण सह कृतः। अनेन ज्ञातो भवति यद्वेदार्थानुशीलनस्य परम्पराऽतीवप्राचीनकालादेव समायाति।

यास्कमहोदयेन स्वनिरुक्ते ( १।१५ ) कस्याऽपि कौत्सनामकस्याचार्यमतस्योल्लेखः कृतः। न जाने, कौत्सनामकः कोऽप्याचार्य आसीन्न वेति। वस्तुतः कौत्सोऽयं कोऽप्यैतिहासिकः पुरुषः आसीदथवा केवलं पूर्वपक्षनिमित्तेन स्थापितः कोऽपि यास्ककल्पनाप्रसूतो व्यक्तिरासीत्। कौत्समहोदयस्य सम्मतिरियमस्ति यन्मन्त्राः निरर्थकाः भवन्ति—**'अनर्थका हि मन्त्राः। तदेतेन उपेक्षितव्यम्। यदि मन्त्रार्थप्रत्याय अनर्थं भवति कौत्सः'** ( नि० १।५ )। कथनस्यास्य सम्पुष्टयर्थं तत्रानेकविधाः युक्तयः प्रदर्शितास्तेन। कौत्समतमेव परवर्तिनः चार्वाक्-बौद्ध-जैन-प्रभृतिवेदनिन्दकाः स्वीकृतवन्तः।

## कौत्समहोदयस्य पूर्वपक्षः

१. मन्त्राणां पदं नियतमस्ति, तथैव शब्दक्रमोऽपि नियतमेवाऽस्ति। सामवेदस्यायं प्रथमो मन्त्रः—**'अग्न आयाहि वीतये'**। एतानि पदानि समानार्थक-

शब्देषु परिवर्तनं कृत्वा—'**वह्निः आगच्छ पानाय**' इत्यपि कथितुं न शक्यते। अत्रानुपूर्वीयक्रमोऽपि नियतमेवाऽस्ति। पूर्वोक्तमन्त्रे व्यवस्थापित—'**अग्न आयाहि**' इत्यत्र पदक्रमं परिवर्त्य व्यतिक्रमेण—'**आयाह्यग्ने**' इत्यपि कथितुं न शक्यते। एतयोः नियतवाचोयुक्त्याः नियतानुपूर्व्याश्च कोऽर्थः? ननु मन्त्राः यदि सार्थकाः भवेयुस्तर्हि तेषां पदानां पदक्रमस्याऽपि परिवर्तन सार्थकवाक्यानां शैली इव सर्वथा न्याय्यं भवेत्। तद्यथा—'**नियतवाचोयुक्तयः, नियतानुपूर्व्याः भवन्ति।**'
(नि० १।५।२)

२. अथ ब्राह्मणवाक्यैः मन्त्राणां विनियोगः विशिष्टानुष्ठानेषु भवति। यथा—(शु० य० १।२२) '**उरूप्रथस्व**' अस्य मन्त्रस्य विनियोगः प्रथनकर्मणि, विस्तारकार्ये च शतपथब्राह्मणः करोति। यदि मन्त्रेष्वर्थद्योतनस्य क्षमता भवति तर्हि स्वतःसिद्धार्थस्य मन्त्रस्य ब्राह्मणग्रन्थेन विनियोगदर्शनस्यापेक्षा कथं भवति? तद्यथा निरुक्ते—"**अथापि ब्राह्मणेन रूपसम्पन्नाः विधीयन्ते। 'उरूप्रथस्व' इति प्रथयति। 'प्रोहाणि' इति प्रोहति**" (नि० १।५।१)।

३. मन्त्राणामर्थोऽनुपपन्नो भवति, अर्थादुपपत्त्या युक्त्या वा सिद्धोऽयं भवितुं न शक्यते। यजमानो वदति—'**औषधे! त्रायस्व एनम्**' अर्थात् हे औषधे! त्वमस्य वृक्षस्य रक्षां कुरु। औषधिस्तु स्वयमेव निर्जीवो भवति। या स्वात्मानमपि रक्षितुमसमर्थाऽस्ति सा वृक्षस्य रक्षाकर्त्तुं कथं शक्यते? यजमानः स्वयं परशुना वृक्षस्योपरि प्रहारं करोति कथयति च—हे परशु! त्वमेनं वृक्षं मा छिन्धि—'**अथापि अनुपपन्नार्थाः भवन्ति। 'ओषधे त्रायस्व एनम्। स्वधिते मा एनं हिंसीः, इत्याह हिंसन्**' (नि० १।५।१)। यजमानः स्वयं यस्योपरि प्रहारं करोति तस्यैव रक्षार्थं प्रार्थनाऽपि करोति। अतोऽनुपपन्नार्थाः मन्त्राः भवन्ति।

४. वैदिकमन्त्रेषु परस्परं विरोधोऽपि दृग्गोचरो भवति। रुद्रविषये द्रष्टव्योऽयं मन्त्रः—'**एक एव रुद्रोऽवतस्थे न द्वितीयः**' (तैत्ति० सं० १।८।६।१)। रुद्रः एक एवाऽस्ति नापरो वेति। अत्रैव द्वितीयो मन्त्रस्तस्याऽनेकतायारुद्घोषं करोति। यथा—'**असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्**' (तैत्ति० सं० ४।५।११।५)। अर्थादस्यां धरायां संख्यातीताः रुद्राः सन्ति। अनेन प्रकारेणैकताऽनेकतयोरायासे रुद्रस्य विषये कस्याऽपि तथ्यस्य निर्णयो भवितुं शक्यते? **(अथापि विप्रतिषिद्धार्थाः मन्त्राः भवन्ति)**

५. वैदिकमन्त्रेष्वर्थज्ञपुरुषाणां कार्यविशेषस्यानुष्ठानाय सम्प्रेषणं भवति। यथाहोतारं कथयति—'**अग्नये समिध्यमानाय अनुब्रूहि**' (श० ब्रा० १।३।२।३)। अर्थात् प्रज्ज्वलिताग्नयेऽनुब्रूहि। होता स्वकर्त्तव्यक्रियया स्वयं परिचितो भवत्येव एवं सति तदर्थे सम्प्रेषणस्येयमुक्तिः निरर्थकेति।

६. मन्त्रेष्वेक एव पदार्थोऽनेकरूपेणाभिव्यक्तोऽस्ति। यथा—अदितिरेव समस्तजगदस्ति, अदितिरेवाऽकाशोऽस्ति, अदितिरेवान्तरिक्षोऽस्ति—**(अदिति-**

द्यौरदितिरन्तरिक्षं''''ऋ० सं० १।८९।१०)। **निरुक्ते यथा—अथाऽपि आहुः—अदितिः सर्वमिति—'अदितिर्द्यौरदितिरन्तरिक्षम्' इति** (१।५।१)। शिशवोऽपि जानन्ति यदाकाशेन सह पृथिव्याः सम्मेलनमसम्भवमस्ति तथापि अदित्या सह एतयोरुभयोः समानताप्रदर्शनं कियतांशेनोपयुक्तं भवति ?

७. मन्त्राणां पदस्याप्यर्थः स्पष्टरूपेण प्रतीतो न भवति—**अविस्पष्टार्थाः मन्त्राः**। यथा—**अम्यक्** (ऋ० १।१६९।३), **यादृश्मिन्** (ऋ० ५।४४।८), **जारयायि** (ऋ० ६।१२।४), **काणुका** (ऋ० ८।७७।४), **जर्भरी, तुर्फरी** (ऋ० १०।१०६।६) इत्यादिपदानामर्थः स्पष्टरूपेण प्रतीतो न भवति।

पूर्वपक्षोऽयं कौत्समहोदयस्य। यास्केन प्रबलयुक्त्याऽस्य पूर्वपक्षस्य खण्डनं कृतम्। अस्मिन्विषये यास्कस्य प्रमुखसिद्धान्तोऽस्ति—सर्वे शब्दाः अर्थवन्तः भवन्ति। लोकभाषायामपि सर्वत्रायं नियमोऽस्ति यद् वैदिकमन्त्राणामपि शब्दाः लोकभाषाशब्दान्न भिन्ना भवन्ति। सुतरां लौकिकशब्दवदेव वैदिकशब्दानामप्यर्थो भवितव्यम् (**अर्थवन्तः शब्दसामान्यात्**)। तदनन्तरं कौत्सकृतपूर्वपक्षस्य खण्डनं कृतं यास्कमहोदयेनेति।

## यास्कमहोदयस्य सिद्धान्तपक्षः

१. लौकिकभाषायामपि पदानां नियतप्रयोगस्तथा पदक्रमस्य नियतरूपः दृग्गोचरो भवत्येव। यथा—**'इन्द्राग्नी' एवं 'पितापुत्रौ'**। एतयोः प्रयोगयोरपि न तु क्रमभङ्गं कर्त्तुं शक्यते न च शब्दपरिवर्त्तनमेव भवितुमर्हति। एवं नियमाभावेऽपि एतेषां शब्दानां सार्थकता स्वतःसिद्धा एवेति।

२. ब्राह्मणग्रन्थेषु मन्त्राणां विनियोगविधानमुदितानुवादमात्रमेवाऽस्ति, अर्थात् मन्त्रेषु यस्यार्थस्य प्रतिपादनमभीष्टं भवति तस्यैवार्थस्यानुवादो ब्राह्मणग्रन्थेषु वर्त्तते।

३. वैदिकमन्त्राणामर्थोऽनुपपन्नो नास्ति। परशुप्रहारकाले याऽहिंसायाश्चर्चा वर्त्तते साऽपि वेदविहितैवेति। परशुना वृक्षच्छेदनमापाततः हिंसाद्योतकमवश्यमस्ति, किञ्च वेदेनैव ज्ञातो भवति यत्परशुच्छेदनं हिंसाद्योतकन्न भवति। हिंसायाः अहिंसायाश्च सूक्ष्मविवेचनस्यापि ज्ञानं वेदेनैव भवति। यस्मिन् कर्मणि पुरुषः वेदेन नियुक्तो भवति, तत्कर्म अहिंसात्मको भवति तथा यस्मिन् कर्मणि वेदेन पुरुषो निषिद्धो भवति तदेव हिंसात्मको भवति। औषधि-पशु-मृग-वनस्पति-प्रभृतीनां यज्ञे उपयोगो भवति। तेन ते परमोत्कर्षं प्राप्नुवन्ति। अतः यज्ञे एतेषां विधानमाभ्युदयिकं भवति न तु हिंसात्मकमिति। अनेन प्रकारेण कस्यापि वृक्षस्य यज्ञार्थं विधिपूर्वकं शाखाच्छेदनमनुग्रहमेवाऽस्ति न तु हिंसेति। **इयमहिंसा इयं हिंसा इत्यागमादेतत्, प्रतीयते। प्रतिविशिष्टश्चायमेव वैदिक आम्नाय आगमः। एतत्पूर्वकत्वात् अन्येषामागमानाम्। + + + अनुगृह्णाति यज्ञविनियोगार्थविधानतः छिन्दन्** (**दुर्गाचार्यः, निरुक्तस्य टीका १।१६।६**)।

४. मन्त्रेष्वेवं रुद्रस्यैकत्वमनेकत्वस्योल्लेखेऽपि पारस्परिकविरोधो नास्ति यतो हि देवा महिमाशालिनो भवन्ति। एकत्वेऽपि तेऽनेकविभूतिषु वर्त्तमानाः भवन्ति। इन्द्रमप्यजातशत्रुस्तथा शत्रु-विजेताकथने न कोऽपि दोषो भवति। वर्णनमिदं रूपकाश्रितकल्पनायामुपरि अवलम्बितमस्ति। लोकेऽपि शत्रुसम्पन्नत्वेऽपि राजा शत्रुहीनः कथ्यते।

५. यज्ञानुष्ठाने परिचितमपि प्रदत्तसम्प्रेषणाव्यर्थं वक्तुं न शक्यते। यतो विशिष्टातिथेः समागमनोपरि मधुपर्कदानं सर्वविदितमस्ति; तथाऽपि लोकव्यवहारेऽपि विधिज्ञपुरुषात् वारत्रयं मधुपर्कस्य याचना भवत्येव। तद्वदेव ब्राह्मणग्रन्थस्याऽपि सम्प्रेषणा नास्ति निरर्थकेति।

६. अदितेः सर्वात्मकत्वेन कथनमपि तस्य महत्ता प्रदर्शने एव निहिताऽस्ति। भक्तिभावेन प्रेरितो भूत्वा कश्चिद्भक्तस्यैव कथनमिदमस्ति।

७. मन्त्राणामर्थः यदि स्पष्टरूपेण ज्ञातो न भवति तदा तस्य ज्ञानार्थं यत्नः कर्त्तव्यः। निरुक्तग्रन्थेषु शब्दानां धातुभिः सह सम्बन्धं स्थापयित्वाऽर्थविधानस्य समुचिता व्यवस्था कृतेति। स्वदोषं परशिरस्याक्षेपणं कियतांशेन युक्तितरं भवति। **'नैष स्थाणोः अपराधः यदेनम् अन्धो न पश्यति। पुरुषापराधः स भवति। यथा जानपदीषु विद्यातः पुरुषविशेषो भवति। पारोवर्यवित्सु तु खलु वेदितृषु भूयो विद्यः प्रशस्यो भवति** (नि० १।५।१)। अनेन रूपेणार्थविवेचकस्य ग्रन्थस्याभ्यासः कर्त्तव्यः। उपयोगिनां ग्रन्थानामभ्यासं विना मन्त्राणामुपरि अनर्थकस्य दोषारोपणं नोचितमिति। यथा—'अम्यक्'-शब्दस्यार्थो भवति 'प्राप्नोति', 'यादृश्मिन'-शब्दस्यार्थो भवति 'यादृशः', 'जर्भरी' इत्यस्यार्थो भवति 'भर्त्तारौ'। तदैव 'तुर्फरी'-शब्दस्यार्थो भवति 'हन्तारौ'। अयं प्रसङ्गः मीमांसासूत्रेषु ( १–२, ३१–५३ ) द्रष्टव्यः।

## ( २ ) पाश्चात्यपद्धतिः

वेदार्थानुसन्धानविषयेऽद्यत्वे प्रधानतया त्रीणि मतानि सन्ति, येषु प्रथमं पाश्चात्यवैदिकार्थानुसन्धित्सूनां मतमस्ति। अन्ये च द्वे मते भारतीयविदुषामेव स्तः। पाश्चात्यपण्डितानां मतानुसारेण वेदार्थानुशीलनाय तुलनात्मकभाषाशास्त्रस्य ह्यैतिहासिकग्रन्थस्य चाध्ययनस्यावश्यकता तु अस्त्येव। भारतेतरदेशानामाचारव्यवहाराणामध्ययनस्याप्यपेक्षा तद्वदेवास्ति। यतः एतयोरुभयोः पारस्परिकतुलनैवास्माकं वैदिकधर्मस्य मूलस्वरूपस्य परिचयं दातुं शक्यते। अनेनैव कारणेनेयं पद्धतिः ( Historical method ) इति नाम्ना ख्याताऽस्ति। भारतीयपरम्पराम्प्रति वैदेशिकविद्वांसः उदासीना एव सन्ति। अस्मिन् विषये एतेषां विदुषां त्वेतत्पर्यन्तं कथनमस्ति यत् भारतीयपरम्परायाः पक्षधरत्वेन तेषां वेदस्य मूलार्थपर्यन्तमभिगमनमेव न भवति। अतः ब्राह्मणटीकाकर्तॄणामुपरि अन्धश्रद्धायाराक्षेपः कुर्वन्ति आंग्लविद्वांसः। राथप्रभृतिपाश्चात्यालोचकाः भारतीयपण्डि-

तान् वेदार्थानुसन्धाने सर्वथा अयोग्या एव मन्यन्ते । मन्यन्ते च तान् पाश्चात्य-पण्डितान्, योग्याः ये भारतीयपरम्परातः पूर्णतोऽनभिज्ञे सत्यपि भाषाशास्त्र-मानवशास्त्रप्रभृतीनां विषयानां ज्ञातारः सन्ति ।

अस्यां पद्धतौ सन्ति केचिद् गुणाः किन्तु बहुविधाः अवगुणा अपि सन्ति । वेदानामाविर्भावोऽस्मिन्नार्यावर्त्तेऽभवत् । वेदेषु निहितबीजकानि दृष्ट्वैव कालान्तरे स्मृत्यादिग्रन्थानां प्रणयनमभवत् । वेदाः भारतीयानां स्वकीया समृद्धिरस्ति । अस्माकमृषयः, आत्मज्ञानिनो विद्वांसः, तत्त्वद्रष्टारो महर्षयश्च वेदानां दर्शनं येन रूपेण कृतवन्तस्तेनैव रूपेण तेषामनुशीलनमपि अस्माकं कर्त्तव्यमस्ति । तेनैव रूपेण तेषां गूढार्थावबोधनमेव वेदानामर्थस्य वास्तविकमनुशीलनं कथितुं शक्यते । वेदाद्भारतीयतां निस्सार्य भारतेतरधर्मेण विज्ञानेन च साहाय्यं गृहीत्वा तदर्थावबोधनस्य दुःसाहसं मूले कुठाराघात इव भवति नान्यत् । अनेन प्रकारेण वेदानामर्थं कृत्वा वैदिकाचार्याणां विषयेऽनर्गलप्रलापं कथमपि समुचितं न भवेत् । उदाहरणार्थमेक एव शब्दस्यात्र परीक्षां वयं करिष्यामः ।

वैदिकयुगेऽस्मिन्देशे लिङ्गपूजाऽसीन्न वेति विषये एते पाश्चात्यपण्डिताः येन शब्दबलेन स्वकीयं सिद्धान्तं स्थापितवन्तस्तत्तु महदुपहसनीयमेव । 'शिश्नदेवः' इति पदस्य प्रयोगः ऋग्वेदे ( ७।२१।५, १०।९९।३ ) द्वयोः स्थानयोः मिलति । पाश्चात्यविद्वांसः शब्दस्यास्योत्तरभागमभिधाप्रधानं मत्वा स्वसिद्धान्तं संस्थाप्य कथयन्ति यत् वैदिककालेऽप्यस्मिन् देशे लिङ्गपूजायाः प्रचलनमासीत् । किञ्चास्य शब्दस्य वास्तविकार्थोऽयं नास्ति । वस्तुतः देवशब्दोऽत्रालङ्कारिकार्थे 'देव इव' इति व्यवह्रितोऽभवत् । वेदेऽन्यत्र प्रयुक्ताः पितृदेव-मातृदेव-आचार्य-देवप्रभृतयः शब्दास्तथैव सन्ति । अत्र देवशब्दस्यार्थः 'पूजकः' इत्येव भवति नान्यदिति । तैत्तिरीयोपनिषदि (१।१) प्रयुक्तानाम्—'मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव' इत्यादीनां शब्दानामर्थो भवति—मातरं देवता इव पूजय, पितरं देवता इव पूजय, आचार्यं देवता इव पूजय । एतेषां शब्दानां व्याख्यानावसरे आचार्यशङ्करो वदति—'देवतावत् उपास्याः एते' इत्यर्थः । श्रद्धादेवशब्दोऽपि शिश्नदेवाद्भिन्नो नास्ति । अतः उभयोः स्थलयोः 'देव'-शब्दस्य प्रयोगः आलङ्कारिक एव भवितव्यम् । अस्यां स्थितौ शिश्नदेवस्याप्यर्थो भवति—शिश्नः ( लिङ्गः ) देवता अस्ति अस्येति, अर्थात् कामक्रीडायां निरतः पुरुषः । अतः यास्केन सायणेन चास्य शब्दस्यार्थः 'अब्रह्मचर्यं' एवाऽस्ति । अतोऽत्र भारतीयपण्डिताः संस्कृतभाषायां व्यवहारानुकूलः परम्परागतार्थः 'अब्रह्मचर्यः' एव मन्यन्ते । किञ्च पाश्चात्यविद्वांसोऽत्र प्रयोगमूलकस्य परम्परागतार्थस्योपेक्षां कृत्वा निर्मूलाऽप्रामाणिकसिद्धान्तस्योद्भावनां कृतवन्तः । अनेनैव प्रकारेण पारस्करगृह्यसूत्रस्य 'कूर्मपित्तमङ्के निधाय जपति' वाक्येऽस्मिन् प्रयुक्तस्य कूर्मपित्त-शब्दस्य परम्परागतार्थस्य जलपूर्णघटस्योपहासं कृत्वा जर्मनविदुषा ओल्डनवर्ग-महोदयेन 'कच्छपपित्तं क्रोडे निधाय' इत्यर्थः कृतः ।

अस्माकं वैदिकमन्त्रेषु पाठभेदस्य लेशमात्रमपि सम्भावनं नास्ति । यतो हि पदपाठ-क्रमपाठ-जटापाठ-घनपाठप्रभृतिपाठानां कल्पनां कृत्वा मन्त्राणां प्रत्येक-पदस्य स्वरूपं स्थापयन्ति भारतीयविद्वांसस्तत्र वर्णभेदस्य का कथाऽस्ति ? सूक्ष्म-स्वरेऽपि परिवर्त्तनस्य तत्र स्थानं नास्ति । अस्यां स्थितौ पाठभेदस्य दुरारोह-कल्पना नितान्तानुपयुक्ताः भवन्ति ।

वेदानां परमोपादेयत्वादतिशयतममहत्त्वशालित्वञ्च महर्षयस्तान् रक्षितुमपि पूर्णमुपायश्चक्रुः । वेदा एतावद्दीर्घकालान्तरमपि लोके समवाप्ताः सन्तीत्यत्र कारणमेष महर्षिकृतः प्रयत्न एवाऽस्ति । महर्षयो हि वेदरक्षार्थमष्टविकृतीनां व्यवस्थां विदधुः । यस्य चर्चा विशदेन कृता पूर्वमेव । ता विकृतयोऽधःस्थितेन श्लोकेन अभिव्यक्तीक्रियन्ते—

**'जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ।**
**अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ॥'**

प्रक्षेपच्युत्यवसादादिविकारेभ्यः परित्रातुं श्रुतिं पद-क्रम-घन-जटादिपाठाः आविष्कृताः । एषां सद्भावेन न श्रुतिष्वद्यपर्यन्तमणुमात्रमपि दोषलेशः प्रविष्टो भवितुमशकत् । प्रातिशाख्यग्रन्था अपि वेदपाठस्य रक्षणार्थं विरचिता अभूवन् । तथापि पाश्चात्य-पण्डिताः स्वकल्पितार्थसिद्धये बहुविधविचित्राश्रुतपूर्वकाविचा-रितरमणीयपाठानां स्वेच्छानुकूलोद्भावनाः कृतवन्तः । 'वैदिकमीटराख्यस्य सुवि-ख्यातग्रन्थस्य रचयिता डा० अर्नाल्डमहोदयेन स्वग्रन्थे लिखितम्—वैदिक-संहितायां यत्र यत्र 'पावक' इति शब्दस्य प्रयोगो विद्यते तत्र तत्र वैदिकच्छन्द-संरक्षणदृष्ट्या 'पवाकः' इति पाठो भवितव्यम् । किञ्च प्राचीनवैदिकमन्त्रोच्चा-रणस्य यथार्थस्वरूपवेत्तारः अस्माकं भारतीयवैदिकाः अस्मात् काल्पनिकशब्द-परिवर्त्तनादनभिज्ञा एव सन्ति । कस्यत्काल्पनिकार्थस्य सिद्धये परिवर्त्तनमिदम-शोभनीयमेवेति ।

## ( ३ ) आध्यात्मिकपद्धतिः

स्वामीदयानन्दसरस्वतीमहोदयेन कतिपयानां विशिष्टानां वार्त्तानां स्वभाष्ये चर्चा कृताऽस्ति । वेदानामनादित्वस्य सिद्धान्तं प्रतिपादितमनेन विदुषा स्व-भाष्ये । अस्य महापुरुषस्य विचारे वेदेषु लौकिकेतिहासस्य सर्वथाऽभावोऽस्ति । वेदेषु प्रयुक्ताः सर्वे शब्दाः यौगिकाः योगरूढाश्च सन्ति न रूढा इति । स्वामि-नोऽर्थनिरूपणपद्धत्याः सिद्धान्तस्याधारशिलेयमेवाऽस्ति । इन्द्राग्निवरुणादि ये देवतावाचकाः शब्दाः सन्ति ते सर्वे यौगिकत्वेनैकस्यैव परमात्मनः पर्याय-वाचका वर्त्तन्ते । स्वामिमहोदयस्त्वेवंविधायाः आध्यात्मिक्याः शैल्याः स्वीकर्ता-ऽऽसीत् । अंशतः स्वामिनोऽयं सिद्धान्तः समुचित एव प्रतिभाति । नियुक्तकर्ता तु स्पष्टशब्देषु अकथयत्—यावन्तो देवाः सन्ति ते सर्वे एक एव महतः देवस्य परमेश्वरस्य विशिष्टशक्त्याः प्रतीकस्वरूपाः सन्ति । **'महाभाग्यात् देवतायाः एक आत्मा बहुधा स्तूयते । एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति'** (निरुक्तः ७।४)।

ऋग्वेदस्य तु स्पष्टप्रतिपादनमस्ति—'**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः**' ( ऋ० सं० १।१६४।४६ )। अतोऽग्निमैश्वर्यशालिनः परमेश्वरस्यैव रूपमस्तीति स्वीकरणन्तु सर्वथोचितमेव। अत्र न कोऽपि विरोधः केषांश्चिदपि प्रतीयते, किञ्च यदाऽस्यां शैल्याम् अग्न्यादिदेवानां प्रत्याख्यानं भवति तदा तु विरोधस्याप्युदयो भवत्येव।

वेदेषु देवतानां स्थानं महत्त्वावहम्! मानवः प्रत्यहं प्रकृतिदेव्याः नानालीलाः पश्यति। वैदिककालस्य महर्षयस्तस्यास्तत्तल्लीलाः अवधारयितुं विभिन्ना देवताः अकल्पयन्। महर्षीणां विश्वासोऽयं यदासां देवतानुकम्पयैव सर्वाणि कार्याणि सम्पद्यन्ते। जगति घटचमानानां सर्वासामपि घटनानां कारणभूताः देवता एव। यास्को वदति यद्देवतासु काश्चन पृथिवीस्थानीयाः, काश्चन अन्तरिक्षस्थानीयाः, काश्चन द्युस्थानीयाः सन्ति। पृथिवीस्थानीयदेवतासु अग्निदेवता, अन्तरिक्षस्थानीयासु इन्द्रदेवता, द्युस्थानीयासु सूर्यविष्णुप्रभृतिदेवताः सन्ति महीयस्यः। ऋग्वेदे हि देवताः प्राणशक्तिशालित्वात् 'असुर' इति प्रोक्ताः। प्रतीच्यानां प्रधीनां देवताः उद्दिश्य विचारोऽयं यद् भौतिकघटनोपपत्त्यै प्राकृतिकानि दृश्यानि देवतात्वेन कल्पितानि। ऋग्वेदस्यादिमे युगे बहुदेवतानां सत्ता अभ्युपेता बभूव। गच्छता कालेन सति मानसिके विकासे देवतानां तासामेक एवाधिपतिः कल्पितोऽभूत्। पुरुषसूक्तं सर्वेश्वरवादं स्पष्टतः समुपस्थापयत् दृश्यते। परं पश्चिमीयानामेष देवताविषयको विचारो नावितथः। देवतावादो न भौतिक एतावान्।

यास्केन निरुक्ते दैवतकाण्डे देवतास्वरूपविवेचनं हि अतिशयं विशदतयाऽनुष्ठितम्। जगतो मूले एकैव महत्ताशालिनी महाशक्तिः शोभते। सा निरतिशयैश्वर्यशालिनीत्वात् 'ईश्वर' इति गीयते। सैव शक्तिर्बहुभिः प्रकारैः स्तुतेति। ऐतरेयारण्यकञ्च 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' इत्येतेन वचनेनोक्तमेव विचारं परिपोषयति।

देवताः प्रायेण त्रीणि रूपाणि बिभ्रति—आधिभौतिकम्, आधिदैविकम्, आध्यात्मिकञ्च। इन्द्रियगम्यं रूपमाधिभौतिकं भवति, आधिदैविकमाध्यात्मिकञ्च स्त इन्द्रियागम्ये। 'विष्णोर्नु कं वीर्याणि······।' 'प्र विष्णवे शूषमेतु।' 'मन्यगिरिरिक्षत उरुगायाय वृष्णे······।' इत्यादिमन्त्रैः वेदो विष्णुदेवताया उक्तानि त्रीणि अपि रूपाणि प्रदर्शयति।

मानवा देवतानां तां तां शक्तिं साध्वभिज्ञाय तद्द्वारेणात्मानमुपकुर्युरित्येतदर्थं श्रुतिमातरस्तासां रूपाण्यस्मत्पुरः समुपस्थापयन्ति।

मन्त्रैर्हि यदा देवतानां न केवलमेकमपि तु एकस्मादधिकानि रूपाणि उद्भावितानि नीतानि वीक्ष्यन्ते तदा प्रतीच्यानां तस्मिन् वचसि कथं विश्वासो विहितो भवेत्, यत्र देवताः भौतिकदृश्यानामधिष्ठातृत्वेन प्रतीकत्वेन वा कल्प्यन्ते? वेदवर्णितेषु प्रमुखेषु विषयेषु देवतास्तुतिरप्येकतमः प्रमुखो विषयः।

अनेन विचारेणाग्न्यादिशब्दाः न केवलं परमपदपरमेश्वरस्यैव वाचकाः, अपितु तत्तद्विशिष्टदेवतापदवाचकाः सन्ति । अग्निशब्दोऽत्र भौतिकाग्निपदस्य बोधको भवति; यस्याग्नेः कृपयाऽस्य चराचरस्य सकलव्यवहाराः सिद्ध्यन्ति । शब्दोऽयं तस्य देवस्याऽपि सूचकोऽस्ति, योऽस्य भौतिकाग्नेरप्यधिष्ठाताऽस्ति । सहैवाऽसौ जगतोऽस्य नियामकस्य परमात्मनोऽर्थमपि प्रकटयति । अग्निदेवस्यैतानि त्रीणि रूपाण्यपि समुचितान्येव । अग्निमन्त्रस्य सूक्ष्मपर्यालोचनेन सिद्धो भवति यदयमग्निमन्त्रः उपरि वर्णिताग्निदेवस्य त्रीण्यपि रूपाणि समभावेन लक्षयति । अतोऽग्निदेवस्य पूर्ववर्णितं रूपद्वयं समुपेक्ष्याग्निपदं परमपदवाचकमेवास्तीति कथनं प्राचीनपरम्परायाः सर्वथा विरुद्ध एवाऽस्तीति । अनेनैव कारणेनास्याः शैल्याः सर्वथानुसरणं सर्वमान्यो न भवेदिति ।

स्वामी जीवमहोदयः ब्राह्मणग्रन्थान् संहिताग्रन्थमिवानादिः प्रामाणिकांश्च नामन्यत् । श्रुतेरन्तर्गते ब्राह्मणग्रन्थानां गणना तस्याभीप्सितो नास्ति । तर्हि संहितायाः स्वरूपदृष्टया स्वामिनः सिद्धान्तोऽयमयथार्थ एवाऽस्ति । तैत्तिरीयसंहितायां मन्त्रैः सह ब्राह्मणांशस्यापि गद्यात्मकस्वरूपः समुपलब्धो भवति । एवं सति तैत्तिरीयसंहितायाः भागमेकं श्रुतिरपरभागश्चाश्रुतिरेवंविधकथनं कीदृग्भवति ? स्वामिनोऽनुयायिनां वैदिकपण्डितानां सम्मतौ वेदेष्वाधुनिकभौतिकविज्ञानस्य सर्वेषामाविष्कृतानां पदार्थानां सत्ता स्वीकृताऽस्ति । तर्हि किं वेदस्येयमेव महिमा वर्त्तते यदेतेषु वेदेषु विज्ञानाविष्कृतसकलवस्तूनां वर्णनं समुपलब्धो भवति ? वेदास्त्वाध्यात्मिकज्ञानस्य निधय एव सन्ति । भौतिकविज्ञानाविष्कृतपदार्थानां वर्णनं नास्ति तेषां प्रयोजनम् । सत्येवं यौगिकप्रक्रियानुसारेणैतेषां भौतिकविज्ञानाविष्कृतपदार्थानां वेदेष्वस्तित्वस्वीकरणं नोपयुक्तं प्रतिभाति । अतोऽस्य स्वामिनः पद्धतिरियं सर्वांशतः स्वीकार्या भवितुं नार्हतीति ।

वैदिकमन्त्राणामर्थः नितान्तः गूढोऽस्ति ; ऋषिप्रदर्शितमार्गानुसारेणाऽऽर्षदृष्टया चैव मन्त्रार्थानवबोधितव्यः । मन्त्राणां शब्देषु सत्यपि व्याकरणजन्यसरलता, तेषामभिधेयार्थस्यान्वेषणं नितान्तं दुरूहमस्ति । गूढार्थप्रतीत्यर्थमस्य मन्त्रस्य रहस्यवादमिदं द्रष्टव्यम्—

**'चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य ।**
**त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्याम् आविवेश ।।'**

—ऋ० ४।५८।३

अस्य मन्त्रस्य सामान्योऽर्थः—अस्य चत्वारि शृङ्गानि, त्रीणि पदानि, द्वे शिरसी, सप्त हस्ताश्च सन्ति । प्रकारत्रयेण बद्धोऽयं वृषभस्तारस्वरेण कोलाहलं करोति । महादेवो मर्त्यलोके प्रवेशमलभत् । किञ्चास्त्यत्र जिज्ञासाविचित्रवेषधारकः कोऽयं महादेववृषभः ? यास्केनास्य मन्त्रार्थस्य रहस्योद्घाटनं कृतम्—केषाञ्चिन्मते महादेववृषभोऽयं यज्ञोऽस्ति । चत्वारो वेदाऽस्य चत्वारि शृङ्गानि सन्ति, त्रीणि पदानि तु त्रिकालिकसवनकर्माण्येवाऽस्ति, द्वे शिरसी तु प्रायणीय-

उदयनीय-नाम्नी द्वे हविषी स्तः। सप्तहस्तास्तु सप्तछन्दांस्येव सन्ति, यज्ञोऽयं मन्त्र-ब्राह्मण-कल्पैस्त्रिधा बद्धोऽस्ति। अनेन प्रकारेण यज्ञरूपेण महादेवो यजनार्थं मरणधर्मिषु प्रविष्टोऽभवत्। अन्ये तु महादेववृषभोऽयं सूर्योऽस्ति, यस्य चत्वारो दिश एव चत्वारि शृङ्गाणि सन्ति, त्रयो वेदाः पादत्रयमस्ति अहोरात्रश्च द्वे शिरसी स्तः, सप्तकिरणानि च सन्ति सप्तहस्ताः। सूर्यस्तु पृथिव्याकाशान्तरिक्षैः सम्बद्धोऽस्ति, किं वा ग्रीष्म-वर्षा-शिशिर-ऋतूनामुत्पादकोऽयमस्ति सूर्यः, अतोऽसावस्मिन्मन्त्रे 'त्रिधा बद्धः' इति कथ्यते ( द्रष्ट० नि० १३।३ )। पतञ्जलिना पस्पशाह्निकेऽस्य मन्त्रस्य शाब्दिकव्याख्या समुपस्थापिता। तन्मते तु महादेवोऽयं शब्दोऽस्ति, यतोऽस्य चत्वारि शृङ्गाणि चतुर्विधशब्दाः ( नाम-आख्यात-उपसर्ग-निपाताः ) सन्ति, त्रीणि पदान्यस्य भूत-वर्त्तमान-भविष्यत्त्रिकालमेवाऽस्ति, द्विविधा भाषा नित्या कार्या चेति द्वे शिरसी सप्तहस्तास्तु प्रथमादि सप्तविभक्तयस्सन्ति। शब्दस्योच्चारणन्तु हृत्कण्ठमुखत्रयमाध्यमेन भवति, अतोऽयं शब्दस्त्रिधा बद्धोऽस्ति। शब्दगतार्थस्य वृष्टिकरणेन शब्दोऽयं वृषभपदवाच्यो भवति। राजशेखरेणास्य मन्त्रस्य व्याख्या स्वकीयकाव्यमीमांसायां साहित्यशास्त्रदृष्टयैव कृतेति। सायणभाष्ये एतदतिरिक्तार्थस्यैव वर्णनमस्ति। उपरि वर्णितेष्वर्थेषु प्रत्येकार्थः परम्परित एवाऽस्ति, अतः सर्वे तेऽर्थाः स्व-स्वदृष्टया समादरणीयाः माननीयाश्च सन्ति। मन्त्राणां गूढार्थस्येयमेव महिमा भवति। तेषां पवित्रमन्त्राणामर्थः विविधरूपेण कर्तुं शक्यते। यास्केनास्मिन्प्रसङ्गे षडाधिकमतानां चर्चा कृतेति। अस्यां चर्चायामैतिहासिक-वैयाकरण-परिव्राजक-याज्ञिकादयः प्रमुखाः सन्ति। एतदतिरिक्तः विविधग्रन्थानां समर्थकाचार्याणां मतस्यापि यथास्थाने उल्लेखो मिलति। परम्परामूलकानामेतेषामाचार्याणां मतस्योपहासं कर्त्तुं न शक्यते कोऽपि सहसेति।

## परम्परायाः महत्त्वम्

यास्केन स्वयं परम्परायाः प्रशंसा कृतेति, तत् ज्ञातारम् पारोवर्यविच्च कथितम्।

**'अयं मन्त्रार्थचिन्ताभ्यूहोऽपि श्रुतितोऽपि तर्कतः।'** (नि० १३।१२)

अर्थात् मन्त्रार्थस्य विचारः परम्परागतार्थस्य श्रवणेन तर्केण वा निरूपितो भवति। यतः—

**'न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव निर्वक्तव्याः।'**

मन्त्राणां व्याख्या पृथक्त्वेन भवितुं नार्हति, अपितु प्रकरणानुसारेणैव भवितव्या।

**'न ह्येषु प्रत्यक्षमस्ति अनृषेरतपसो वा।'**

केन कर्त्तुं शक्यते वेदानामर्थः? विषयेऽस्मिन् यास्कस्य कथनमस्ति—मानवाः न तु ऋषयो भवन्ति, न तपस्विनस्ते तु मन्त्रार्थस्य साक्षात्कारं कर्त्तुं न शक्नुवन्ति।

**'पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति इत्युक्तं पुरस्तात् ।'**

निरुक्तकर्त्तुः कथनमिदमस्ति ( नि० १।१६ ) परम्परागतज्ञानप्राप्तकर्त्तृषु तेऽधिकश्रेष्ठजनाः भवन्ति येऽधिकाध्ययनं कृतवन्तः । वेदार्थज्ञानाय मीमांसा-निरुक्त-व्याकरणादिशास्त्राणां ज्ञानमतीवावश्यकं वर्त्तते ।

यास्केनाऽस्मिन् विषयेऽष्टाधिकमतानां चर्चा कृताऽस्ति । तेन मन्त्राणां व्याख्यानावसरे यत्र तत्र वैयाकरण-नैदान-परिव्राजक-ऐतिहासिकादीनां मतस्योल्लेखः कृतः । तेषां मतानां प्रचुरप्रयोगः ब्राह्मणग्रन्थेष्वप्युपलब्धो भवति । यथा 'अश्विनौ' इति पदस्य विवेचने यास्केनानेकविधानां मतानामुल्लेखः कृतः । कतिपयानामालोचकानां मते उभावश्विनौ स्वर्गःपृथिव्यौ स्तः । अस्य मतस्योल्लेखः शतपथब्राह्मणेऽपि ( ४।१।५ ) उपलब्धो भवति । यास्केनाप्यस्मिन्नेव स्थाने स्वमतमपि स्थापितम् । मतस्यास्य प्रामाणिकताऽपि स्पष्टा एवेति ।

## स्मृतिग्रन्थानां महत्त्वम्

कालक्रमेण यदा वेदार्थावबोधनं सर्वसाधारणेभ्योऽतिदुरूहोऽभवत्तदा परमकारुणिका ऋषयः प्रचलितसरलसंस्कृतभाषायां लोकोपकाराय स्मृतिपुराणादिग्रन्थानां रचनां कृतवन्तः । दर्शनञ्चापि सर्ववेदोपासनारूपमेव, वेदप्रामाण्यानभ्युपगन्तारो निराकर्त्तुमेतेषां ग्रन्थानां रचनाऽस्ति । वेदप्रथितसिद्धान्त एव स्मृत्यादिग्रन्थेषु प्रतिपादितोऽस्ति । अतो वेदं प्रति श्रद्धावतः पुरुषस्य स्मृत्यादिग्रन्थान् प्रति श्रद्धाहीनता चाशोभनीया भवति । भाषागतभेदं प्रतिपादनजन्यशैलीगतविभेदञ्च विहाय न केनाऽपि प्रकारेण विभेदः दृश्यते अस्माकं धर्मग्रन्थेषु । वेदेषु प्रतिपादितसिद्धान्त एव कालान्तरे स्मृतिपुराणादिग्रन्थेषु सन्निविष्टोऽभवत् । प्रतिपादनशैलीगतभेद एव भावगतस्यैकत्वस्य विभेदकः प्रतीतोभवति । किञ्च यथार्थतः वेदपुराणयोर्मध्ये केनाऽपि प्रकारेण सैद्धान्तिकविरोधः परिलक्षितो न भवति । यदि वेदेषु रूपकस्य प्रचुरप्रयोगः परिलक्षितो भवति तर्ह्यतिशयोक्तेः बहुलविधानं पुराणेषु परिलक्ष्यते ।

ऋग्वेदस्याऽनेकमण्डलेष्विन्द्रस्तुतौ वृत्रेण सह तस्य युद्धस्योल्लेखो मिलति । कोऽयं वृत्रः ? येन सह तस्य युद्धोऽभवत् । यास्कमहोदयस्तु निजनिरुक्ते वृत्रविषये कतिपयानां प्राचीनानां मतस्योल्लेखं कृतवान् । यथा—

**'तत्को वृत्रः ? मेघ इति नैरुक्ताः । त्वाष्ट्रो सुर इति ऐतिहासिकाः अपरञ्च ज्योतिषश्च मिश्रीभावकर्मणः वर्षकर्म जायते । तत्र उपमार्थेन युद्धवर्णा भवन्ति । अहिवत् तु खलु मन्त्रवर्णाः ब्राह्मणवादाश्च । विवृद्धया शरीरस्य स्रोतांसि निवारयाञ्चकार । तस्मिन् हते प्रसस्यन्दिरे आपः । तदभिवादिनी एषा ऋग्भवति ( नि० २।१६ ) ।**

अत्र नैरुक्तानां मतमेव मान्यो भवति । अनया व्याख्यया ऋग्वेदस्य इन्द्रवृत्र-युद्धस्य भौतिकाधारस्वरूपं सुलभेन बोधगम्यो भवति । आकाशं परितः परि-वेष्टको मेघ एव वृत्रोऽस्ति । तं वृत्रं स्ववज्रेण हत्वा सांसारिकजीवधारिणः वृष्टया तृप्तकर्त्ता सप्तरश्मिः वृषभ इन्द्र एव वृष्टेः देवता अस्ति । प्रति-वर्षाऋतौ गगनमण्डले भाविनः सङ्ग्राम एव इन्द्र-वृत्र-युद्धस्य परिदृश्यमानो भौतिकदृश्यो भवति । रूपकेणास्यैव वर्णनम् ऋग्वेदे वर्त्तते । पुराणेष्विन्द्रः देवानामधिपतिरस्ति, वृत्रस्तु दानवानामसुराणां वा राजा वर्त्तते । द्वावपि प्रबलप्रतापिनौ स्तः । उभावपि स्वस्ववाहने समारुह्य रणाङ्गणे समागच्छतः । उभयोर्मध्ये रोमाञ्चकः सङ्ग्रामो भवति युद्धान्ते वृत्रोपरि इन्द्रस्य विजयो भवति । अस्य सङ्ग्रामस्य विस्तृतवर्णनं पुराणेषु द्रष्टुं शक्यते । विशेषतः श्रीम-द्भागवतपुराणस्य षष्ठस्कन्धे एकादश-द्वादशाध्याययोः वर्णनमिदमतीवातिशयो-क्तिपूर्णमस्ति । किञ्च सत्यपि अतिशयोक्तिपूर्णभाषायां वर्णनेऽस्मिन् वेदात् सिद्धान्तभेदो न दृश्यते । एकैव घटना विभिन्नग्रन्थेषु भाषाभेदेन एवं शैलीगत-भेदेन सह प्रतिपादिताऽस्ति । पौराणिकग्रन्थास्तु वेदार्थं वैदिकसिद्धान्तं च सरल-शैलया बोधगम्यभाषायां विशदीकुर्वन्ति । वेदार्थावबोद्धुं पुराणादिस्मृतिग्रन्थानां प्रकृष्टतरं महत्त्वमस्ति । अनेनैव कारणेन प्राचीनग्रन्थकर्त्तारः वेदार्थावबोधने एतेषां पुराणादिग्रन्थानामध्ययनस्यावश्यकतां वदन्ति—

**'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।'**
**बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति ।।'**

इतिहासपुराणस्मृत्यादिग्रन्थज्ञानहीनाज्जनाद् बिभेति वेदः सर्वदा । अनेन हेतुना इतिहासपुराणादिग्रन्थानामभिज्ञता वेदार्थानुशीलनाय परमावश्यकी अस्ति । अस्य कथनस्य सम्पुष्टयर्थं कानिचन उदाहरणानि सन्ति । शुक्लयजुर्वेदस्य ईशा-वास्योपनिषदि कर्मसिद्धान्तस्य प्रतिपादयिता रहस्यमयोऽयं मन्त्रः—

**'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ।।'**

अस्य मन्त्रस्य भावार्थोऽयमस्ति—अस्मिन् संसारे कर्म कुर्वन् शतायुर्भवितु-मिच्छथ, एवं कुर्वन्नेव ते सिद्धिर्भविष्यति नान्यथेति । कर्म मानवेषु लिप्तो न भवति । अस्य मन्त्रस्य व्याख्या गीतायाः श्लोकेऽस्मिन् द्रष्टव्या—

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ।। ४।१४ ।।**

कामनायाः परित्यागविषये बृहदारण्यकस्य ( ४।४।७ ) तथा कठोपनिषदश्च ( ४।१४ ) मन्त्रोऽयं दर्शनीयोऽस्ति—

**'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।**
**अथ मर्त्योऽमृतो भवत्यथ ब्रह्म समश्नुते ।।'**

मनुष्याणां हृदि समुपस्थिताः सर्वे कामाः यदा प्रमुच्यन्ते, तदा मर्त्यः अमर्त्यो भवति, ब्रह्मस्वरूपो भवति च। मन्त्रस्यास्य व्याख्या गीतायाः श्लोकेऽस्मिन् द्रष्टव्येति—

**'विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥' २।७१ ॥**

उपनिषद्ग्रन्थानां गीता तु सार एवाऽस्ति। अतः गीतायामुपनिषदां व्याख्या नातिचित्रम्भवेत्, किञ्चान्यत्रैवं वर्णनं दुर्लभं भवेदिति। अतः एतेषु स्मृतिपुराणादिग्रन्थेषु वेदमन्त्राणां विकसितार्थं मिलति। परम्परागतार्थस्य सर्वथोपलब्धिः एतेष्वेव ग्रन्थेषु भवितुं शक्यते नान्यत्र। अतः वेदार्थज्ञानाय एतेषां स्मृत्यादिग्रन्थानामध्ययनमतीवावश्यकमिति।

## सायणाचार्यस्य महत्त्वम्

आचार्यसायणः स्वभाष्यलेखनकाले एतेभ्यः स्मृतिपुराणादिग्रन्थेभ्यो यथेच्छं साहाय्यं गृहीतवान्। तेन परम्परागतार्थमेवाङ्गीकृतम्। तत्सम्पुष्टचर्थमावश्यकतानुसारेण यत्र तत्र पुराण-इतिहास-स्मृति-महाभारतादिग्रन्थैः प्रमाणं सङ्गृह्य समुद्धृतञ्च। वेदानामर्थज्ञानाय षडङ्गाध्ययनस्याऽपि महत्त्वमस्ति। सायणस्त्वनेन सिद्धान्तेन पूर्णपरिचित आसीत्। ऋग्वेदस्य प्रथमाष्टकस्य व्याख्यायां शब्दानां पर्यालोचने व्याकरणस्य नैपुण्येन निरूपणं कृतमनेन। प्रायः प्रत्येकस्य महत्त्वपूर्णशब्दस्य व्युत्पत्तेः, सिद्धेः, स्वराघातस्य च वर्णनं पाणिनीयसूत्राणां साहाय्येन प्रातिशाख्यसाहाय्येन चाऽपि कृतम्। सावधानतयाऽस्याध्ययनेन समस्तज्ञातव्यविषयाणां सुगमतयाऽवबोधो भवति। निरुक्तस्याप्युपयोगः कृतोऽस्मिन् भाष्ये। यास्केन व्याख्यातमन्त्राणां व्याख्या कृतेति, सायणाचार्यस्तत्तन्मन्त्राणां भाष्यलेखनकालेऽविकलरूपेणालिखत्। एतदतिरिक्तः सायणः ऋग्वेदस्य प्राचीनभाष्यकर्तॄणां स्कन्दस्वामी-माधवादीनामप्यर्थान् यथावकाशे ग्रहणमकरोत्। कल्पसूत्राणामप्युपयोगः सविस्तरेण कृतोऽनेन स्वभाष्ये। यज्ञविधाने तु सायणस्य प्रगाढप्रतिभा परिलक्ष्यते। तेन हि कल्पसूत्रविषयगतानामावश्यकतत्त्वानां वर्णनप्रसङ्गे सर्वत्र स्वविशिष्टप्रतिभायाश्चाऽपि प्रदर्शनं कृतम्। सूक्तस्य व्याख्यारम्भे एवं तस्य विनियोगः, ऋषिः, देवतादिज्ञातव्यतथ्यानां वर्णनं प्रामाणिकग्रन्थानामुद्धरणपुरःसरमकरोत्। सूक्तविषयिणीम् उपलभ्यमानाऽऽख्यायिकामपि सप्रमाणं समुपस्थापयत्। मीमांसायाः विषयस्यापि निवेशं भाष्यारम्भस्योपोद्घाते बोधगम्यभाषायां प्रदत्तमनेन सायणेन वेदविषयकस्य समग्रसिद्धान्तस्य प्रतिपादनं रहस्योद्घाटनञ्चापि कृतम्। अनेनैव कारणेन सायणवेदभाष्यस्य गौरवमस्ति। याज्ञिकपद्धतिमेव स्वभाष्ये सायणः महत्त्वमददात्। तस्मिन् काले तस्यैवावश्यकता वरीवर्त्ति। तदा कर्मकाण्डस्य प्राधान्यमासीत्। एतत् खलु सर्वं विचार्य सायणेन स्वभाष्यं निर्मितम्।

अनेन सविशेषकारणेन वेदार्थानुशीलिनां मध्ये सायणस्य विशिष्टं महत्त्वमस्ति। सायणभाष्यं विना वेदार्थानुशीलनस्य कीदृशी दशा भवेदिति तु कथितुं न शक्यते। भाषाशास्त्रीयाः यथेष्टं व्युत्पत्तिमाश्रित्यैकस्यैवार्थस्य विरुद्धे बहुविधार्थकरणे प्रवृत्तानां पाश्चात्यपण्डितानां मध्ये परमगतार्थस्यैव स्वभाष्ये स्थानदातारं सायणं विहायोचितमार्गं प्रदर्शयितुं कः समर्थो भवति? वस्तुतः आंग्लानां शिक्षापद्धत्या वयं परप्रत्ययनेयधियः संवृत्ताः। आंग्लाः स्वार्थबुद्धया अस्मदीयानि वेदोपनिषत्स्मृतिपुराणानि तिरस्कृतवन्तः, अस्माभिरपि तानि ह्यवधीरितानि। जेतारः स्वार्थधिया अन्धाः सञ्जाताः, परं वयं तु अज्ञानात् परप्रत्ययनेयबुद्धित्वाद् अन्धा जाताः। पुरा अस्मद्देशस्य राजानो विपश्चित्तल्लजान् स्वाश्रये निहितवन्तः, संस्कृताध्ययनाध्यापनार्थं युक्तामुचितां च वृत्तिं प्रदत्तवन्तः। परं सम्प्रति तद्विधा व्यवस्था न क्वाऽपि जीवन्ती प्राप्यते तस्मात् पुराणादिग्रन्थानां वेदार्थावबोधार्थं परमावश्यकतास्ति।

सायणो वैदिकसम्प्रदायस्य यथार्थतया वेत्ताऽऽसीत्। तस्मात्तदीयं वेदभाष्यं वस्तुतस्तु वेदार्थोन्मीलनकारिषु भाष्येषु मूर्धन्यतमं भाष्यमस्ति। तद् दुर्गमे वेददुर्गे सरलतयैव प्रवेशयति वेदार्थजिज्ञासुम्। वैदिकविदुषामुपरि यथेष्टमृणमस्ति सायणाचार्यस्य। पाश्चात्यपण्डितास्तु वेदार्थाविबोधने विपुलं प्रयासं कृतवन्तः। तस्मिन् प्रयत्ने ते यत्किञ्चित्साफल्यमलभन्त तत्तु सायणाचार्यस्यानुकम्पाया एव फलमस्ति। सायणभाष्यस्य साहाय्येनैव एते पाश्चात्यपण्डिताः वैदिकमन्त्राणामर्थावबोधने कृतकार्या अभवन्। कतिचिच्छन्दानामर्थावबोधने विरोधाभासं प्रदर्श्य सायणाचार्यस्योपहासं तैः कृतम्, तत्तु अन्यत्। किञ्च मुख्यतः संहितापञ्चकोपरि ईदृशं सुव्यवस्थितम्, पूर्वापरविरोधहीनमुपादेयं पाण्डित्यपूर्णञ्च भाष्यलेखनकार्यमतीव श्रमसाध्यं भवति। ईदृशः कार्यस्य महत्त्वं कोऽपि विज्ञजन एव विज्ञातुं समर्थोऽस्ति। अस्मिन्नर्थे वैदिकधर्मस्य वैदिकभाषायाश्च कियदभिज्ञताप्राप्तव्यमिति तु साधारणोजनः अनुमानमपि कर्त्तुं न शक्नोति। यतो हीयं वैदिकभाषैवास्ति या साम्प्रतिकं भाषाविज्ञानं द्रढीयसीं भूमिमध्यासयतिस्म। तदीया महत्तोपादेयता च भाषादृष्टयापि वरीवर्त्ति। इयं वैदिकभाषैवास्ति या भाषाविदां मध्ये प्रसृतं प्राचीनभाषाविषयकं मतभेदं निराकृतवती। चेद्भाषाशास्त्रपण्डिताः साम्प्रतिका अभिलषन्ते यत्तेषामभिमतो विषयो नितरां पूर्णतया परिपक्वतां गच्छेत् तदा ते वेदानधीत्यानुशील्य च तासु तासु भाषासु समागतानां पाड्रे-नाइट-फार्चूनप्रभृतिपदानां मूलरूपं तेषां तद्रूपान्तरताञ्च साधु भोत्स्यन्ते। ज्ञास्यन्तीदं च भौतिकेष्वर्थेषु प्रयुज्यमानानि पदानि युगान्तरेण कस्मादाध्यात्मिकेऽर्थे प्रयुक्तानि भवितुमारभन्ते। भूयिष्ठप्रयोजनसाधकत्वाद् वस्तुतः सायणभाष्याणि सन्ति परममहत्त्वभाजो ग्रन्थाः। किञ्च सायणाचार्यस्यानुकम्पयैव वेदार्थेषु प्रविष्टाः पाश्चात्यपण्डिताः यदि कथयन्ति—'Las von Sayana' (सायणस्य बहिष्कारं कुरु) तर्हि तत्र किमाश्चर्यम्? का परिदेवना? यद्यपि

सायणाचार्यस्याऽपि भाष्याणि दोषरहितानि सन्ति, इत्यपि वक्तुं न शक्यते। यतो हि मानवानां कृतिषु निर्दुष्टताया: कल्पनैव व्यर्थमस्ति तथापि सायणाचार्य: परम्परागतार्थस्य ज्ञाताऽस्ति, नात्र लेशतोऽपि सन्देहः। सायणाचार्यस्य वेद-भाष्याणि वेदार्थज्ञानस्य कुञ्जिकारूपेण विलसन्ति। वेदानां दुर्गमे दुर्गे प्रवेशा-यास्य भाष्याणि विशालसिंहद्वारस्य कार्यं कुर्वन्ति।

किञ्च सम्प्रति पाश्चात्यानुसन्धानकर्त्तारोऽपि सायणस्य महत्त्वेन अपरिचिता न सन्तिं। ऋग्वेदस्य प्रथमोऽनुवादकस्यांग्लविदुष: विल्सनमहोदयस्येयमुक्ति-रविस्मरणीयाऽस्ति—

'Sayana undoubtedly had a knowledge of his text far beyond the pretensions of any European scholar, and must have been in possession either through his own learning or that of his assistants, of all the interpretation which have been perpetuated by traditional teaching from the early times.'

—Translation of Rigveda

सायणभाष्यस्य प्रथमपाश्चात्यसम्पादकस्य डा० मैक्समूलरमहोदयस्यापीय-मुक्ति: दर्शनीयाऽस्ति—

We ought to bear in mind that five and twenty years ago, we could not have made even our first steps, we could never atleast have gained a firm footing without his leading strings.

—Introduction to Rigveda; Edon.

वेदार्थज्ञाने वस्तुत: सायणाचार्य: अन्धानां यष्टिरिवाऽस्ति ( Blindman's stic ) सौभाग्येन सायणम्प्रति सम्प्रति पाश्चात्यपण्डितानामपि विचारपरिव-र्त्तनमेवमभवत्। यत्तेषु उपेक्षास्थाने सम्माननीयो भाव: परिदृश्यते। भाषाशास्त्रा-द्यावश्यकसाधनानां गम्भीरान्वेषणेन सह सायणकृतवेदार्थस्य प्रामाणिकताऽपि प्रमाणितोऽभवत् पाश्चात्यविदुषां समवाये। अस्मिन् विषये जर्मनीयविद्वांसौ पिशलगोल्डनरौ अतीव महत्त्वपूर्णं कार्यमकुरुताम्। उभौ विद्वांसौ 'विदिशेस्तू-दियन्' ( वैदिकानुशीलनम् ) नामकग्रन्थस्य त्रिषु भागेषु विविधगूढवैदिक-शब्दानामनुसन्धानं कृतवन्तौ। येन सायणाचार्यस्यार्थ: सुतरां प्रमाणितो-ऽभवत्।

किञ्च सायणाचार्यस्यैवार्थेन नास्माकं सन्तोषो भवति। वेदस्य गम्भीरता रहस्यमयता चातीव गौरवास्पदमस्ति। तेनैव हेतुना विभिन्नयुगेषु अभिनव-व्याख्यासम्प्रदायस्य समुदयोऽभवत्। याज्ञिकार्थोपरि आध्यात्मिकार्थस्य उपेक्षा कर्त्तुं न शक्यते। तुलनात्मकभाषाशास्त्रेणाऽपि एतदर्थं साहाय्यं गृहीतव्यम्। वेदानामर्थ: मुख्यत: रहस्यमय: आध्यात्मपरकश्चाऽस्ति। अनया दृष्टया श्रीमदर-विन्दस्य व्याख्यां प्रति विदुषां ध्यानाकर्षणमपि स्वाभाविकमेवेति।

## श्रीमदरविन्दस्य महत्त्वम्

सम्प्रति तत्त्वचिन्तकेषु, आध्यात्मसाधकेषु च अरविन्दमहोदयो मान्यो मूर्धन्यश्चास्ति। तस्य दृष्ट्यां येषां विदुषां वेदम्प्रति ह्यपरिसीमा श्रद्धाऽस्ति तेषां सम्मुखे स्वत एव वैदिकशब्दानामर्थः प्रस्फुटो भवति। वेदस्यार्थः रहस्यात्मकः निगूढश्चास्ति। अस्य सूचनाऽपि वेदादेवास्माकं मिलति। वैदिकऋषीणामियं दृढा धारणाऽसीद्यत् मन्त्राणामुन्मेषश्चेतनायाः निगूढान्तरतमस्तरादेव भवति। अतो वेदेषु निगूढज्ञानस्य निधिः प्रक्षिप्तोऽस्ति। एकस्मिन् मन्त्रे (ऋ० ४।३।१६) ऋषिवामदेवः स्वात्मानम् अन्तःप्रज्ञासम्पन्नत्वेनोपस्थापितवान्। ऋषिरयं स्ववाग्भिः निगूढवाक्यानाम् अभिव्यक्तिं कृतवान्। अनेनैव प्रकारेण दीर्घतमा नामकोऽपि ऋषिः वेदमन्त्रान् नित्यम्, अक्षरव्योम्नि चाधिवासिनोऽमन्यत। एतदग्रे कथयत्यसौ—यो हितं परमात्मनं न जानाति सः ऋग्भिः किं करिष्यति ? तस्मै ऋचः किं प्रयोजनमस्ति ?

**'ऋचो अक्षरे परमे व्योमन्, यस्मिन् देवा अधिविश्वे निषेदुः।**
**यस्तन्न वेद किं ऋचा करिष्यति य इत् तत् विदुस्त इमे समासते॥**
(ऋ० वे १।१६४।३९)

मन्त्रोऽयं ऋषिवाचां चतुर्णामुद्भवस्थानानां निर्देशं करोति। येषु त्रीणि स्थानानि तु निगूढानि सन्ति। केवलं चतुर्थमेव स्थानं मानवैः सह सम्बद्धोऽस्ति। यतो हि अस्मादेव स्थानात् सामान्यशब्दानामभिव्यञ्जना भवति। किञ्च वैदिकमन्त्राक्षराणां सम्बन्धः दिव्येनोच्चतरस्तरेण (१।१६४।४६) सहैवास्ति। अनेन प्रकारेण वैदिकमन्त्राणां दिव्यता, उच्चता च अन्तश्चैतन्यजन्यस्फुरणस्योन्मेषस्य च पूर्ववर्णिता वार्त्ता वैदिकप्रामाण्येनैव स्वतः सिद्धा भवति। वैदिकमन्त्राणां प्रत्येकं शब्दः कस्याप्याध्यात्मिकतत्त्वस्य प्रतीको भवति।

श्रीअरविन्दमहोदयस्य मते योगेन तपसा च विधूते पवित्रतमे हृदि एव स्फुरितो भवति। वैदिकशब्दः आध्यात्मिकतत्त्वस्यैव निश्चयेन प्रतीकोऽस्ति। वेदे 'गौः'-शब्दः प्रकाशस्य प्रतीको भवति। अनेन रूपेण वैदिकाश्वशब्दः कस्यापि शक्तेः, आध्यात्मिकसामर्थ्यस्य, अथवा तपोबलस्य च प्रतीको भवति। वैदिकऋषिः कस्याऽपि मन्त्रे यदा अश्वाय प्रार्थनां करोति तदा तस्यार्थः अश्वरूपः सामान्यघोटको न भवति, अपितु अश्वपदेन तत्रान्तर्बलस्य स्फुरणं प्रति सङ्केतो भवति। घृतशब्दः यज्ञस्य साधनभूतः सामान्याज्यस्य बोधं करोति। किञ्चारविन्दमहोदयस्य मते तु 'घृ—प्रकाशे' इत्यर्थो भवति। अत एव इन्द्रस्य अश्वः यदा 'घृतस्नु'-पदेन बोधितो भवति तदा तस्यार्थः घृतस्य क्षरणं न भवति, अपितु प्रकाशस्य सर्वत्र विकीर्णकर्त्ता एवार्थो भवति। अग्निपदेन च न केवलं बाह्यवह्निपदस्य बोधो भवति, अपितु अग्निशब्दादत्रान्तःस्फुरितस्य चैतन्यस्यैव बोधो भवति। उपनिषत्सु अभिव्यक्तस्य बहुशो व्याख्यातस्य चाद्वैततत्त्वस्य पूर्णसङ्केतो मिलति संहिताग्रन्थेषु। यो हि विद्वान् वैदिकसंहितायाः मन्त्रं केवलं

कर्मकाण्डस्य प्रतिपादकं तथोपनिषदः ज्ञानकाण्डस्य च विवेचकं मत्वा उभयोर्मध्ये पार्थक्यप्रदर्शनं करोति स तु सत्याद् दूरेऽस्ति। संहिताग्रन्थस्तु कर्मणा सह ज्ञानस्याऽपि स्पष्टप्रतिपादको भवति। यतः उपनिषत्सु संहितायाः मन्त्राणां प्रमाणाय स्पष्टनिर्देशो मिलति। यथा ऋग्वेदस्य सिद्धान्तः वेदान्तस्य तथ्यानां सङ्केतं करोति तथैव तस्यान्तःसाधनायाः नियमनस्य च शिक्षा विगतयुगे प्रतिष्ठितस्य योगं प्रति स्पष्टतया सङ्केतं करोति। ऋग्वेदस्तु तस्य परमतत्त्वस्य सन्देशं कतिपयेषु मन्त्रेषु ददाति। 'एकं तत्' (१।१६४।४६), 'तदेकम्' (१०।१२९।२) वैदिकऋषयः अमुमेव परमसत्यरूपेण स्वीकुर्वन्ति, अन्यदेवास्तु तस्यैव शक्तेः विविधाभिव्यक्तिमात्रमेव सन्ति। अनेन प्रकारेण श्रीमदरविन्दमते वेदः सिद्धानां वाणी एवाऽस्ति। वेदोऽयमान्तरिकजगतः आध्यात्मिकतथ्यानां निरूपकोऽस्ति। अस्मिन्निरूपणे येषां सामान्यशब्दानां प्रयोगं वेदः करोति तेषामर्थः नितान्तनिगूढस्तथान्तस्स्तरस्य साधनायामुपरि आधारितोऽस्ति (द्रष्टव्यः 'History to the mistic fire' by Arbind. Page 19-32)

## श्रीमदानन्दकुमारस्य वैशिष्टयम्

डॉ० आनन्दस्वामी आधुनिककलावित्सु परमतत्त्वज्ञः गम्भीरचिन्तकश्चासीत्। भारतीयकलायाः अन्तःस्वरूपस्य प्रत्यभिज्ञाने तथा तस्याः विशदव्याख्याकरणे च स्वविषये निरुपमो विद्वान् आसीत्। कलाक्षेत्रे वैदिकक्षेत्रे च पूर्णमर्मज्ञत्वेन सहाऽसौ प्रवेशमलभत्। तयोरन्तरङ्गस्य परीक्षणं विश्लेषणञ्चातीवविद्वत्वेन सह कृतमनेन। अस्मिन् विषये तस्य प्रसिद्धं पुस्तकमस्ति—'A new approach to the vedas'। ग्रन्थेऽस्मिन् वेदानां विशिष्टव्याख्याशैल्याः प्रदर्शनं कृतमनेन विदुषा। तस्य कथनमस्ति—वेदास्तु सिद्धानां वाणी भवति। अतो तस्य व्याख्यालेखने खीष्टीयमध्ययुगस्थानां सतां तथा आत्मप्रवणकवीनामनुभूत्याऽपि पर्याप्तसाहाय्यं ग्रहीतुं शक्यते। आध्यात्मिकजगति अत्युच्चस्तरगतानां सतामनुभूतेः वैचारिकसमानता भवत्येव। तदनुभूतिप्रकटनार्थं प्रयुक्तप्रतीकेषु तथा मूर्त्तिविधानेषु चैकरूपता दृग्गोचरीभवत्येव। डॉ० कुमारस्वामी मध्ययुगीय-खीष्टधर्मानुयायिनां महात्मनां वाण्याः मर्मज्ञो विद्वान् आसीत्। फलतः स्व-वैदिकव्याख्यायां तस्य ज्ञानस्यानुशीलनस्य चोपयोगः अतीव सुष्ठुतया कृतोऽनेन। अस्य महापुरुषस्य वैदिकमन्त्राणां व्याख्या एवास्य स्पष्टोदाहरणानि सन्ति। द्रष्टव्यम्—

As for the Vedic and Christian sources each illuminates the other. And that is in itself an important contribution to understanding. What ever may be asserted or denied with respect to the value of the vedas; this atleast is certain that their fundamental doctrines are by on means singular.''

—A New Approach to the Vedas. Page 9.

---

# पञ्चमोऽध्यायः

## वेदाविर्भावकालः

वेदानां महत्त्वस्य गौरवस्य च विषये वैदिकविद्वत्सु सत्यप्यैकवाक्यता तेषु वेदाविर्भावकालमधिकृत्य गम्भीरो मतभेदो दृश्यते। भारतीयसभ्यतायाः प्राचीनतमं रूपं विज्ञातुं वैदिकग्रन्थानामुपयोगिता नितान्तं माननीयाऽस्ति, सिद्धान्तस्यास्य स्वीकरणे केषाञ्चिदपि विदुषां केनाऽपि प्रकारेणापत्तिर्नास्ति। किञ्चास्याः वैदिकसभ्यतायाः ज्योतिः कदाऽस्यार्यावर्त्तस्य पवित्रभूमिमालोकितामकरोत्? कस्मिन् काले पावनचरितानाम् ऋषीणां चित्ते आध्यात्मिकज्ञानस्य दिव्यसन्देशं दातुमियं कामना जागृताऽभवत्? कदा तैरलोकसामान्यगूढार्थविजृम्भितमन्त्राः अरच्यन्त? एतेषां प्रश्नानां समुचितोत्तरमधुना न कोऽपि दातुं समर्थः, न चाऽपि भविष्यतिकाले कोऽपि दातुं समर्थो भविष्यति।

भारतीयदृष्टयां ये विद्वांसः श्रद्धां निदधति तेषां समक्षे तु वेदकालनिर्णयस्य प्रश्न एव नोत्तिष्ठति। तेषां दृष्टया तु वेदाः सन्ति अनादयः। सन्ति ते नित्याः कालापरिच्छिन्नाः। परं पाश्चात्यानां वेदज्ञानां पण्डितानां किञ्च तदनुयायिनां केषाञ्चन भारतीयानां सम्मत्यां तदाविर्भावकालसम्बन्धी प्रश्नो विद्यत एव समाधेयः। प्राचीनभारतीया विद्वांसो वेदान् अपौरुषेयान् मन्यन्ते, तेषां मते तु वेदरचनाकालविचारो निरर्थको दुरर्थकश्च। पाश्चात्या विद्वांसो यथाबुद्धिवैभवं वेदरचनाकालं निर्धारयन्ति। पाश्चात्यविचारसरणिविदो भारतीयाः अनुसन्धित्सवोऽपि तेनैव मार्गेण वेदकालं निर्णेतुं यतन्ते। अत्र तद्विषयकाः कतिचन विचाराः प्रस्तूयन्ते।

### (१) डॉ० मैक्समूलरस्य मतम्

सर्वप्रथमः डॉ० मैक्समूलरमहोदयः १८५९ खीष्टाब्दे स्वकीये प्राचीनसंस्कृतसाहित्याभिधाने ग्रन्थे वेदानां कालं निर्णेतुं प्रथमः श्लाघ्यः प्रयासो विहितवान्। तस्य सम्मतौ वेदेषु प्राचीनतमस्य ऋग्वेदस्य रचना १२०० वि० पू० काले सम्पन्नाऽभवत्। अनेन तस्य मतेन ऋग्वेदस्य रचना ११५० ई० पू० समीपे जाता। मानवकल्याणार्थमस्मिन्देशेऽभिनवबौद्धधर्मस्योदयः समस्तवैदिकवाङ्मयस्यास्तित्वमङ्गीकरोति। किञ्चास्य बौद्धधर्मस्योदयात् प्रागेव च ब्राह्मणग्रन्था अपि व्यरच्यन्त। बुद्धेन ब्राह्मणग्रन्थेषु विवेचितानामेव यागविधीनां कट्वी आलोचना क्रियतेस्म, अपि चोपनिषत्समर्थितं कतिपयतत्त्वजातमात्मसात् क्रियते स्म। अतो बुद्धात् पूर्वतना ( ५०० ई० पू० ) एव ब्राह्मणोपनिषद्भागाः सम्भवन्ति। वैदिकसाहित्ये चत्वारि युगानिसन्ति—छन्दोयुगम्, मन्त्रयुगम्, ब्राह्मण-

युगम्, सूत्रयुगञ्चेति। प्रत्येकं युगस्य विकासे तेन वर्षशतद्वयात्मकः कालः कल्पितः, तदनुसारेण बुद्धात् ६०० वर्षतः पूर्वं छन्दोयुगस्यास्तित्वं समायाति। अतः ऋग्वेदस्य रचना ११५० ई० पू० समायात् पश्चात्कालिकी न सम्भवतीति। सम्प्रति जातस्य ऋग्वेदस्य ३२०० वर्षाणि जातानि इति कथयितुं शक्यमिति तदाशयः। डॉ० मैक्समूलरमहोदयः ऋग्वेदस्योदयविषये कांश्चन बिन्दूनाधृत्यैवोक्तां सम्भावनाञ्चकार। न स स्वाङ्गीकृते वेदाविर्भावविषये वस्तुतो निश्चयं गत आसीत्। यतो हि स एकस्मिन् समये भाषमाणः स्वयमेवाभिदधौ यत् नात्र भूतले काऽपि शक्तिरीदृशी या वैदिकमन्त्ररचनायाः कालं वक्तुं शक्नुयात् निश्चप्रचतया। स इमं विचारं १८८९ शततमे ईशवीयेऽब्दे भौतिकधर्माख्यायां जिफोर्डव्याख्यानमालायां प्रकटीचकार। किञ्च तदनुसारिणः पाश्चात्यास्तदीयैरेव तर्कैः कालममुं निश्चयरूपेण कथयितुं प्रवृत्ताः।

## ( २ ) डॉ० अविनाशचन्द्रदासस्य मतम्

अयं हि महानुभावः वेदे निर्दिष्टानि अनेकानि भूगर्भशास्त्रीयतत्त्वानि विशेषतः आर्यावर्त्तंतश्चतुर्दिक्षु चतुःसमुद्रीयां स्थितिमाधारीकृत्य गणना द्वारा वेदस्य समयं २७ सहस्रसंवत्सरपूर्वं मन्यते। स्वकीये 'ऋग्वेदिक इण्डिया' (Rigvedic India ) नामके पुस्तकेऽयं लिखति यत् भौगोलिकीः किञ्च भूगर्भसम्बन्धिन्यो घटनाः अवलम्ब्य ऋग्वेदीया रचनायाः अथ च तत्कालवर्त्तिन्याः सभ्यतायाः प्रादुर्भूतायाः प्रायेण सप्तविंशतिसहस्राब्दा अतिक्रान्ताः।

## ( ३ ) वेदस्थिते ज्योतिषतत्त्वाधारे मतम्

वैदिकसंहितासु ब्राह्मणेषु च निर्दिष्टाः ज्यौतिषसम्बन्धिनीः सूचनाः अवगाह्य लोकमान्यबालगङ्गाधरतिलको डॉ० याकोबीनामा जर्मनीयो विद्वांश्चाविर्भूतस्य वेदस्य चतुर्विंशतिशतवर्षाणि यातानि इति मन्येते।

भारते षड् ऋतवो भवन्ति। अमी ऋतवः सूर्यसङ्क्रमणनिमित्तकाः। इदमपि प्रसिद्धं यत् प्राचीनकालात् अधुनापर्यन्तममी ऋतवः पश्चात् सर्पन्ति, अर्थात् पूर्वं यत्र नक्षत्रे यस्य ऋतोरुदयो जायतेस्म सम्प्रति स एव ऋतुस्ततः पूर्ववर्त्तिनि नक्षत्रान्तरे उदितो भवति। पुराकाले वसन्तो वर्षादिरभवत्, अत एव तस्य प्रशस्ततया भगवद्विभूतिभाव उक्तो गीतायाम्—'ऋतूनां कुसुमाकरः' इति। सम्प्रति वसन्तसम्पातः मीनसङ्क्रान्तिकालादारभते, मीनसङ्क्रान्तिश्च पूर्वभाद्रपदनक्षत्रस्य चतुर्थचरणे भवति। सेयं स्थितिर्नक्षत्राणां क्रमशः पश्चात्सर्पणेनोत्पन्नाः। पूर्वं कदाचिद् वसन्तसम्पातः उत्तरभाद्रपद-रेवती-अश्विनी-भरणी-कृत्तिका-मृगशिरःप्रभृतिषु नक्षत्रेष्वासीत्। ततः पश्चात्सर्पन्नयं वसन्तसम्पातः साम्प्रतिकीं स्थितिम् अनुप्रपन्नः।

ज्योतिर्विदः सूर्यस्य सङ्क्रमणवृत्तं २७ नक्षत्रेषु विभजन्ति, पूर्णसङ्क्रमणवृत्तम् ३६० अंशानामस्ति। तत् प्रत्येकं नक्षत्रम् ३६०÷२७=१३⅓ अंशानां

चापं निर्माति। सङ्क्रमणबिन्दुश्च ७२ वर्षेषु एकमंशं विहायापरमंशं प्रसर्पति। एवम् एकस्मान्नक्षत्रात् सङ्क्रमणबिन्दुः परं नक्षत्रं याति, तत्र $७२ \times १३\frac{१}{२} =$ ९७२ वर्षात्मकः कालो लगति। सम्प्रति वसन्तसम्पातः पूर्वभाद्रपदनक्षत्रस्य चतुर्थचरणे भवति, यदा चायं कृत्तिकानक्षत्रे भवतिस्म ततो वर्त्तमानस्थितेः प्राप्तये $४\frac{१}{२}$ नक्षत्राणि लङ्घितानि, यदि एकत्र नक्षत्रे लङ्घनीय ९७२ वर्षात्मक-कालापेक्षा तदा $४\frac{१}{२}$ नक्षत्रातिक्रमे $९७२ \times ४\frac{१}{२} = ४३७४$ वर्षात्मकः कालोऽवश्यमपेक्षितः स्यात्। तदेवं वेदोक्तज्यौतिषतत्त्वानुसारेण वेदानां २५०० ई० पूर्व-पूर्वकालिकता प्रतीता भवति।

## (४) शङ्करबालकृष्णदीक्षितस्य मतम्

महाराष्ट्रस्य विख्यातपण्डितः ज्योतिर्विच्छ्रीशङ्करबालकृष्णदीक्षितमहोदयः अतिपरिश्रमेण शतपथब्राह्मणात् महत्त्वपूर्णवर्णनमेकमन्वेषितवान्। तेन तस्य ग्रन्थस्य रचनाकालविषये पर्याप्तप्रकाशो मिलति। वैदिकीषु संहितासु नक्षत्र-निर्देशकानि बहूनि वर्णनानि प्राप्यन्ते। शतपथब्राह्मणस्य अस्मिन् सन्दर्भे कथन-मिदं द्रष्टव्यम्—

**'एकं द्वे त्रीणि चत्वारि वा अन्यानि नक्षत्राणि, अथैता एव भूयिष्ठा यत् कृत्तिकास्तद् भूमानमेव एतदुपैति, तस्मात्कृत्तिकास्वादधीत। एताहवै प्राच्या दिशो न च्यवन्ते सर्वाणि ह वां अन्यानि नक्षत्राणि प्राच्यादिशश्च्यवन्ते।'**

(शतपथ० २। १। २)

एतेनेदमुक्तं भवति यत् शतपथब्राह्मणरचनाकाले कृत्तिकानियमेन प्राच्या-मासन्, सम्प्रत्येताः कृत्तिकाः पूर्वदिग्बिन्दुतः ईषदुत्तरस्यां दिशि उदयं यान्ति। दीक्षितमहोदयस्य गणनया तादृशी ग्रहस्थितिः ३००० ई० पू० काले सम्भवति। अतः स एव शतपथस्य निर्माणकालः। तैत्तिरीयसंहिता शतपथात् प्राचीना, ऋग्वेदश्च तैत्तिरीयसंहिताया अपि प्राचीनः, ऋग्वेदः ३५०० ई० पू० काले प्रणीत इति सम्भवति। एवञ्च सम्प्रति ऋग्वेदः ५५०० वर्षप्राचीन इति निश्चीयते (द्रष्टव्यः—**शङ्करबालकृष्णदीक्षितस्य—भारतीय ज्योतिःशास्त्र, पूना सं० १८९६ ई० पृ० १३६-१४०**)।

## (५) बालगङ्गाधरतिलकस्य मतम्

तिलकस्य मते वेदकाल इतोऽपि किञ्चित् प्राचीनः सिद्धयति। तेन हि मृग-शिरोनक्षत्रे वसन्तसम्पातस्य साधकानि बहूनि वेदवाक्यानि सङ्गृहीतानि। तैत्तिरीयसंहितायामुच्यते फाल्गुनी पूर्णिमावर्षादिः। तिलकमतं इदमनुकूलं यतो यदि पूर्णचन्द्रः फल्गुन्यां तदा सूर्येण मृगशिरसि भवितव्यमेव, तदेव च वसन्त-सम्पातो भावी।

मृगशिरसि वसन्तसम्पातस्य कालः पूर्वोक्तकृत्तिकाकालात् प्रायः २००० पूर्वं सम्भवति, यतो मृगशिरसः कृत्तिकापर्यन्तं पश्चात् सर्पणे सहस्रद्वयाब्दी

अपेक्ष्यते । एकस्मान्नक्षत्रान्नक्षत्रान्तरोपसर्पणे ९७० वर्षाणि लगन्तीति पूर्वमुक्तमेव । अतो येषु मन्त्रेषु मृगशिरसि वसन्तसम्पातस्योल्लेखो विद्यते ते मन्त्राः ४५०० ई० पू० समयतोऽर्वाचीना न सम्भवन्ति । तिलकेन मृगशिरसोऽपि पूर्वं पुनर्वसौ वसन्तसम्पातस्य बोधकानि वेदवचनानि प्राप्तानि ततस्ततोऽपि पूर्वतनः कालो वेदमन्त्राणां साधयितुं शक्यते । सर्वमिदं विचार्य तिलकमहोदयेन वैदिककालश्चतुर्धा विभक्तः । डॉ० याकोबी-नामा जर्मनीयो विद्वांश्चाविर्भूतस्य वेदस्य चतुर्विंशतिशतवर्षाणि यातानि इति मन्येते । तेन हि गृह्यसूत्रेषूल्लिखितस्य ध्रुवदर्शनस्याधारे स्वतन्त्ररूपेण वेदानां कालो निर्धारितः ( द्रष्टव्यः—History of Indian Literature. First part. Page 296-297 by writer ) ।

लोकमान्यतिलकमतानुसारेण—

**( १ ) अदितिकालः**—६००० ई० पूर्वतः ४००० पूर्वपर्यन्तम् । अत्र काले उपास्यदेवनामगुणमुख्यचरितादिबोधका गद्यपद्यमया मन्त्रा रचिता ये यज्ञेषु प्रयुज्यन्तेस्म ।

**( २ ) मृगशिरःकालः**—४००० ई० पूर्वतः २५०० ई० पू० पर्यन्तम् । अत्रैव महत्त्वशालिनि काले भूयांसो ऋग्वेदमन्त्रा व्यरच्यन्त ।

**( ३ ) कृत्तिकाकालः**—२५०० ई० पूर्वतः १४०० ई० पू० पर्यन्तम् । अस्मिन् काले शतपथब्राह्मणतैत्तिरीयसंहितयोः प्रणयनमजायत ।

**( ४ ) अन्तिमः कालः**—१४०० ई० पूर्वतः ५०० ई० पूर्वपर्यन्तम् । अत्र काले श्रौतसूत्रगृह्यसूत्रदर्शनसूत्रादीनामार्षग्रन्थानां रचना जाता । तानेव विरोद्धुं प्रतिक्रियारूपेण बौद्धधर्म उदितो बभूव ।

## शिलालेखः

साम्प्रतिकानि शोधकार्यफलान्यपि तिलकमहोदयस्य मतं पुष्टं कुर्वन्ति । सप्ताधिकैकोनविंशतिशततमेशवीये ( १९०७ ई० ) अब्दे डॉ० ह्यूगोविन्कलर 'बोधाज कोइ्' नामके स्थाने वर्त्तमानटर्कीदेशान्तर्गते खननकार्ये प्राचीनमेकं शिलालेखमवाप । तेन शिलालेखेन ज्ञायते यत् पश्चिम-एशियावयवभूते तत्र टर्कीदेशे द्वयोः कयोश्चित् प्राचीनजात्योर्निवास आसीत् । तत्र एकस्या जातेर्नाम 'हित्तिति' इति अपरस्याश्च 'मितानि' इत्यासीत् । अनयोर्द्वयोरपि जात्यो राजानौ पारस्परिककलहस्य निवारणाय सन्धि चक्रतुः । तत्र सन्धौ द्वावपि पक्षौ सन्धिसंरक्षकतया देवनामानि निर्दिष्टवन्तौ तत्र 'मितानि' जातेर्देवेषु मित्रः, वरुणः, इन्द्रः, नासत्यौ च विशिष्टाः अमी देवा आर्याणामेव । अतः प्रतीयते यत् आर्या एव केचन तत्राप्यवसन् ।

अस्य शिलालेखस्य समयः १४०० ई० पू० विद्यते । आर्याः प्राग् आर्यावर्त्ते स्वधर्मवेदांश्च स्थिरयित्वैव क्वचन गता भवेयुः, अतः १४०० ई० पूर्वतः प्रागेव वैदिकसभ्यतायाः उदयो मन्तव्यः, तदानीन्तनश्चैव वेदः सम्भवति । इत्थं वेदानां

काल: २००० ई० पू० सिद्धयति । अयं कालनिश्चयो तिलकस्य मतं सन्निकृष्टं करोति, अतोऽत्र वयमपि श्रद्धालवः । वस्तुतस्तु सर्वमपीदं सम्प्रत्ययवधि न निर्णीतम्, केवलमाशास्यते यत् यदा कदाचिदपि जाते निश्चये वेदाः पूर्वोदीरितकालतोऽपि पूर्वकालिका एव सेत्स्यन्तीति ।

## भूगर्भीयवैदिकतथ्यम्

भूगर्भसम्बन्धिनी घटना अवलम्ब्य ऋग्वेदीया रचनाया अथ च तत्कालवर्त्तिन्याः सभ्यतायाः प्रादुर्भूतायाः समयस्य निरूपणं कर्त्तुं शक्यते । तात्कालिकयुगे सिन्धुनद्यास्तटे आर्याणां यज्ञविधानं विशेषरूपेणाभवत् । अस्याः नद्याः विषये ऋग्वेदस्य कथनमस्ति यत् नदीषु पवित्रतमा नदी सरस्वती उन्नतगिरिशृङ्गान्निःसृत्य समुद्रे पतति—

**'एका चैतत् सरस्वती नदीनाम् ।**
**शुचिर्यती गिरिभ्य आसमुद्रात् ॥'** ( ऋग्वे० ७ । ९५।२ )

अपरस्मिन् मन्त्रे ( ३ । ३३ । २ ) सरस्वती-शुतुद्रिनद्योः गर्जयन्तीं सागरे पतनस्योल्लेखो मिलति । ऋग्वेदस्यानुशीलनेन प्रतीतो भवति यत् सम्प्रति यत्राधुनिकमेवाडप्रान्तस्य मरुभूमिरस्ति, तत्र प्राचीनकाले एकः समुद्रः आसीत् । तस्मिन्नेव समुद्रे हिमालयात् निःसृत्य सरस्वती एवं शुतुद्रि नद्यौ न्यपतताम् । ताण्ड्यब्राह्मणेन ( २५ । १० । ६ ) स्पष्टो भवति यत् सरस्वती 'विनशने' विलुप्तो भूत्वा पुनः 'प्लक्षप्रस्रवणे' आविर्भूताऽभवत् । ऋग्वेदस्यानुशीलनेन ज्ञातो भवति यदार्याणां निवासभूमिः सप्तसिन्धुनाम्ना ख्याताऽऽसीत् । तेषां वासभूमिमभितः समुद्राः सन्ति । ऋग्वेदस्यैकस्मिन् मन्त्रे (१० । १३६ । ५) सप्तसिन्धोः पूर्वस्यां पश्चिमायां च दिशि समुद्रद्वयस्योल्लेखो मिलति । येषु प्रतीच्यसागरः अद्यापि वर्त्तते किञ्च पूर्वीयसागरस्यास्तित्वबोधो न भवति । ऋग्वेदस्य द्वयोः मन्त्रयोश्चतुःसमुद्राणां निःसन्दिग्धरूपेण निर्देशो मिलति । प्रथममन्त्रे—

**'रायः समुद्राँश्चतुरोऽस्मभ्यं सोम विश्वतः आ पवस्व सहस्रिणः ॥'**
( ऋ० ९।३३।६ )

अपरस्मिन् मन्त्रे—

**'स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणाम् ॥'** ( १०।४७।२ )

अस्मिन् मन्त्रे स्पष्टतया चतुःसमुद्राणां उल्लेखो भवति । अनेन ज्ञातो भवति यदार्यप्रदेशं चतुर्दिक् समुद्राः वर्त्तन्ते ऋग्वेदीययुगे । एतेषु पूर्वीयसागरः आधुनिकबिहारोत्तरप्रदेशे आसीत्, दक्षिणसागरश्च राजस्थानस्य मरुभूमौ आसीत् । पश्चिमीयसागरः अद्यापि वर्त्तमानोऽस्ति । उत्तरीयसागरस्य स्थितिरुत्तरस्यां दिशि आसीत् । भूगर्भवेत्तॄणां मतानुसारेण एशियामहाद्वीपस्योत्तरस्यां दिशि बलख़सागरस्य तथा पारसीक( फारस )देशस्योत्तरस्यां दिशि विशालसागरस्य

सत्ता आसीत् । सागरोऽयं 'एशियाई भूमध्य सागर' इति नाम्ना ख्यातः आसीत् । उत्तरस्यां दिशि आर्कटिकमहासागरेण सह अयं सम्बद्ध आसीत् । अस्यैवावशिष्टरूपेणाधुना कृष्णसागरः अरालसागरस्तथा बाल्कशह्रद इति नाम्ना ख्याताः सन्ति ।

तेषु दिनेषु समस्तगङ्गप्रदेशः, हिमवतः पादभूमौ तथा असमप्रदेशस्य विस्तृतपर्वतीयक्षेत्रस्य सागरगर्भे आसीत् । कालान्तरे गङ्गा हिमालयात् निःसृत्य सामान्यनदीरूपेण हरिद्वारसमीपे पूर्वीयसागरे पततिस्म । अनेनैव कारणेन ऋग्वेदस्य प्रसिद्धनदीसूक्ते ( १०।७५ ) गङ्गाया अतिसङ्क्षिप्तवर्णनमस्ति । तस्मिन् काले पञ्चनदप्रदेशस्य दक्षिणपूर्वस्यां दिशि समुद्रः आसीत् येन कारणेन दक्षिणभारतः पृथक् पृथ्वीखण्ड इव प्रतीतोऽभवत् । तदा पञ्चनदप्रदेशे शीतस्य प्राबल्यमासीत् । अतः ऋग्वेदे वर्षस्य नाम 'हिमः' इत्यासीत् । "त्वभिड़ा 'शतहिमासि' 'दक्षसे त्वं वृत्रहा वसुपते सरस्वती' (१।६४।१४।२।१।११), एवं 'विद्वेषांसीनुहि वर्धयेडां मदेम 'शतहिमाः' सुवीराः" ( ६।१०।७ ) । भूतत्त्वज्ञानां विचारे भूसलिलयोरेते विभिन्नविभागास्तथा पञ्चनदप्रदेशे शीतकालस्य प्राबल्यं प्रमाणयन्ति यदियं वार्त्ता पूर्वपाषाणयुगस्य (Pre-palaeostocin) वा पाषाणयुगस्याऽस्ति । कालोऽयं खीष्टात् पञ्चाशत्सहस्रादारभ्य पञ्चविंशतिसहस्रमभिव्याप्य वर्त्तते । भूतत्त्वज्ञाः इदमपि स्वीकृतवन्तः यदस्मात्कालादनन्तरमेव सागरः राजस्थानं परित्यज्य बहिर्गतः । तदनन्तरमेव हिमनदीभिः समाहृतमृत्तिकाभिः गङ्गाप्रदेशस्य समतलभूमेः निर्माणमभवत् । पञ्चनदप्रदेशस्य जलवायौ उष्णता समागतेति । उपरि निर्दिष्टा भौगोलिकी तथा भूगर्भसम्बन्धिनीं घटनामाधारीकृत्य ऋग्वेदस्य रचनायास्तथा तात्कालिकसभ्यतायाः आविर्भावकालः पञ्चविंशतिसहस्रसंवत्सरपूर्वं निश्चीयते ।

**निष्कर्षः**—पण्डितदीनानाथशास्त्रीचुलेटस्तु स्वकीये 'वेदकालनिर्णय'संज्ञके ज्योतिस्तत्त्वमीमांसकग्रन्थे वेदकालमतितरां प्राचीनं साधयितुं श्लाघनीयं प्रयत्नं विदधानः समवाप्यते । तद्विचारेण क्षितौ वेदाख्यस्य प्रकाशस्यावतीर्णस्य लक्षत्रयसंवत्सराः व्यतीयुः । इत्थं वेदकालनिर्धारणे हि विदुषां विचारा विद्यन्ते तेषु नितान्तमेव भिन्नत्वं समुपलभ्यते ।

---

# षष्ठोऽध्यायः

## संहितासाहित्यम्

### वेद-विमर्शः

'वेद' इत्येतस्य पदस्य प्रयोगो मन्त्रब्राह्मणयोर्निमित्तेन विधीयते। आपस्तम्बे प्रोक्तञ्च—'मन्त्रब्राह्मणयोर्वेदनामधेयम्' ( आप० परिभाषा० ३१ )। येन हि यज्ञयागानामनुष्ठानं निष्पन्नतामुपैति देवतानाञ्च स्तुतिर्विधानं यत्रोल्लिखितमस्ति स 'मन्त्र' इति ( मननात् मन्त्रः ) इति प्रोच्यते। 'ब्राह्मणम्' इत्येतत्पदं ग्रन्थविशेषवाचकम्। यज्ञानां विविधक्रियाकलापप्रतिपादकग्रन्थाः 'ब्राह्मणम्' इत्येतां सञ्ज्ञां भजन्ते। तेन हि प्रधानतया द्विविधो वेदः—मन्त्ररूपो ब्राह्मणरूपश्च। मन्त्रसमुदाय एवात्र संहितापदेन व्यवहृतः। ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव। स चायं ब्राह्मणभागो यागस्वरूपबोधकतया प्रथितः। 'ब्राह्मणम्' इत्येतस्य पदस्य विविधार्थेषु—एकोऽर्थस्तु 'यज्ञः' 'बृह् वर्धने' धातोः निष्पन्नस्य ब्राह्मणशब्दस्यार्थोऽस्ति—वर्धनं, विस्तारो वा वितानो वा यज्ञ इति। ब्राह्मणमपि भागत्रये विभक्तमस्ति—प्रथमो भागः 'ब्राह्मणमि'ति, द्वितीयो भागः 'आरण्यकमि'ति किञ्च तृतीयो भाग 'उपनिषदि'ति कथ्यते। यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः। अरण्ये पठिताः यज्ञस्याध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि। उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि, अयमेव भागो वेदस्यान्तरूपतया 'वेदान्त' इत्युच्यते। ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम्, उपनिषद्भागश्च 'संन्यस्तानामुपयोगीत्यपि कथयितुं शक्यते।

वेदस्तु वस्तुतः एक एवास्ति। किञ्च स्वरूपभेदात् त्रिविधोऽस्ति—ऋग्वेदः, यजुर्वेदः, सामवेदश्चेति। 'वेदे तावदेकं सन्तम् अतिमहत्त्वाद दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः। सुखग्रहणाय व्यासेन समाम्नातवन्तः ( दुर्गाचार्यः निरुक्तवृत्तिः १।२० )।' सोऽयं वेदत्रयीति पदेन व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते। या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना सा सामेति कथ्यते। तदुक्तं जैमिनिना—'तेषामृग् यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुः शब्दः इति। (द्वितीयाध्याये प्रथमपादे ३२।३३।३८ सूत्राणि )।' यास्कस्तु—'ता ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्चेति भेदात् त्रिविधा। ऋक्शब्दोऽत्र मन्त्रवचनः। यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः यासु मध्यमपुरुषक्रियास्तास्तु प्रत्यक्षकृताः यासु चोत्तमपुरुषक्रियास्त आध्यात्मिक्यः इति।'

अतः यत्र कुत्राऽपि प्राचीनग्रन्थे वेदार्थे 'त्रयी'ति पदं प्रयुक्तं तत्र सर्वत्र रचनात्रैविध्यं मनसि निधाय बोध्यम् ।

यत्तु केचन **'ऋग्यजुःसामाख्यास्त्रय एव वेदाः पूर्वमासन्'** । तद्यथा—
**'अग्नेर्ऋचो वायोर्यजूंषि सामादित्यात्'** ( छा० ब्रा० ६ । १७ ) ।

**'अग्निवायुरविभ्यस्तु त्रयं ब्रह्मसनातनम् ।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥'** ( मनु० १ । १३ )

अतो वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदकृतः । किञ्च छान्दोग्योपनिषदि सनत्कुमारं प्रति नारदस्येयमुक्तिरपि द्रष्टव्या—

**'ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं सामवेदमाथर्वणं चतुर्थम् ।'**

अनेन वचनेन वेदस्य चतुर्थत्वमपि सिद्धयति । ऋग्वेदेऽपि अथर्ववेदस्य नामोल्लेखमस्ति । भगवता पतञ्जलिनाऽपि 'चत्वारो वेदाः साङ्गाः सरहस्याः' इति पस्पशाह्निके स्पष्टमुक्तम् । छान्दोग्यब्राह्मणे मनुस्मृतौ च यज्ञोपयोगिनो वेदा एव परामृष्टाः, नाभिचारिकसामवेद इति त्रित्वमेवोक्तम्, एवं परत्राऽपि । जैमिनिस्तु मन्त्राणां विप्रकारकतामेव लक्षितवान्, न वेदसंख्यां व्यवस्थापितवान् । अतो वेदाश्चत्वार एव, त्रयीति व्यवहारस्तु प्रकारकृतः । अथर्ववेदीयमन्त्रा अपि पूर्वोक्तप्रकारत्रयान्यतमरूपा एवेति । पूर्वमेव मया लिखितं मन्त्राणां समूह एव 'संहिता' इत्येतेन व्यपदेशेन व्यपदिश्यते । यज्ञानुष्ठानं दृष्टौ निधाय विभिन्नर्त्विजां कृते संहितानां सङ्कलनं वेदव्यासश्चकार । **'वेदान् विव्यास यस्मात् स वेदव्यास इति स्मृतः'** ( महाभारतः ) । मन्त्रसंहितानां सङ्कलनं चतुर्विधतया कृतम् । तस्मात् संहिताः सन्ति चतस्रः—ऋक्संहिता, यजुःसंहिता, सामसंहिता अथर्वसंहिता च । अत एव वेदाश्चत्वारः स्मृताः ।

'विद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः'—इति बह्वृक्प्रातिशाख्यम्, सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह । इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद इति भाष्यभूमिकायामुक्तम् । तत्र प्रमाणमपि तत्रैवोक्तम्—

**'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**
**एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥'**

आम्नायः, आगमः, श्रुतिः, वेदः इति सर्वे शब्दाः पर्यायाः । वेदाद् ब्रह्मधर्मयोः अथवा क्रियाज्ञानमयस्य ब्रह्मस्य ज्ञानं भवति । **'विदन्त्येभिः धर्मब्रह्मणी क्रियाज्ञानमयं ब्रह्म वा इति वेदः ।'** अनेन विग्रहेण वेदशब्दः **'विद् ज्ञाने'** धातोः करणे घञ्प्रत्ययात् निष्पन्नो भवति । रुधादिगणीय विचारार्थक विद्धातोरपि 'वेद' इत्येतत्पदस्य सिद्धिर्भवति । **'विन्ते—विचारयति धर्मब्रह्मणी क्रियाज्ञानमयं ब्रह्म वेति वेदः ।'** अस्मिन् पक्षे पचादित्वात् विद्धातोरच्प्रत्ययाद्वेदशब्दस्य सिद्धिर्भवेत् । **वेदे ब्रह्मविषयकविचारस्योदाहरणमेकं द्रष्टव्यम्—**

'किंस्विद्वनं क उत वृक्ष आस यतो द्यावापृथिवीनिष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदुतद्यदध्यतिष्ठत् भुवनानि धारयन् ॥'
(ऋ. ११ । ६ । ८१ । ४ ।)

अस्योत्तरमपि द्रष्टव्यम्—

**'ब्रह्मवनं स ब्रह्म स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वो ब्रह्माधितिष्ठत् भुवनानि धारयन् ।'**

(तैत्तिरीयब्राह्मणम्)

वेद इत्येतत्पदेन ऋग्-यजुरादिपद्यगद्यगीतिनिबद्धस्य ग्रन्थात्मकस्य पदार्थस्यैव बोधो भवति, अथवा एतदतिरिक्तस्य ऋगादिपदेन कस्याप्यन्यपदार्थस्याऽपि बोधो भवति ? अस्योत्तरं तु स्पष्टमेव—

**'यदेतन्मण्डलं तपति तन्महदुक्थम्, ता ऋचः स ऋचां लोकः । अथ यदेतद् अर्चिर्दीप्यते, तन्महाव्रतम्, तानि सामानि, स साम्नां लोकः । अथ य एष एतस्मिन् मण्डले पुरुषः सोऽग्निः तानि यजूंषि, स यजुषां लोकः । सैषा त्रय्येव विद्या तपति ।'** —शतपथब्राह्मणम् १० । ५

अनेन वचनेन सिद्धो भवति यद्ग्रन्थात्मकऋगाद्यतिरिक्तोऽपि ऋगादिसंज्ञकपदार्थस्यास्तित्वमस्ति । पदार्थोऽयम् 'वेद' इति पदेन व्यपदिश्यते । ऋगाद्यर्थमेव 'त्रयं ब्रह्म सनातनम्' (मनुस्मृतौ), 'सैषा त्रय्येव विद्या तपति' (शतपथब्राह्मणे), 'इति वेदास्त्रयस्त्रयी' (अमरकोषे)। इत्यादिवचनानुसारेण 'ब्रह्म', 'विद्या' एवं 'वेद' इति त्रयाणां शब्दानां प्रयोगो भवति । अस्यैवार्थस्य सम्पुष्टौ तैत्तिरीयब्राह्मणस्यापीयमुक्तिः द्रष्टव्या—

**'ऋग्भ्यो जातां सर्वशो मूर्त्तिमाहुः**
**सर्वागतिर्गायुषी हैव शश्वत् ।**
**सर्वं तेजः सामरूपं हि शश्वत्**
**सर्वं हीदं ब्रह्मणा हैव सृष्टम् ॥'**

'ऋच वाचं प्रपद्ये' अनेन वेदवाक्येन 'ऋक्'-पदमपि 'वाक्' इत्येतत्पदेन व्यपदिश्यते । तेन हि 'वाचीमा विश्वा भुवनान्यर्पिताः' एवं कथ्यते । ऋगात्मकवाचा एव त्रिभुवनस्योत्पत्तिरभूत् । 'मनो यजुः प्रपद्ये' इत्यनेन वेदवाक्येन 'यजुः' मनःस्वरूपोऽस्ति । इदं मनः स्थितिगतिशीलतत्त्वमस्ति ।

**'अयं वाव यजुर्योऽयं पवते, एष हि यन्नेवेदं सर्वं जनयति, एवं यन्तमिदमनु प्रजायते, तस्मात् वायुरेव यजुः (अयं वायुः पञ्चभूतान्तर्गतः स्थूलवायुः नास्ति) अयमेवाकाशोजूः ( आकाशोऽपि षड्भूतान्तर्गतः आकाशो नास्ति यदिदमन्तरिक्षं एवं ह्याकाशमनुजवते ), तदेतत् यजुर्वायुश्चान्तरिक्षं च, यच्च जूश्च । तस्मात् यजुरेष एव ह्येति' ।** (शतपथ०, का० १० अ० ३)

अतएवेदं कथितम्—यजुः रूपाग्निः ऋक्-सामयोः प्रतिष्ठितोऽस्ति । भावोऽयं ऋग्वेदस्येयमृच् प्रकटयति—

'अग्नि जागारतमृचः कामयन्ते ।
अग्नि जागारतमु सामानि यन्ति ।। ( ऋग्वेदः ५।४४।१५ )

अतएव सोमप्रधानाथर्ववेदस्यान्तर्भावः त्रयीवेदेष्वेव 'सैषा त्रय्येव विद्या तपति' एवं कथितम् । वस्तुतस्त्वथर्वानामकस्य सोमस्य तत्रोपस्थितिरस्ति तं विना क्षणार्द्धमपि सूर्यः तप्तुं न शक्यते ।

ऋग्वेदस्याथर्ववेदस्य च रचनायाः सम्बन्धं याज्ञिकानुष्ठानेन सह भवतु वा न भवतु किञ्च सामसंहितायाः यजुसंहितायाश्च निर्माणं तु यज्ञयागविधानार्थैवाऽस्ति । यज्ञ-यजनहेतवे चतुर्णामृत्विजामावश्यकता वरीवर्त्ति । हौत्रकर्मसम्पादनस्य श्रेयो 'होता'-नाम्नः ऋत्विजं भवति । अयं होता ऋग्वेदस्य ऋचां पठित्वा समुपयुक्तान् देवान् यज्ञे आह्वानं करोति । अयं 'याज्या' तथा 'अनुवाक्या' ऋचं पठति । अस्य पारिभाषिकं नाम 'शस्त्रम'स्ति ( **अप्रगीत-मन्त्र-साध्यास्तुतिः शस्त्रम्** ) ।

औद्गात्रकर्मसम्पादनाय 'उद्गाता'-नाम्नः ऋत्विजः विशिष्टकार्यमस्ति । अयमुद्गाता तत्तद्देवतानां स्तुतौ सामगायनं करोति । अस्य पारिभाषिकं नाम स्तोत्रमस्ति । अस्योद्गातुः सम्बन्धः सामवेदेन सहास्ति । उद्गात्रे आवश्यकानामृचां सङ्कलनं सामवेदसंहितायामस्ति । अस्य पारिभाषिकसंज्ञा 'योनिरि'त्यस्ति । उद्गातुर्विशिष्टकार्यस्य सिद्धयर्थं सामसंहितायां सङ्कलनमस्ति एतेषां मन्त्राणाम् । अध्वर्युरेव याज्ञिकमुख्यकर्मणः निष्पादकः प्रधानऋत्विग् भवति । तस्यैवाध्वर्यवकर्मणे यजुर्वेदसंहिता विभिन्नासु शाखासु सङ्कलिताऽस्ति । अध्वर्युः गद्यात्मकमन्त्राणामर्थात् यजुषामुपांशुरूपेणोच्चारणं कुर्वन् स्वविशिष्टकार्यस्य सम्पादनं करोति । 'ब्रह्मा'नाम्नः ऋत्विजः कार्यं यस्य बाह्यविघ्नेभ्यः त्राणमस्ति । अयं हि स्वराणां सम्भाव्यस्खलनस्य परिमार्जनं करोति । विविधदोषाणां दूरीकरणाय प्रायश्चित्तस्य विधानं करोति । अत एव ब्रह्मा यज्ञानामध्यक्षो भवति । अस्य प्रमुखकार्यं यज्ञानुष्ठानस्य पूर्णनिरीक्षणं त्रुटिपरिमार्जनञ्च भवति । अत एव सर्वत्र ब्रह्मणः गौरवं विशेषरूपेणोद्घोषितोऽभवत् । छान्दोग्ये ब्रह्मा यागाय 'भिषक्' इत्येतत्पदेन विभूषितोऽस्ति ( **भेषजकृतो ह वा एष यज्ञो यत्रैवं विद ब्रह्मा भवति**—छान्दो० ४ । १७ । ८) । यज्ञनिरीक्षणस्य प्रधानोऽयमभवत् । अयं वेदत्रयाणां ज्ञाता चासीत् । अस्य विशिष्टवेदस्त्वथर्ववेद एवासीत् । अनेन प्रकारेणैतेषां चतुर्णामृत्विजां विशिष्टकर्मणे आवश्यकमन्त्राणां सङ्कलनं, चतुर्षु वैदिकसंहितासु भवति । ऋग्वेदस्यैकस्मिन् मन्त्रे अस्य सिद्धान्तस्य सम्यक् सूचना मिलति—

**'ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां विमिमीत उत्वः ।।'** (ऋ० १० । ७१ । ११)

## (क) ऋक्संहिता

ऋच्यते स्तूयते यया सा ऋक् । तादृशीनामृचां समूह एव ऋग्वेदः । यत्रार्थवशेन पादव्यवस्था सा ऋगिति मीमांसकाः । चतुर्षु वेदेषु ऋग्वेदस्य गौरवं सर्वातिशायिनमस्ति । ऋग्वेदो हि धार्मिकस्तोत्राणामेको महान् विशालो निधिः । तत्र बहुभिर्भिन्नभिन्नैः ऋषिभिः सुललितैः भावभव्यैः शब्दैर्विभिन्ना देवताः सादरं स्तुताः सन्ति । पाश्चात्यदृशि भाषायाः भावस्य च विचारेणान्यवेदेभ्योऽतीवप्राचीनोऽस्त्ययमृग्वेदः । भारतीयदृष्ट्याऽपि ऋग्वेदस्याभ्यर्हितत्वं पूजनीयता च सर्वत्र स्वीकार्यमस्ति । तैत्तिरीयसंहितानुसारेण यज्ञस्य यद्विधानं क्रियते तत्तु शिथिलं भवति किञ्च ऋग्वेदेन विहितानुष्ठानं दृढम्भवति । यथा—

**'यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तत्, यदृचा तत् दृढमिति ।'**

( तै० सं० ६ । ५ । १० । ३ )

पुरुषसूक्तेऽपि यशोरूपी सहस्रशीर्षापरमेश्वरात् सर्वप्रथमः ऋचामेवाविर्भावोऽभवत् । यथा—

**'तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि यज्ञिरे ।**
**छन्दांसि यज्ञिरे तस्मात् यजुस्तम्मादजायत ॥'**

**ऋग्वेदस्य विभागः—**

यद्यपि महाभाष्ये ऋग्वेदस्यैकविंशतिशाखा निर्दिष्टाः परं शाकलवाष्कलाश्वलायनशांख्यायनमाण्डकायननामधेयाः पञ्चशाखा सन्ति मुख्याः । स ऋग्वेदः सूक्त-मण्डलभेदेन द्विधाः विभक्तः । तत्र सूक्तं चतुर्विधम्—ऋषिसूक्तदेवतासूक्तच्छन्दःसूक्तार्थसूक्तभेदात् । एकर्षिदृष्टमन्त्राणां समूहो ऋषिसूक्तम् । एकदेवताकमन्त्राणां समूहो देवतासूक्तम् । समानछन्दसां मन्त्राणां समूहो नामच्छन्दःसूक्तम् । यावदर्थसमाप्तानां मन्त्राणां समूहोऽर्थसूक्तम् । सुष्ठूक्तत्वात्सर्वं सूक्तमित्याख्यायते । ऋग्वेदः सोऽयं मण्डलानुवाकवर्गभेदेन अष्टकाध्यायसूक्तभेदेन च द्विधा । बालखिल्यसूक्तानि विहाय सम्पूर्णायां ऋग्वेदसंहितायां दशमण्डलानि, पञ्चाशीतिश्चानुवाका, अष्टोत्तरशतमिताश्च वर्गाः ( इति प्रथमो भेदः ), अष्टौ अष्टकानि, चतुःषष्टिरध्यायाः सप्तदशोत्तरसहस्राणि च सूक्तानि ( इति द्वतीयो भेदमार्गः ) । तद्यथा—

### ( १ ) तत्राष्टकक्रमः

समग्र ऋक्संहिता अष्टाष्टकेषु विभक्ताऽस्ति । प्रत्यष्टकमष्टाऽध्यायाः सन्ति । अनेन रूपेण सम्पूर्णऋग्वेदश्चतुःषष्ट्याध्यायेषु विभक्तोऽस्ति । प्रत्येकमध्यायस्यावान्तरविभागानां संज्ञा 'वर्ग' इत्यस्ति । स नवतः अध्ययनसौकर्याय एव विभागोऽयमस्ति । वर्गस्तु ऋचां समुदायस्य संज्ञाऽस्ति । किञ्च वर्गेषु ऋचां संख्याऽनिश्चितैवाऽस्ति । बहुधा पञ्चानां मन्त्राणामेको वर्गो भवति । किञ्चै-

कमन्त्रादारभ्य नवमन्त्रपर्यन्तस्य वर्गो मिलति । सम्पूर्णे ऋग्वेदे वर्गानां संख्या षडाधिकसहस्रद्वयमस्ति ।

## ( २ ) मण्डल-क्रमः

ऋग्वेदस्य द्वितीयोऽयं मण्डलक्रमविभागः ह्यतीवमहत्त्वपूर्णमस्ति । ऐतिहासिकदृष्टया किंवा वैज्ञानिकदृष्टया चाप्यस्य महत्त्वमस्ति । बालखिल्यसूक्तानि विहाय सम्पूर्णायामृग्वेदसंहितायां दशमण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरशतद्वयमिताश्च वर्गाः सन्ति । अत्र चानुवाकेषु सूक्तानि, सूक्तेषु मन्त्राश्च सन्ति । कात्यायनेन स्वकीयायां 'सर्वानुक्रमण्यां' सर्वेषामष्टकानां संख्याऽतीव परिश्रमेण निर्धारिता । अस्माकं प्राचीनाः ऋषयस्तु वेदानां विशुद्धये तेषु प्रयुक्तानामक्षराणामपि गणनां कृतवन्तः । मन्त्राश्च सर्वे दशसहस्रचतुःशतसप्तषष्टिमिताः ( १०४६७ ) इति शाकलः, शौनकानुक्रमणी तु दशसहस्रपञ्चाशताशीतिमितान् ( १०५८० ) मन्त्रान् आह । अत्र भेदे खिलभेदेन कालभेदेन वा मन्त्रवृद्धिलोपावेव हेतुतयोन्नेयौ भवतः । शब्दसंख्या—१५३८२६, अक्षरसंख्या—४३२००० । सर्वेऽपि मन्त्राः चतुर्दशसु छन्दःसु विभक्ता बोध्याः । ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः गृत्समदविश्वामित्रवामदेवात्रिभरद्वाजवशिष्ठादयः सन्ति । मण्डलानुसारेण सूक्तानां व्यवस्था निम्नप्रकारेणाऽस्ति—१९१+४३+६२+५८+८७+७५+१०४+९२+११४+१९१ । एतेषां सूक्तानामतिरिक्तानि एकादश सूक्तानि च बालखिल्यनाम्ना ख्यातानि सन्ति ।

एतेषां 'बालखिल्य'-सूक्तानां स्थानं तु अष्टममण्डलान्तर्गते एव स्वीकर्तुं शक्यते । अस्मिन्मण्डले प्रमुखसूक्तानि द्वानवतिस्सन्ति । खिलसूक्तानां सङ्कलनं कृत्वा तेषां संख्या त्रयोऽधिकशतम्भवति । खिलशब्दस्यार्थो भवति 'परिशिष्टम्' अथवा पश्चात्सङ्कलितमन्त्राः । स्वाध्यायकाले खिलपठनस्य व्यवस्था वर्त्तते । किञ्चैतेषां खिलमन्त्राणां न कुत्रापि पदपाठः समुपलब्धो भवति, न चाक्षरगणनायामेवैतेषां मन्त्राणां समावेशो भवति । एतेषां यथार्थरूपस्याऽपि बोधो न भवति । एतेषामृग्वेदे स्थानम् अष्टममण्डलस्यान्तराले ऊनपञ्चाशत्सूक्तादारभ्योनषष्टिः सूक्तपर्यन्तमस्ति । एतेषां मन्त्राणां संख्याऽशीतिरस्ति । अनुवाकानुक्रमण्यानुसारेण एतेषां मन्त्राणां संख्या दशसहस्रपञ्चाशताशीतिरस्ति—

**'ऋचां दशसहस्राणि ऋचां पञ्चशतानि च ।**
**ऋचामशीतिः पादश्च पारणं सम्प्रकीर्त्तितम् ॥' ४३ ॥**

( अनुवाकानुक्रमणी )

ऋचां शब्दानां सख्या १५३८२६ वर्त्तते । यथा—

**'शाकल्यदृष्टेः पदलक्षमेकं सार्धं च वेदे त्रिसहस्रयुक्तम् ।**
**शतानि चाष्टौ दशकद्वयं च पदानि षट् चेति हि चर्चितानि ॥'**

( अनु० ४५ )

तथा शब्दगताक्षराणां संख्या ४३२००० वर्त्तते। तद्यथा—

'स ऋचो व्यौहत्। द्वादशबृहतीसहस्राणि। एतावत्यौ ह्यर्चीयाः प्रजापतिसृष्टाः' ( शत० ब्रा० १०।४।२।२।२३ )।

'बृहतीच्छन्दः षट्त्रिंशदक्षराणां भवति। अतः १२००० × ३६ = ४३२००० भवति चत्वारिंशत्सहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि' ( अनु० अन्तिमे भागे )।

ऋग्वेदस्य शब्दाक्षरादीनां गणनाप्रसङ्गे यत्र तत्र पार्थक्योऽपि परिदृश्यते। मालावारीयेण नारायणभट्टेन विरचितः 'सूक्तश्लोकः' समुपलब्धो भवति। ग्रन्थेऽस्मिन् ऋग्वेदस्य वर्गाणां सूक्तानाञ्च संख्या निर्धारिताऽस्ति। वर्गसूक्तादीनां गणनाप्रतिपादकश्लोकस्तथा तद्विवरणञ्च निम्नरूपेणास्ति—

'जानन्नपि द्विषामोदं स यज्ञः पातनानरः।
रसं भिन्नाय मांसादो नरस्तस्य जलाधिपः॥

**नारायणभट्टेन दत्तमृग्वेदस्य विवरणम्—**

| | | |
|---|---|---|
| अष्टकानि | जानन् | ८ |
| मण्डलानि | अपि | १० |
| अध्यायाः | द्विषा | ६४ |
| अनुवाकाः | मोदं | ८५ |
| सूक्तानि | स यज्ञःपा | १०१७ |
| वर्गाः | तनानरः | २००६ |
| ऋचः | रसं भिन्नाय | १०४७२ |
| अर्धर्चः | मांसादो नरः | २०८७५ |
| शब्दाः | तस्य जलाधिपः | १५३८१६ |
| अक्षराः | | ३९४२२१ |

उपरिनिर्दिष्टायां संख्यायां बालखिल्यसूक्तानां गणना नास्ति, यदि तान्यपि ११ सूक्तानि, ८० ऋचः, १८ वर्गाः, ३०४४ अक्षराः अपि सङ्कलितो भवेत्तदा सूक्तानां संख्या १०२८, वर्गाः २०२४, ऋचः १०५५२ तथा अक्षराणि ३, ९७, २६५ भवेयुरिति ( द्रष्टव्यः—जर्नल आफ ओरियन्टल रिसर्च खण्ड ८, संख्या ४, १९३४ मद्रासः, तथा ऋग्वेदसंहिता, सं० श्रीपाद दामोदर शातवलेकर औध १९४० ई० पृ० सं० ७६७-७६८ )।

**ऋग्वेदीयानाम् ऋचां संख्या—**

ऋग्वेदे ऋङ्मन्त्राणां गणनाऽप्येका विषमैव समस्या वर्त्तते। अस्याः गणनायाः समाधानं प्राचीनैरर्वाचीनैश्च विद्वद्भिः कृतम्। प्राचीनाचार्याणां गणनावैषम्यन्तु शाखाभेदजन्यमेवाऽस्ति, किञ्चार्वाचीनानां गणनावैषम्यं भ्रमजनितमेवाऽस्ति। अस्य भ्रमोदयस्य कारणमस्ति—ऋग्वेदे कियत्यः ऋचः

एवंविधाः सन्ति या ऋचः अध्ययनकाले चतुष्पदा भवन्ति किञ्च प्रयोगकाले द्विपदा एव मन्यन्ते । ऋक्सर्वानुक्रमण्यामस्योल्लेखो मिलति—द्विर्द्विपदास्त्वृचः समामनन्ति' अस्य सूत्रस्य व्याख्यायां षड्गुरुशिष्यस्य स्पष्टकथनमस्ति— **'ऋचोऽध्ययने तु अध्येतारो द्वे द्वे द्विपदे एकैकामृचं कृत्वा समामनन्ति अधीयरन्। समामनन्तीति वचनात् शंसनादौ न भवन्ति। तेन पश्वान वायुम् ( ऋ० १।६५ ) इति शंसने दशर्चत्वम् । आसामध्ययने तु पञ्चत्वं भवति ।'**

सायणभाष्येऽपि अस्योल्लेखो मिलति । चरणव्यूहस्य टीकाकर्त्ता महिमदासेनाऽपि पूर्वोक्तकथनस्य समर्थनं कृतम् । एतादृशः ऋचः 'नैमित्तिकद्विपदाः' कथ्यन्ते । ऋग्वेदे नित्यद्विपदाऽपि ऋचः सन्ति । ता गणनायां सप्तदशा एव सन्ति । एताः द्विपदाः कदाचिदपि निजस्वरूपात् वञ्चिता न भवन्ति । अस्या एव द्विपदायाः नित्यनैमित्तिकद्विपदाया वास्तविकस्वरूपस्य परिचयाभावात् मैक्समूलर-मैकडोनलप्रभृतीनां आँग्लवेदज्ञानां गणना भ्रान्ताऽभवत् । लौगाक्षिस्मृत्यनुसारेण समस्तानां शाखासूपलब्धानाम् ऋचां संख्या १०५८०$\frac{1}{4}$ वर्त्तते । ऋग्वेदस्य संहितायां त्रयाणां छन्दसां प्रचुरता विद्यते । येषु 'त्रिष्टुप्'-छन्दसः संख्या सर्वातिशायी वर्त्तते । अस्मिन् छन्दसि चत्वारः पादाः भवन्ति । प्रतिपादे एकादश अक्षराणि भवन्ति । अस्यां संहितायां ४२५१ त्रिष्टुप्छन्दांसि सन्ति । तदनन्तरं गायत्रीच्छन्दसः स्थानम् आयाति । अस्मिन् छन्दसि त्रयः पादाः भवन्ति । प्रतिपादं अष्टाक्षराणि भवन्ति । अस्य छन्दसः समस्ता संख्या २४४९ वर्त्तते । तदनन्तरं जगतीच्छन्दसः स्थानं भवति । अस्मिन् छन्दसि चत्वारः पादाः भवन्ति । प्रतिपादं द्वादशाक्षराणि सन्ति । अस्य छन्दसः संख्याऽत्र १,३४६ वर्त्तते । शेषभागे अनुष्टुप् ८५८, पंक्तिः ४९८, उष्णिक् ३९८, बृहती ३७१, वर्त्तन्ते ।

## वंशमण्डलम्

पाश्चात्यविदुषां मते ऋग्वेदस्य मण्डलेषु प्राचीनार्वाचीनमन्त्राणां समुदायः सङ्कलितोऽस्ति । द्वितीयमण्डलादारभ्य सप्तममण्डलपर्यन्तस्य भागाः ऋग्वेदस्य केन्द्रीयभागाः कथ्यन्ते, अत एव एते अंशाः अत्यन्तं प्राचीनाः सन्ति । एतेषु प्रत्येकं मण्डलस्य सम्बन्धं केनाऽपि ऋषिणा तद्वंशजेन सह वा निश्चितरूपेण समुपलब्धो भवति । द्वितीयमण्डलस्य ऋषिरस्ति गृत्समदः, तृतीयस्य विश्वामित्रः, चतुर्थस्य वामदेवः, पञ्चमस्य अत्रिः, षष्ठस्य भरद्वाजः, सप्तमस्य वशिष्ठः, ऋषयः सन्ति । अष्टममण्डलस्य मन्त्राणामृषिः कण्वस्तथाङ्गिरसवंशोद्भवाः सन्ति । नवममण्डलेऽखिलाः मन्त्राः सोमदेवताविषयका एव सन्ति । वंशविशेषेण सम्बन्धत्वेन एतानि मण्डलानि आंग्लभाषायां वंशमण्डलम् ( Family book ) इति कथ्यन्ते । वैदिकार्यगणाः हिमप्रदेशे समुत्पन्ना सोमलताया रसं स्वेष्टदेवतां समर्प्य स्वयमपि प्रसादरूपेण ग्रहणं कुर्वन्ति । सोमरसपानेन समु-

त्पन्नस्यानेकविधाऽऽनन्दोल्लासस्य ललितवर्णनमनेकानां वैदिकसूक्तानां विषयमस्ति । सोम एव पवमानोऽपि कथ्यते । अतः सोमविषयकमन्त्राणां समुच्चयेन नवममण्डलं 'पवमानमण्डलमि'ति पदेनापि व्यवह्रियते । प्रथममण्डलं तथा दशममण्डलमपि अन्येषां मण्डलानामपेक्षयाऽर्वाचीनौ स्तः । उभयोर्मण्डलयोः सूक्तानां समानसंख्या ( १९१ सू० ) याः किमपि महत्त्वमस्ति । किञ्च भारतीयाः गृत्समदविश्वामित्रवामदेवात्रिभरद्वाजवसिष्ठादयः ऋग्वेदमन्त्रद्रष्टारो ऋषय एव मन्यन्ते । ऋग्वेदस्य दशसु मण्डलेषु नवमं मण्डलं पवमानमण्डलनाम्ना प्रथितम् । तत्र हि केवलं सोमविषयकमन्त्राणां सङ्कलनं कृतम् । अस्य चर्चाऽस्मिन्नेवानुच्छेदे कृतं मया । पवमानः—सोमः । पूर्वोक्ताः सप्ताऽपि मन्त्रद्रष्टारो ऋषयो द्वितीयमण्डलतः सप्तममण्डलपर्यन्तगताभिर्ऋग्भिः सम्बद्धाः, दशममण्डले मन्त्रा नानाऋषिसम्बद्धाः । दशमे मण्डले न केवलं देवता स्तुतय एव, अन्यप्रकारका अपि मन्त्राः दृश्यन्ते ।

द्वितीयमण्डलादारभ्य सप्तममण्डलपर्यन्तस्य ऋग्वेदभागस्य रचना सर्वतः प्राचीना, दशमं मण्डलं सर्वतोऽर्वाचीनम्, शेषाणि मध्यकालिकानीति साम्प्रतिका आङ्ग्लाऽऽलोचकाः कथयन्ति ।

किञ्च भारतीयपरम्परितानां विदुषां मतमेतद्भिन्नमस्ति । ऋग्वेदस्य दशसु मण्डलेषु चर्चितानामृषीणां विषये कात्यायनस्येयमुक्तिः द्रष्टव्या—

**'शर्तर्चिन आद्ये मण्डलेऽन्त्ये क्षुद्रसूक्तमहासूक्ता मध्यमेषु माध्यमाः'** । तेन हि प्रथममण्डलस्य ऋषिः 'शर्तर्चिनः' एव कथ्यते । अस्य मण्डलस्य प्रथमः ऋषिः विश्वामित्रस्य पुत्रः मधुच्छन्दा नाम्ना ऋषिणा दृष्टा ऋचः शताधिकैवासन् । अतः छत्रिन्यायानुसारेण समस्तानां ऋषीणां समानाभिधानं 'शर्तर्चिनः' एवाऽभवत् ।

**'आद्यस्य ऋचेर्ऋक्शतयोगेन छत्रिन्यायेन शर्तर्चिनः सर्वे । द्व्यधिकेऽपि शतोक्तिर्बाहुल्यात् ।'** ( वेदार्थदीपिका पृ० ५९ )

दशममण्डलस्य ऋषिः 'क्षुद्रसूक्तम्' महासूक्तञ्च कथ्यते । षड्गुरुशिष्यस्य विवेचनानुसारेण नासदासीयसूक्तात् ( १०।१२९ ) पूर्ववर्तीनि सूक्तानि महासूक्तमिति कथ्यन्ते, परवर्तीनि च क्षुद्रसूक्तं मन्यन्ते । सूक्तदर्शित्वेन ऋषीणां नामकरणमपि तदैवाऽभवत् । द्वितीयमण्डलादारभ्य नवममण्डलपर्यन्तं मध्यस्थितत्वेन तत्रत्याः ऋषिगणा अपि 'माध्यम' इति नाम्ना व्यपदिश्यन्ते ।

## ऋग्वेदीयशाखाः

यज्ञस्यावश्यकतामभिलक्ष्योदात्तदृष्टया महामुनिना व्यासेन स्वचतुरः शिष्यान् वेदमध्यापितः । यज्ञे चत्वारो ऋत्विजो भवन्ति–१. होता, २. अध्वर्युः, ३. उद्गाता, ४. ब्रह्मा । होता—आह्वानकर्त्ता, स हि यज्ञावसरे प्रक्रान्तदेवतानां प्रशंसायां रचितान् मन्त्रान् उच्चारयन् देवताम् आह्वयति, तत्कार्याय सङ्कलिताः मन्त्राः स्तुतिरूपतया ऋचः समाख्याताः, तेषां सङ्ग्रह एव ऋग्वेदः । एनमुद्दिश्य-

मभिलक्ष्य व्यासः पेलमृग्वेदं पाठयामास । अध्वर्युर्विधिवद्यज्ञं सम्पादयति, तत्राव-श्यकमन्त्रा यजूंषि, तत्सङ्ग्रहो यजुर्वेदस्तदर्थं वैशम्पायनं यजुः पाठितः । उद्गाता—उच्चस्वरेण गानकर्त्ता, स हि स्वरबद्धान् मन्त्रानुच्चैर्गायति, तदपेक्षितमन्त्राणां सङ्ग्रहः सामवेदः । व्यासेन कविर्जैमिनिः सामवेदमध्यापितः । ब्रह्मा—यज्ञ-निरीक्षकः कृताकृतावेक्षणकर्ता, स हि सर्वविधमन्त्रज्ञः, तदपेक्षितो मन्त्रराशि-रथर्ववेद इति कथ्यते । यज्ञनिरीक्षणकार्यसम्पादनाय मुनिना व्यासेन सुमन्तु-मुनिमथर्ववेदं पाठितः ।

**'तदृग्वेदधरः पैलः सामगो जैमिनिः कविः ।**
**वैशम्पायन एवैको निष्णातो यजुषामुत ।**
**अथर्वाङ्गिरसामासीत् सुमन्तुर्दारुणो मुनिः ॥'**

( नाग० पुरा० १ । ४ । २१ )

शाखया सह 'चरण'-शब्दोऽपि सम्बद्धोऽस्ति । अधुना उभयोः शब्दयोः प्रयोगः प्रायः समानार्थे एव भवति । मालतीमाधवस्य टीकाकर्त्तुर्जगद्धरस्य कथ-नानुसारेण—**'चरणशब्दः शाखाविशेषाध्ययन-परैकतापन्नजटासंघवाची'** । आसां शाखानां विस्तृतविवरणं पुराणेषु चरणव्यूहे च मिलति । विविधेषु ग्रन्थेषु शाखासंख्यायां विपर्ययो वर्त्तते । भाष्यकारेण पतञ्जलिनोक्तम्—**'चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः । एकशतमध्वर्युशाखाः । सहस्रवर्त्मा सामवेदः । एकविंशतिधा वाह्वृच्यम् । नवधाऽथर्वणो वेदः'** ( पस्पशाह्निकः ) ।

यद्यपि महाभाष्ये ऋग्वेदस्यैकविंशतिशाखा निर्दिष्टाः परं शाकलवाष्कला-श्वलायनशाङ्खायन-माण्डकायननामधेयाः पञ्चशाखाः सन्ति मुख्याः ।

## ( १ ) शाकल-शाखा

सम्प्रति ऋग्वेदस्य प्रचलिता संहिता शाकलशाखीया एवाऽस्ति । शाकल-संहितान्ते ऋक्परिशिष्टनाम्ना षट्त्रिंशत्सूक्तानि सङ्गृहीतानि सन्ति । एतेषु सूक्तेषु कतिपयानि नितान्तप्रख्यातानि बहुशः चर्चितानि च सूक्तानि सन्ति । यथा—श्रीसूक्तम् ( सू० स० ११ ), रात्रिसूक्तम् ( सू० स० २६ ), मेधासूक्तम् ( सू० स० ३१ ), शिवसङ्कल्पसूक्तम् ( सू० स० ३३ ) । अस्य सूक्तस्य प्रत्येकं मन्त्रस्य चतुर्थचरणः 'तन्मे मनः शिवसङ्कल्पमस्तु' इत्येतत्पदेन समाप्तो भवति । वाष्कल-शाखानुसारेण 'संज्ञानसूक्तम्' ऋग्वेदस्यान्तिमं सूक्तमस्ति । ऋक्परिशिष्टस्य मन्त्राः पुराणेषु वैदिकमन्त्रदृष्ट्या समुद्धृताः सन्ति । श्रीसूक्तस्य द्वौ मन्त्रौ—'हिरण्यवर्णां हरिणीम्' तथा 'गन्धद्वारां दुराधर्षाम्' पद्मपुराणे समुद्धृतौ स्तः ( ६।१५५।२८।३० ) 'सितासिते सरिते यत्र सङ्गते' स्कन्दपुराणस्य काशीखण्डे ( ७ । ४४ ) तथा पद्मपुराणे (६।२४६।३५ ), समुद्धृतोऽस्ति । द्वयोः स्थानयोः मन्त्रोऽयं प्रयागपरकोऽस्ति । प्रयागे सिता = गङ्गा, तथा असिता = यमुना तयोः सङ्गमतीर्थस्य विपुलमहिम्नः प्रतिपादकः मन्त्रोऽयमस्ति । ऋक्परिशिष्टस्य मन्त्राः पुराणेषु प्रमाणाय समुद्धृताः सन्ति, तेन एते मन्त्राः विशेषसम्मान्नार्हाः कथ्यन्ते ।

## ( २ ) वाष्कलशाखा

यद्यपि सम्प्रति वाष्कलशाखायाः संहिता समुपलब्धा न भवति तथाप्यस्याः विशिष्टतायाः वर्णनं विविधेषु स्थलेषु मिलति। शाकलशाखानुसारेण ऋग्वेदस्यान्तिमो मन्त्रः 'समानी व आकूतिः' ( १० । १९१ । ४ ) अस्ति, किञ्च वाष्कलसंहितानुसारेण 'तच्छं योरावृणीमहे' इत्येवान्तिमो मन्त्रोऽस्ति। इयं ऋक् ऋक्परिशिष्टस्यान्तिमसूक्तस्यान्तिमो मन्त्रोऽस्ति। अस्मादेव सूक्तात् वाष्कलशाखासम्मत-संहितायाः समाप्तिर्भवति। मन्त्राणां संख्याऽपि कुतश्चिदधिकाऽस्ति। शाकलशाखायां सप्तदशाधिकसहस्रसंख्यकानि ( १०१७ ) सूक्तानि सन्ति। किञ्च वाष्कलशाखायां पञ्चविंशत्यधिकसहस्रसंख्यकानि ( १०२५ ) सूक्तानि सन्ति। एतेष्वधिकाष्टसूक्तेषु एकन्तु संज्ञानसूक्तमस्ति। मन्त्रोऽयमस्याः संहितायाः अन्ते निवेशितोऽस्ति। अवशिष्टसप्तसूक्तानि बालखिल्यसूक्तेभ्यः सङ्गृहीतानि सन्ति। अतोऽस्य मण्डलस्य समस्तसूक्तानां संख्या ( ९९ ) नवनवतिर्भवति।

**'एतत् सहस्रं दश सप्त चैवाष्टवतो बाष्कलकेऽधिकानि।**
**तान् पारणे शाकले शैशिरीये वदन्ति शिष्टानखिलेषु विप्राः॥'**

( अनुवाकानुक्रमणी, श्लो० ३६ )

## ( ३ ) आश्वलायनशाखा

आश्वलायनसंहितायास्तथा तेषां ब्राह्मणानां कस्मिंश्चित्समयेऽवश्यमेवासीत्। यतो हि कवीन्द्राचार्यस्य ( १७ शताब्द्याः ) सूच्यामेतेषां ग्रन्थानां नामोल्लेखः स्पष्टरूपेणोपलब्धो भवति। सम्प्रति अस्याः शाखायाः गृह्यसूत्रं श्रौतसूत्रञ्चेति समुपलब्धौ स्तः।

## ( ४ ) शाङ्खायनशाखा

अस्याः शाखायाः संहिता तु अनुपलब्धाऽस्ति। किञ्च ब्राह्मणारण्यकौ ग्रन्थौ प्रकाशितौ स्तः। बहूनामालोचकानां विचारे शाङ्खायनस्तथा कौषीतकि शाखा एकैवाऽस्ति, किञ्च द्वेऽपि शाखे भिन्ने एव स्तः। शाङ्खायनीयसंहितायाः प्रकाशितशाकलशाखानुयायि ऋक्संहितायाः मन्त्रसंहितायां भेदो नाऽस्ति। केवलं मन्त्राणां एव क्रमे विभिन्नता वर्त्तते।

## ( ५ ) माण्डूकायनशाखा

अस्या अपि शाखायाः ग्रन्था अनुपलब्धाः सन्ति। यत्र तत्र समुद्धरणादेवास्यास्तित्वबोधो भवति। द्रष्टव्यः—Dr. Gangasagar Rai—'Shakhas of the Rigveda in the Puranas' Puranam' Vol. vi, No I P. P. 235-253.। यस्मिन् विषये अपरोऽपि ग्रन्थो द्रष्टव्यः—**वैदिकवाङ्मय का इतिहास**—प्र० भा० पृ० ७७-१३२।

## ऋग्वेदस्य विषय-विवेचनम्

ऋग्वेदो धार्मिकस्तोत्राणामेको महान् विशालो निधिः। तत्र बहुभिर्भिन्न-भिन्नै ऋषिभिः सुललितैः भावभव्यैः शब्दैर्विभिन्ना देवताः सादरं स्तुताः सन्ति। पूर्वमेव कथितं यद् द्वितीयमण्डलादारभ्य सप्तममण्डलपर्यन्तम् एकैव विशिष्ट-कुलस्य ऋषीणां प्रार्थना सङ्कलिताऽस्ति। अष्टममण्डलेऽधिकतराः मन्त्राः कण्व-ऋषिणा सह सम्बद्धोऽस्ति। नवममण्डले पवमानस्य अर्थात् सोमस्य विषये विभिन्नैः ऋषिकुलैः मन्त्राणां सङ्ग्रहोऽस्ति। ऋग्वेदीयदेवतासु त्रयो देवाः स्व-वैशिष्टचेन नितान्तप्रसिद्धाः सन्ति। यास्को वदति यत् देवतासु काश्चन पृथवी-स्थानीयाः, काश्चन अन्तरिक्षस्थानीयाः, काश्चन द्युस्थानीयाः सन्ति। पृथिवी-स्थानीयदेवतासु अग्निदेवता, अन्तरिक्षस्थानीयासु इन्द्रदेवता, द्युस्थानीयासु सूर्यवरुणप्रभृतिदेवताः सन्ति महीयस्यः। **'तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः, सूर्यो द्युस्थानः'** ( नि० ७-५ )। अग्नये सर्वाधिका ऋचः सन्ति। विजयप्रदातृत्वेनेन्द्रः सर्वाधिकैरोजस्विभिः तथा वीररसमण्डितैर्मन्त्रैः संस्तुतोऽस्ति। वरुणस्तु कर्मफलदातृत्वेन परमेश्वरस्य विशिष्टरूपेण चित्रितोऽस्ति। सर्वोच्चोदात्तभावनामण्डिता ऋचः वरुणविषये एव समुपलब्धाः भवन्ति। देवीषु उषायाः स्थानमग्रगण्यमस्ति। सर्वाधिक-कवित्वमण्डिताः, प्रतिभाशालिन्यः, सौन्दर्याभिव्यञ्जकाः ऋचः उषादेव्या विषये एव समुपलब्धाः भवन्ति। यथा—

**'अभ्रातेव पुंस एति गर्त्ता रुगिव सनये धनानाम्।**
**जायेव पत्य उशती सुवासा ह्रस्वेव निरीणीते अप्सः॥'**

× × ×

**'कन्येव तन्वा शासदाना एषिदेवि देवभिपक्षमाणम्।**
**सरमयमाना युवतीपुरस्तादानिर्वशांसि कृणुषे विभाति॥'**

( ऋ० १। २३। १०। )

एतदतिरिक्ताः संस्तुताः देवताः—सविता-पूषा-मित्र-विष्णु-रुद्र-मरुत्-पर्जन्य-प्रभृतयः सन्ति।

### दशममण्डलस्यार्वाचीनत्वम्—

दशमं मण्डलं सर्वतोऽर्वाचीनं मण्डलं वर्त्तते। कारणञ्चास्य वंशमण्डलात् भाषागतविभेदं तथा विषयगतविभिन्नता एव।

## भाषागतभेदम्

ऋग्वेदस्य प्राचीनतमांशे शब्देषु रकारस्य स्थितिर्वर्त्तते। भाषाविदामियं मान्यताऽस्ति संस्कृतभाषा यथैव विकसिता भवति तथैव तस्या रेफस्य स्थाने लकारस्य प्रयोगो वर्द्धते। जल-वाचकस्य 'सलिल'-शब्दस्य प्राचीनरूपम् 'सरिर' इति पदं गोत्रमण्डलेषु प्रयुक्तोऽस्ति। किञ्च दशममण्डले लकारयुक्तशब्दस्यैव

प्रयोगो मिलति । वैयाकरणस्वरूपेऽपि पार्थक्यं परिलक्ष्यते । प्राचीनांशे पुंल्लिङ्ग-आकारान्तशब्देषु प्रथमाद्विवचनस्य प्रत्ययः 'आ' इत्येवास्ति । यथा—**'द्वा सुपर्णा सयुजा सखाया'** ( ऋ० वे० १ । १६१ ) । किञ्च दशममण्डले तस्मिन् स्थाने 'औ' इति प्रत्ययस्यापि प्रयोगो मिलति । यथा—**'मा वामेतौ मा परेतौ रिषाम्'** ऋ० १० । १७८ । २ ), **सूर्याचन्द्रमसौ धाता'** १० । १९० । ३ ) । प्राचीनांशे क्रियार्थकक्रियायाः सूचनार्थं तवै, से, असे, अध्यै प्रभृति-प्रत्ययाः प्रयुक्ताः सन्ति, किञ्च दशममण्डलेऽधिकतरः तुमिति प्रत्ययस्यैव प्रयोगो मिलति । 'कर्त्तवै, 'जीवसे, अवसे' इत्यादिप्राचीनपदानां स्थाने दशममण्डले 'कर्त्तुम्, जीवितुम्, अवितुम्' इत्यादिप्रयोगानां प्राचुर्यं परिलक्ष्यते । भाषागतविशिष्टता ब्राह्मण-ग्रन्थानां भाषया सह समानत्वेन दशममण्डलम् एतेषां ग्रन्थानां कालक्रमे प्राचीनः प्रतीतो न भवतीति ।

## छन्दोगतवैशिष्टयम्

प्राचीनांशेषूपलब्धानां छन्दसामपेक्षया दशममण्डलस्य छन्दःसु पार्थक्य-मस्ति । प्राचीनकाले वर्णानां संख्याया उपरि छन्दोविन्यासे एव विशेषमाग्रह-मासीत् । किञ्च दशममण्डले लघु-गुरूणामप्युचितविन्यासेऽपि सर्वत्र विशेषबलं परिदृश्यते । येन पद्यानां पठने सुस्वरस्य लयस्य चाविर्भावोऽतीव रुचिरतया सम्प-द्यते । फलतः प्राचीनानुष्टुप् दशममण्डले लौकिकसंस्कृतस्यानुष्टुप् इवाऽभवत् ।

## देवगतवैशिष्टयम्

ऋग्वेदे हि देवताः प्राणशालित्वात् 'असुर' इति प्रोक्ताः । अस्मिन् वेदे देव-तानां स्थानमतीव महत्त्वपूर्णमस्ति । वैदिककालस्य महर्षयः प्रकृतिदेव्याः नाना-लीलावधारयितुं विभिन्ना देवता अकल्पयन् । किञ्च दशममण्डलेषूल्लिखितेषु देवेषु बहवो नवीनास्तथाऽनिर्दिष्टपूर्वा देवताः सन्निविष्टा अभूवन् । दृष्टपूर्व-देवानां स्वरूपेऽपि रूपपरिवर्तनं दृष्टिगतो भवति । वरुणः समस्तजगतां नियन्ता, सर्वज्ञः, सर्वशक्तिमान् देवस्वरूपेण पूर्वं चित्रितोऽस्ति, किञ्चाऽस्मिन् मण्डले तस्य शासनक्षेत्रं सङ्कीर्णो भूत्वा जलमात्रमवशिष्टमस्ति । विश्वनियन्तृपदादप-सृत्य जलदेवतास्वरूपेणैव दृग्गोचरो भवति । कतिपयाः मानसिकभावनायाः, मानसिकवृत्त्याश्च प्रतिनिधिस्वरूपेऽभिनवा देवाः कल्पिताः सन्ति । एतादृक्षु देवेषु 'श्रद्धा' ( ऋ० १० । १५१ ), 'मन्युः' ( १० । ८३ । ८४ ) प्रभृतयः परिकल्पिताः सन्ति । तार्क्ष्यस्याऽपि स्तुतिरेकस्मिन् स्थाने देवतारूपे एवोपलब्धा भवति ( ऋ० १० । १७८ ) । कामायनीश्रद्धाया अतीव रोचकवर्णनमेकस्मिन् सूक्ते मिलति—

**'श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।**
**श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ।।'**

श्रद्धया अग्नेः समिन्धनं भवति, अर्थात् ज्ञानाग्नेः प्रज्वलनं श्रद्धया एव भवति । हवेः हवनमपि श्रद्धया एव सम्भवति । ऐश्वर्यस्योर्ध्वस्थानोपरिनिवा-

साय वयं वचसा श्रद्धायाः स्तुतिं कुर्मः। गोः स्तुतौ प्रयुक्तमेकं समग्रसूक्तं (१०।१६९) वैदिकआर्याणां गोविषयिणीभावनामतीव सुष्ठु शब्देनाभिव्यक्तं करोति। अरण्यानी देव्याः स्तुतिः (१०।१४६) विषयस्य नवीनता हेतुनाऽतीवाकर्षकाऽस्ति (१०।७१)। सूक्तेऽस्मिन् वय ज्ञानमेकं महनीयदेवरूपे आर्येषु प्रतिष्ठितः प्राप्नुमः। अस्यैव सूक्तस्य प्रख्यातमन्त्रे (१०।७१।११) यज्ञसम्पादकानां चतुर्णामृत्विजां—होता, अध्वर्युः, उद्गाताः, ब्रह्मादीनां स्पष्टः सङ्केतो मिलति।

## दार्शनिकतथ्यानामाविष्कारः

अस्मिन् मण्डलेऽनेकविधानि दार्शनिकसूक्तानि समुपलब्धानि सन्ति। सूक्तान्येतानि स्वविचारधारया आर्याणां तात्त्विकचिन्तनविकासस्य सूचकानि सन्ति। एतानि चोत्तरकालिकानि प्रतीतानि भवन्ति। एवंविधेषु सूक्तेषु नासदीयसूक्तम् (१०।१२९) तथा पुरुषसूक्तम् (१०।९०) विशेषरूपेण समुल्लेखनीयमस्ति। पुरुषसूक्ते सर्वेश्वरवादस्य स्पष्टत उल्लेखो मिलति। सूक्तमिदं प्रौढविचारधारायाः प्रतिपादकत्वेनोत्तरकालिकं तथाऽपेक्षाकृतमर्वाचीनं प्रतीतो भवति। पाश्चात्यविदुषां विचारे धार्मिकविचारस्य क्रमः अनेन प्रकारेणास्ति—सर्वप्रथमः बहुदेववादस्तत्पश्चात् एकदेववादस्ततपश्चात् सर्वेश्वरवादः। प्राचीनकाले आर्याणां विश्वासः बहुदेवसत्तायामासीत्। अग्रे गत्वा तदेव विश्वासः हिरण्यगर्भरूपात् परिणतीभूय सर्वेश्वरवादे स्थिरोऽभवत्। अस्य विकासस्यान्तिमे द्वे कोटी दशममण्डले समुपलब्धे स्तः। फलतस्तस्य गोत्रमण्डलादभिनवत्वं स्वाभाविकमेव।

## विषयस्य नूतनत्वम्

मण्डलेऽस्मिन् बहूनि भौतिकविषयसम्बद्धानि आध्यात्मिकविचारधारया च संवलितानि सूक्तानि सन्ति। भौतिकविषयेषु श्राद्धस्य विवाहस्य च स्थानमग्रगण्यमस्ति। ऋग्वेदस्य १०।८५ सूक्ते सूर्यायाः पाणि-ग्रहणप्रसङ्गः अतीवकौतूहलवर्द्धकोऽस्ति। 'सूर्या' उषायाः अपरपर्यायवाची शब्दोऽस्ति। उषाया विवाहः सोमेन सह भवति। अश्विनो विवाहेऽस्मिन् घटकस्य कार्यं करोति। सूक्तमिदं साहित्यिकदृष्टयाऽतीव सुन्दरं तथा सामाजिकदृष्टयाऽत्यन्तरोचकमस्ति। गृह्यसूक्तेऽस्यैव सूक्तस्य मन्त्राणां विनियोगस्तथा प्रयोगो विवाहकाले भवति। अस्मिन् सूक्ते वैवाहिकभौतिकरूपेण सहाध्यात्मिकरूपस्यापि सुष्ठु निरूपणमस्ति। समग्रसूक्तमिदं कोमलभावनया सुसम्पृक्तमस्ति। सुष्ठु दाम्पत्यजीवनाय प्रजासमृद्धचर्थञ्चोपेदेशः प्रदत्तमस्ति। यथा—

**'इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि।**
**एना पत्या तन्वं सं सृजस्वाधाजिव्रीविदथमा वदाथः॥'**

(१०।८५।२७)

पतिगृहे समागते सति पत्न्यै माङ्गलिकां सौख्यदात्रीं तथा वीरप्रसविनीं भवितुं भव्यप्रार्थना प्रभावोत्पादिकाऽस्ति—

**'अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।**
**वीरसूर्देवकामास्योना शं नो भव द्विपदे शं चतुष्पदे ॥'**
( १० । ८५ । ४४ )

शवसंस्कारेण सम्बद्धान्यनेकान्यपि सूक्तानि दशमे मण्डलेऽपि मिलन्ति । तस्मिन् युगे पृथिव्यां शवस्थापनस्यापि प्रथा प्रायः प्रचलिताऽऽसीत् । यद्यपि सामान्यरीत्या शवदाहसंस्कारस्यैव वर्णनमस्ति । एतेषां मन्त्राणां भावः काव्यदृष्ट्या सरलः, रोचकः आवर्जकश्चाऽस्ति । शवहेतवे धरणीविदीर्णाय शवरक्षणाय च कृता प्रार्थनाऽतीव मार्मिकाऽस्ति । अस्य प्रसङ्गस्योपमापि मनोहारिणी वर्त्तते—

**'माता पुत्रं यथा सिचाऽभ्येनं भूम ऊर्णुहि ॥'** १० । ११ ॥

यमलोकं गत्वा पितरम्प्रति शवाय कथनमिदमपि हृदयावर्ज्यमस्ति—

**'सङ्गच्छस्व पितृभिः संयमेनेष्टापूर्त्तेन परमेव्योमन् ।**
**हित्त्वा यावद्यं पुनरस्तमेहि सङ्गच्छस्व तन्वा सुवर्चाः ॥'**
( १० । १४ । ८ । )

'द्यूतकरस्य विषादं'-नाम्ना सूक्तमपि १०।३४ विलक्षणमस्ति । द्यूतक्रीडायां पराजितस्य द्यूतकरस्य दयनीया भावनाऽपि द्रष्टव्याऽस्ति—

**'पितामाताभ्रातर एनमाहुर्न जानीमो नयता बद्धमेतत् ।'**

अन्ते त्रयोदशमन्त्रे उपदेशोऽस्ति—

**'अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहुमन्यमानः ।'**

**दानस्तुतिः—**

ऋग्वेदस्य सूक्तेषु 'दानस्तुतिः' नाम्नाः कतिपया मन्त्रा मिलन्ति । कात्यायनस्य 'ऋक्सर्वानुक्रमण्यां केवलं द्वाविंशतिःसूक्तेषु दानस्तुतीनाम् उल्लेखो वर्त्तते । किञ्चाधुनिकशोधदृष्ट्या अष्टाषष्टिःसूक्तेषु दानस्तुतीनां वर्णनमस्ति । अस्मिन् विषये 'हिन्दी-साहित्य-सम्मेलन'-प्रयागद्वारा प्रकाशिते ओझा-अभिनन्दनग्रन्थे मणिलालस्य निबन्धः दर्शनीयोऽस्ति । ऋग्वेदस्य ८।३।२१-२४ मन्त्रस्य देवता सर्वानुक्रमण्यां पाकस्थामाकौरयाणस्य दानस्तुतिः कथिता । किञ्च निघण्टुनिरुक्तादिग्रन्थानुशीलनेन ज्ञातो भवति कौरयाणपदस्य यास्केन कृतोऽर्थः कृतयानो भवति । दुर्गाचार्यस्य सम्मतौ अस्मिन् मन्त्रे 'यान'स्य स्तुतिरस्ति दानस्य नास्ति । शौनकमतेन पाकस्थामाशब्दोऽपि व्यक्तिवाचको नास्ति अपितु विशेषणपदमिदमस्ति ( बृहद्देवता ६ । ४५ ) । स्कन्दमाहेश्वरस्य व्याख्यानुसारेण पाकस्थामाशब्दस्यार्थो भवति—महाप्राणः अथवा महाबलवानिति—**'पाकस्थामालोके स्थामशब्दः प्राणे प्रसिद्धः । पाकः परिपक्वो महान् स्थामा यस्मै स पाकस्थामा महाप्राणश्चेत्यर्थः** ( स्कन्दमाहेश्वरस्य व्याख्या ) ।

जैमिनिसूत्रस्थ-गुणवादस्य (मी० सू० १ । २ । १०) शबरभाष्यं भारतीय-सिद्धान्तस्य कुञ्जिकाऽस्ति । तस्य स्पष्टकथनमस्ति यत् समस्तमाख्यानमिदमसत्यमस्ति । आख्यानेषु द्वे वार्त्ते स्तः—वृत्तान्तज्ञानं तथा प्ररोचना । वृत्तान्तज्ञानं विधौ न तु प्रवर्त्तकोऽस्ति न निवर्त्तक एव । फलतस्तत्तु प्रयोजनाभावाद् अनपेक्षितोऽस्ति । प्रीत्याकार्ये प्रवृत्तिर्भवति द्वेषान्निवृत्तिः । आख्यानेष्वेतावदेवांशस्य विवक्षा वर्त्तते । यथा—

**'अस्मद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन । ···· ···· तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकम्, न निवर्त्तकञ्चेति प्रयोजनाभावात् । अनर्थकमित्यविवक्षितं प्ररोचनया तु प्रवर्त्तते इति द्वेषान्निवर्त्तते इति तयोर्विवक्षा ।'**

सामान्यदानस्तुतिप्रतिपादकमेकं भव्यं सूक्तमस्ति । सूक्तेऽस्मिन् दान-महिम्नि ओजस्विवर्णनमेकमस्ति । यो व्यक्तिः निजधनं स्वहितायैव नियोजयति सो हि पापं भक्षयति—

**'मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य ।**
**नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ।।'**

( तैत्ति० ब्रा० २।८।८।३ एवं निरु० ७ द्रष्टव्यम् । )

वस्तुतः नास्त्यसौमित्रमस्ति यः स्वसख्यै जनाय च दानं न ददाति । एवंविधजनाद् दूरगमनमेव श्रेयस्करं भवति । तस्मै जनाय गृहन्न भवति । तं जनं पोषणकर्त्तुः कस्याप्यपरिचितस्य जनस्यैव शरणं गन्तव्यम् । यथा—

**'न स सखा यो न ददाति सख्यै स चाभुवे स च मानायषित्वः ।**
**अपास्मात् प्रेयान् न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत् ।।'**

'केवलाघो भवति केवलादी' अयं हि त्यागमूलकवैदिकसंस्कृतेः महामन्त्रोऽस्ति । अस्यैव तत्त्वस्य वर्णनं स्मृतिग्रन्थेषु पर्याप्तमात्रायां मिलति । अस्मिन् सन्दर्भेऽक्षरशोऽनुवादरूपेण गीतायाः श्लोकमिदं द्रष्टव्यम्—

**'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ।।'** (गीता० ३।१३)

## संवादसूक्तानि

ऋग्वेदे दार्शनिकसूक्तानि यथोपनिषदां तात्त्विकविवेचनैः सह सम्बद्धानि सन्ति, तथैवैतानि प्रबन्धकाव्येन नाटकेनाऽपि च स सम्बन्धं संयोजयन्ति । एवंविधेषु सूक्तेषु कथोपकथनस्य प्राधान्यमस्ति । ऋग्वेदेऽनेकानि कथोपकथनप्रधानानि यमयमीसूक्त-सरमापणिसंवादसूक्तोर्वशीपुरुरवःसंवादसूक्तप्रभृतीनि सूक्तानि सन्ति, यान्याधारीकृत्यैव भारतीयनाटकानि जातानि । दृष्टान्तरूपेणोर्वशीपुरुरवसः संवादमूलं कालिदासीयं विक्रमोर्वशीयनाम त्रोटकमुपस्थापयितुं शक्यते ।

अस्मिन् सन्दर्भे भारतीया विद्वांसो नाटकानामुदयं वेदस्थितसूक्तमूलकमेवाहुः । किञ्चास्मिन्विषये पाश्चात्यविद्वत्सु गम्भीरमतभेदो दृश्यते ।

जर्मनविद्वान् डाक्टरश्रोदरमहोदयोऽपि विचारमिममनुमोदयति। स हि संवादसूक्तेष्वेषु गानमामनति। तदिदं गायनं नृत्येनाभिनीयतेस्म, तदिष्यतेऽस्य संवादसूक्तनिवहस्य धार्मिकनाटकरूपता। एतन्मूलैव च भारतीयनाटकप्रवृत्तिः इत्याह।

डॉ० हर्टलमहोदयोऽपि श्रोदरमहोदयस्य विचारमनुमोदयति। अपरे पुनर्विद्वांसो विण्डिश-ओल्डेनवर्ग-पिशेलमुख्या अभिप्रयन्ति यत् संवादसूक्तानि पुरा गद्यपद्यात्मकान्यासन्। पद्यभागोऽतिरोचकतया सम्प्रत्यवशिष्यते। गद्यभागस्तु केवलवर्णनपरतया लुप्तप्रायतां गतः। नाटके यदधुना गद्यपद्ययोर्मिश्रणं दृश्यते। तदप्येतादृशसंवादसूक्तमूलकमेवेति। एते विद्वांसः ऐतरेयब्राह्मणगतं शुनःशेपोपाख्यानं शतपथब्राह्मणगतमुर्वशी-पुरुरव-उपाख्यानं चात्र साक्षिभावेनोपस्थापयन्ति। अपरे कतिपया विद्वांसः रामलीला कृष्णलीला चात्र निदर्शनभावं भजतः। ऋग्वेदस्यैतानि समग्रसंवादसूक्तानि नाटकीयौजस्वितया सह सम्पृक्तानि सन्ति। कलात्मकदृष्टयाऽपि चैतानि सूक्तानि नितान्तरमणीयानि, सरसानि प्रभावोत्पादकानि च सन्ति।

## ऋग्वेदस्थलौकिकसूक्तानि

ऋग्वेदीयदशममण्डलस्यानेकेषु सूक्तेषु लौकिक-व्यावहारिक-विषयाणाञ्च रोचकं वर्णनमस्ति। इत्थं विषयास्त्वथर्ववेदस्यैव विशिष्टसम्पदः मन्यन्ते। किञ्च ऋग्वेदस्य दशममण्डलेऽपि एवंविधलोकसंस्कृतया सह सम्बद्धविषयाणां समुपलब्धिः अस्य मण्डलस्य विशिष्टतां सूचयति। यक्ष्माख्यव्याधिविनाशाय १६१, १६३ तथाऽन्यान्यनेकविधानि च सूक्तानि मिलन्ति। रक्षोहासूक्ते दानवात् गर्भत्राणार्थं मन्त्रोऽस्ति। एकस्मिन् सूक्ते पत्न्याः कष्टमपहाय पत्युः प्राप्त्युपायस्य विवरणं मिलति—

यथा—

**'इमां खनाम्योषधिं वीरुधं बलवत्तमम्।**
**यया सपत्नीं बाधते यया संविन्दते पतिम्॥'** (ऋग्वे० १०।१४५।१)

अपरस्मिन् सूक्ते शत्रु-संहाराय प्रार्थना वर्त्तते—

**'ऋषभं मां समानानां सपत्नानां विषासहितम्।**
**हन्तारं शत्रूणां कृधिविराजं गोपतिं गवाम्॥'** (ऋग्वे० १०।१६६)

अनेन प्रकारेण १०।१६४ सूक्ते दुःस्वप्नविनाशाय प्रार्थनाऽस्ति। १०।५८ सूक्तस्य नाम एव 'मनः-आवर्त्तनम्' सूक्तमस्ति। वैवस्वत-यम-दिव-भूमि-समुद्रादीनां पार्श्वगतानां जनानां मनसां परावर्त्तनार्थाय प्रार्थनाऽस्ति—

**'यत् ते यमं वैवस्वतं मनो जगाम दूरकम्।**
**तत्त आवर्तयामसीह क्षयाय जीवसे॥'** (ऋग्वे० १०।५८)

एकस्मिन् सूक्ते आथर्वण भिषगृषिः औषधीनां भव्यस्तुतिं समुपस्थापयति—

**'याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः।**

**बृहस्पति-प्रसूतास्ता नो मुञ्चत्वं हसः ॥'** (ऋग्वे० १०।९७।१५)

एकस्मात् सूक्तात् ज्ञातो भवति यत् प्राचीनकालेऽपि प्रजा एव राज्ञः वरण-मकुर्वन् । यथा—

**'अभित्वा देवः सविताभि सोमो अवीवृतत् ।**
**अभित्वा विश्वाभूतान्यभिवर्चो यथाससि ॥'**

## दार्शनिकसूक्तानि

ऋग्वेदस्य दशममण्डले दर्शनप्रधानानि नासदीयसूक्त-( १०।१२९ )पुरुष-सूक्त-( १०।९० )हिरण्यगर्भसूक्त-( १०।१२१ )वाक्सूक्तप्रभृतीनि सूक्तानि सन्ति । सूक्तान्येतानि दार्शनिकदृष्टया यथा गम्भीराणि सन्ति तथैव प्रातिभानु-भूतिदृष्ट्याऽतीव रमणीया, अभिनवकल्पनादृष्टयाऽपि च नितान्तानि प्रसिद्धानि सन्ति । नासदीयसूक्त-विषये विज्ञालोचकानां मतमस्ति, यदीदं सूक्तं ऋग्वेदीय-ऋषीणामलौकिकचिन्तनधारायाः मौलिक-परिचायकमस्ति । जगतः प्रारम्भिक-स्थित्या वर्णनं कुर्वन्नस्य सूक्तस्य ऋषिः कथयति—सृष्टयाः आरम्भकाले न तु असदासीन्नै 'सत्' एव । न दिनमासीत् नैव निशेति, सृष्टयाः अभिव्यञ्जकं किमपि चिह्नमपि तदा नासीत् । सर्वप्रथमः कामः समुत्पन्नोऽभवत् । कामः अर्थात् सङ्कल्प एवासीत् । अस्यैव कामस्याभिव्यक्तिः सृष्टयाः विभिन्नस्तरेषु प्रतिफलितोऽभवत् । तदा एक एव तत्त्वमासीत्, यत् विनावातं श्वासग्रहणमक-रोत् तथा निजस्वाभाविकशक्त्या जीवितमासीत् ।

**'अनीदवातं स्वधया तदेकम् ।**
**तस्माद्धान्यन्न परः किञ्चनास ॥'** ( ऋ० १०।१२९।२ )

प्रातिभानुभूत्याः उपरि अद्वैततत्त्वस्य प्रतिष्ठा एवास्य गम्भीरमन्त्रस्य गूढ-रहस्यमस्ति ।

## श्रद्धासूक्तम्

ऋग्वेदस्य दशममण्डले श्रद्धासूक्तमस्ति (१०।१५१) । सूक्तेऽस्मिन् श्रद्धायाः स्तुतिः देवतारूपेण कृताऽभवत् । अत्र मन्त्रास्तु षड् एव सन्ति, किञ्च विषय-स्यापूर्वत्वेन स्वल्पकायमपीदं सूक्तं विपुलमहत्त्वस्याभवत् । श्रद्धाशब्दस्यार्थो भवति—कस्मिश्चित् कार्यविशेषेऽथवा वचनविशेषे स्वान्तःकरणेनादरातिशयस्य भावना । वस्तुतः श्रद्धया सम्पादितं कार्यमेव लाभदायकं भवति । श्रद्धाविहीनं कर्म कदापि फलदायकं न भवति । ९।११३।२ मन्त्रे ऋत-सत्याभ्यामतिरिक्तः श्रद्धया सोम-सवनस्य विधानं दर्शितमस्ति । सोमस्याभिषवः यजमानस्य श्रद्धां प्रकटयति ( **श्रद्धां वदन् सोमराजन् ९।११३।४** ) । ऋषिभिः कृतस्तोत्रं श्रद्धा-समन्वितमनसा इन्द्रेण श्रुतम् (**श्रद्धामनस्या शृणुतेदभीतये**) । वाक्सूक्ते (ऋग्० १०।१४५ ) कथितमस्ति—**'श्रुधि श्रुत श्रद्धिवं ते वदामि'** । अत्र 'श्रद्धिव' इति पदस्य सायणेन कृतमर्थम्—**'श्रद्धाबलेन लभ्यं ब्रह्मात्मकं वस्तु'** अर्थात् 'ब्रह्म'

श्रद्धया ज्ञातो भवति, उपलब्धोऽपि च भवति । अन्येषु मन्त्रेष्वपि ऋषीणां श्रद्धां प्रति अतीव पूज्या भावना वर्त्तते । श्रद्धासूक्ते तु देवतास्वरूपेणैव श्रद्धा चित्रिताऽस्ति । अस्य मन्त्रस्य ऋषिका श्रद्धाऽस्ति, या कामगोत्रजाऽस्ति, तेनैव कारणेन सा 'कामायनी' इति नाम्ना विख्याताऽस्ति ।

अस्य सूक्तस्य प्रथममन्त्रे एव स्पष्टीकृतमस्ति यत् श्रद्धया एवाग्नेः समिन्धनं भवति । श्रद्धया आहवनीयाग्नौ आहुतिः देया भवति । अस्य तात्पर्यमिदमस्ति यत् यज्ञीयकार्येषु श्रद्धायाः महती आवश्यकता वर्त्तते । अग्निमत्र ज्ञानाग्नेः प्रतीकमपि वक्तुं शक्यते । ज्ञानाग्नेः समिन्धनमपि श्रद्धया एव सम्पादितं भवेत् । विशाला हि श्रद्धाया व्यापकताऽस्ति । अस्या उपासना न केवलं मानवाः कुर्वन्ति अपितु देवता अपि असुरैः सह युद्धकाले श्रद्धाया आश्रयं गृहीत्वा स्वकीय-मनोरथं साधयितुं कृतकार्या भवन्ति । अपरस्मिन् मन्त्रे मनोवैज्ञानिकतथ्यस्य रोचकं विश्लेषणं वर्त्तते—

**'श्रद्धां हृदय्ययाकूत्या श्रद्धया विन्दते वसु ।'** हृदये समुत्पन्नसङ्कल्पेन श्रद्धाया उपासना भवति । प्रथमस्तु साधकस्य चित्ते सङ्कल्पस्योदयो भवति, तदनन्तर-मेवासौ कस्मिंश्चिदपि कार्ये स्वनियोगं करोति । श्रद्धया धनस्य प्राप्तिर्भवति । अत्र 'वसु' इत्येतत्पदेन भौतिकद्रव्यस्य सङ्केतो न भवति प्रत्युत आध्यात्मिक-कल्याणस्य । आध्यात्मिकं वसु अस्ति—अज्ञानस्य विनाशं कृत्वा अमरत्वस्य प्राप्तिः । अमरतायाः समुपलब्धेः प्रधानसाधनमियमेव श्रद्धा वर्त्तते । अन्तिमा प्रार्थना—**'श्रद्धे श्रद्धापये ह नः ।'** उपनिषत्सु श्रद्धातत्त्वस्य यद् विपुलं उपबृंहण-मस्ति तस्य बीजमस्मिन्नेव प्रख्यातसूक्ते एव मिलति ।

ऋग्वेदस्य दशममण्डले बहुविधानुशीलनेन ज्ञातो भवति तदा देवस्य किंवा देवाधिदेवस्य कल्पना दृढमूला सञ्जाता । प्रधानदेवोऽयं कुतश्चित् हिरण्यगर्भरूपेण, कुतश्चित् पुरुषरूपेण, क्वाऽपि प्रजापतिनाम्ना ख्यातोऽभवत् । हिरण्यगर्भस्य विषये प्रसिद्धसूक्तमिदमस्ति ( १०।१२१ ), यस्यान्तिमचरणमिदमस्ति—**'कस्मै देवाय हविषा विधेम ।'** अस्य चरणस्य कल्पनायां वेदज्ञानां विभिन्नाः सम्मतयः सन्ति । पाश्चात्यविदुषां मते अस्य सूक्तस्य द्रष्टा ऋषिः वस्तुतः सन्दिग्धचित्तेन पृच्छति—'कस्मै देवाय हविषा विधेम ।' प्रारम्भिकयुगस्य मानवानां कौतुकाक्रान्तचित्तस्य दशाया द्योतकमिदं सूक्तं प्रकटयति यत्, केन प्रकारेणादिमयुगस्य जनस्तस्या देवतायाः स्वरूपं ज्ञातुमिच्छति, यस्मै देवाय सः हव्येन होमं करोति । ब्राह्मण-ग्रन्थेषु तथा तदनुसारिणः निरुक्तादिग्रन्थेषु कः शब्दोऽत्र प्रजापतेः सूचकोऽस्ति । किं शब्दस्तु अनिर्वचनीयताया वाऽत्यन्तसौख्यस्य सूचको वर्त्तते । फलतः नाम्ना रूपेण वानिर्वचनीयाभावेऽपि सुखरूपत्वेन प्रजापतये किं शब्दस्य व्यवहारः नितान्तं युक्तियुक्तोऽस्ति । उपनिषत्स्वपि अनयाऽनिर्वचनीयतयाऽसौ 'परम-तत्त्वम्' 'नेति नेति' इति शब्देनाभिव्यक्तं भवति । हिरण्यगर्भः अग्रे सृष्ट्यादौ

७ वै०

विद्यमान आसीत् । असावेव सर्वेषां समुत्पन्नानां प्राणीनां रक्षक आसीत् । स एव हि समस्तं विश्वं बिभर्त्ति । जाग्रत्-स्वप्न-सुषुप्तावस्थायामेक एवाऽसौ समग्र-भूतानां राजा ( शासकः ) अस्ति । नास्त्येतावदेवापितु मृत्योरप्युपरि शासनं करोति । अमृतत्त्वं तस्य छाया वर्त्तते ( **यस्य छायाऽमृतं यस्य मृत्युः** ) । यथा—छाया पुरुषस्यानुसरणं करोति तथैवाऽमृतत्त्वमपि तस्य हिरण्यगर्भस्यानुसरणं करोति । तस्यैवाध्यक्षतायां समस्तसृष्टेः व्यापारः सञ्चलति । सकलसृष्ट्याः पालनस्य संरक्षणस्य च कार्यं तस्यैवाधीनमस्ति । देवेष्वसौ अद्वितीयदेवोऽस्ति ( **देवेष्वधिदेव आसीत्** ) । तस्यैव संरक्षणे द्यावापृथिव्यौ स्व-स्व-स्थाने प्रतिष्ठितौ स्तः ।

**पुरुषसूक्तम्**

दशममण्डले स्वदार्शनिकविचाराय, निजमहत्त्वाय, गाम्भीर्याय, अन्तःपर्यवेक्षणाय च पुरुषसूक्तं ( १०।९० ) नितान्तं विख्यातमन्यतमञ्चाऽस्ति । अस्मिन् सूक्ते पुरुषस्याध्यात्मिककल्पनाया भव्यं निदर्शनमस्ति । पुरुषस्यास्य सहस्राणि शिरांसि, सहस्राणि अक्षीणि, तथैव पादाः च सन्ति । अर्थात् तस्मै पुरुषाय एतेषां शरीरावयवानां कापि इयत्ता नास्ति । अस्य विश्वस्य परिमाणादसावधिकोऽस्ति । विश्वमभितः स्थितस्य परिवेष्टनात् दशाङ्गुलिर्यः अग्रतरोऽस्ति । **'अत्यतिष्ठद् दशाङ्गुलम् ।'** अत्र दशाङ्गुलं केवलं परिमाणाधिक्यस्योपलक्षणमात्रमेवास्ति । विश्वस्य समस्तमरणशीलप्राणिनः तस्य पुरुषस्यैकचतुर्थांशमात्रमेवास्ति । तस्यामृतत्रिपाद आकाशेऽवस्थितोऽस्ति । सः सर्वेषां शासको वर्त्तते । अस्य पुरुषस्य विषये विलक्षणं तथ्यमिदमेवाऽस्ति—

**'पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम् ।'** ( मन्त्र० २ )

एक एवाऽसौ पुरुषः निखिले विश्वस्मिन् वर्त्तते, यः प्राचीनकाले समुत्पन्नोऽभवत्, यः भविष्येऽपि समुत्पन्नो भविष्यति । सर्वेश्वरवादस्यायं सिद्धान्तः पाश्चात्यपण्डितानां मते आर्याणां प्रौढ-दार्शनिक-विचारधारायाः परिचायकोऽस्ति । सृष्ट्याः समुत्पादने यज्ञस्य कल्पना कीदृशी जागरूका क्रियाशीला चासीत् तस्यापि परिचयः अस्मिन्नेव सूक्ते मिलति । देवताः स्वयज्ञे पुरुषबलिं कृतवन्तः । तेन बलिना जगतः प्राणिनां समुत्पत्तिरभवत् । अस्मिन्नेव सूक्ते ब्राह्मण-क्षत्रिय-वैश्य-शूद्रादीनां समुत्पत्तिस्तस्य पुरुषस्य मुखाद्, बाहोः, ऊरोः, पादाभ्यां क्रमशः जाता । ऋग्वेदस्य कस्याप्यन्यस्मिन् मन्त्रे चतुर्णां वर्णानां चर्चा नाऽस्ति, येन प्रतीतो भवति अस्मिन् समाजे तस्मिन्नेव युगे चतुर्णां वर्णानां कल्पना समुद्भूताः । अनेन प्रकारेण सूक्तमिदं वैदिकार्याणां सामाजिकाध्यात्मिक-धारणायाः परिचायकत्वेन नितान्तं महत्त्वपूर्णमस्ति ।

## ( ख ) यजुःसंहिता

चतसृष्वपि संहितासु यजुःसंहिताऽतीव महत्त्वपूर्णाऽस्ति । यजुर्वेदे सर्वविधानामपि यज्ञयागादीनां वर्णनं विद्यते । कृष्णयजुः शुक्लयजुर्भेदेन सा द्विविधा ।

मन्त्रब्राह्मणयोर्द्वयोरपि यत्र मिश्रीभावः कृतः स कृष्णयजुर्वेद इति नाम्ना, किञ्च यत्र मन्त्राणामेव विशुद्धतया प्रतिष्ठानं कृतं सः शुक्लयजुर्वेद इति नाम्ना विश्रुतः। शुक्लयजुर्वेदस्य द्वे एव शाखे स्तः, ते माध्यन्दिनकाण्वनामभ्यां विदिते स्तः। कृष्णयजुर्वेदस्य सम्प्रति पञ्चाशीतिशाखासु केवलं चतस्रस्तैत्तिरीय-मैत्रायणी-कठ-कपिष्ठलकठाख्याः शाखाः समुपलभ्यन्ते ।

वस्तुतः आध्वर्यव-कर्मणे उपादेये यजुर्वेदे यजुषां सङ्ग्रहो वर्त्तते । यजुः-शब्दस्य व्याख्या आपाततः भिन्नाः प्रतीता भवन्ति, किञ्च तासु एकमेव लक्षणं प्रति सङ्केतो मिलति । **'अनियताक्षरावसानो यजुः'** अर्थात् यत्राक्षराणां संख्या नियता निश्चिता वा नास्ति तद्यजुः । **'गद्यात्मको यजुस्तथा शेषे यजुः'**-शब्दस्य तात्पर्यमिदमेवास्ति यदृक्-सामभ्यां भिन्नं गत्यात्मक-मन्त्राणामभिधानमेव 'यजुः' वर्त्तते ।

वेदस्य द्वौ सम्प्रदायौ स्तः—( १ ) ब्रह्म-सम्प्रदायस्तथा ( २ ) आदित्य-सम्प्रदायः । शतपथब्राह्मणानुसारेण आदित्ययजुः शुक्लयजुर्वेदनाम्ना विख्यातोऽस्ति, तथा याज्ञवल्क्येनाख्यातोऽस्ति—**'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते'** (श० ब्रा० १४।९।५।३३) । अतः आदित्यसम्प्रदायस्य प्रतिनिधिः शुक्लयजुर्वेदोऽस्ति तथा ब्रह्मसम्प्रदायस्य प्रतिनिधिः कृष्ण-यजुर्वेदोऽस्ति । यजुर्वेदस्य शुक्लत्वकृष्णत्वयोर्भेदस्तस्य स्वरूपस्योपरि आश्रितोऽस्ति । शुक्लयजुर्वेदे दर्शपौर्णमासाद्यनुष्ठानायैव मन्त्राणां सङ्कलनमस्ति । कृष्ण-यजुर्वेदे तु मन्त्रैः सह तन्नियोजकानां ब्राह्मणानां सम्मिश्रणमस्ति । मन्त्र-ब्राह्मणयोर्भागस्य एकत्र मिश्रणमेव कृष्णयजुर्वेदाय कृष्णत्वस्य कारणमस्ति । अनेनैव रूपेण मन्त्राणां विशुद्धं तथाऽमिश्रितरूपमेव शुक्लयजुर्वेदस्य शुक्लत्वस्य कारणमस्ति ।

पुराणस्य वैदिकसाहित्यस्य चाध्ययनेन ज्ञातो भवति यद् याज्ञवल्क्यवाजसनेयः अतीव प्रौढस्तथा तत्त्वज्ञ ऋषिरस्ति । अस्यानुकूलसम्मत्याउल्लेखः शतपथ-ब्राह्मणे तथोपनिषदि ( बृहदा० उप० अ० ३ एवं ४ ) मिलति । याज्ञवल्क्यः मिथिलावासी ह्यासीत् । मिथिलादेशाधीश्वरस्य महाराज्ञो जनकस्य राजसभायामस्य विशेषसमादरः आसीत् । अस्य पितुर्नाम देवराज इति आसीत् । अयं हि देवराजः सर्वदा दरिद्रेभ्यः वस्त्रदानाय तत्पर आसीत् । तेनैव कारणेन 'वाजसनि' इत्यपरनाम्ना विख्यात आसीत् । अनेन याज्ञवल्क्येन व्यासदेवस्य चतुर्भ्यः शिष्येभ्यः वेदचतुष्टयस्याध्ययनं कृतम् । निजमातुलाद् वैशम्पायनादयं यजुर्वेदस्याध्ययनं कृतवान् । शतपथब्राह्मणस्य प्रामाण्यस्योपरि अनेनोद्दालक-आरुणि-नामकेन प्रौढदार्शनिकेन वेदान्तस्य परिशीलनं कृतम् । वेदान्तस्य प्रशंसायामेकदाऽरुणिरमुमवोचत्—वेदान्तशक्त्याऽभिमन्त्रितजलेन चेत् स्थाणुरपि सिञ्चेत् तदा तस्मादपि पत्रपुष्पाणि च निःसरेयुः । पौराणिकवचनेनानेन सिद्धो भवति यत् सुयोग्यशिष्येण याज्ञवल्क्येन गुरोः कथनमिदमक्षरशः सत्यं प्रमाणीकृतम् । अस्य

द्वे पत्न्यौ स्तः—मैत्रेयी कात्यायनी च। मैत्रेयी अतीव विदुषी ब्रह्मवादिनी चासीत्। परिव्रजनकाले तामेव ब्रह्मविद्यायाः शिक्षां दत्वाऽयं गृहं तत्याज। प्रगाढपाण्डित्येन अपूर्वयोगबलेन, गाढ-दार्शनिकत्वेन योगी याज्ञवल्क्योऽयं कर्मयोगिनो नृपजनकस्य विशेषाभ्यर्थनायाः सत्कारस्य च भाजनमासीत् ( द्र० बृहदा० उ० अ० ३।४ )।

## विषयविवेचनम्

शुक्लयजुर्वेदस्य मन्त्रसंहिता वाजसनेयीसंहितानाम्ना विख्याताऽस्ति। अस्य चत्वारिंशदध्यायेषु अन्तिमाः पञ्चदशाध्यायाः खिलरूपेण प्रसिद्धेः कारणात् अवान्तरयुगीया मन्यन्ते।

प्रारम्भिकयोर्द्वयोरध्याययोः दर्शपौर्णमासनाम्नेष्टिसम्बद्धमन्त्राणां वर्णनमस्ति। तृतीयाध्याये अग्निहोत्राय चातुर्मास्याय च यज्ञायोपयोगिनः मन्त्राणां विवरणमस्ति। चतुर्थाध्यायादारभ्य अष्टमाध्यायपर्यन्तं सोमयागानां वर्णनमस्ति। अस्मिन्नध्याये अग्निष्टोमस्य प्रकृतियागत्वेन नितान्तं विस्तृतविवरणमस्ति। अग्निष्टोमे सोमस्योपलखण्डेन कुट्टनं कृत्वा रसक्षरणमकारयत्। तेन हि प्रातः, मध्याह्ने सायंकाले चाग्नौ हवनं भवति। अस्यैव 'सवनमि'त्यभिधानमस्ति। सवनमिदं समयानुसारेण विभिन्ननाम्ना विख्यातमस्ति। दिनमात्रमेव समाप्य सवनम् 'एकाहः' इति कथ्यते। सोमयागे वाजपेययागः अन्यतमोऽस्ति। राज्ञः अभिषेककाले राजसूययज्ञो भवति। यज्ञेऽस्मिन् द्यूतक्रीडा-अस्त्रक्रीडाप्रभृतयः राजन्योचितविभिन्नक्रियाकलापानां विधानं भवति। नवम एवं दशमाध्यायेऽनेन यज्ञेनैव सम्बद्धानां मन्त्राणां सङ्कलनमस्ति। तदनन्तरमेकादशाध्यायादारभ्य अष्टादशाध्यायपर्यन्तम् अग्निचयनं भवति। अर्थात् यज्ञीयहोमाग्निहेतवे वेदनिर्माणस्य वर्णनं विस्तरेण कृतमस्ति। वेद्या रचना १०८०० इष्टिकाभ्यो भवति। इष्टिकेयं विशिष्टस्थानादेव समानीता भवति।

वेद्याः आकृतिः पतत्रप्रसारित पक्षी इव भवति। ब्राह्मणमन्त्रेषु वेद्याः तथा तासाम् इष्टिकानाम् आध्यात्मिकरूपस्य व्याख्यानमतीवमार्मिकतया कृतमस्ति। षोडशाध्याये शतरुद्रीयहोमस्य प्रसङ्गमस्ति। अस्मिन् अध्याये रुद्रस्य कल्पनायाः साङ्गोपाङ्गविवेचनमस्ति। वैदिकेष्वेव रुद्राध्यायः अतीवोपयोगित्वेन नितान्तं प्रख्यातोऽस्ति। अष्टादशाध्याये वसोर्धारासम्बन्धी मन्त्रः निर्दिष्टोऽस्ति। तदनन्तरं त्रिष्वध्यायेषु ( १९-२१ अ० ) सौत्रामणि-यज्ञस्य विधानमस्ति। जनश्रुतिरस्ति—यदधिकसोमपानेनेन्द्रः रुग्णोऽभवत्। अस्य रोगस्य चिकित्सा स्वर्वैद्येन कृताऽनेनैव यज्ञेन। राज्यच्युतनृपाय, पशुकाम-यजमानाय, सोमरसानुकूलतया पराङ्मुखजनाय चास्यैव यज्ञस्यानुष्ठानं विहितम्। अस्याः प्रक्रियायाः संक्षिप्तं विवरणमूनविंशत्यध्यायस्य महीधरभाष्यस्य प्रारम्भे समुपलब्धमस्ति। सोत्रामणियज्ञे सोमरसेन सह सुरापानस्याऽपि विधानं वर्त्तते ( **सौत्रामण्यां सुरां पिबेत्** )।

द्वाविंशत्यध्यायादारभ्य पञ्चविंशत्यध्यायपर्यन्तमश्वमेधयज्ञस्य विशिष्ट-मन्त्राणां निर्देशोऽस्ति। अश्वमेधयज्ञस्तु सार्वभौमाधिपत्यस्याभिलाषी सम्राजे विहितोऽस्ति। अस्य यज्ञस्य साङ्गोपाङ्गवर्णनं शतपथब्राह्मणस्य त्रयोदशकाण्डे तथा कात्यायनश्रौतसूत्रस्य विंशत्यध्याये चास्ति। षड्विंशत्यध्यायादारभ्य ऊनत्रिंशदध्यायपर्यन्तं खिलमन्त्राणां सङ्कलनमस्ति। त्रिंशदध्याये पुरुषमेधस्य वर्णनमस्ति, यस्मिन् चतुरशीत्यधिकशतपदार्थानामालम्भनस्य निर्देशोऽस्ति। आलम्भनोऽयं यथार्थतः आलम्भनः न भूत्वा प्रतीकरूपेणोल्लिखितोऽस्ति। भारत-वर्षे कदापि पुरुषमेधो नाभवत्। केवलोऽयं काल्पनिकयज्ञोऽस्ति। अस्मिन् यज्ञे पुरुषस्य नानाप्रतिनिधिभूतवस्तुहेतवे विभिन्नपदार्थेषु दानस्य विधानमासीत्। यथा—नृत्तनिमित्ताय सूतस्य, गीतनिमित्ताय शैलूषस्य, धर्माय समाचारस्य चालम्भनविधिरस्ति। अस्मिन्नध्याये तात्कालिकस्य प्रचलितस्य व्यवसायस्य, वृत्तेस्तथा कलाकौशलस्य चाऽपि यत्किञ्चित् परिचयः प्राप्तो भवति। एकत्रिंश-दध्याये प्रसिद्धपुरुषसूक्तमस्ति, यस्मिन्नृग्वेदापेक्षया षड्मन्त्रा अधिकाः सन्ति। द्वात्रिंशत् तथा त्रयस्त्रिंशदध्याये सर्वमेधस्य मन्त्रः उल्लिखितोऽस्ति। द्वात्रिंश-दध्यायस्यारम्भे हिरण्यगर्भसूक्तस्याऽपि कतिपयमन्त्राः समुद्धृताः सन्ति। चतुस्त्रिंशदध्यायस्य प्रारम्भे षड्मन्त्राणां 'शिवसङ्कल्प उपनिषद्' ( तन्मे मनः शिवसङ्कल्पमस्तु ) नितान्तोपादेयोऽस्ति।

**'सुषारथिरश्वानिव यन्मनुष्यान्**
**नेनीयतेऽभीशुभिर्वाजिन इव**
**हृत्प्रतिष्ठं यदजिरं जविष्ठं**
**तन्मे मनः शिवसङ्कल्पमस्तु ॥'** (यजुः ३४।६)

पञ्चत्रिंशदध्याये पितृमेधयज्ञसम्बन्धिमन्त्राणां सङ्कलनमस्ति। षट्त्रिंशद-ध्यायादारभ्याष्टात्रिंशदध्यायपर्यन्तं प्रवर्ग्ययागस्य विशदं वर्णनमस्ति। अन्तिमा-ध्याये ईशावास्योपनिषदस्ति। उपनिषत्सु लघुकाशिकेयमुपनिषद् आदिमोप-निषदस्ति, यतो ह्यन्योपनिषत् संहिताया भागो नास्ति। उपनिषद्ग्रन्थेषु अस्य ग्रन्थस्य प्राथम्यस्येदमेव कारणमस्ति। अस्याः संहिताया आदित्येन सह घनिष्ठ-सम्बन्धस्यापि सूचनाऽप्यस्या एवान्तिममन्त्रेण मिलति—

**'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।**
**योसावादित्ये पुरुषः सोऽसावहम् ॥'** ( ईशावा० ४०।१७ )

## काण्वसंहिता

शुक्लयजुर्वेदस्य—माध्यन्दिनशाखा, काण्वशाखा चेति द्वे शाखे स्तः। प्रथमा उत्तरभारते प्राप्यते द्वितीया च महाराष्ट्रे। अनयोः शाखयोः संहिते भिन्ने सत्यावपि स्वल्पमेव भेदं धारयतः, बहुष्वंशेषु समरूपता वर्त्तते। किञ्च प्राचीन-काले काण्वशाखायाः स्वप्रदेशः उत्तरभारत एवाऽसीत्। यतोऽस्याः संहितायाः

एकस्मिन् मन्त्रे ( ११।११ ) कुरु-पाञ्चालदेशीयनृपतेः निर्देशो मिलति ( **एष वः कुरवो राजा, एष पाञ्चालो राजा** )। महाभारतस्यादिपर्वानुसारेण ( ६३ । १८ ) शकुन्तलायाः पालनकर्तुः पितुः कुलपतिकण्वस्याश्रमः मालिनी-नद्यास्तटे आसीत् । अद्यापीदं स्थानमुत्तरप्रदेशस्य 'बिजनौर'-मण्डले 'मालन'-नाम्ना ख्यातैका लघ्वी नदी अस्ति । अतः काण्वसंहितायाः प्राचीनसम्बन्ध उत्तरप्रदेशेन सहाङ्गीकरणे न कापि विप्रतिपत्तिरस्ति ।

शुक्लयजुर्वेदे विनियोगवाक्यरहिताः केवला मन्त्रा विद्यन्ते, कृष्णयजुर्वेदे तु विनियोगवाक्यानि मन्त्राश्चेति । अतोऽमिश्रितरूपतया शुक्लयजुर्वेदः मिश्रित-रूपतया च कृष्णयजुर्वेद इति संज्ञा जातेत्यपि लोकाः कथयन्ति ।

कृष्णयजुर्वेदस्य सम्प्रति चतस्रः शाखाः प्राप्यन्ते—

( क ) **तैत्तिरीयशाखा**—इयं प्रधानशाखा, अत्र सप्तखण्डाः ते च खण्डाः अष्टकशब्देन काण्डशब्देन च व्यवह्रियन्ते । प्रतिकाण्डं कतिपयेऽध्यायाः ये प्रपाठकनाम्ना ख्याताः । इमे प्रपाठकाः बहुष्वनुवाकेषु विभक्ताः सन्ति ।

( ख ) **मैत्रायणीसंहिता**—इमे द्वे अपि संहिते तैत्तिरीयसंहितामनुकुरुतः ।

( ग ) **काठकसंहिता**—केवलं क्रमे यत्र पार्थक्यं विद्यते ।

( घ ) **कपिष्ठलकठशाखा**—अस्याः परिचयः चरणव्यूहानुसारं दीयते ।

## तैत्तिरीयसंहिता

तैत्तिरीयसंहितायाः प्रसारदेशः दक्षिणभारतोऽस्ति । आंशिकरूपेण महा-राष्ट्रप्रदेशः समग्ररूपेण चान्ध्रद्रविडदेशीया अस्याः शाखाया अनुयायिनः सन्ति । अस्याः संहितायाः स्वकीयाः ब्राह्मण-आरण्यक-उपनिषद्-श्रौतसूत्र-गृह्यसूत्रप्रभृतयः अक्षुण्णाः सन्ति । तैत्तिरीयसंहितायाः परिमाणमपि न्यूनं नास्ति । आचार्यसाय-णस्येयं स्वकीया शाखाऽऽसीत् । शुक्लयजुर्वेदे वर्णितविषयाणामिव अस्या विषयाः सन्ति । पौरोडाश-याजमान-वाजपेय-राजसूयप्रभृतिनानायागानुष्ठानानां विशदं वर्णनमत्राप्यस्ति । यज्ञस्य मुख्यस्वरूपस्य निष्पादकत्वेनास्याः संहिताया विद्व-त्तापूर्णभाष्यं सर्वप्रथममाचार्यसायणेन लिखितम् । किञ्च तस्मादपि पूर्वतरं भाष्यं भट्टभास्करमिश्रस्य ( एकादशशताब्द्याः ) समुपलब्धं भवति । ज्ञानयज्ञनाम्ना भाष्यमिदं विख्यातमस्ति । प्रमाणिकदृष्टचा विद्वत्तादृष्टचा वा कस्मादपि भाष्याद् हीनतरमिदं भाष्यं नास्ति । अधियज्ञार्थादतिरिक्तः आध्यात्मिकाधि-दैविकपक्षयोरपि मन्त्राणामर्थो यत्र तत्र कृतोऽस्ति ।

## मैत्रायणीसंहिता

कृष्णयजुर्वेदस्यान्यतमा शाखा मैत्रायणी इयं संहिता गद्य-पद्यात्मिकाऽस्ति । अस्यां संहितायां चत्वारः काण्डाः सन्ति । प्रथम-काण्डः ( आदिमः ) एकादश-प्रपाठकेषु विभक्तोऽस्ति । येषु क्रमशः दर्शपूर्णमास-अध्वर-आधान-पुनराधान-चातुर्मास्य-वाजपेयप्रभृतीनां यज्ञानां वर्णनमस्ति । द्वितीयः काण्डः ( मध्यमः )

त्रयोदशप्रपाठकेषु विभक्ताः सन्ति । एतेषु प्रपाठकेषु काम्य-इष्टि-राजसूय-अग्नि-चितिप्रभृतीनां यज्ञानां विस्तृतविवरणमस्ति । तृतीयकाण्डे ( उपरि ) षोडश-प्रपाठकाः सन्ति । येषु अग्निचिति-अध्वरविधि-सौत्रामणी-अश्वमेधादीनां विस्तृतं वर्णनमस्ति । चतुर्थकाण्डः खिलकाण्डनाम्ना विख्यातोऽस्ति । एतेषु प्रपाठकेषु पूर्वनिर्दिष्टराजसूयादियज्ञानां विषये आवश्यकवस्तूनां सुमहान् सङ्ग्रहो वर्त्तते । समग्रसंहितायां २१४४मन्त्राः सन्ति, येषु १७०१ऋचः प्रतिकाण्डम् ऋग्वेदात् समुद्धृताः सन्ति । एते सर्वेऽपि मन्त्राः ऋग्वेदस्य विभिन्नमण्डलेषु समुपलब्धा भवन्ति ।

## कठसंहिता

यजुर्वेदस्य सप्तविंशति-शाखासु कठशाखाऽन्यतमाऽस्ति । पुराणेषु काठक-जनाः मध्यप्रदेशीया वा माध्यमनाम्ना विख्याताः सन्तिः । अनेन ज्ञातो भवति यत्ते प्राचीनकाले मध्यप्रदेशेऽवसन् । पतञ्जलेः कथनानुसारेण कठसंहितायाः प्रसारस्तथा पठन-पाठनं प्रतिग्रामम् आसीत् ( 'ग्रामे ग्रामे काठकं कालापकं च प्रोच्यते'—महाभाष्यम् ४।३।१०१ ) । अनेनास्याः संहितायाः प्राचीनकाले विपुलप्रचारस्य बोधो भवति । किञ्चाधुनाऽस्या अध्येतॄणां संख्या नगण्याऽस्ति ( विशेषद्रष्टव्यः श्रोदरेण सम्पादितम् प्रथमसंस्करणम्१९१०ई० ) ।

कठसंहितायां पञ्च खण्डानि सन्ति । तानि च क्रमशः इठिमिका, मध्यमिका, ओरिमिका, याज्यानुवाक्या, अश्वमेधाद्यनुवचननामभिः ख्यातानि सन्ति । एतेषां खण्डानामंशस्य नाम स्थानकमस्ति । एतानि नामानि वैदिकसाहित्येऽन्यत्र दुर्लभानि सन्ति । अस्यां संहितायां स्थानकस्य संख्या चत्वारिंशत्, अनुवचनानां संख्या त्रयोदश, अनुवाकानां संख्या त्रयश्चत्वारिंशदधिकाष्टशतम्, मन्त्राणां संख्या एकनवत्यधिकत्रिसहस्रम्, मन्त्रब्राह्मणयोः सम्मिलिता संख्या अष्टादश-सहस्रपरिमितास्ति ।

इठिमिकायाः अष्टादशस्थानकेषु पुरोडाश-अध्वर-पशुबन्ध-वाजपेय-राज-सूयादियागानां विस्तृतं वर्णनमस्ति । माध्यमिकायाः द्वादशस्थानकेषु सावित्री-पञ्चचूड-स्वर्ग-दीक्षित-आयुष्यादीनां विवेचनमस्ति । ओरिमिकायाः दशस्थानकेषु पुरोडाशब्राह्मण-यजमानब्राह्मण-सत्रप्रायश्चित्ति-चातुर्मास्य-सव-सौत्रामण्यादीनां वर्णनमस्ति । अन्तिमे काण्डे त्रयोदशानुवचनानि सन्ति । अत्र दर्शपौर्णमास-अग्निष्टोम-अग्निहोत्र-आधान-काम्यइष्टि-निरूढपशुबन्ध-वाजपेय-राजसूय-अग्नि-चयन-चातुर्मास्य-सौत्रामणी-अश्वमेधादियज्ञानां विशिष्टविधानेन सह वर्णन-मस्ति । कृष्णयजुर्वेदस्य चतसृषु संहितासु न केवलं स्वरूपतः एकरूपताऽस्ति प्रत्युत तासु वर्णितानुष्ठानेषु तथा तन्निष्पादकमन्त्रेष्वपि साम्यं वर्त्तते ।

## कपिष्ठलकठसंहिता

चरणव्यूहस्य मतानुसारेण चरकशाखान्तर्गते कठानां, प्राच्यकठानां कपि-ष्ठलकठानाञ्च उल्लेखो मिलति, येनोल्लेखेनास्य शाखा-सम्बन्धस्य पूर्णपरिचयो

भवति । कपिष्ठलः एकस्य ऋषिविशेषस्य नाम आसीत् । अस्योल्लेखः महावैयाकरणपाणिनिमहोदयः 'कपिष्ठलो गोत्रे' ( ८।३।९१ ) इत्येतस्मिन् सूत्रे कृतवान् । भाष्यकारेण दुर्गाचार्येणाऽपि स्वात्मानं 'कपिष्ठलो वाशिष्ठः' इति कथितम् ( **अहञ्च कापिष्ठलो वाशिष्ठः, निरुक्तटीकायां ४।४** ) । सम्भवतः कस्यापि स्थानविशेषस्येदमभिधानमासीत् । अस्याः संहितायाः सम्पादकेनानुमीयते यत्—कपिष्ठलग्रामस्य प्रतिनिधिः 'कैथले'त्याख्यो ग्राम एवासीत् । ग्रामोऽयं कुरुक्षेत्रे सरस्वतीनद्याः पूर्वीयक्षेत्रेऽवस्थित आसीत् । अस्य ग्रामस्योल्लेखः काशिकायां तथा वराहमिहिरेण बृहत्संहितायां ( १४।४ ) कृतः ।

अस्याः शाखायाः एकैव प्रतिः, साऽप्यपूर्णा एवोपलब्धा भवति । काठकसंहितातोऽनेकविधं वैभिन्यं पार्थक्यश्चास्यां संहितायां परिलक्ष्यते । काठकसंहितेव मूलग्रन्थस्य समानत्वेऽपि अस्य स्वराङ्कनपद्धतिः ऋग्वेदेन सह मिलति । ऋग्वेद इव ग्रन्थोऽयमष्टकेष्वध्यायेषु च विभक्तोऽस्ति । इत्थंरूपेण कापिष्ठलसंहितायामुपरि ऋग्वेदस्यैव सातिशयः प्रभावः परिलक्ष्यते । ग्रन्थोऽयमपूर्ण एवाऽस्ति । ग्रन्थेऽस्मिन् निम्नलिखितान्यष्टकानि तथा तदन्तर्गता अध्यायाश्च सन्ति—

प्रथममष्टकम्—सम्पूर्णम्, अष्टाध्याययुक्तोऽप्यस्ति ।

द्वितीयमष्टकम्<br>तृतीयमष्टकम् } नवमाध्यायादारभ्य चतुर्विंशति अध्यायपर्यन्तम् । ( त्रुटितमेव ) ।

चतुर्थमष्टकम्—द्वात्रिंशदध्यायं विहाय पञ्चविंशति अध्यायादारभ्य एकत्रिंशदध्यायपर्यन्तं सर्वेऽप्यध्यायाः समुपलब्धाः सन्ति ।

पञ्चममष्टकम्—आदिमोऽध्यायः ( त्रयस्त्रिंशदध्यायं विनाऽन्यसप्ताध्यायाः समुपलब्धाः भवन्ति ) ।

षष्ठमष्टकम्—त्रयश्चत्वारिंशदध्यायं विना सर्वेऽप्यध्यायाः समुपलब्धा भवन्ति । अष्टाचत्वारिंशदध्याये ग्रन्थोऽयं सम्पूर्णो भवति । तुलनादृष्टचा सत्यप्यपूर्णो ग्रन्थोऽयमतीव महत्त्वपूर्णमस्ति । अस्मिन् विषये विशेषाध्ययनार्थं द्रष्टव्यम्—

( i ) Shakhas of the White Yajurveda Puranam II, I, p. p. 6–17

( ii ) Shakhas of the Krishna Yajurveda Puranam. VII, I, p. p. 235 & 253. by Dr. Gangasagar Rai.

## ( ग ) सामसंहिता

चतसृष्वपि संहितासु सामसंहिता परमगौरवशालिनी वर्तते । 'सामानि यो वेत्ति स वेदतत्त्वम्' इत्येतद् बृहद्देवतायाः कथनं तन्महिमानमुच्चैर्गायति । गीतायां भगवान् कृष्ण आह—'वेदानां सामवेदोऽस्मि ।' वेदस्यास्योद्देश्यमस्ति—

गानपूर्वकमुपासनम् । साम्प्रतमस्य गरीयसो वेदस्य त्रिस्र एव शाखाः प्राप्यन्ते । ताश्च इमाः—कौथुमीया, राणायणीया, जैमिनीया च ।

ऋग्वेदे अथर्ववेदेऽपि च सामवेदस्य प्रशस्ता प्रशंसा मिलति । एकस्मिन् मन्त्रे स्पष्टोक्तिरियमस्ति—**'यो जागार तमृचः कामयन्ते, यो जागार तमु सामानि यन्ति'** (ऋ० वे० ५।४४।१४) । अपरस्मिन् मन्त्रे खग-कुल-कलरव-इव सामगायनं मधुरं भवति इति कथितम्—**'उद्गातेव शकुने साम गायसि'** ( २।४३।२ ) । अङ्गिरा-ऋषेः सामस्योल्लेखः अनेकशो मिलति—**'अङ्गिरसां सामभिः स्तूयमानाः'** ( ऋ० वे० १।१०७।२ ) ।

अथर्ववेदस्यानेकस्थलेषु सामवेदस्य विशिष्टा स्तुतिरेव नास्ति प्रत्युत परमात्मभूतोच्छिष्टात् स्कम्भाच्चास्य सामवेदस्याविर्भतस्योल्लेखो मिलति । एकः ऋषिः पृच्छति—यस्य स्कम्भस्य साम लोमोऽस्ति कतमः सः स्कम्भोऽस्ति ? **'सामानि यस्य लोमानि······स्कम्भं तं ब्रूहि कतमः स्विदेव सः ?'** (अथर्ववे० १०।७।२०) । अन्यस्मिन् मन्त्रे ऋग्वेदेन सह सामवेदस्याऽपि आविर्भावः उच्छिष्टादेव प्रदर्शितोऽस्ति—**'ऋचः सामानि छन्दांसि·······उच्छिष्टात्तु यज्ञिरे सर्वे'** (अथ० वे० ११।७।२४) । अपरस्मिन् मन्त्रे कर्मणः साधनभूतस्य ऋग्वेदस्य सामवेदस्य च स्तुतेः विधानमस्ति—**'ऋचं साम यजामहे यासां कर्माणि कुर्वते'** ( अ० वे० ७।५४।१ ) । एतदतिरिक्तः सामवेदस्य विभिन्नमभिधानं प्राचीनवैदिकसाहित्ये समुपलब्धो भवति, येनास्य सामवेदस्य प्राचीनता असन्दिग्धरूपेण सिद्धो भवति । ऋग्वेदे वैरूप-बृहत्-रैवत-गायत्र-भद्रादीनां साम्नानाम् अभिधानं मिलति । यजुर्वेदे रथन्तर-वैराज-वैखानस-वामदेव्य-शाक्वर-रैवत-अभीवर्त्तादीनामुल्लेखो मिलति । एतरेयब्राह्मणे नौधस-रौरय-यौधाजय-अग्निष्टोमीयप्रभृतीनां विशिष्टसाम्नाम् अभिधानस्य निर्देशो मिलति । अनेन प्रतीतो भवति यत् सामगायनं प्राचीनकालादेव समायाति । ऋग्वेदस्यापि समये एतेषां विशिष्टगायनानाम् अस्तित्वं स्पष्टरूपेण सिद्धो भवति ।

**सामशब्दस्यार्थः—**

सामशब्दस्य प्रयोगः द्वयोरर्थयोरेव मिलति । ऋग्मन्त्राणामुपरि गायनमेव वस्तुतः सामशब्दस्य वाच्योऽस्ति । किञ्च ऋग्मन्त्रेभ्योऽपि सामशब्दस्य प्रयोगो मिलति । पूर्वमेव निगदितं सामसंहितायाः सङ्कलनमुद्गातृ-नामके ऋत्विजे कृतमस्ति । उद्गाता अयं देवतायाः स्तुतिपरकमन्त्रानेवावश्यकतानुसारेण विविधस्वरेषु गायति । अतः सामस्याधारः ऋग्मन्त्रा एव भवन्ति, इति निश्चितमिदमस्ति ( **ऋचि अध्यूढं साम**—छा० उ० १।६।१ ) । ऋक्सामयोः प्रगाढमिदं पारस्परिकसम्बन्धं सूचयितुमुभयोर्मध्ये दाम्पत्यभावस्याऽपि कल्पना वर्त्ततेऽत्र । पतिः सन्तानोत्पादनाय पत्न्या आह्वानं कुर्वन् कथयति—सामरूपोऽहं पतिरस्मि त्वञ्च ऋग्रूपा पत्नी असि । अहमाकाशोऽस्मि त्वञ्च पृथ्व्यसि । अतः आगच्छ । आवयोर्मिलित्वा प्रजानामुत्पादनं कुर्वः **'अमोऽहमस्मि सा त्वम्, सामाहमस्मि**

ऋक् त्वम्, द्यौरहं पृथिवी त्वम्, ताविह सम्भवाव प्रजामाजनयावहै' (बृह० उ० ६।५।२०; अ० वे० १४।२।७ ऐ० ब्रा० ८।२७ )।

सामशब्दस्यैकाऽतीव सुष्ठु निरुक्तिः बृहदारण्यकोपनिषदि वर्त्तते—'**सा च अमश्चेति तत्साम्नः सामत्वम्**' (बृह० उ०१।३।२२)। 'सा'-शब्दस्यार्थो भवति 'ऋक्' तथा 'अम'-शब्दस्यार्थोऽस्ति गान्धारादयः स्वराः। अतः सामशब्दस्य व्युत्पत्तिलभ्यार्थोऽभवत्—ऋचा सह सम्बद्धस्वरप्रधानगायनम्—'**तया सह सम्बद्धः अमो नामस्वरः यत्र वर्त्तते तत्साम।**' यासामृचामुपरि सामगानं भवति ता ऋचः वेदज्ञाः 'सामयोनिः' नाम्ना जानन्ति। अत्र स्मरणीयमस्ति यदिदं सामसंहिताया वर्णनमस्ति। इदं तासां सामऋचां सङ्ग्रहमात्रमेवाऽस्ति अर्थात् सामसंहितायां केवलं सामोपयोगिनां मन्त्राणां सङ्कलनमेवास्ति, तेषां गायनानां नास्ति यत्सामवेदस्य मुख्यं वाच्यमस्ति।

**सामवेदस्य परिचयः—**

सामवेदस्य द्वौ प्रधानौ भागौ स्तः—आर्चिकस्तथा गानम्। आर्चिकस्य शाब्दिकार्थोऽस्ति—ऋक्-समूहः। सोऽपि द्विधा विभज्यते—पूर्वार्चिकमुत्तरार्चिकञ्चेति। पूर्वार्चिकमेव छन्दः, छन्दसी, छन्दसिका चेति त्रिभिरपि नामभिरभिधीयते। विषयानुसारं पूर्वार्चिकं चतुर्षु भागेषु विभज्यते—आग्नेयपर्व (अग्निसम्बन्धिनीभिर्ऋग्भिरुपेतम्), ऐन्द्रपर्व (इन्द्रसम्बन्धिनीभिर्ऋग्भिर्युतम्), पवमानपर्व (सोमविषयकम्), आरण्यकञ्चेति। पूर्वार्चिके षट् प्रपाठकाः अथवा अध्यायाः सन्ति। प्रतिप्रपाठकं द्वौ अर्द्धौ वा खण्डौ स्तस्तथा प्रतिखण्डं एकदशतिः प्रतिदशत्यां ऋचः सन्ति। प्रथमाध्यायादारभ्य पञ्चमाध्यायपर्यन्तस्य ऋचस्तु 'सामगान' नाम्ना ख्याताः सन्ति, किञ्च षष्ठाध्यायस्य ऋचः अरण्ये एव गायन्ति। अतोऽत्रासां ऋचः एकत्र सङ्ग्रहोऽस्ति। अस्यान्ते परिशिष्टरूपेण 'महानाम्नी' इत्याख्याः दशऋचः सन्ति। अनेन प्रकारेण पूर्वार्चिके मन्त्राणां संख्या पञ्चाशदधिकषट्शतं ( ६५० ) अस्ति।

उत्तरार्चिकं तु अनुष्ठाननिर्देशकम्। तस्य बहवो विभागाः—दशरात्रम्, संवत्सरम्, ऐकाहम्, अहीनम्, सत्रम्, प्रायश्चित्तम्, क्षुद्रञ्चेति प्रमुखास्तत्र भेदाः सन्ति। अस्मिन्नुत्तरार्चिके नवप्रपाठकाः सन्ति। प्रथमपञ्चप्रपाठकेषु द्वौ द्वौ भागौ स्तः, यौ प्रपाठकार्द्धनाम्ना ख्यातौ स्तः, किञ्चान्तिमचतुर्षु प्रपाठकेषु त्रयस्त्रयोऽर्द्धाः सन्ति। राणायणीयशाखानुसारोऽयमस्ति भेदः। उत्तरार्चिकस्य समग्रमन्त्राणां संख्या ( १२२५ ) पञ्चविंशत्यधिकद्वादशशतमस्ति। अतरुभयोरार्चिकयोः सम्मिलितानां मन्त्राणां संख्या ( १८७५ ) पञ्चसप्तत्यधिकाष्टादशशतमस्ति।

**ऋक्-सामयोः सम्बन्धस्य मीमांसा—**

सामवेदस्य गानप्रचुरता प्रथिता, ऋच एव गीयन्ते, सामवेदे १८७५ मन्त्राः सन्ति, तेषु ७५ मन्त्राः ईदृशाः ये ऋग्वेदेन प्राप्यन्ते, शेषाः सर्वेऽप्युभयवेदसाधा-

रणाः। सामवेदागतमन्त्राणां सप्तस्वराः, यतस्ते गीयन्ते, ऋग्वेदे पुनस्तेषामेव मन्त्राणां त्रय एव स्वराः, मुख्यत एतावानेवोभयवेदसाधारणानां साममन्त्राणामृग्वेदमन्त्रेभ्यो भेदोऽस्ति।

सामवेदस्य ऋक्षु ऋग्वेदस्य ऋग्भिरधिकतरमांशिकसाम्यमेवाऽस्ति। ऋग्वेदस्य—**'अग्ने युक्ष्वा हि ये तवाश्वासो देवसाधवः अरं वहन्ति मन्यवे'** ( ६।१६।४३ ), सामवेदे—**'अग्ने युक्ष्वा हि ये तवाश्वासो देवसाधवः। अरं वहन्त्याशवः'** अनेन रूपेण पठितोऽस्ति। ऋग्वेदस्य मन्त्रांशः **'अपोमहि व्ययति चक्षसे तमोज्योतिष्कृणोति सूनरी'** ( ७।८१।१ ), सामवेदे—**'अपोमहि वृणुते चक्षुषा तमो ज्योतिष् कृणोति सूनरी'** इत्यनेन रूपेण मिलति। अस्यांशिकसाम्यस्य तथा मन्त्रेषु पादव्यत्ययस्यानेकान्युदाहरणानि सन्ति सामवेदे। यदि एताः ऋचः ऋग्वेदादेव सङ्गृहीताः भवेयुस्तर्हि ताः तस्मिन्नेव रूपे तथा तस्मिन्नेव क्रमे सङ्गृहीता भवन्ति।

यद्येता ऋचः गायनार्थमेव सामवेदे सङ्गृहीताः सन्ति, तर्हि केवलं तावदेव मन्त्राणामृग्वेदात् सङ्कलनं कर्त्तव्यमासीत् यावद् गातुं वा सामाय अपेक्षितो भवेयुरिति। प्रत्युत वयं पश्यामः यत् सामसंहितायां विपरीतमस्य प्रायः ( ४५० ) पञ्चाशदधिकचतुःशतमन्त्रा ईदृशाः सन्ति येषामुपरि गानस्य काऽपि व्यवस्था नास्ति। ईदृशां गानानपेक्षितमन्त्राणां सङ्कलनं सामसंहितायां कथं कृतमिति ?

यदि सामसंहितायाः मन्त्राः ऋग्वेदादेव सङ्गृहीताश्चेत् तर्हि तेषां रूपमेव नास्ति प्रत्युत तेषां स्वरनिर्देशोऽपि तद्वदेव भवितव्यम्। ऋग्वेदे उदात्तानुदात्तस्वरिताः स्वरा मिलन्ति, किञ्च सामवेदे तेषां निर्देशः १, २ तथा ३ अङ्कैः कृतः। नारदीयशिक्षानुसारेणैते स्वराः क्रमशः मध्यम-गान्धार-ऋषभ-स्वरा भवन्ति। एते स्वराः अङ्गुष्ठ, तर्जनी तथा मध्यमाख्यानामङ्गुलीनां मध्यमपर्वोपरि अङ्गुष्ठस्य स्पर्शं कुर्वन् प्रदर्श्यन्ते। साममन्त्राणामुच्चारणमृग्मन्त्राणामुच्चारणान्नितान्तं भिन्नं भवति।

यदि सामवेदः ऋग्वेदादनन्तरस्य रचना चेत् तदा ऋग्वेदस्यानेकेषु स्थलेषु सामवेदस्योल्लेखः कथं मिलति ? **'अङ्गिरसां सामभिः स्तूयमानाः'** ( ऋ० १।१०६।२), **'उद्गातेव शकुने साम गायति'** (२।४३।२), **'इन्द्राय सामगायत विप्राय बृहते बृहत्'** ( ८।९८।१ ) इत्यादिषु मन्त्रेषु सामान्यसाम्नोऽपि उल्लेखो नास्ति, प्रत्युत 'बृहत्साम' इव विशिष्टसाम्नोऽपि उल्लेखो मिलति। ऐतरेयब्राह्मणस्य ( २।२३ ) स्पष्टकथनमस्ति यत् सृष्टयाः आरम्भे ऋक्-साम्नोरस्तित्वमासीत् **(ऋक् च वा इदमग्रे सामञ्चास्ताम्)**। नैतावदेव, यज्ञसम्पादनाय अध्वर्युस्तथा ब्रह्मानामकस्य ऋत्विजा सह उद्गातुरपि सत्ता सर्वथा मान्याऽस्ति। एतेषां चतुर्णामृत्विजां समुपस्थितावेव यज्ञसम्पत्तेः सिद्धिर्भवेत्। उद्गातुः कार्यं तु

सामगानमेवाऽस्ति। तर्हि साम्नोऽर्वाचीनता कथं विश्वसनीया भवेत् ? मनुना लिखितं यत् यज्ञसिद्धये वह्नेः, वायोः तथा सूर्यात् क्रमशः ऋक्, यजुस्तथा सामवेदानां दोहनं कृतम् ( मनु० १।२३ ) **'त्रयं ब्रह्म सनातनम्'**। इति कथने वेदाय प्रयुक्तं सनातनविशेषणपदं वेदानां नित्यतां तथा अनादितां प्रकटयति। दोहनशब्दादपि अस्यैव तथ्यस्य सम्पुष्टिर्भवेत्।

सामवेदस्य नामकरणं विशिष्टानां ऋषीणां नाम्ना कृतं मिलति तर्हि किं ते ऋषयस्तेषां साम्नां कर्त्तारः न सन्ति ? अस्योत्तरमस्ति येन साम्ना सर्वप्रथमं यमृषिं स्वेष्टस्य प्राप्तिरभवत् तस्य साम्नः असौ ऋषिः कथितः। ताण्ड्यब्राह्मणेऽस्य तथ्यस्य द्योतकः स्पष्टप्रमाणं मिलति। **'वृषाशोणो अभिकनिक्रदत्'** ( ऋ० ९।९७।१३ )। ऋचः वसिष्ठनामकरणस्येदमेव कारणमस्ति। वीडुपुत्रवसिष्ठः अनेन साम्ना स्तुतिं कृत्वाऽनायासेन स्वर्गं प्राप्तवान्—**'वासिष्ठं भवति, वशिष्ठो वा एतेन वैडवः स्तुत्वाञ्जसा स्वर्गं लोकमपश्यत्।'** ( ताण्ड्यब्राह्म० ११।८।१३ ), **'तं वोदस्ममृतीषहं'** ( ९।८८।१ ) मन्त्रोपरि 'नौधससाम्नो नामकरणस्येवंविधेव कारणमन्यत्र कथितम् ( ताण्ड्य० ७।१०।१० )। फलतः इष्टसिद्धिनिमित्तकत्वेन साम्नाम् ऋषिपरकं नाम भवति, रचनाहेतुत्वेन तु तन्नास्ति।

**सामवेदस्य शाखाः—**

भागवत-विष्णु-वाय्वादिपौराणिकमतानुसारेण वेदव्यासमहोदयः स्वशिष्याय जैमिनये सामवेदस्य शिक्षामददात्। कविः जैमिनिरेव सामवेदस्याद्याचार्यरूपेण सर्वत्र प्रसिद्धोऽस्ति। जैमिनिः स्वपुत्रं सुमन्तुम्, सुमन्तुः स्वात्मजं सुन्वान्तम्, सुन्वान् स्वसूनुं सुकर्माणं सामवेदसंहिताया अध्ययनं कारितवान्। अस्याः संहितायाः विपुलप्रसारस्य श्रेयः अमुमेव वेदाचार्यसुकर्माणमस्ति। अस्य द्वौ पट्टशिष्यौ स्तः—हिरण्यनाभकौशल्यस्तथा पौष्यञ्जिः, याभ्यां सामवेदस्य द्विविधा धारा प्रस्फुटिताऽभवत्। सा तु—प्राच्यस्तथोदीच्यः। प्रश्नोपनिषदि ( ६।१ ) हिरण्यनाभः कौशलदेशीयराजपुत्ररूपेण चित्रितोऽस्ति। भागवतपुराणे ( १२।६।७८ ) सामगानां परम्पराद्वयस्योल्लेखो मिलति—'प्राच्यसामगास्तथोदीच्यसामगाः। भौगोलिकभिन्नत्वेनैवात्र नामकरणस्य भिन्नताऽस्ति। हिरण्यनाभस्य शिष्यः पौरववंशीयः राज्ञः सन्नतिमान् महोदयस्य पुत्रः कृत आसीत्, येन सामसंहितायाः स्वशिष्यैः चतुर्विंशतिः प्रकारेण प्रवर्त्तनं कृतम्। अस्य वर्णनं मत्स्यपुराणे ( ४९।७५-७६ ), हरिवंशपुराणे ( २०।४१–४४ ), विष्णुपुराणे ( ४।१९–५० ), वायुपुराणे ( ४१।४४ ), ब्रह्माण्डपुराणे ( ३५।४९–५० ) तथा भागवतपुराणे ( १२।६।८० ) सामान्यरूपेण मिलति। वायुपुराणे तथा ब्रह्माण्डपुराणे च कृतमहोदयस्य चतुर्विंशतिशिष्याणां नाम अपि मिलति। कृतमहोदयस्यानुयायित्वेन सामाचार्याः कार्त्तनाम्ना प्रख्याता आसन्। यथा—

'चतुर्विंशतिधा येन प्रोक्ता वै सामसंहिताः ।
स्मृतास्ते सामगाः प्राच्याः कार्त्ता नाम्नेह सामगाः ॥'

अस्य लौगाक्षि-माङ्गलि-कुल्य-कुसीद-कुक्षि-नाम्नां पञ्चशिष्याणामुल्लेखः श्रीमद्भागवते ( १२।६।७९ ) मिलति । प्रतिशिष्यं सामसंहितायाः शत-शत-मध्यापनमकारयत् । पौराणिकानां मतानुसारेण सामवेदस्य सहस्रशाखा वर्तन्ते । अस्य समर्थनं पतञ्जलिनाऽपि कृतम्—'सहस्रवर्त्मा सामवेदः ।' मूलतो गान-प्रधानोऽयं सामवेदः । सम्प्रति प्रपञ्चहृदयस्य, दिव्यावदानस्य, चरणव्यूहस्य तथा जैमिनिगृह्यसूत्रस्य ( १।१४ ) च पर्यालोचनेन त्रयोदशशाखानामुल्लेखो मिलति । सामतर्पणस्यावसरे एतेषामाचार्याणां नामोच्चारणस्य तर्पणविधाने उल्लेखोऽस्ति—**'राणायण–सात्यमुग्रि–व्यास–भागुरि–औलुण्डि-गौल्मुलवि–भानु-मानौपन्यव-काराटि-मशक-गार्ग्य-वार्षगण्यकौथुमि-शालिहोत्र-जैमिनि-त्रयोदशैतेमे सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः ।'** सम्प्रति सामवेदस्य तिस्रः शाखाः मिलन्ति—कौथुमीया, राणायनीया, जैमिनीया चेति ।

## १. कौथुम-शाखा

अस्याः संहिता सर्वाधिकलोकप्रियाऽस्ति । अस्याः ताण्ड्यनामकशाखाऽपि मिलति । यस्याः विशिष्टः प्रभावः प्रसारश्चातीतकाले आसीत् । आचार्यशङ्करः स्ववेदान्तभाष्यस्यानेकस्थलेषु अस्य चर्चां कृतवानस्ति । चर्चेयमस्य गौरवस्य महत्त्वस्य च सूचिकाऽस्ति । पञ्चविंशतिकाण्डात्मकः विपुलकायः ताण्ड्यब्राह्मण-ग्रन्थः अस्यैव शाखाया वर्त्तते । सुप्रसिद्धछान्दोग्योपनिषदपि अनया शाखया सम्बद्धोऽस्ति—**'यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके स आत्मा'** ( शा० भा० ३।३।३६ ), **'स आत्मा·······छान्दोग्य उपनिषद्** ( ६८।७ ) **तथा 'अन्येऽपि शाखिनः ताण्डिनः शाट्यायिनः'** ( शा० भा० ३।४।२७ )। अस्य स्पष्टनिर्देशः शङ्कराचार्येण स्वभाष्ये कृतः ।

## २. राणायनीयशाखा

अस्याः संहिता कौथुमीयात् कथमपि भिन्ना नास्ति । मन्त्रगणनादृष्ट्या उभावपि एक एव स्तः । केवलमुच्चारणे यत्र कुत्र पार्थक्यमुपलब्धो भवति । कौथुमीयाः जनाः यत्र 'हाउ' तथा, 'राइ' इत्येतत्पदमुच्चारयन्ति तत्र राणा-यणीयगणाः 'हावु' तथा 'रायी' इत्युच्चारणं कुर्वन्ति । राणायणीयेषु एकावान्त-रशाखा सात्यमुग्रि वर्त्तते; यस्योच्चारणस्यैका विशेषता भाषाविज्ञानदृष्ट्या नितान्ताऽऽलोचनीयाऽस्ति । आपिशली शिक्षाकृता तथा महाभाष्यकारेण च स्पष्टतया निर्देशितं यत् सात्यमुग्रिजना एकारस्योकारस्य च स्थाने ह्रस्वोच्चा-रणं कुर्वन्ति । यथा—

'छन्दोगानां सात्यमुग्रिराणायणीया ह्रस्वानि पठन्ति ।'

( आपि० शि० )

\+ \+ \+

ननु च भोश्छन्दोगानां सात्यमुग्रि-राणायणीया अर्धमेकारं........अर्धमोकारं च अधीयते । सुजाते ए अश्वसूनृते । अध्वर्वो ओ अद्रिभिः सुतम्' ( सामवेद १।१।८।३ ) ( महाभाष्यम्–१।१।४।४८ ) ।

## ३. जैमिनीयशाखा

अस्याः शाखायाः समग्रांशाः, ब्राह्मण-श्रौत-गृह्यसूत्रसहिताः समुपलब्धाः सन्ति । जैमिनीयसंहिता नागराक्षरेऽपि लाहौरनगरात् प्रकाशिताऽभवत् । अस्याः मन्त्राणां संख्या १६८७ वर्त्तते । तवलकारशाखा अस्या एव अवान्तर-शाखा वर्त्तते । तवलकारोऽयं जैमिनिमहोदयस्य पट्टशिष्य आसीत् । जैमिनीय-सामगानस्य प्रथमप्रकाशनं संस्कृतविश्वविद्यालयवाराणसीतोऽभवत् । सामगानमिदं पूर्वार्चिकेन सम्बद्धोऽस्ति । अस्य त्रयो भागाः सन्ति—आग्नेयः, ऐन्द्रः, पवमानश्चेति । एतेष्वादिमस्य चान्तिमस्य च पर्वस्य विशेषविभागो नास्ति, किञ्चैन्द्रपर्वस्य चत्वारो भागाः सन्ति । सम्पूर्णग्रन्थे गानसंख्या १,२२४ वर्त्तते । कौथुमीयसामसंहितातः जैमिनीयसामसंहितायाः पाठे सर्वथा भेदो नास्ति, किञ्च गानप्रकारस्तु सर्वथा भिन्न एवास्ति । अद्यपर्यन्तं केवलमस्य प्रथमभाग एव प्रकाशितोऽस्ति । द्वितीयखण्डस्तु हस्तलेखे एवास्ति ।

**सामगानस्य पद्धतिः**

एतेषां सामयोनिमन्त्राणाम् आश्रयं गृहीत्वा ऋषिभिः गान-मन्त्राणां रचना कृताऽस्ति । गानस्तु चतुर्धा भवति—( १ ) ( ग्रामः ) वेयगानम् ( अस्यैवापरं नाम प्रकृतिगानम् ), ( २ ) आरण्यकगानम् ( ऊहगानम् ), ( ४ ) ऊह्यगानं वा रहस्यगानम् । पूर्वार्चिकस्य प्रथमपञ्चमाध्यायगत-मन्त्राणामुपरि वेयगानं भवति । आरण्यकपर्वे निर्दिष्टमन्त्राणामुपरि आरण्यकगानं भवति । ऊहगानमूह्यगान-श्चोत्तरार्चिके उल्लिखितमन्त्राणामुपरि मुख्यतया भवति । विभिन्नशाखा-यामेतेषां मन्त्राणां संख्याऽपि विभिन्ना एव भवन्ति । सर्वाधिकगानानि जैमिनीय-शाखायामेवोपलब्धानि सन्ति ।

| कौथुमीयगानम् | | जैमिनीयगानम् |
|---|---|---|
| वेयगानानि ... --- | ११९७ ... ... | १२३२ |
| अरण्यगानानि ... ... | २९४ ... ... | २९१ |
| ऊहगानानि ... ... ... | १०२६ ... ... | १८०२ |
| ऊह्यगानानि ... ... ... | २०५ ... ... | ३५६ |
| सर्वेषां सङ्कलनम् | २७२२ | ३६८१ |

भारतीयसङ्गीतशास्त्रस्य मूलमेतेष्वेव सामगानेषूपर्यवलम्बितमस्ति । सामगानपद्धत्या रहस्यज्ञानमप्यधुना तथैव दुरूहोऽस्ति यथा भारतीयसङ्गीतशास्त्रस्य ज्ञानरहस्यमस्ति । नारदीयशिक्षानुसारेण सामवेदस्य स्वरमण्डलानि निम्नलिखितान्येव सन्ति—

| सामानि | वेणवः |
|---|---|
| १. प्रथमः ··· ··· ··· ··· ······ ··· | मध्यमः । म |
| २. द्वितीयः ··· ··· ··· ··· ··· ··· | गान्धारः । ग |
| ३. तृतीयः ··· ··· ······ ··· ··· ··· | ऋषभः । रे |
| ४. चतुर्थः ··· ··· ··· ··· ··· ··· ··· | षड्जः । सा |
| ५. पञ्चमः ··· ··· ··· ··· ··· ··· | निषादः । नि |
| ६. षष्ठः ··· ··· ··· ··· ··· ··· ··· ··· | धैवतः । ध |
| ७. सप्तमः ··· ··· ··· ··· ··· ··· ··· | पञ्चमः । प |

सामगानेष्वेता एव सप्ताङ्कास्तत्तत्स्वराणां स्वरूपं सूचयन्ति । साममन्त्रेषूपरि प्रदत्ताङ्कानां व्यवस्था विभिन्नप्रकारका एवेति । सामयोनिमन्त्रान् सामगानेषु परिवर्तनेऽनेकविधानि सङ्गीतानुकूलपरिवर्त्तनानि च भवन्ति । एतानि परिवर्त्तनानि च सामविकाराः कथ्यन्ते । सामविकारास्तु षट्संख्यकाः भवन्ति ।

१. **विकारः**—शब्दस्य परिवर्त्तनम् । 'अग्ने' इत्येतत्पदस्थाने 'आग्नायि' इति पदम् ।

२. **विश्लेषणम्**—एकपदस्य पृथक्करणम् । यथा—'तये' इत्येतत्पदस्थाने तोयितीया' २यि ।

३. **विकर्षणम्**—एकस्वरस्य दीर्घकालपर्यन्तं विभिन्नोच्चारणम् । ये= या २ ३ यि ।

४. **अभ्यासः**—कस्यापि पदस्य भृशमुच्चारणम् ( पौनःपुन्येन ) । यथा—'तोयायि' पदस्य वारद्वयमुच्चारणम् ।

५. **विरामः**—सौकर्य्याय कस्यापि पदस्य मध्ये विरामः । यथा—'गृणानि हव्यदातये' इत्यस्मिन् पदे हकारोपरि विरामः ।

६. **स्तोमः**—'औ' 'होवा' 'हाउआ' इत्यादिगानानुकूलपदानि ।

एते विकाराः भाषाशास्त्रस्य दृष्ट्याऽपि नितान्तं मननीयाः सन्ति ।

## सामवेदविमर्शः

**'साम'-शब्दस्तु रूढोऽस्ति । अस्यार्थः गानमथवा गीतिरस्ति । अस्मिन् सन्दर्भे जैमिनिनाऽप्युक्तम्—'गीतिषु सामाख्या' ( जै० सू० २।१।३६ ) । सामगानविशेषस्य रथन्तरम्, बृहदादि च नामकरणमस्ति । सामशब्दस्तु सामान्यगानवाचकोऽस्ति तथा रथन्तर-बृहदादिशब्दास्तु विशेषगानवाचकाः सन्ति । रथन्तर-बृहदादिनामकरणस्य प्रयोजकोऽध्येतृप्रसिद्ध एवास्ति । गायत्र्यादिषु सर्वेषु**

छन्दःसु सामगानमस्ति । उदाहरणार्थम्—'अग्न आयाहि वीतये' (छन्द आर्थिक: १।१।१ ), अस्य गायत्रीच्छन्दसः ऋचामुपरि वेयगाने ( १।१।१ ) साममस्ति । 'पुरुत्वादाशिव' ( छं० आ० २।१।१ ), अस्योष्णिक्छन्दस्क-ऋचामुपरि वेयगाने ( २।२।१९ ) सा:मस्ति । 'यज्ञयज्ञा वो' ( छं० आ० १।१।३५ ), अस्य बृहती-च्छन्दसः ऋचामुपरि वेयगाने ( १।२।२७ ) सामगानमस्ति । 'स्वादोरित्थ विषूवतो' (छ० आ० ५।१।१९), अस्य पङ्क्तिच्छन्दस्क-ऋचामुपरि वेयगाने ( ११। १।६ ) 'आजुहोता हविषा' ( छ० आ० १।२।९ ,, अस्य त्रिष्टुप्छन्दसः ऋचा-मुपरि वेयगाने ( २।१।३४ ), 'चित्र इच्छिपो' ( छं० आ० १।२।१० ), अस्य जगतीच्छन्दसः ऋचामुपरि वेदगाने ( २।१।३५ ) सामगानमस्ति । अनेन प्रकारेणैव अतिजगती-शक्वरी-अतिशक्वरी-अष्टि-अत्यष्टिप्रभृतीनामतिच्छन्दक-ऋचा-मुपरि सामगानमस्ति । साम्नः परस्परवैशिष्टच-विकार-विश्लेषण-विकर्षण-अभ्यास-विराम-स्तोमादीनां कारणम्भवति ।

यज्ञेषु औद्गातृगणस्य चतुर्णामृत्विजां कार्यकलापेषु क्वापि भिन्नता क्वचिच्च सहकारिताऽपि भवति । अस्य विधानं श्रौतसूत्रेणावगन्तुं शक्यते । साम्नां यज्ञेषु क्वचित् केवलं प्रस्तोत्रे क्वचिच्चोद्गात्रे गानविधानमस्ति । क्वचिच्च प्रस्ताव-उद्गीथ-प्रतीहार-उपद्रव-निधनरूपैः गानस्य पञ्चविभागं कृत्वा विभिन्नांशाय ऋत्विग्भिरुच्चारण्यविधिरस्ति ।

पूर्वार्चिकस्योत्तरार्चिके नैतदेव सम्बन्धमस्ति यदुत्तरार्चिके यत्प्रगाथः किंवा ऋचां सूक्तानि सन्ति तास्वधिकतराः प्राक् ऋचः पूर्वार्चिके पठिताः सन्ति । पूर्वार्चिके नानाविधसाम्नां योनिभूता ऋचः पठिताः सन्ति, तथोत्तरार्चिके प्रगाथतृचादिसूक्तानि पठिताः सन्ति । एकस्मिन् प्रगाथात्मके वा तृचाद्यात्मके सूक्ते पूर्वार्चिकान्तर्गतयोनिभूता ऋक् पूर्ववर्त्तिनी भवति तथापरास्तूत्तरकालिकां ऋचः भवन्ति । पूर्वार्चिकस्योत्तरार्चिकेन सह सम्बन्धं नीत्वा पाश्चात्यपण्डितास्तु पर्याप्तपर्यालोचनं कृतवन्तः । डा० कैलेण्डरमहोदयस्तु पूर्वमुत्तरार्चिकमेवोभयोर्मध्येऽपेक्षाकृतप्राचीनतरममन्यत्, किञ्च सम्प्रति सः पूर्वमतं भ्रान्तं मत्वा तं त्यक्तवान् । सामविधानब्राह्मणे उत्तरार्चिकस्य मन्त्राणामुद्धरणं कुत्राऽपि न दृश्यते । अथर्वपरिशिष्ट( ४६।३।६ )स्यानुसारेण पूर्वार्चिकस्योपान्ता ऋगेव सामवेदस्यान्तिमा ऋगस्ति ( सा० सं० ५८४ ) । अस्यैव प्रमाणस्याधारे डॉ० ओल्डनवर्गमहोदयेन पूर्वार्चिकं पूर्वतरं स्वीकृतम् । उत्तरार्चिकस्तु निश्चितरूपेण यज्ञोपयोगिनामृचामवान्तरकालिकः सङ्ग्रह एवास्ति । एतावदेव नास्ति, प्रत्युत अस्योपरि आश्रितमूह्यगानमूहगानञ्च ते सामवेदीयग्रन्थेषु पश्चाद् विरचितं मन्यते । ते एतान् गानग्रन्थान् ताण्डयब्राह्मणात्पश्चात्, लाटचायनश्रौत-सूत्रात् पश्चात्, आर्षेयकल्पसूत्रात्, पुष्पसूत्रादपि पश्चाद्वर्त्तिनी रचनाज्ञातुमाग्रहं कुर्वन्ति । द्राह्यायणश्रौतसूत्रस्य टीकाकारः धन्वी वदति—ऊहगानन्तु सूत्र-

कारादपि पश्चान्निर्मितमभवत् । अनेनाधुनिकपरिशीलनेन ज्ञातो भवति यत्पूर्वार्चिकः उत्तरार्चिकापेक्षया प्राचीनतरः सिद्धो भवति ।

## गानप्रकारः

गानन्तु चतुर्धा भवति, येषां निर्देशकाः विभिन्ना ग्रन्थाः सन्ति । एतेषां चतुर्विधानां नामानि सन्ति—( १ ) वेयगानम् अथवा ग्रामे गेयगानम्, ( २ ) आरण्यगानम्, ( ३ ) ऊहगानम् तथा ( ४ ) ऊह्यगानं विकृतिगानं वा । ऊहगानस्य प्रकृतिः वेयगानमस्ति । ऊह्यगानस्य प्रकृतिः किंवा योनिरारण्यगानम्भवति । अस्य तात्पर्यमस्ति यद् वेयगाने प्रयुक्तस्वरादीनामाश्रयं गृहीत्वा एवोहगानस्य निर्माणं भवति तथाऽरण्यगानस्य स्वररागादीनामाधारोपरि ऊह्यगानस्य रचनाऽभवत् । एतेषां चतुर्णां गानानां स्वरूपस्य पार्थक्यं तेषां नामकरणेनैव स्पष्टो भवति । वेयगानस्यापरं नाम ग्रामे गेयगानमस्ति, अर्थात् गानमिदं कस्मिंश्चिदपि ग्रामेऽथवा समाजे गेयं भवति, किञ्चारण्यगानान्तर्गतसामगानम् अरण्ये एव गेयं भवति । सामवेदीनां मान्यताऽस्ति यदारण्यगानस्य स्तोममीदृग् विलक्षणं तथा विचित्रं भवति यद् ग्रामे यदि तस्य गानं भवेत् तर्हि तत्रानर्थस्य सम्भावना भवति । इमानि गानानि एवंविधपवित्राणि भवन्ति यदरण्यस्य पवित्रवातावरणे एव तेषां गायनं कर्त्तुमर्हति, तदैव तेषां समुचितप्रभावोत्पादनं भवति । 'ऊह'-शब्दस्यार्थो भवति—'ऊहनम्' । कस्मिंश्चिदप्यवसरविशेषे मन्त्राणां सामयिकपरिवर्तनम् । अनया व्याख्यया 'ऊहगानम्' सोमयागस्यावसरे प्रयोजनीयसामानां नाम वर्त्तते । ऊह्यगानस्य सम्पूर्णं नाम ऊह्यमर्थात् रहस्यगानमस्ति । रहस्यात्मकत्वेन गानमिदमारण्यगानस्य विकृतिगानं मन्यते । आरण्यज्ञानमिवेदमपि गानं रहस्यात्मकं भवति । अतएव समाजमध्ये सर्वसाधारणसम्मुखे गानमिदं निषिद्धमस्ति ।

मन्त्राणामुपरि निश्चितमेव सामं भवति । साममिदं नानियतमपितु नियतमेवास्ति । नियमनस्य बीजं वैदिकप्रसिद्ध एव स्वीकर्तुं शक्यते । सामवेदे पठितानां समग्राणाम् ऋचामुपरि सामं भवतु एवंविध न कोऽपि नियमोऽस्ति । कतिपयानामृचामुपरि सामस्य सर्वथाऽभावोऽस्ति । ऋचः उत्तरार्चिके एव मिलन्ति । यथा—**'यत्र वाणाः सम्पतन्ति कुमाराः विशिखा इव'** (सा० वे० सं० १८६६), **'भद्रं कर्णेभिः श्रृणुयाम देवाः'** ( साम० सं० १८७४ ) **'आशुः शिशानो वृषभो न भीमः'** ( सा० सं० १८४९ ) । गानग्रन्थेष्वासामृचामुपरि न किमपि गानमस्ति । एवंविधाः अनेकऋचः मिलन्ति यासु चतुर्विधं गानं भवति । तेऽपि भिन्नप्रकारस्य मिलन्ति । यथा—**'अयारुचा हरिण्या'** ( सा० सं० ४६३ ) तथा **'अयं पूषारयिर्भगः'** (सा० सं० ५४६ एवं ८१८) । अस्याः उपरि पूर्वोक्तं चतुर्विधं गानं मिलति । न तावदेतावदेव एकस्या एव ऋचः उपरि प्रयुक्तस्य सामानां संख्या एकषष्टिः ( ६१ ) वर्त्तते । गानान्येतानि **'पुनानः सोमधारया'**

( ऋ० ९।१०७।४, सा० सं० ५११ ) मन्त्रस्योपरि गानं भवति। अस्यापरा संख्या (५९) ऊनषष्टिरस्ति या **'पुरोजिती वोऽधसः'** (सा० सं० ५४५) ऋचः उपरि अधिष्ठिताः भवन्ति। तृतीया संख्या सामानां ( ४८ ) अष्टाचत्वारिंशदस्ति। **'यः धारया पावकया'** (सा० सं० ६९८) मन्त्रस्योपरि गायति। ऋचः गानस्य पञ्चविंशति संख्याः तु अनेकाः सन्ति। एतेषां विशिष्टसामानां स्थित्यास्तथा संख्यायाः नियमनं तु प्राचीनवैदिकपरम्परायारुपर्येवाश्रितमस्ति।

## स्तोमस्तथा विष्टुतिः

शस्त्र-स्तोत्रयोर्मध्येऽन्तरं भवति। शस्त्रस्य लक्षणमस्ति—**'अप्रणीतमन्त्रसाध्या स्तुतिः शस्त्रम्।'** अर्थात् गायनं विना मन्त्रेण सम्पादिता स्तुतिः। शस्त्रम् ऋग्वेदे भवति, स्तोत्रं तु सामवेदे। स्तोत्रस्य स्पष्टार्थो भवति—**'प्रगीतमन्त्रसाध्यास्तुतिः स्तोत्रम्।'** स्तोत्रमपि स्तुत्याः एकं प्रकारान्तरं भवति। स्तोमानां प्रयोगोऽपि यज्ञयागेषु भवति। अस्य विशेषवर्णनं ताण्ड्यब्राह्मणे कृतमस्ति। स्तोमस्य संख्या त्रिवृत्-पञ्चदश-सप्तदश-एकविंश-त्रिणव-त्रयस्त्रिंश-चतुर्विंश-चत्वारिंश-अष्टचत्वारिंशादि नवा सन्ति। स्तोमोऽयं प्रायः तृचानामुपरि भवति। तृचमेनं त्रिपर्याये गानस्य नियमोऽस्ति। तृतीयपर्याये एव स्तोमस्य स्वरूपं निष्पन्नं भवति। अस्या वृत्तिजन्यगानप्रकारस्य संज्ञा विष्टुतिरर्थात् विशेषस्तुतिरस्ति। एतेषां नवस्तोमानां समग्रविष्टुत्याः संख्यायां ( २८ ) अष्टाविंशतिरस्ति। अस्य विशेषवर्णनं ताण्ड्यब्राह्मणस्य द्वितीये तृतीये च अध्याये मिलति।

## सामविभागः

सामगानस्य पद्धतिरतीव कठिनाऽस्ति। तस्य यथार्थज्ञानाय सूक्ष्माध्ययनस्यावश्यकता वरीवर्त्ति। सामान्यतया सामगानस्य पञ्चविभागाः भवन्ति।

( १ ) प्रस्तावः—मन्त्रस्य प्रारम्भिकभागोऽयं भवति। प्रस्तावोऽयं 'हुँ'-शब्दात् प्रारम्भो भवति। प्रस्तोतानामकः ऋत्विग् अस्य गानं करोति।

( २ ) उद्गीथः—साम्न प्रधानः ऋत्विक् उद्गाता एनं गायति। अस्यारम्भः 'ॐ'-शब्दात् भवति।

( ३ ) प्रतीहारः—प्रतीहारशब्दस्यार्थो भवति सङ्कलनकर्त्ता, प्रतिहर्त्तानामकः ऋत्विगेनं गायति। अस्य यदा कदा खण्डद्वयमपि भवति।

( ४ ) उपद्रवः—यमुद्गाता गायति तदेवोपद्रवः।

( ५ ) निधनः—प्रस्तोता-उद्गाता-प्रतिहर्त्ता त्रयो मिलित्वैव अस्य गानं कुर्वन्ति। उदाहरणार्थं सामवेदस्य प्रथमोऽयं मन्त्रः—

**'अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि।'**

अस्य मन्त्रस्योपरि यस्य सामस्य गानं भविष्यति तस्य निम्नलिखितानि पञ्चानाङ्गानि भवन्ति—

( १ ) हुँ ओग्नाई ( प्रस्तावः )।
( २ ) ओम् आयाहि वीतये गृणानो हव्यदातये ( उद्गीथः )।
( ३ ) नि होता सत्सि बर्हिषि ओम् ( प्रतिहारः )।

अस्य प्रतिहारस्याऽपि द्वौ भेदौ स्तः।

( ४ ) नि होता सत्सिव ( उपद्रवः )।
( ५ ) र्हिषि ओम् ( निधनः )।

अस्य साम्नः यदा वारत्रयं गानं भवति तदा तं स्तोमः कथ्यते। सामगायनाय कर्हिचित् स्वरं विकृतं परिवर्तितं च करणीयं भवति। यथा पूर्वमन्त्रस्य 'अग्न' गायने परिवर्त्तितरूप—'ओग्नाई' भवति। गायने स्वरपूर्त्यर्थं यदा कदा निरर्थकं पदमपि सङ्कलितं भवति। यथा—औ, हौ, वा, हा इत्यादि। एताः स्तोमाः भवन्ति।

छान्दोग्योपनिषदनुसारेण सप्तविधं साम भवति। यथा—( १ ) हिङ्कारः, ( २ ) प्रस्तावः, ( ३ ) आदिः, ( ४ ) उद्गीथः, ( ५ ) प्रतिहारः, ( ६ ) उपद्रवः, ( ७ ) निधनश्चेति। उपरि निर्दिष्ट पञ्चविधसामस्यैवावान्तरभेदकरणेन एतेषां सप्तविधसामानामुत्पत्तिर्भवति।

**गानम्**

**गीतमस्यपर्कम्**—

ओग्नाई। आया ही ऽ ३। वो इ तो या ऽ २ ३। तोया ऽ २ इ। गृणानो ह। व्यदातो या ऽ २ ३। तो या ५२ इ। ना इ हो ता सा ऽ २ ३। त्सा ऽ २ ३। वा ऽ २ ३, ४ औ हो वा। र्हो ऽ २ ३ ४ षी॥ १।

## ( घ ) अथर्ववेदः

वेदेष्वथर्ववेदोऽयमेकया भूयस्या विशिष्टतया सह संवलितोऽस्ति। ऋग्वेदादित्रयो वेदाः आमुष्मिकफलदातारः सन्ति। किम्बहुना वेदेषु अथर्ववेदो बहुलविशिष्टता निदधाति। यदा हि ऋग्वेदादयस्त्रयो वेदा आमुष्मिकं फलं प्रददति तदाऽयं अथर्ववेद ऐहिकमपि फलं प्रयच्छति। जीवनं सुखसमन्वितं कर्तुं येषां साधनानामपेक्षा भवति तेषां सिद्धयर्थमिह वेदे विविधानामनुष्ठानानां विधानं विहितमस्ति। पतञ्जलिर्यद्यप्यस्य वेदस्य नवशाखाः समुल्लिखति, परमीदानीन्तु पैप्पलाद-शौनकसंज्ञके द्वे एव शाखे लभ्येते। प्रचलिता अथर्वसंहिता शौनकशाखान्तर्गता पैप्पलादशाखासंहिताऽपि च अनतिचिरेणैव मुद्रिते स्तः।

कस्याऽपि यज्ञस्य पूर्णनिष्पादनार्थं चत्वारः ऋत्विजो भवन्ति। तेषु ब्रह्मानामको ऋत्विग् यज्ञस्याध्यक्षो भवति। अस्य प्रधानकार्यं नानाविधानानां निरीक्षणं तथा सम्भावितत्रुट्याः मार्जनञ्च भवति। एतदर्थं ब्रह्मणा सर्ववेदविद्भवितव्यम्। तेन मनसा बलेनाऽपि सम्पन्नेन भवितव्यम्। किञ्च तस्य ब्रह्मणः प्रधानवेद अथर्ववेद एव भवति। ब्राह्मणग्रन्थेषु ब्रह्मणः महनीयगौरवमनेकत्र

वर्णितमस्ति। गोपथब्राह्मणस्य ( ३।२ ) कथनमस्ति त्रिभिर्वेदैः यज्ञस्यान्तरः पक्ष एव संस्क्रियते। ब्रह्मा मनसाऽपरपक्षस्य संस्कारं करोति। यथा—

**'स वा एष त्रिभिर्वेदैर्यज्ञस्यान्यन्तरः पक्षः संस्क्रियते।**
**मनसैव ब्रह्मा यज्ञस्यान्यतरं पक्षं संस्करोति॥'** (गोप० ब्रा० ३।२)

पुरोहितायाथर्ववेदस्य ज्ञानमतोऽपि आवश्यकं भवति, यदसौ राज्ञः शान्त्या-स्तथा पौष्टिककार्यस्य च सम्पादनं अथर्ववेदेनैव करोति। अथर्ववेदस्य परिशिष्टे लिखितमस्ति—यस्य राज्ञः जनपदेऽथर्ववेदस्य ज्ञाता निवसति तस्य राष्ट्रं निरुपद्रवो भूत्वा वृद्धिमभिगच्छति। अनेन प्रकारेण ऐहिक-आमुष्मिक-लौकिक-पारलौकिकविषयाणां प्रतिपादकत्वेनाथर्ववेदः वैदिकसंहितायां स्ववैशिष्ट्यं स्थापयति।

अथर्ववेदस्योपलब्धेष्वनेकाभिधानेषु अथर्ववेद-ब्रह्मवेद-अङ्गिरोवेद-अथर्वाङ्गिरसवेदादिनामानि मुख्यानि सन्ति। 'अथर्व'-शब्दस्य व्याख्या तथा तस्य निर्वचनं निरुक्ते ( ११।२।१७ ) तथा गोपथब्राह्मणे च ( १।४ ) मिलति। 'थर्व'-धातुः कौटिल्यार्थस्तथा हिंसावाचकोऽस्ति। अत एवाथर्वशब्दस्यार्थो भवति—अकुटिलतावृत्त्या, अहिंसावृत्त्या च मनसः स्थैर्यप्राप्तकर्त्ता व्यक्तिः। अस्याः व्युत्पत्त्याः सम्पुष्टौ योगस्य प्रतिपादकाः अनेकाः प्रसङ्गाः स्वयमस्मिन् वेदे मिलन्ति ( अथर्ववेदे ६।१; १०।२।२६-२८ )। होतृवेदादिनाम्नः तुलनाया-मुपरि ब्रह्मकर्मणः प्रतिपादकत्वेनाथर्ववेदः 'ब्रह्मवेदः' कथ्यते। अथर्ववेदस्य ब्रह्मवेदनाम्नः इदमेव मुख्यकारणमस्ति, यद्यपि ब्रह्मज्ञानस्य प्रतिपादनमस्मिन् वेदे अंशतः एवाऽस्ति, तथाऽप्यस्य वैशिष्ट्यमस्ति।

'अथर्वाङ्गिरस'-पदस्य व्याख्या कृते सति प्रतीतो भवति यद्वेदोऽयं ऋषिद्वयेन द्रष्टानां मन्त्राणां समूहं प्रस्तौति। अथर्वदृष्टमन्त्राः शान्ति-पुष्टिकर्मयुक्ताः-सन्ति। अङ्गिरसदृष्टमन्त्रास्तु आभिचारिका भवन्ति। अनेनैव कारणेन वायुपुराणे ( ६५।२७ ) तथा ब्रह्माण्डपुराणे ( २।१।३६ ) अथर्ववेदं घोरकृत्या विधिना युक्तत्वेन प्रत्यङ्गिरसयोगेन युक्तत्वेन च 'द्विशरीरशिराः' कथ्यते। प्रत्यङ्गिरसयोगस्य तात्पर्यमभिचारस्य प्रतिविधानमर्थात् शान्तिपुष्टिकर्ममेवास्ति। अनेनाभिधानेन स्पष्टो भवति यद् अथर्ववेदे द्विविधा मन्त्राः सङ्ग्रहीताः सन्ति। शान्तिपौष्टिककर्मकर्त्ता मन्त्रस्तथाऽऽभिचारिककर्मकर्त्ता मन्त्रः। आङ्गिरसकल्पे मारण-मोहन-उच्चाटनादि प्रख्यातषट्कर्माणां विधानं दर्शितम्, एवं नारदीयपुराणस्य कथनमस्ति—

**'तत्र चाङ्गिरसे कल्पे षट्कर्माणि सविस्तरम्।**
**अभिचारविधानेन निर्दिष्टानि स्वयम्भुवा॥'**

तैत्तिरीयब्राह्मणे ( ३।१२।९।१ ) 'अथर्वणामङ्गिरसां प्रतीची' इत्यस्मिन् पदे उभयोर्मिलितस्वरूपस्य वर्णनमस्ति। सम्भवतः अमूभ्याम् ऋषिभ्यां दृष्टमन्त्रसमूहः पृथक् सत्तामपि धारणमकरोत्। अनया दृष्ट्या गोपथब्राह्मणस्य एकस्मि-

न्नेव प्रकरणे 'आथर्वणो वेदः सिद्धचति' 'आङ्गिरसो वेदोऽभवच्चे'ति वाक्यं मिलति ( ११।५ ११।१८ )। शतपथब्राह्मणेऽपि एतयोरुभयोरुल्लेखो मिलति ( १३।४।३।२ )। सर्वत्रैवाङ्गिरसाभिधानमुपलब्धोऽस्ति, येनाथर्वाऋषेरभ्यर्हितत्त्वस्य सङ्केतो मिलति। अनेन ज्ञातो भवति यदस्मिन् वेदे प्रथमतः शान्तिपौष्टिक-मन्त्राणां सत्ताऽऽसीत् तदनु आभिचारिकमन्त्राणां सन्निवेशोऽभवत्।

अथर्ववेदस्य मीमांसा कृते सति ज्ञातो भवति यद्धाराद्वयमिश्रणस्य परिणतफलमिदमस्ति। अमुयोरेकाऽस्ति अथर्वधाराऽपरा चास्ति अङ्गिरो धारा। अथर्वऋषिणा दृष्टमन्त्राः शान्तिपुष्टिकर्मभिः सह सम्बद्धाः सन्ति। अस्य संङ्केतः भागवतपुराणेऽपि मिलति—'अथर्वणेऽदात् शान्तिं यया यज्ञो वितन्यते' (३।२४।२४)। अङ्गिरोधाराऽऽभिचारिकैः कर्मभिः सह सम्बद्धाऽस्ति। येन जनसामान्ये वेदोऽयं प्रियोऽभवत्। शान्तिकर्मणा सम्बद्धत्वेनाथर्वस्य सम्बन्धं श्रौतयागात् प्रारम्भादेवास्ति, पश्चादाभिचारिककर्मणा सह सम्बद्धत्वेन राज्ञः पुरोहितवर्गेभ्यो वेदोऽयमतीवोपयोगी अभवत्। ऋग्वेदत्रयी तथाऽथर्वस्य पार्थक्यं स्पष्टतः ग्रन्थेषु कृतम्।

वेदत्रयी यत्र पारत्रिकफलदाताऽस्ति तत्राथर्ववेदः लौकिकफलदाताऽस्ति। अस्मिन् सन्दर्भे ध्यातव्यं तथ्यमिदमस्ति—जयन्तभट्टेण न्यायमञ्जर्यामथर्ववेदस्य प्राथमिकत्वमुद्घोषितम्—'तत्र वेदाश्चत्वारः, प्रथमोऽथर्ववेदः।' नागरखण्डोऽप्यमुमाद्यवेदो वदति तथा प्रमाणयति यदथर्ववेद एव सार्वलौकिककार्यसिद्धयर्थं मुख्यरूपेण प्रयुक्तो भवति। अत एवायं आद्यवेदत्वेन प्रथितः। जयन्तभट्टस्तु न्यायमञ्जर्यां ( चौ० स० पृ० २३७-२३८ ) सविस्तरेण विचारं कृतवान्।

राज्ञेऽथर्ववेदस्य सविशेषमहत्त्वमस्ति। राज्ञे शान्तिकपौष्टिककर्मणः तुलापुरुषादिदानस्य च महती आवश्यकता भवति। एवंविधस्य सर्वेषां विधानमथर्ववेदस्य स्वसम्पत्तिरस्ति। अस्मिन् विषये पुराण-स्मृति-ग्रन्थानां प्रचुरप्रमाणानि समुपलब्धानि भवन्ति। विष्णुपुराणस्य स्पष्टकथनमस्ति—पौरोहित्य-शान्तिकपौष्टिकादिकर्माणि अथर्ववेदेनैव राज्ञः कर्त्तव्यमस्ति। मत्स्यपुराणस्य कथनमस्ति—पुरोहितेन अथर्वमन्त्रे ब्राह्मणे च पारङ्गतेन भवितव्यम् (पुरोहितं तथा अथर्वमन्त्र-ब्राह्मण-पारगम्)। कालिदासस्य कथनेनाप्यस्य कथनस्य पुष्टिर्भवति। कालिदासेन वशिष्ठमुनये 'अथर्वनिधिः' इत्येवं विशेषणं दत्तम्, यस्येदं तात्पर्यमस्ति—रघुवंशोद्भवानां पुरोहितः मुनिर्वशिष्ठः अथर्वमन्त्राणां तथा तेषां क्रियाकलापानां च भाण्डारः आसीत् (रघु० १।५९)। नृपः अजः अथर्ववेदमन्त्रैः गुरुवशिष्ठेनाभिषिक्तो भूत्वा शत्रुभ्यः दुर्धर्षोऽभवत् ( ८।३ )। अत्र कालिदासः वशिष्ठं 'अथर्ववेत्ता' कथयति ( 'स बभूव दुरासदः परैर्गुरुणाऽथर्वविदा कृतक्रियः' ।—८।३ )। अथर्वपरिशिष्टे लिखितम्—अथर्ववेदस्य ज्ञाता शान्तिकर्मपारगः यस्मिन् राष्ट्रे निवसति तद्राष्ट्रं निरुपद्रवं भूत्वा सततं वर्द्धते। यथा——

'यस्य राज्ञो जनपदे ह्यथर्वाशान्तिपारगः ।
निवसत्यपि तद्राष्ट्रं वर्धते निरुपद्रवम् ।।
तस्माद्राजा विशेषेण ह्यथर्वाणं जितेन्द्रियम् ।
दान-सम्मानसत्कारैर्नित्यं समभिपूजयेत् ।।'

( अथर्ववेदभाष्यभूमिकातः समुद्धृतः )

निष्कर्षस्वरूपेण कथितुं शक्यते यद्राजपुरोहितेन अथर्ववेदस्य मन्त्राणां तथा तैः सम्बद्धानुष्ठानानां ज्ञात्राऽवश्यमेव भवितव्यम् । अनेनैव कारणेनाथर्ववेदः ऐहिलौकिकः कथ्यते, तथाऽन्ये त्रयो वेदाः पारलौकिकाः कथ्यन्ते ।

## अथर्ववेदस्य शाखाः

पस्पशाह्निके 'नवधाऽऽथर्वणो वेदः' इति लिखित्वा पतञ्जलिना अथर्ववेदस्य नवशाखाः कथिताः । पुराणानुसारेण वेदव्यासमहोदयः यं शिष्यमथर्वस्याध्यापनमकरोत् तस्य नाम सुमन्तुः आसीत् ( श्रीमद्भागवते १२।७।१-३; वायुपुराणे ६१।४९-५३, विष्णुपुराणे ३।६।९-१३ ) । भागवतेऽस्य चर्चाऽस्ति—सुमन्तुः अभिचारप्रधानवेदस्य मुख्यप्रचारकः आसीत् । तेनासौ 'दारुणमुनिः' इत्युपाधिना विभूषित आसीत् । अथर्ववेदस्य शाखानां विस्तारः पुराणेषु वर्णितः अस्ति । किञ्च भागवते ( १२।७।१ ) कबन्धस्य नाम निर्दिष्टः नास्ति । अस्मिन् पुराणे सुमन्तोरेव द्वौ शिष्यौ कथितौ—पथ्यो वेददर्शश्चेति । विष्णुपुराणेऽपि शिष्यद्वयस्य चर्चाऽस्ति किन्तु वेददर्शस्य स्थाने 'देवदर्श' इति नाम अस्ति । उभयोर्मध्ये इदं देवदर्शनाम एव प्रामाणिकं प्रतीतं भवति । यतः आथर्वणमहानारायणोपनिषद् स्वात्मानं देवदर्शी नाम्नाऽथर्वशाखया सह सम्बद्धं स्वीकरोति । फलतः 'देवदर्शः' किंवा 'देवदर्शी' इत्येव नामोपयुक्तं प्रतीतं भवति । विष्णुपुराणानुसारेण पथ्यस्य त्रयाणां शिष्याणां नाम क्रमशः जाबालिः, कुमुदादिस्तथा शौनक इत्यासीत् । प्रमाणान्तरानुसारेण पथ्यस्य त्रयः शिष्या आसन्—जाजलिः, कुमुदः शौनकश्च । देवदर्शस्य चत्वारः शिष्या आसन् । ते च मोदः, ब्रह्मबलिः, पिप्पलादः, शौष्कायणिः, अथवा शौक्लायनिः । एषु शौनकस्य शिष्यः बभ्रुस्तथा सैन्धवायनः कथितः । एभिः मुनिभिरथर्ववेदस्य विशेषप्रचारः सम्पन्नोऽभवत् । प्रपञ्चहृदय-चरणव्यूह-सायणभाष्यादीनाम् उपोद्घातेषु यद्यपि शाखानां सङ्ख्या अभिन्ना तथापि एतेषु नामसु महती भिन्नता दृग्गोचरीभवति । एतेषां तुलनां कृते सति निम्नलिखितान्यभिधानानि भवन्ति—( १ ) पिप्पलादः, ( २ ) स्तौदः, ( ३ ) मोदः, ( ४ ) शौनकीयः, ( ५ ) जाजलः, ( ६ ) जलदः, ( ७ ) ब्रह्मवदः, ( ८ ) देवदर्शः, ( ९ ) चारणवैद्यश्च । आस्वथर्ववेदनवशाखासु सम्प्रति शौनकपिप्पलादसमाख्ये द्वे एव शाखे प्राप्येते ।

### ( १ ) पिप्पलादः

पिप्पलादमुनिरेको महानध्यात्मवेत्ता प्रतीतो भवति । स्वाध्यात्मविषयकसंशयनिवारणाभिप्रायेण सुकेशा-भरद्वाजादिषड् मुनीनां तस्य पार्श्वे आगमन-

स्योल्लेखो मिलति। तेन दत्तान्युत्तराण्यपि प्रश्नोपनिषदि सुरक्षितानि च सन्ति। पुरा अस्य संहितायाः विशेषा ख्यातिरासीत्। अस्य द्वौ ग्रन्थौ आस्ताम्। प्रपञ्च-हृदयस्य कथनमस्ति यत्—पिप्पलादशाखायाः मन्त्रसंहिता विंशतिःकाण्डेषु विभक्ताः सन्ति, तथा तस्याः ब्राह्मणेऽष्टाऽध्यायाः सन्ति। पिप्पलादसंहितायाः एका प्रतिः शारदालिप्यां कश्मीरे उपलब्धाऽभवत्। सा पाण्डुलिपिः कश्मीर-नृपतिना जर्मनविद्वांसं राथमहोदयमुपहारे प्रेषिताऽभवत्। एकोऽधिकोनविंशतितमे ख्रीष्टाब्दे तस्याः आलोकलेख्यं अमेरिकातः प्रकाशितोऽभवत्। महाभाष्या-नुसारेण—"**शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः**' अथर्व-वेदस्य प्रथमोऽयं मन्त्रोऽस्ति, किञ्च सम्प्रति प्रचलितायां शौनकसंहितायां षष्ठ-सूक्तस्यायं प्रथमो मन्त्रोऽस्ति। गुणविष्णुना ज्ञातो भवति यदयं मन्त्रः पिप्प-लादशाखायाः आदिमो मन्त्रः आसीत् (शन्नो देवी·······**अथर्ववेदादिमन्त्रोऽयं पिप्पलाददृष्टः**'––छान्दोग्यमन्त्रभाष्ये)। अनेनैव ज्ञातो भवति यद् महाभाष्य-काले अस्याः संहितायाः विशेषख्यातिरासीत्।

## (२) मौदः

महाभाष्ये (४।१।८६), शावरभाष्ये (१।१।३०) अस्य मौदमुनेरुल्लेखो मिलति। मौद-शाखा-विशेषज्ञः किंवा जलदशाखाविशेषज्ञः पुरोहितः यस्मिन् राष्ट्रे निवसति, तद्धि राष्ट्रं विनश्यति—

**'पुरोधा जलदो यस्य मौदो वा स्यात् कदाचन।**
**अब्दाद् दशभ्यो मासेभ्यो राष्ट्रभ्रष्टं भविष्यति॥'**

अनेनास्याः शाखायाः अल्पप्रचलनस्य बोधो भवति।

## (३) शौनकः

सम्प्रति प्रचलिताऽथर्वसंहिता गोपथब्राह्मणश्चास्यैव शाखाया वर्त्तेते। तौद-जाजल-ब्रह्मवद-देवदर्शादि तु नाममात्रैव ख्याताः सन्ति। अथर्वस्यान्तिमा शाखा चारणवैद्यानां विषये कौशिकसूत्रस्य व्याख्यातः (६।३७) इति अथर्वपरि-शिष्टादेव (२२।२) ज्ञातो भवति। वायुपुराणाद् ज्ञातो भवति यदस्यां शाखायां (६०२६) षड्विंशत्यधिकषट्सहस्रमन्त्रा आसन्, किन्त्वाद्यावधीयं संहिता समुपलब्धा नास्ति।

### अथर्वस्य शौनकसंहिता

अथर्ववेदे २० काण्डानि ७३१ सूक्तानि ५९८७ मन्त्राश्च सन्ति। अस्य वेदस्य मीमांसा कृते सति ज्ञातो भवति यदथर्ववेदे मन्त्राणां सङ्कलनं कस्य-चिद्विशिष्टोद्देश्येन कृतमस्ति। प्रथमकाण्डे प्रत्येकस्मिन् सूत्रे नियमेन चत्वारो मन्त्राः, द्वितीयकाण्डे पञ्च मन्त्राः, तृतीयकाण्डे षड्मन्त्राः, चतुर्थकाण्डे सप्तमन्त्रा-स्तथा पञ्चमकाण्डेऽष्टमन्त्राः सन्ति। षष्ठकाण्डे १४२ सूक्तानि सन्ति तथा प्रति-सूक्ते अल्पादल्पतरास्त्रयो मन्त्राः सन्ति। सप्तमकाण्डे ११८ सूक्तानि सन्ति,

येष्वधिकतरसूक्तेषु एकः द्वौ वा मन्त्रौ स्तः। अष्टमकाण्डादारभ्य द्वादशकाण्ड-पर्यन्तमायतसूक्तानि सन्ति। किञ्च तत्र विषयाणामेकतास्थाने विभिन्नतैव दृग्गोचरीभवति। त्रयोदशकाण्डादारभ्याष्टादशकाण्डपर्यन्तं विषयानामेकता दर्शनीयाऽस्ति। द्वादशकाण्डस्यारम्भे पृथिवीसूक्ते त्रयःषष्टि मन्त्राः सन्ति। मन्त्रेष्वेतेपु बहुविधस्य राजनैतिक-भौगोलिकसिद्धान्तानां च भव्यभावना सर्वेषा-मालोचकानां दृष्टिहारिका वर्त्तते। त्रयोदशकाण्डन्तु अध्यात्मविषयकमस्ति। चतुर्दशकाण्डे द्वे आयते सूक्ते स्तः। सूक्तेऽस्मिन् प्रधानतया वैवाहिकवर्णनमस्ति। पञ्चदशकाण्डं व्रात्यकाण्डनाम्ना ख्यातमस्ति, यस्मिन् व्रात्यानां यज्ञसम्पादनस्य आध्यात्मिकं वर्णनमस्ति। पोडशकाण्डन्तु दुःस्वप्ननाशकानां त्रयोऽधिकशत-मन्त्राणां सङ्ग्रहोऽस्ति। सप्तदशाख्ये काण्डे त्रिंशन्मन्त्राणामेकमेव सूक्तमस्ति। यस्मिन् सूक्तेऽभ्युदयार्थं भव्या प्रार्थनाऽस्ति। अष्टादशकाण्डं श्राद्धकाण्डनाम्ना ख्यातमस्ति, अस्मिन् काण्डे पितृमेधसम्बन्धिनः मन्त्राः सङ्कलिताः सन्ति। अन्तिमे द्वे काण्डे खिलकाण्डनाम्ना ख्याते स्तः। ऊनविंशतिकाण्डे द्वासप्तति-सूक्तानि, त्रयःपञ्चाशदधिकचतुःशत-मन्त्राः सन्ति, येपु भैपज्य-राष्ट्रवृद्धि-अध्यात्म-विषयकानां मन्त्राणां सङ्कलनमस्ति। अन्तिमे काण्डे मन्त्राणां संख्याः प्रायः सहस्राः सन्ति।

अनेन प्रकारेणाथर्ववेदस्यैकपञ्चमांश-मन्त्राः ऋग्वेदीयमन्त्रा इव सन्ति। विशेपतः प्रथम-अष्टम-दशममण्डलेषु एते मन्त्राः मिलन्ति। अन्तिमे काण्डे प्रसिद्धं कुन्तापसूक्तं सम्मिलितमस्ति। वर्त्तमान-ऋग्वेदे सूक्तमिदं समुपलब्धं नास्ति। सम्भवतः ऋग्वेदस्य कस्या अपि अन्यशाखातः सङ्कलिताः सन्ति। संख्यायां कुन्तापसूक्तानि दश सन्ति। कौषीतकिब्राह्मणेऽस्य स्पष्टतः निर्देशो मिलति। गोपथब्राह्मणस्य कथनानुसारेण 'कुन्ताप'-शब्दस्यार्थो भवति—पापकर्माणि ज्वालकं सूक्तं मन्त्रो वेति ( **'कुम् नाम कुत्सितं भवति यत् तत् तपति तस्मात् कुन्तापः'** )। ऐतरेयब्राह्मणे ( ६।३२ ) तथा कौषीतकिब्राह्मणे ( ३०।५ ) अस्योल्लेखो मिलति, यदेतेषां मन्त्राणामुपयोगः यज्ञविधाने आवश्यक आसीत्। अस्मिन् सूक्ते ( १।७।८-१० ) राज्ञः परीक्षितस्य नाम तथा तस्य राष्ट्रस्य वर्णनं विशेषरूपेण मिलति, तेनास्य सूक्तस्यैतिहासिकमहत्त्वमप्यस्ति।

अथर्ववेदस्य निर्माणमृग्वेदादिसंहितायाः समकालेऽभवदथवोत्तरकाले, इति त्वन्यत्, किञ्च तस्मिन् चित्रिता संस्कृतिः मानवसमाजस्य प्रारम्भिकयुगं सङ्केतयति। प्राचीनमानवसमाजस्य क्रियाकलाप-अनुष्ठान-विश्वासादीनां विशद-चित्रणमन्यत्र वैदिकसाहित्ये अनुपलब्धं भूत्वापि अथर्वसंहितायां समुपलब्धमस्ति। शत्रुजयाय, क्लिष्टरोगनिवारणाय, सद्योजातबालकान् तेषां मातुः सन्तापकारक-भूतप्रेतादिविनाशाय विविधाभिचाराणां विचित्रवर्णनमथर्ववेदे मिलति। मानव-शास्त्राभ्यासनिमित्ताय वेदोऽयं विश्वकोष इवाऽस्ति। अभिचारस्य प्रचारः

आथर्वणयुगस्यैका विशिष्टा घटनाऽस्ति। अभिचारोऽपि द्विविधो भवति। शोभनप्रकारकस्याभिचारेऽन्यकृतानिष्टादात्मरक्षणस्य भावना प्रबला भवति। अन्यस्मिन्नभिचारे शत्रुविशेषोपरि मारण-मोहन-उच्चाटनादीनां भावना विशेषरूपेण जागरूका भवति। अथर्ववेदे उभयप्रकारकस्याभिचारस्य उत्कृष्टं साम्राज्यं मानवसंस्कृतेरादिमयुगस्य परिचायकमस्ति।

## अथर्ववेदस्य त्रिविधसंहिताः

अथर्ववेदस्य कौशिकसूत्रस्य दारिलभाष्ये आसां त्रिविधसंहितानां नाम्नस्तथा स्वरूपस्य च परिचयो मिलति। आसां संहितानां नामानि सन्ति—(१) आर्षीसंहिता, (२) आचार्यसंहिता, (३) विधिप्रयोगसंहितेति। अस्यां त्रिविधसंहितायां ऋषिभिः परम्परागतप्राप्तमन्त्राणां सङ्कलनमस्ति। तेनैताः संहिताः 'ऋषिसंहिता' नामभिः ख्याताः सन्ति। अपरसंहितायाः नामाचार्यसंहिताऽस्ति। अस्य विवरणं दारिलभाष्ये निम्नरूपेण मिलति—**'येन उपनीय शिष्यं पाठयति सा आचार्यसंहिता।'** उपनयनानन्तरं गुरुर्येन प्रकारेण शिष्यं वेदमध्यापयति तदेवाचार्यसंहिता कथ्यते। उदाहरणार्थमथर्ववेदस्य मन्त्रोऽयमुपस्थापयितुं शक्यते। शौनकीयाथर्वसंहितायाः प्रथमकाण्डस्य तृतीयसूक्तस्य प्रथमो मन्त्रः निम्नप्रकारकोऽस्ति—

**'विद्याशरस्य पितरं पर्जन्यं शतवृष्ण्यम्। तेनाते तन्वे शंकरं पृथिव्याम् ते निषेचनं बहिष्टे अस्तु बालिति'** (१।३।१)। किञ्चास्यैव सूक्तस्यापरो मन्त्रोऽयमस्ति—**'विद्याशरस्य पितरं मित्रं शतवृष्ण्यम्। तेना ते तन्वे……अस्तु बालिति।'** तृतीयोऽपि मन्त्र एवमेवाऽस्ति। अस्मिन् मन्त्रे—**'विद्याशरस्य पितरम्** आदौ तथा **तेना ते तन्वे……अस्तु बालिति'** अन्तेऽस्ति। एतेषां त्रयाणां मन्त्राणामनुशीलनेन ज्ञातो भवति यत्प्रथमे मन्त्रे **'पर्जन्यं शतवृष्ण्यम्'** अपरस्मिन् मन्त्रे **'मित्रं शतवृष्ण्यम्'** तथा तृतीये मन्त्रे **'तरुणं शतवृष्ण्यम्'** इत्येते अंशा एव नवीनाः सन्ति। एतदतिरिक्तः एतेषां मन्त्राणाम्—**'विद्याशरस्य पितरम्** इत्यादौ तथा **तेना ते तन्वे शङ्करं पृथिव्यां ते निषेचनं बहिष्टे बालिति'** मन्त्रस्यांशोऽयमन्ते, प्रत्येकस्मिन् मन्त्रे आवृत्तमस्ति। अतः आचार्यः स्वशिष्यानध्यापनकाले केवलं मन्त्रे समागतानां नवीनांशानामध्यापनमकारयत्। एतेषां नवीनमन्त्राणां सङ्ग्रह एव आचार्यसंहिताऽस्ति। अस्याः आचार्यसंहितायाः पदपाठेन युक्ता हस्तलिखिता प्रतिः प्राप्ताऽभवत्।

## विधिप्रयोगसंहिता

विधिप्रयोगसंहितेयमस्ति यस्यां मन्त्राणां प्रयोगः कस्यापि विशिष्टविधेरनुष्ठानाय भवति। अस्यानुष्ठानस्यावसरे एकस्यैव मन्त्रस्य विभिन्नपदान् विभाज्याभिनवमन्त्रस्य निर्माणं भवति।

आर्षीसंहितायाः मन्त्रोऽयमस्ति —

'ऋतुभ्यष्ट्वाऽऽर्त्तवेभ्यो, माद्भ्यो संवत्सरेभ्यः ।
धात्रे विधात्रे समृधे भूतस्य पतये यजे ॥'

मन्त्रस्यास्य निम्नलिखिता विभागाः सन्ति—

( १ ) ऋतुभ्यः त्वा यजे स्वाहा ।
( २ ) आर्तवेभ्यः त्वा यजे स्वाहा ।
( ३ ) माद्भ्यः त्वा यजे स्वाहा ।
( ४ ) संवत्सरेभ्यः त्वा यजे स्वाहा ।

अनेनैव प्रकारेण 'धात्रे, विधात्रे, समृधे तथा भूतस्य पतये' इत्यादिपदानां पश्चात् 'त्वा यजे स्वाहा' इति पदस्य प्रयोगो भवति । विधौ प्रयुक्तभाविनां एतेषां मन्त्राणां समुदायः 'विधिप्रयोगसंहिता' कथ्यते ।

'विधिप्रयोगसंहितायाः' प्रथमोऽयं प्रकारोऽस्ति । अनेन प्रकारेणास्यान्या अपि चत्वारो भेदाः भवन्ति । अपरस्मिन् प्रकारेऽभिनवशब्दाः मन्त्रेषु सङ्कलिताः भवन्ति । तृतीयप्रकारे कस्यापि विशिष्टमन्त्रस्य 'आवर्त्तनम्' तस्य सूक्तस्य प्रतिमन्त्रेण सह भवति । अनेन प्रकारेण सूक्तस्य मन्त्राणां संख्या द्विगुणिता भवति । चतुर्थप्रकारे कस्मिंश्चिदपि सूक्ते समागतानां मन्त्राणां क्रमस्य परिवर्त्तनं भवति । पञ्चमप्रकारे कस्यापि मन्त्रस्यार्द्धभागमेव सम्पूर्णमन्त्रं मत्वा प्रयोगो भवति । अनेन प्रकारेण आर्षीसंहितायाः मन्त्राणां विधिप्रयोमसंहितायां पञ्च-प्रकारेण प्रयोगाः भवन्ति ।

अनेन ज्ञातो भवति यद् ऋषिसंहिता एव मूलसंहिता अस्ति । आचार्य-संहितायां अस्य संक्षेपीकरणं भवति । यदा विधिप्रयोगसंहितायामस्य विस्तृती-करणं भवति । आचार्यदारिलस्य कौशिकसूत्रस्य भाष्यानुसारेण अथर्वसंहितायाः प्रकारत्रयस्य विश्लेषणं कृतमस्ति ( द्रष्टव्यम्—अथर्वसंहिता एकइट्स फार्म्स बाई डा० एच० आर० दिवेकर, पृ० १९३–२१२ ) ।

## अथर्वे विज्ञानम्

अथर्ववेदाभ्यन्तरे आयुर्वेदीयसिद्धान्तस्य व्यवहारस्य चानेकानां महनीय-जिज्ञास्यविषयाणां विशिष्टसङ्कलनमस्ति । अस्यानुशीलनेनायुर्वेदस्य प्राचीनता-प्रामाणिकता-व्यापकतादीनां पूर्णपरिचयो मिलति । रोगस्य, शारीरिकप्रतीका-रस्य, औषधादीनाञ्च विषयेऽनेकोपयोगीनां वैज्ञानिकतथ्यानाञ्चोपलब्धिरथर्ववेद-स्यायुर्वैदिकविशिष्टता प्रदर्शयितुं पर्याप्तं वक्तुं शक्यते ( द्रष्टव्यः—काश्यप-संहितायाः उपोद्घातः, पृ० ९–१२ बम्बईसंस्करणम् ) । तपनरोगस्य (ज्वरस्य) सामान्यवर्णनम् अस्मिन् वेदस्य मन्त्रे ( ६।२१।१–३ ) द्रष्टव्यम् । सतत-शारद-ग्रैष्म-शीत-वार्षिक-तृतीयकादिज्वर-प्रभेदानां निदर्शनं ( ६।८३।१–३ ) द्रष्ट-व्यम् । यक्ष्मा-विद्रध-वातीकारादिरोगानां वर्णनं ( ९।१३।१२२ ) मन्त्रे द्रष्ट-व्यम् । प्रतीकारस्य विषये आधुनिकप्रणाल्याः शल्यचिकित्सायाः निर्देशः अतीव

विस्मयकारी प्रतीतो भवति। यथा—मूत्रघाते शरशलाकादिना मूत्रस्य निःसारणम् ( १।३।१९ ), सुखप्रसवाय योनिभेदनम् ( १।११।१-६ ), जलधावनेन व्रणस्योपचारः ( ५।१७।१-३ ) इत्यादयः। नानाकृमिभिः विविधरोगानामुत्पत्ते सिद्धान्तः प्राचीनायुर्वेदशास्त्रमाधुनिकवैद्यकशास्त्रेण सह संयोजयति। रोगकारकाणां नानाविधानां कृमीनां वर्णनम् ( २।३१।१-५ ), नेत्र-नासिकादन्तेषु प्रवेशकर्त्तारः कृमीनां नाम तथा निःसरणस्योपायः ( ५।२३।१-१३ ) तथा सूर्यकिरणैस्तेषां विनाशः ( ४।३७।१।१२ ) इत्यादीनामनेकविषयाः वैज्ञानिकाधारोपरि निर्मिताः प्रतीताः भवन्ति। रोगनिवारणार्थं तथा सर्पविषदूरीकरणार्थञ्च नानाविधौषधीनां मणीनाञ्च निर्देशो मिलति। आश्चर्यमिदमस्ति यत्—'विषस्य विषमौषधम्' इत्यस्यापि सिद्धान्तस्य निदर्शनमथर्ववेदस्यैकस्मिन् मन्त्रे (७।८८।१) मिलति। अत एवायुर्वेदः अथर्ववेदस्योपवेदः कथ्यते।

भौतिकविज्ञानस्यानेकविधानां तथ्यानामुदाहरणमथर्ववेदे यत्र तत्र मिलति। तं सुष्ठुतया ज्ञातुं वेदेन सह विज्ञानस्यापि ज्ञानमपेक्षितमस्ति। द्वि-त्रिमन्त्रेषु निगूढवैज्ञानिकरहस्यानामुद्घाटनमत्र कृतमस्ति। एकमेव विशिष्टोदाहरणमस्य विषयसङ्केताय पर्याप्तमस्ति। अथर्ववेदस्य पञ्चमकाण्डस्य पञ्चमसूक्ते लाक्षाया वर्णनमस्ति। वर्णनमिदं वैज्ञानिकदृष्ट्या नितान्तं प्रामाणिकं, तथ्यपूर्णमुपादेयञ्चास्ति। सम्प्रति बिहारप्रदेशस्य राँचीमण्डले लाक्षोत्पादनविषये एकाऽन्वेषणसंस्था कार्यं करोति। तस्याः नवीनतमवैज्ञानिकान्वेषणेन सहास्मिन् सूक्ते उल्लिखितानां तथ्यानां तुलनां कृते सति कोऽपि वैज्ञानिकः आश्चर्यचकितो भवितुमर्हति। आधुनिकविज्ञानेन समर्पितं समर्थितञ्च सूक्तनिर्दिष्टतथ्यमित्थमस्ति—

( १ ) लाक्षा कस्यापि वृक्षस्य निःस्यन्दो नास्ति, प्रत्युत तस्या उत्पादनस्य श्रेयः कीटविशेषं मुख्यतया स्त्रीकीटमस्ति। कीटोऽयमत्र 'शिलाची'-नाम्ना ख्यातोऽस्ति। उदरमस्य रक्तवर्णं भवति। तेनैवेमाः कीटस्त्रियः शृङ्गिकं ( संखिया ) भक्षिकाः मन्यन्ते। इमे कीटाः अश्वत्थ-न्यग्रोध-धव-खदिरादिवृक्षाणामुपरि विशेषतः निवस्य लाक्षां प्रस्तुवन्ति ( ५।५।५ )।

( २ ) स्त्रीकीटः यदा युवा भवति तदाऽण्डप्रसवात् पूर्वं तस्य देहः क्षीणो भवति। तेषां कोषाः पीताभाः भवन्ति। अत एवेमाः कीटस्त्रियोऽत्र हिरण्यवर्णा वा सूर्यवर्णाः कथ्यन्ते ( ५।५।६ )। एवंविधानां कीटानां शरीरोपरि सघनलोमावलिर्भवति, तेनायं कीटः 'लोमशवक्षणा' कथ्यते। लाक्षायारुत्पत्तिर्विशेषरूपेण वर्षाकालस्य तमसाच्छन्नरात्रावेव भवति। तेनाऽस्मिन् सूक्ते ( १।५।१ ) रात्रि माता आकाशञ्च पिता कथ्यते।

( ३ ) पुरुषकीटोऽयं द्विधा विभज्यते—१. सरा—सर्पणकर्त्ता, २. पतत्रिणी—खे विसर्पणकर्त्ता पुरुषकीटः। शराः—स्त्रीकीटाः वृक्षोपरि तथैव गुल्मोपरि समानरूपेण सर्पन्ति। तेनेमाः 'स्परणी' इति कथ्यन्ते। ( विशेषद्रष्टव्यः

Dave—International Academy of Indian Culture, Nagpur Esepl 1950 ) and Dr. Hora Journal of Asiatic Society of Bengal L vol, xviii 1952, No 1, p. p. 13-15 )

## अथर्ववेदस्य विषय-विवेचनम्

अथर्ववेदस्य विषयविवेचनमन्यवेदानामपेक्षया नितान्तं निगूढं विलक्षणञ्चास्ति । अस्मिन् वेदे वर्णितानां विषयाणां विभाजनं त्रिधा कर्तुं शक्यते—( १ ) आध्यात्मिकम्, ( २ ) आधिभूतम्, ( ३ ) आधिदैवतञ्चेति । अध्यात्मप्रकरणे—मुख्यतः ब्रह्मजीवविषयकम्, परमात्मविषयकं वर्णनञ्चास्ति । तदनन्तरमाश्रमाणामपि पर्याप्तनिर्देशो मिलति । आधिभूतप्रकरणे—राजा-राज्यशासन-सङ्ग्रामशत्रुवाहनादीनां च वर्णनमस्ति । आधिदैवतप्रकरणे—नानादेवतानां, विविधानां यज्ञानां कालादीनाञ्च विषये पर्याप्तज्ञातव्यविषयाणां सङ्कलनमस्ति । एवंविधस्य स्थूलविवेचनस्य पश्चात् विस्तृतविवरणमप्यस्ति । तद्यथा—

### ( १ ) भैषज्य-सूक्तानि

अस्मिन् प्रकारणे रोगानां चिकित्सासम्बन्धिनां मन्त्राणां तथा विधिविशेषाणामन्तर्भावो भवति । रोगाणामुत्पत्तिरनेककष्टप्रदानां रक्षोभूतपिशाचादीनां कृतोपद्रवेणैव भवति । अतोऽस्य प्रकरणस्यानेकमन्त्रेषु पूर्ववर्णितोपद्रवाणां शमनोपायं वर्णितमस्ति । एतेषां मन्त्राणां साहाय्येन कृताभिचाराणां विशेषवर्णनं कौशिकसूत्रेऽस्ति । विविधरोगाणां लक्षणं तथा तद्रोगेण समुत्पन्नशारीरिकविकाराणां विशदवर्णनञ्चायुर्वैदिकदृष्टचा विशेषमहत्त्वपूर्णमस्ति । अथर्ववेदे—'तक्मा:' ज्वरस्यैव नाम अस्ति । अस्मिन् सन्दर्भेऽथर्ववेदस्य कथनमस्ति यज्ज्वरपीडिताः जनाः पीताः सन्तप्ताश्च भवन्ति । अतः कतिपयेषु मन्त्रेषु ज्वरनिमित्तकप्रार्थना वर्त्तते । यथा—हे ज्वर ! त्वं तिरोहितो भव, अथवा रोगार्त्तजनं विहाय मूजवत-वह्लिक-महावृषादि-सुदूरस्थ प्रान्ते गच्छ ( ५।२५।७।८ ) । बलासः ( क्षयादिः ) रोगः ( ६।१४ ), गण्डमाला ( ६।८३ ), यक्ष्मा( ६।८५ ) प्रभृतिरोगाणां दूरीकरणाय वरुणनामकस्यौषधेः सेवनस्योपयोगो मिलति । कासः ( ६।१०५ ) तथा दन्तपीडादिः( ६।१४० )रोगाणां तथा तेषामोषधीनां वर्णनमतीव सुष्ठुतयाऽथर्ववेदेऽस्ति । सर्पविषविनाशाय नानाविधोपायाः वर्णिताः सन्ति । एकस्मिन् सूक्ते ( ५।१३ ) असित-तैमात-आलिङ्गी-विलिङ्गी-उरुगूलादिसर्पाणां नामोल्लिखितमस्ति । लोकमान्यतिलकेन विदेशीयप्रभावस्य सूचकवर्णनमिदमिति कथितम् । बहुविधौषधीनां तथा नानावृक्षाणां प्रशंसायामनेकाः मन्त्राः सन्ति ।

### ( २ ) आयुष्य-सूक्तानि

दीर्घायुषे बहुविधा प्रार्थनापरकमन्त्राः अस्मिन् विभागे सन्ति । एतेषां मन्त्राणां विशेषप्रयोगः पारिवारिकमहोत्सवानामवसरेऽभवत् । बालकानां मुण्डने,

किशोराणां गोदाने (प्रथमक्षौरकर्मणि) तथोपनयनसंस्कारेऽस्य मन्त्रस्य उपयोगो भवति। अस्मिन् सूक्ते शतशरद्पर्यन्तं तथा शतहेमन्तपर्यन्तं जीवनाय, बहुविध-मृत्युभ्यः त्राणाय, विविधरोगेभ्यः रक्षणाय च प्रार्थना समुपलब्धा भवति। अथर्ववेदे आयोर्वर्द्धनाय करे रक्षासूत्रधारणस्य विशेषविधानं मिलति। अनेन रक्षासूत्रधारणेन प्राणिनः पूर्णस्वास्थ्यस्य तथा चिरजीवनस्य सद्यः प्राप्तिर्भवति। सप्तदशकाण्डस्यैकमात्रं सूक्तमस्यैवान्तर्गते आयाति।

## ( ३ ) पौष्टिकानि

अस्य विभागस्यान्तर्गते गृहनिर्माणाय, सीरकर्षणाय, बीजवपनाय, अन्नोत्पादनाय, पुष्टचर्थाय, विदेशगमनाय व्यापारहेतवे नानाविधाशीर्वादाय प्रार्थना कृताऽस्ति। अस्मिन् विषये सर्वाधिकं सुष्ठु सूक्तम् ( अथर्व० ४।१५ ) अस्ति। अस्मिन् सूक्ते वृष्टचाः अतीव रमणीयं, साहित्यिकं तथा समुज्ज्वलं वर्णनमस्ति।

## ( ४ ) प्रायश्चित्तानि

सूक्तेष्वेतेषु प्रायश्चित्तस्य विधानमुपलब्धमस्ति। प्रायश्चित्तस्य विषयमस्ति चारित्रिकत्रुटेः धार्मिकविरोधस्य च तथाऽन्यविधिहीनाचरणानां विधानम्—यथा ज्ञाताज्ञातापराधहेतुना, धर्मशास्त्रेण वर्जितविवाहकारणेन, ऋणप्रतिशोध-विहीनहेतुना ज्येष्ठं परित्यज्य विवाहहेतुना ये अपराधाः भवन्ति तेषां-दूरीकरणायात्र प्रायश्चित्तस्य विधानमस्ति। तत् सम्बन्धिनः एवंविधाः मन्त्र-गीतोत्सवादयो मिलन्ति यैः शारीरिकदुर्बलता-मानसिकत्रुटि-दुःस्वप्न-अपशकुनादीनां निराकरणमपसरणञ्च भवति। वर्तमानयुगमिव तस्मिन्नपि युगे अशुभ-स्वप्ने मानवानां विश्वासः आसीत्। तद्दूरीकरणाय बहुविधोपाया मन्त्रेषु वर्णितानि सन्ति।

## ( ५ ) स्त्रीकर्माणि

विवाहविषयकाणि प्रेमविषयकाणि च बहूनि सूक्तानि अस्मिन् वेदे सन्ति। एतानि सूक्तानि तत्कालिकसमाजस्य स्वरूपज्ञाने विशेषरूपेण सहायकानि भवन्ति। एतेषु सूक्तेषु पुत्रोत्पादनाय सद्योजातशिशो रक्षणाय च भव्यप्रार्थनाऽपि मिलति। अनेन प्रसङ्गेन चतुर्दशकाण्डः विशेषरूपेण सम्बद्धोऽस्ति। अनेनैव क्रमेणाथर्ववेदस्य ( ३।२५, ६।१३०, ६।१३८, ६।१३०।४, ६।१३१, ४ ) प्रभृतिमन्त्रेषु मारण-मोहन-उच्चाटन-वशीकरणादीनां क्रियायाः बहुलप्रयोगाः वर्णिताः सन्ति। कौशिकसूक्तेन ज्ञातो भवति यत् नारीप्रेमसम्पादनाय बहु-विधाभिचारिकक्रियाया वर्णनमस्ति।

## ( ६ ) राजकर्माणि

राजभिः सम्बद्धानि बहूनि सूक्तानि अथर्ववेदे समुपलब्धानि सन्ति। एतेषां सूक्तानामध्ययनेन तात्कालिकराजनैतिकस्थित्याः विशदचित्रणं समुपलब्धं भवति।

शत्रूणां विनाशाय प्रार्थनया सह सङ्ग्रामस्य तथा तदुपयोगिनां साधनानां यथा— रथ-दुन्दुभि-शङ्खादीनां विशेषविवरणं साङ्ग्रामिकदृष्टयाऽप्यथर्ववेदस्य महत्ता-मुद्घोषयति। अथर्ववेदस्य 'क्षत्रवेदः' इति नामकरणस्येदमेव कारणमस्ति। तस्मिन् युगे प्रजा एव राज्ञः संवरणमकरोत्। अथर्ववेदस्य (३।४) सूक्ते मानवैः सह अश्विन्-मित्रावरुण-मरुत्-वरुणादिद्वारेण राज्ञः संवरणस्य वर्णन-मस्ति। अन्धसूक्तेन (३।३) ज्ञातो भवति यद्देशात् निष्कासितो राजा पुनः राज्ये सम्मानपूर्वकेण प्रतिष्ठितोऽभवत्। सङ्ग्रामभूमौ गमनाय वीरान् समुत्साह-यितुं दुन्दुभेः वर्णनमतीव साहित्यिकं वीररसपूर्णञ्चाऽस्ति। पञ्चमकाण्डस्य दशमसूक्तं कवित्वदृष्टया, मनोहरभावानां प्रदर्शनेनातीवरोचकं, सरसं तथाभि-व्यञ्जनात्मकञ्चास्ति। दुन्दुभेः गर्जनं श्रुत्वा रिपुयुवतीं भयानकास्त्रसङ्घर्षाणां मध्ये स्वपुत्रं नीत्वा पलायनस्य प्रार्थनाऽप्यतीव कारुणिका अस्ति। (अथर्व० ५।२०।५)।

## दुन्दुभिसूक्तम् (५।२१)

सुष्ठूपमायाः भावसौष्ठवस्य च योगेन वीररसस्यादिकाव्यं भवितुमर्हति अथर्ववेदोऽयम्। दुन्दुभिगर्जितेन शत्रूणां त्रासनस्य मोहनस्य च प्रार्थनासमये मालोपमायाः सौन्दर्यमिदं नितान्तमभिरामं श्लाघनीयञ्चाऽस्ति—

**'यथा स्येनात् पतत्रिणः संविजन्ते अहर्दिवि सिंहस्य स्तनथोर्यथा।**
**एवात्वं दुन्दुभेऽमित्रानभिक्रन्द प्रत्रासयाथो चित्तानि मोहय॥'**

मन्त्रस्याशयोऽयमस्ति—यथा—श्येनपक्षिणाऽपरपक्षिणः उद्विग्नाः भवन्ति, यथा—सिंहस्य गर्जनं श्रुत्वा प्राणिनो भयभीताः भवन्ति, तथैव हे दुन्दुभे! त्वमस्माकं शत्रुम्प्रति गर्जनं कुरु। तान् भयाक्रान्तान् कुरु, सम्मोहितान् कुरु, येन युद्धे तेषां शक्तेः ह्रासो भवतु तथा ते शत्रवः शीघ्रमेव विनाशं गच्छन्तु।

## पृथिवीसूक्तम्

भाषायाः भावस्य च दृष्टया सूक्तमिदं नितान्तमुदात्तं भावप्रवणं सरस-ञ्चास्ति। पृथिव्याः महिम्नः वर्णनमिदं स्वातन्त्र्यप्रेमिणः, स्वच्छन्दतायाः रसि-कस्याथर्वण-ऋषेः हृदयोद्गारमस्ति। अस्याः शैल्याः प्रौढकाव्यस्य उच्चकल्पना तथा भव्या भावुकता वैदिकसाहित्येऽप्यन्यत्र दुर्लभे स्तः। अस्मिन् सूक्ते आथ-र्वणऋषिः त्रयःषट्सु (६३) मन्त्रेषु मातृरूपिण्या भूम्याः समग्रपार्थिवपदार्थानां जननीस्वरूपे महिमा समुद्घोषितोऽस्ति। कतिपयेषु मन्त्रेषु तेन प्रजाः क्लेशानर्थैः त्रातुं सुख-समृद्धिसंवर्धनाय च सुष्ठु प्रार्थना कृता।

अस्मिन् सूक्ते मातृभूम्याः अतीव मनोहरा कल्पना कृताऽस्ति। मातृभूम्याः रुचिरमिदं वर्णनं देशभक्त्याः प्रेरणायाः मधुरो विलासः अस्ति। अत्र मातृभूमिः सजीवरूपेण चित्रितोऽस्ति। 'माता भूमिः पुत्रोऽहं पृथिव्याः' (१२।१।१२)

अर्थात् मम माता भूमिरस्ति, अहञ्च मातृभूम्याः पुत्रोऽस्मि । अतीवोदात्तभावनायाः प्रेरकोऽयं मन्त्रोऽस्ति । अस्याः भूम्याः निर्माणे, संरक्षणे च देवतायाः सहयोगोऽस्ति । अश्विनीसुतौ यां मापितवन्तौ, विष्णुना पादत्रयं यस्याः उपरि प्रक्षेपं कृतम् । देवराजेनेन्द्रेण स्वलाभाय या शत्रुविरहिता कृता, सा भूमिः मह्यं तेनैव प्रकारेण दुग्धं ददातु यथा माता स्वपुत्राय स्वानुरागेण दुग्धं ददाति— **'सा नो भूमिर्विसृजतां माता पुत्राय मे पयः'** । अस्मिन् वाक्यांशे कीदृशी ममताऽस्ति तद्दर्शनीयेति । पृथिव्यामुपरि नर्त्तनस्य, कूर्दनस्य, उत्प्लवनस्य तथा सङ्घर्षणस्य च कीदृक् स्वाभाविकं वर्णनं कृतमत्र तदपि दर्शनीयमस्ति । पृथिव्याः सर्वाङ्गीणं स्वरूपमस्मिन् सूक्ते उपस्थितमस्ति । पृथिव्यामुपरि नद्यः पर्वताश्च सर्वदा लाभदायकाः भवन्तु, षड्ऋतूनामागमनं प्रजाकल्याणाय भवतु, प्रावृड्काले पृथिव्यामुपरि ये सर्प-वृश्चिक-हिंसक-रोगवर्धकादयः कृमयश्चलन्ति ते मां दृष्ट्वैव दूरे अपसर्पन्तु सदैवास्माकं सन्निधौ 'शिवाः' सन्तु ( मं० ४५ ) ।

अनेन प्रकारेण भूमिसूक्तमिदमथर्ववेदीययुगस्य महनीयाः राष्ट्रियतायाः सन्देशवाहकं भूत्वाऽद्यापि अस्मदर्थे उत्साहस्योल्लासस्य च सद्यः प्रेरकमस्ति । ( १२।१ )

## ( ७ ) ब्रह्मण्यानि

अस्मिन् सूक्ते जगतः परमतत्त्वभूतस्य परमात्मनस्तथा परब्रह्मणः स्वरूपस्य कार्यस्य च विवेचनमस्ति । अनेनैवामुष्मिकब्रह्मण्यसूक्तहेतुनाऽथर्ववेदस्य महनीयेनाभिधानेन 'ब्रह्मवेदः' इति कथ्यते । सूक्तेष्वेतेषु दर्शनस्य गम्भीरतमतथ्यानां विशदसमीक्षा कृताऽस्ति । एतेषु सूक्तेषु अन्तर्दृष्ट्या संवलितप्रातिभचक्षुः ऋषीणां स्वानुभूततथ्यानां विशदविवेचनमस्ति । तेनैव कारणेन दार्शनिकदृष्ट्याऽपि वेदोऽयं विशिष्टोपादेयोऽभवत् ।

परमतत्त्वन्तु तेनैव नानाभिधानैस्तत्राभिहितमस्ति । सैव कालनाम्ना जगतः, पृथिव्याः, अपरलोकस्य चोत्पादकः नियन्ता चास्ति । काल एव समस्तप्रपञ्चस्याधिष्ठानं वर्त्तते । तस्मिन् न केवलं मन-प्राण-नामानि समाहितानि सन्ति, प्रत्युदसौ सर्वेषामीश्वरः प्रजापतेरपि पिताऽस्ति । तस्यैव सङ्कल्पेन जगदिदं समुत्पन्नमभवत् । तस्मिन्नेव प्रतिष्ठितमस्ति । काल एव जगतः परमतत्त्वमस्ति ।

'काले तपः काले ज्येष्ठं काले ब्रह्मसमाहितम् ।
कालो ह सर्वस्येश्वरो यः पिताऽसीत् प्रजापतेः ॥' ( १९।५३।८ )

त्रयोदशकाण्डस्यानेकसूक्तेषु यस्य रोहितस्य वर्णनमस्ति, सोऽपि सूर्यस्याथवा सूर्यस्थवीर्यस्य प्रतीकोऽस्ति । स एव जगतः सृष्ट्यादिसमस्तव्यापाराणां निर्वाहकोऽस्ति । सूर्यस्याश्वास्तमेव रोहितं रथे संस्थाप्य सर्वासु दिक्षु भ्रामयन्ति । स एव यज्ञानां जनयिता समग्रविश्वस्य निर्माता चास्ति । तदेवा-

धिष्ठानमधिकृत्य विश्वमिदं स्थितस्तथा स्वजीवनं यापयति। अनेन वर्णनेन स्पष्टतः प्रतीतो भवति यद्रोहितोऽयं ब्रह्मणः प्रतीकोऽस्ति।

अन्येष्वपि सूक्तेषु गावः वर्णनमतीव मार्मिकत्वेन सहाभवत् ( १०।१० ), तथा गौरियं जगतः समस्तपदार्थानां जननीस्वरूपे चित्रिताऽस्ति। ब्राह्मणेभ्यः दक्षिणास्वरूपत्वेनैव केवलं वैदिकयुगे गावः महत्त्वमासीत् प्रत्युत कृषकसमाजाय सर्वस्वत्वेनाऽपि अस्याः गौरवमासीत्। अस्मिन् सूक्ते वशा गौः जगति सर्वश्रेष्ठ-तत्त्वस्वरूपे चिन्तिताऽस्ति। कतिपयाः वशायाः अमृतस्वरूपेण कतिपयाश्च मृतरूपेणोपासनां कुर्वन्ति। संसारेऽस्मिन् देव-दनुज-मुनि-मनुज-पित्रादयः सर्वे वशा एव सन्ति।

**'वशामेवामृतमाहुर्वशां मृत्युमापसते।**
**वशेदं सर्वमभवद् देवाः मनुष्या असुराः पितर ऋषयः ॥'**

( अथर्ववेदः १०।१०।२६ )

गावः आध्यात्मिकमहत्त्वमिदं ज्ञातारमेव यज्ञे दानस्य फलं कल्याणप्रदं भवति नान्यत् ( म० २७ )।

'स्कम्भः' ( १०।७।८ ) तथा 'उच्छिष्टः' ( ११।९ ) प्रकारान्तरेण पर-ब्रह्मणरेव नवीनाभिधानं स्वरूपञ्च प्रतीतं भवति। जगतः समस्तपदार्थाना-माश्रयत्वेनाधिष्ठातृत्वेन चासौ परमतत्त्वं स्कम्भस्य संज्ञां प्राप्नोति। नासौ केवलं विश्वस्य कारणमस्ति प्रत्युत ब्रह्मणोऽपि कारणमस्ति। अतोऽसौ ज्येष्ठब्रह्मपदे-नाभिधीयते। अस्मिन् ब्रह्मणि भूमिः, अन्तरिक्षः आकाशश्च समाहिताः सन्ति। यस्मिन् तत्त्वे अग्निः, चन्द्रः, सूर्यस्तथा वायुः अर्पितो भूत्वा निवसति स एव स्कम्भोऽस्ति ( १०।७।१२ )। तदेवात्मना सहैक्यं धर्त्ता तत्त्वमस्ति। उच्छिष्टशब्दस्यार्थो भवति—'अवशिष्टपदार्थः'। दृश्यप्रपञ्चस्य निषेधकरणात् यदवशिष्टो भवति तदेवोच्छिष्टोऽस्ति। अर्थात् स एव 'नेति नेति' ब्रह्मपदवाच्यं भवति। जगतः समस्तपदार्थानामुत्पत्तिः—वेदपुराणयोरुत्पत्तिः ( म० २४ ), प्राणापानचक्षुश्रोत्रादीनामुत्पत्तिः ( मन्त्र २५ ) उच्छिष्टादेव सम्भूता अस्ति। ( ११।७।२३ )—

**'यच्च प्राणति प्राणेन यच्च पश्यति चक्षुषा।**
**उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः ॥'**

## व्रात्यः

अथर्ववेदस्य शौनकशाखाया या संहिता पूर्णतया समुपलब्धा भवति। तथा सम्प्रति प्रचलिताऽप्यस्ति, तस्याः पञ्चदशतमं काण्डं व्रात्यकाण्डनाम्ना परिचीयते। यतोऽस्मिन् व्रात्यस्यैव समग्रतया विवरणमस्ति। काण्डेऽस्मिन् द्वावनुवाकौ स्तः। ययोः प्रथमानुवाके सप्त सूक्तानि, अपरस्मिन् एकादशसूक्तानि सन्ति। अनेन प्रकारेणास्मिन् काण्डेऽष्टादशसूक्तानि सन्ति। प्रतिसूक्तमनेकाः

गद्यात्मकाः मन्त्राः सन्ति । पैप्पलादशाखायाः समुपलब्धायामपूर्णसंहितायामष्टादशतमस्य काण्डस्य सप्तविंशतितमे सूक्ते व्रात्यविषयकस्य केवलं नव मन्त्रा एव मिलन्ति । शेषमन्त्राः लुप्ता अभवन् । विचारणीयोऽयं प्रश्नोऽस्ति—कोऽयं व्रात्यः ? साधारणतः उपनयनादिसंस्कारविहीनस्य द्विजकुलोत्पन्नस्य जनस्य व्रात्यपदेन बोधो भवति । अनेन ज्ञातो भवति यदार्याणां प्राचीना काऽपि अर्धसभ्यशाखाऽप्यासीत्, या ग्रामाद् बहिरतिष्ठत् । क्रमशः साऽपि शाखाऽऽर्यसमाजे एव सम्मिलिताऽभवत् । किञ्च प्राचीनकाले तेषामाचारव्यवहारः आर्यापेक्षया भिन्न एवाऽसीत् । सम्भवतस्ते वैदिकसंस्कारं नामन्यन्त । ताण्ड्यब्राह्मणे ( १७।१ ) एतेषां जनानां वेशभूषाया अतीव विस्तृतं सजीववर्णनञ्च मिलति । अस्मिन् वर्णने एतेषां जातिगतविशिष्टतायाः, आचार-व्यवहारस्य वेशभूषायाश्च रोचकं स्वरूपं दृष्टिगोचरो भवति । किञ्चाथर्ववेदीयव्रात्यकाण्डे निर्दिष्टव्रात्यस्य किं तात्पर्यमस्ति ? आचारविचाररहितस्य नियमश्रृङ्खलायाः बन्धनमुक्तस्य जनस्य द्योतकत्वेन व्रात्य इति पदस्य लाक्षणिकार्थो भवति—'ब्रह्म' इति । ब्रह्म इदं जगतः नियमश्रृङ्खलायामबद्धोऽस्ति, कार्य-कारणयोः भावनया ओतप्रोतोऽस्ति । अस्यैव ब्रह्मणः स्वरूपस्य तथा तस्मादेव समुत्पन्नसृष्टिक्रमस्य व्यवस्थितं वर्णनमस्मिन् काण्डे विस्तरेण सह मिलति ।

**'व्रात्यो वा इदम् अग्र आसीत्'**—पैप्पलादशाखाया अनेन वाक्येन स्पष्टो भवति यज्जगदादौ व्रात्य एव विद्यमान आसीत् । फलतः व्रात्यशब्देन ब्रह्मण एव बोधो भवति । व्रात्योऽयं गतिमान् भूत्वा प्रजापतिं प्रेरयति । अत्र प्रजापतिपदेन हिरण्यगर्भस्य बोधो भवति—**'स प्रजापतिः सुवर्णमात्मन्यपश्यत् तत्प्राजनयत् ।'** अत्र जीवानां शुभाशुभकर्मणः संस्कार एव सुवर्णपदेन व्यपदिश्यते । यथा—बहुविधानामाभूषणानां समुत्पत्तिः सुवर्णेन भवति तथा जीवानां संस्कारसमूहेन नानाविधजगतः निर्माणं भवति । अनेनैवाधारेण प्रजापतिः हिरण्यगर्भनाम्ना प्रख्यातोऽस्ति । हिरण्यगर्भेणैवात्र सृष्ट्याः क्रमस्य वर्णनमस्ति । तदनन्तरं व्रात्योऽयं केन प्रकारेण नानादिक्षु गच्छति ? तत्सम्बद्धजीवानां सृष्ट्यां समर्थो भवति ? अस्य विशदविवरणमस्मिन् काण्डेऽस्ति । अनेन प्रकारेण व्रात्यकाण्डोऽप्ययं उच्छिष्टसूक्तमिवाध्यात्मिकतथ्यानां प्रतिपादकोऽस्ति, यस्य विपुलं वर्णनमुपनिषदि वर्त्तते ।

अथर्ववेदस्य दार्शनिकसूक्तेषु निर्दिष्टतत्त्वमुपनिषदां पूर्वपीठिकां कथयितुं समर्थास्ति । एतेषां सूक्तानां महती व्याख्या उपनिषत्सु मिलति । अनेन प्रकारेणाथर्ववेदस्य विषयाणामियमालोचना ऐहिकामुष्मिकरूपाभ्यां परिचयं दातुं शक्यते ।

## ऋग्वेदस्य पूरकोऽयमथर्ववेदः

काव्यदृष्ट्या ऋग्वेदस्य पूरकोऽयमथर्ववेद इति कथयितुं शक्यते । ऋग्वेदं प्राचीनतमकाव्यस्य निदर्शनं वक्तुं स्वतःसिद्धसिद्धान्त एवाऽस्ति । किञ्चास्य

श्रेयः अथर्ववेदस्याप्यस्ति। यतः ऋग्वेदः यदि अधिकांशतः आधिदैविकविषयस्याध्यात्मिकविषयस्य च मनोरममन्त्राणां सङ्ग्रहोऽस्ति तदाऽऽथर्ववेदः आधिभौतिकविषयोपरि रचितमन्त्राणां रुचिरस्तथा प्रशंसनीय सङ्ग्रहोऽस्ति। काव्यदृष्ट्या उभयोर्मध्ये उदात्तभावनया मण्डितस्तथा मानवहृदयस्पर्शीगीतिकाव्यानां बृहत्सङ्ग्रहोऽयमस्ति। उभयोर्मिलित्वाऽऽर्याणां प्राचीनतमकाव्यकलायाः रुचिरदृष्टान्तं समुपस्थाय विनात्र काचिद्विप्रतिपत्तिरिति।

कस्मिन्नपि देशे समाजे च स्तरद्वयस्य जनाः मिलन्ति—निम्नस्तरीयाः उच्चस्तरीयाश्च। निम्नस्तरीयानां जनानामाचारविचाराः विचित्रधारायां प्रवहन्ति, उच्चस्तरीयजनानामाचारविचारः विशिष्टवर्गं गृह्णाति। उभयोः रुचिर्भिन्ना भवति, उभयोः कविताऽपि भिन्ना भवति। कवितायाः विभिन्नप्रकारोऽयमसन्दिग्धरूपेणान्योऽन्यस्य पूरको भवति। ऋग्वेदाथर्वयोः कवितायाः पार्थक्यमनेनैव कारणेन सिद्धो भवति। अथर्ववेदीयविचाराणां धरातलं सामान्यजनजीवनमस्ति। ऋग्वेदीयविचाराणाञ्चाधारं विशिष्टकोटिकजनजीवनमस्ति। जनसामान्यस्यानेकविधविश्रम्भाः विचित्राः विलक्षणाश्च भवन्ति। कस्यापि रुजः निदानकाले आधिदैविककारणमुपेक्षितुं न शक्यते। तेषां जीवनोपरि भूतप्रेतपिशाच-डाकिनी-शाकिन्यादीनां तथैव प्रभावो भवति, यथा भूतलस्य दृश्यप्राणिनामस्तित्वं भवति। तेषां विचारे नैते पदार्थाः अदृश्यजगतः निवासिनो भवन्ति प्रत्युत तेऽपि अस्मिन् धरातले तथैव निवसन्ति, यथा मानवाः पशवश्चेति। फलतः एतेषां प्राणिनामस्तित्वं तेषां जीवनं प्रभावितुं सर्वथा समर्थो भवति। एवंविधप्राकृतजनस्याचारविचारं ज्ञातुम् अथर्ववेदः सर्वाधिकमहत्त्वपूर्णसाधनमस्ति। अस्य वेदस्यैवाध्ययनेन ज्ञातो भवति यदभिचारोऽपि द्विविधः आसीत्—मङ्गलसाधकः, अमङ्गलसाधकश्चेति। अथर्ववेदस्य पवित्राभिचारे शारीरिकक्लेशशमनार्थं मन्त्राः मिलन्ति, अमाङ्गलिकाभिचारे शत्रून् प्रति कृताभिशापयुक्तमन्त्राः मिलन्ति। एतयोरुभयोः प्रकारकयोरभिचारमन्त्राणां सङ्ग्रहकर्तृत्वेन वेदोऽयमाङ्गिरसपदेन व्यपदिश्यते।

एतेषामभिचाराणां स्पष्टीकरणं कतिपयोदाहरणैः भवति। कौशिकसूत्रे विधानमेकमस्ति—कोऽपि प्रेमी स्वप्रेमिकायाः मृण्मयीं मूर्त्तिं सृजति। तत्पश्चात् स्वहस्ते चापं गृह्णाति, यस्य बाणस्याग्रभागः तीव्रकण्टकयुक्तो भवति। अनेनैव बाणेन सः स्वप्रेमिकायाः हृदयं वेधति। तस्मिन् काले अथर्ववेदस्य मन्त्राणामप्युच्चारणं करोति (३।२५।१–५, ६), येन तस्य मनोरथः पूर्णो भवति। यदा कदा बर्बराभिचारस्यापि प्रयोगो वयमाप्नुमः, यदा कस्याश्चिदपि नार्या बन्ध्याकरणमभीष्टं भवति अथवा कस्यापि पुरुषस्य पुरुषार्थापहरणं भवति तदा तेषामपि अभिचारप्रयोगोऽथर्ववेदे मिलति ( ६।१३८।६।९० )। दुःस्वप्नापहरणाय भूतापसरणविधिरपि मिलति। सङ्ग्रामे शत्रोः प्रबलसेना-संहरणाय, नृपतेः जयाय

चानेकाः अभिचारमन्त्राः सन्ति । व्याधिविनाशाय विभिन्नप्रकारकानामौषधीनां प्रयोगः मन्त्रैः सह समुपलब्धो भवति । ज्वर-यक्ष्मा-कुष्ठ-कुलक्रमागतरोग-विषादीनां निवारणाय बहुविधौषधीनां प्रयोगाः नानाविधानैः सह समुपलब्धाः भवन्ति । यैः मन्त्रैः मनुष्याणां कल्याणस्य भावनाः प्रस्फुटाः भवन्ति । तात्पर्यमिदमस्ति यदथर्ववेदोऽयं प्राकृतजनस्य प्रत्ययानाम्, आचारविचाराणाम्, आधान-परिधानानाम्, अलौकिकशक्तौ दृढ-प्रत्ययस्य, भूतप्रेताद्यदृश्यजीवेषु पूर्ण-आस्थायाश्चैको विराट् विश्वसनीयः कोशोऽस्ति, येन साहाय्येन प्राचीनयुगस्य स्वरूपं ज्ञातुं शक्यते । अस्य मन्त्राणां भाषाऽपि सरला सुबोधा चास्ति ।

तत्स्थाने च ऋग्वेदे संस्कृतजनस्य विचाराणामीषदभिव्यक्ति प्रस्तुतां करोति । तेषामाचारविचारस्य च धरातलमत्युच्चतरं सुसंस्कृतं शिष्टञ्चास्ति । सामाजिकोच्चस्तरीयविचाराणां विमला धारा मन्त्रमाध्यमेनात्र प्रवहति । मानवजीवनं सुखमयं विधातुं, तथा प्राकृतिकदृश्यानां प्रतीकरूपाः देवाः, अस्माकं जीवने सर्वथा प्रभविष्णवस्तथा महतीशक्तिस्वरूपेणावस्थिताः सन्ति । अतः पुरोहितवर्गाः स्वहिताय, स्वकीययजमानहेतवे, स्वाश्रयदात्रेऽतीव सुश्लिष्ट-भाषायां प्रार्थयन्ति । ते सर्वदा स्वपुत्रपौत्रादीनां कल्याणहेतवे देवानां प्रार्थनां कुर्वन्ति । अस्मिन् कर्मणि ते कदापि न प्रमदन्ति । देवान् साक्षात्कर्त्तुं श्रद्धामयीं पूजां प्रदातुं च यज्ञ एव प्रधानोपकरणमस्ति । एनमेव लक्ष्यं कृत्वा ऋग्वेदस्याधिकांशमन्त्राः प्रवर्त्तिताः भवन्ति । अनेकानि सूक्तानि यज्ञसम्बन्धविहीनानि सर्वथा प्रतीतानि भवन्ति, किञ्च तेषामभ्यन्तरे किमपि याज्ञिकोद्देश्यमवश्यमेव विद्यमानं भवति । यज्ञीयोपकरणानि तान्तोदात्तानि विशुद्धानि च भवन्ति । घृत-तिल-यव-सोमरसादयः देवानुद्दिश्य समर्पणस्य प्रधानपदार्थाः सन्ति । एतेष्वपि सोमरसस्य प्राधान्यमस्ति । सोमयागे सोमरसं वारत्रयं प्रस्तरेण कुट्टयित्वा परिस्रावयत् तच्च्यवनकर्म, 'सवन'-पदेन व्यपदिश्यते । तदनन्तरं तं वस्त्रेण क्षारयित्वा दुग्धमिश्रणस्यापि विधिरासीत् । अस्यैव नाम आसीत् 'पवमानसोमः' यस्य विशिष्टमन्त्रेभ्यः ऋग्वेदस्यैकः विशिष्टमण्डल एवास्ति, फलतः यज्ञस्यावसरे इन्द्र-वरुण-अग्नि-सूर्य-सविता-अश्विन्यादिभ्यो देवताभ्यः सोमरसस्य समर्पणमृग्वेदीययुगस्य धार्मिकमावश्यकं कृत्यमासीत् । एतदर्थमेव यजुषः साम्नश्चापि प्रयोगोऽभवत् । फलतः एते त्रयः ऋक्-यजुःसामवेदाः एकमेव यज्ञमभिलक्ष्य मन्त्रपुञ्जाः सन्ति । समाजस्योच्चस्तरीयभागोऽयमस्य पूजाविधानस्याधिकारी आसीत् । अत्र प्रयुक्ता संस्कृतभाषाऽपि स्वकीये विशुद्धोदात्तस्वरूपे समायाति । फलतः ऋग्वेदाथर्ववेदयोः मन्त्राः मिलित्वैव वैदिकयुगस्य स्वरूपस्थापने समर्थाः भवन्ति । अत एवैतयोरुभयोरन्योऽन्यस्य पूरकः वक्तुं शक्यते ।

तेन हि अथर्ववेदे यज्ञविधानस्य स्थानमुपेक्षणीयं नगण्यञ्च नास्ति । ऋग्वेदीययज्ञयागानां विधानमत्र कृतमासीत् । किञ्च यज्ञस्य सम्बन्धमभिचारेण सह विशेषरूपेण प्रतिष्ठितमासीत् । किञ्चोद्देश्यञ्चास्य स्वर्गप्राप्त्या सह सांसारिकाभ्यु-

दयानां शत्रूणाञ्च पराजयोऽप्यासीत् । अनेन प्रकारेणाथर्ववेदे याज्ञिकभावनायां विकासक्रमस्यैकः परिचयोऽपि मिलति । विकासोऽयं भौतिकरूपेणामनःस्तरीयो भवति । यज्ञस्तु प्रतीकात्मकत्वेनापि मानसिककोटचां समायाति । अनेन प्रकारेण यज्ञस्येयमाध्यात्मिकभावनाऽस्माननौपनिषदिककल्पनापार्श्वे समानयति । अस्मिन् काले यज्ञस्य सरलविधानमभवत् । अल्पव्ययेन, स्वल्पकालेनैव सम्पन्नं भवितुं शक्यते । अनेन प्रकारेणाथर्ववेदे पूर्वकालिकवैदिकविधानापेक्षया स्वरूपविधाने परिवर्त्तनं परिलक्ष्यते ।

## अथर्ववेदे कौटुम्बिकाभिचारः

वैदिकसाहित्येऽथर्ववेदस्य स्थानमतीवानुपममस्ति । यत्रान्यवेदाः देवतानां स्तुतिमेव स्वप्रतिपाद्यविषयं मन्यन्ते, तत्राथर्ववेदः भौतिकविषयाणामपि वर्णने स्वात्मानं कृतकार्यं मन्यते । प्रारम्भिकयुगसम्बन्धिमानवानां क्रियाकलाप-आचार-विचार-वेशभूषादीनां पूर्णपरिचयार्थमथर्ववेदान्न कोऽपि प्राचीनग्रन्थोऽस्ति । यथा—शत्रूणां जयाय, क्लेशनिवारणाय, सद्योजात-शिशूनां मातृःसन्तप्तकर्तॄणां भूत-प्रेतादिकानां विनाशाय नानाभिचाराणां विचित्रं वर्णनमथर्ववेदस्य सूक्तेषु मिलति । येन कारणेन वेदोऽयं 'नृतत्वस्य' ( Anthropology's ) अभ्यासार्थीनामेकः बहुमूल्यविश्वकोषस्य कार्यं करोति ।

अभिचारकर्माणि सर्वदाऽशुभान्येव न भवन्ति । एतेन प्राचीनमानवाः शत्रु-रोग-क्लेशादीनामाक्रमणात् स्वकौटुम्बिकजनानां त्राणं कुर्वन्तिस्म । आत्मसंरक्षणमेवाभिचारक्रियायाः पृष्ठभूमिरस्ति । अस्मिन् धरातले आत्मसंरक्षणस्य प्रवृत्तिः सहजैव भवति । प्रथमतः लोकाः आत्मसंरक्षणं स्वकीयभौतिकोद्योगबलेनैव सम्पादयितुमिच्छन्ति । स्वकीयभौतिकोद्योगे भग्नमनो भूत्वैव जनाः आधिदैविकप्रयासं प्रत्युन्मुखाः सचेष्टाश्च भवन्ति । अस्मिन्नेव प्रयत्नेऽभिचारस्यापि गणना भवति । अभिचारस्तु ( यातु ) द्विविधो भवति—शुभमशुभञ्चेति । शोभनकर्मणि अनिष्टादात्मसंरक्षणस्य भावना प्रबला भवति । अशोभनप्रकारके कर्मणि—मारण-मोहनोच्चाटनादीनां भावनैव विशिष्टरूपेण जागृता भवति । पाश्चात्यजगत्यपि उभयोरभिचारयोः सत्ता विद्यमानाऽस्ति । तौ च श्वेतकृष्णाभिचारनामभ्यां ( White magic and Black magic ) ख्यातौ स्तः । शेक्सपियर( Shakespeare )महोदयस्तु Macbeth नामकस्वकीयाऽभिनयेऽभिचारस्य साहित्यिकवर्णनं कृत्वा यूरोपीयमध्ययुगसम्बन्धिधारणायाः भव्यरूपं स्थापितवान् ।

अथर्ववेदः एवंविधप्रत्ययानां परिचयार्थं मनुष्यानामितिहासे सर्वाधिकप्राचीनग्रन्थरत्नमस्ति । अथर्वसंहितायामप्यन्यसंहितेव मन्त्राणां सङ्ग्रहोऽस्ति । एतेषां मन्त्राणामुपयोगः कदा केनोद्देश्येनाभवदस्याभिज्ञानं कौशिकगृह्यसूत्रसाहाय्येन भवति । कौशिकगृह्यसूत्रमथर्ववेदस्यैकमेव गृह्यसूत्रमस्ति । अस्मिन् गृह्यसूत्रे

चतुर्दशाध्यायाः सन्ति। नवतिरधिकाष्टादशतमे खीष्टाब्दे न्यूहावेननगरात् ( अमेरिका ) अस्य ग्रन्थस्य सम्पादनं ब्लूमफील्डमहोदयेन कृतम्। अस्य हिन्दी-भाषायामनुवादेन सह पुनर्मुद्रणं बिहारप्रान्तस्य मुजफ्फरपुरनगरतः द्वाचत्वारिंश-दधिकोनविंशतितमे खीष्टे उदयनारायणसिंहमहोदयेन कृतम्। मानवविज्ञान-स्येतिहासे कौशिकगृह्यसूत्रं नितान्तोपादेयः प्रामाणिकः रोचकश्च ग्रन्थोऽस्ति। ग्रन्थेऽस्मिन् तेषामभिचारिकक्रियाकलापानां विचित्रवर्णनमस्ति, यैः मन्त्रैः सह प्रयुक्ताः अभवन्।

अथर्ववेदस्य वैवाहिकसूक्तानामत्रैकं संक्षिप्ताध्ययनं दर्शनीयम्। विवाहेन सम्ब-द्धानि बहुविधसूक्तानि अथर्ववेदे उपलब्धानि सन्ति, येषामनुशीलनेन तात्कालिक-युगस्य बहुविधानि सामाजिकचित्राण्यस्माकं नेत्रयोः सम्मुखे चलचित्रमिव प्रत्यक्षी-भवन्ति। एतेषु सूक्तेषु क्वाऽपि पुत्रोत्पत्तिनिमित्ताय प्रार्थना वर्त्तते क्वचिच्च सद्योजातशिशोः क्लेशात् संरक्षणार्थं देवतानां स्तुतयः सन्ति। अथर्ववेदस्य चतु-र्दशतमः काण्डः 'विवाहकाण्ड'नाम्ना ख्यातोऽस्ति। काण्डेऽस्मिन् ऊनचत्वारिंश-दधिकत्रयोदशशतमन्त्राः सन्ति। एतेषां मन्त्राणां उपयोगः विवाहकाले एवाऽभवत्। निम्नलिखितमन्त्रे सूर्याग्न्योः प्रार्थनाऽस्ति—

**'यत् ते प्रजायां पशुषु यद्वा गृहेषु निष्ठितमघकृद्भिरघं कृतम्।**
**अग्निष्ट्वा तस्मादेनसः सविता च प्रमुच्यताम्॥'**
( अथर्व० १४।२।६२ )

अनेनैव प्रकारेण यदा काऽपि नववधूः स्वपतिगृहे समायाति तदा तस्याः दीर्घजीवनाय कृता भव्या प्रार्थनाऽस्मिन् मन्त्रे दर्शनीया—

**'प्रबुध्यस्व सुबुधा बुध्यमाना दीर्घायुत्वाय शतशारदाय।**
**गृहान् गच्छ गृहपत्नी यथासो दीर्घं व आयुः सविता कृणोतु॥'**
( अथर्व० १४।२।७५ )

अथान्यप्रकारकानां मन्त्राणां तथा तत्सम्बद्धानुष्ठानानामुपरि दृष्टिपातः करोतु। काऽपि स्त्री स्वपत्युः प्रेमप्राप्तुमिच्छति अथवा क्वचिदन्यत्र सा स्वसपत्नीं वशीकर्त्तुमिच्छति, तदा सैकविशिष्टानुष्ठानेन सहास्य सूक्तस्य मन्त्राणामुपयोगं करोति—

**'उत्तुदस्त्वोत् तुदतु मा धृथाः शयने स्वे।**
**इषुः कामस्य या भीमा तया विध्यामि त्वा हृदि॥ १॥**
**आधीपर्णां कामशल्यामिषुं सङ्कल्पकुल्मलाम्।**
**तां सुसन्नतां कृत्वा कामो विध्यतु त्वा हृदि॥ २॥**
**या प्लीहानं शोषयति कामस्येषुः सुसन्नता।**
**प्राचीनपक्षा व्योषा तया विध्यामि त्वा हृदि॥ ३॥'**

अस्मिन् सूक्ते षट् मन्त्राः सन्ति, येषु त्रयाणां मन्त्राणामुल्लेखोऽभवत् । शेषाः त्रयो मन्त्राः अस्यैव भावस्य पुष्टिं कुर्वन्ति । वशीकरणक्रियायाः प्रतीकरूपेण मन्त्रद्वयम् ( ६।१३० ए० ६।१३८ ) दर्शनीयमस्ति । एतेषां ध्रुववाक्यमस्ति—'देवाः प्रहिणुत स्मरम् असौ मामनुशोचतु ।' अपरोऽपि मन्त्रः द्रष्टव्यः—

**'उन्मादयत मरुत उदन्तरिक्षमादय ।**
**अग्न उन्मादया त्वमसौ मामनुशोचतु ॥'**

हे देवताः ! मम प्रेम्णा एनमुन्मादयत । अन्तरिक्षमुन्मादय । हे अग्निदेव ! त्वमप्येनमुन्मादय । मम प्रेम्णाऽसौ शोकसन्तप्तो भवतु ।

**'यद् धावसि त्रियोजनं पञ्चयोजनमाश्विनम् ।**
**तत स्त्वं पुनरायसि पुत्राणां नो असः पिता ॥'** ( अथर्व० ९।१३१।३ )

काऽपि विरहिणी पतिं प्रति कथयति—यदि त्वया योजनं शतं गतोऽपि वा अश्वारोहणं कृत्वा पञ्चयोजनपर्यन्तं गतोऽसि, तथाऽपि तस्मात्स्थानात् शीघ्रमेव पुनरागत्य मम पुत्राणां पिता भव । घृणाभावस्याप्येकः मन्त्रः द्रष्टव्यः—

**'भगमस्या वर्च आदिष्यधि वृक्षादिव स्रजम् ।**
**महाबुध्न इव पर्वतो ज्योक् पितृष्वास्ताम् ॥'**

मया अस्याः स्त्रियाः कल्याणं, सौभाग्यं, तेजाश्चापहृता, यथा वृक्षात् माला । दृढमूलपर्वत इव सा सदैव पितृगृहे तिष्ठतु । अत्र द्वयोरुपमयोः तात्पर्यमतीव सुष्ठु प्रतिभाति । माला तु कल्याणसौभाग्ययोः प्रतीकमस्ति । पर्वतस्याप्युपमा दृढमूलकत्वेन प्रसङ्गानुकूलमेवाऽस्ति ।

**'एषा ते राजन् कन्या वधूर्निधूमतां यम ।**
**सा मातुर्बध्यतां गृहेथा भ्रातरथो पितुः ॥**
**एषा ते कुलपा राजन् तामुते परिदद्मसि ।**
**ज्योक् पितृष्वासाता आ शीर्ष्णः समोप्यात् ॥'**

अत्र काऽपि स्त्री यमं लक्षयित्वा कथयति—हे राजन् यम ! इमां कन्यां त्वं स्वपत्नीत्वेन वरय । सा स्वमातुः, पितुः, भ्रातुर्वा गृहे एव तिष्ठतु । तव कुलरक्षणाय त्वामहमिमां कल्याणीं कन्यां प्रयच्छामि । अत्रास्याश्चण्डिकायाः प्रार्थनाऽतीव कठोराऽस्ति । न केवलं यमराजं तां समर्प्य सन्तोषमावहति, अपितु जर्जरावस्थापर्यन्तं पतिमुखदर्शनाद्वञ्चिता भवतु—इतोऽप्यधिका न काऽपि घृणाकारिका भावना भवितुं शक्यते ।

कतिपयेषु मन्त्रेषु कस्या अपि स्त्रिया उग्रप्रतिहिंसाया वह्निः प्रज्वलति—अथर्ववेदस्य ७।३५ मन्त्रे सपत्नीं वन्ध्याकरणाय प्रार्थनाऽस्ति । कस्यापि पुरुषस्य पुंस्त्वविनाशाय निर्भ्रान्ता प्रार्थनाऽस्ति । अपरस्मिन्नपि सूक्ते ७।९० तथातीव्रप्रतिहिंसायाः भावना नास्ति यथा ६।३८ सूक्ते उग्रभावनाऽस्ति । इदं सूक्तं पठित्वा

तु कस्यापि सहृदयस्य हृदयं विदीर्णं भवति। कोऽप्यन्यः इन्द्रं प्रार्थयति—हे इन्द्र ! मम शत्रुं सर्वकालाय क्लीबं कुरु, प्रस्तरद्वयेन तस्याण्डकोशं सर्वकालाय चूर्णय। शत्रूणां पुरभेत्ताऽस्ति इन्द्रस्तमण्डभेत्ता भवितुं प्रार्थनाऽपि विचित्रैवास्ति। अनेन भावसम्पन्नमन्त्रमपि द्रष्टव्यम्—

'क्लीबं कृध्योपशिनमथो कुरीरिणं कृधि।
अथास्येन्द्रो ग्रावभ्यामुभे भिनत्त्वाण्ड्यौ॥'

एतद्विषयकेष्वन्यसूक्तेषु साहित्यिकसौन्दर्यस्याऽप्यभावो नास्ति। सरलसामान्यशब्देषु स्वमनोगतभावप्रदर्शनस्य क्षमतां दृष्ट्वाऽऽलोचकाश्चकिताः भवन्ति।

## अथर्ववेदस्य रचनाकालः

अथर्ववेदस्य रचनाकालः ऋग्वेदापेक्षयाऽवान्तरकालिकः प्रतीतो भवति। भाषायाः छन्दसश्च दृष्टयाऽथर्वस्यानुशीलनमस्य पूर्वोक्तसिद्धान्तस्य पोषकोऽस्ति। अथर्वस्य भाषा ऋग्वेदीयसंस्कृतापेक्षया कतिपयदृष्टयाऽनेकरूपेषु अर्वाचीना प्रतीता भवति। छन्दसामपीयमेव दशाऽस्ति। न तावदेतावदेवापितु भौगोलिकी सांस्कृतिकी च परिस्थितयोऽपीदमेव भावं व्यक्तं कुर्वन्ति यदथर्ववेदे चित्रितसमाजस्य प्रतिबिम्बमृग्वेदे चित्रितसमाजापेक्षयाऽवान्तरकालिकमस्ति। अथर्ववेदकाले वयमार्यान् दक्षिणपूर्वस्यां दिशि गच्छन्नवलोकयामः। वङ्गारण्यविहारिणो बर्बरव्याघ्राणां वर्णनमेवास्य प्रमाणमस्ति। व्याघ्रोऽयं समस्ताखेटकपशुभ्यो नितान्तभिन्नो भवति। अथर्ववेदे राजा राज्याभिषेककाले व्याघ्रचर्मोपरि समासीनो भवति। रीतिरियं तस्य राज्ञः राजशक्तेः प्रतीकं मन्यते। ऋग्वेदस्तु चातुर्वर्ण्यपदेन परिचयं ददाति। ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणामुल्लेखोऽत्र मिलति। किञ्चाथर्ववेदे ब्राह्मणस्य शक्तिस्तथा गरिमायाः गौरवगाथा विशेषरूपेण मिलति। समाजे ब्राह्मणानामधिकारः विशिष्टरूपेण समृद्धः प्रतिभाति। पुरोहितवर्गस्तु स्वयज्ञीयकौशलेनाभिचारीयनैपुण्येन च समाजे स्वकीयोच्चासनमर्जितवान्। अथर्ववेदीयमन्त्रेषु निर्दिष्टाभिचारः स्वविशुद्धस्वरूपे जनजीवनस्याचारविचाराणामिवउपलब्धो न भवति। एतेषु पुरोहितवर्गेण अथर्वसंहितायाः सङ्कलनमेव न कृतम्, प्रत्युत बहूनां सूक्तानां प्रणयनमपि पुरोहितवर्गस्योद्योगस्य परिणतफलमस्ति। अनेन विधिना अथर्ववेदे पौरोहित्यविचारस्य सत्ता उपमाभ्यः दृष्टान्तेभ्यश्च यत्र तत्रोपलब्धा भवति। क्षेत्रकृमिभिः सम्बद्धे एकस्मिन् मन्त्रे कथितमस्ति—'अभिचारस्य प्रभावेण कीटाः शस्यं परित्यज्य तथैव गमिष्यन्ति यथाऽपूर्णयज्ञे भोजनं परित्यज्य ब्राह्मणाः गच्छन्ति।

अथर्ववेदे निर्दिष्टदेवमण्डलोऽपि ऋग्वेदादवान्तरकालिकविकासस्य सूचकः पोषकश्चास्ति। अथर्ववेदे अग्निवरुणइन्द्रादिदेवानां सत्ता वर्तते तथापि तेषां स्वरूपे कार्ये च पर्याप्तं पार्थक्यं दृग्गोचरीभवति। एतेषां देवतानां प्राकृतिकदृश्यानां प्रतीकात्मकरूपं विस्मृतमभवत्। अस्मिन् युगे ते देवविशेषरूपे एव उपस्थिताः

भवन्ति । तेषां केवलं रक्षसां संहारः, रोगाणाञ्च विनाशनं, शत्रूणां विध्वंसनमेव कार्यमस्ति । अथर्ववेदे अध्यात्मवादेन सृष्टिवादेन च सम्बद्धानि बहूनि सूक्तान्यपि तमवान्तरकालिकाः रचनाः प्रमाणयन्ति । एतेषां सूक्तानामध्यात्मवादः उपनिषदां दार्शनिकसिद्धान्तकोट्यां समायाति । एतेषां प्रयोगोऽपि इन्द्रजालस्यावसरे भूतपिशाचादीनामपसारणायैवाऽभवत् । अनेन सिद्धो भवति यदथर्ववेदस्य रचना ऋग्वेदस्य निर्माणकालात् पश्चाद्वर्तिनी अस्ति ।

वेदाय प्राचीनसाहित्ये 'त्रयी' इति पदस्य प्रयोगो मिलति । त्रयीति पदेन ऋग्यजुःसामवेदस्यैव बोधो भवति । अन्यत्र विद्यानां गणनाप्रसङ्गेऽपि वेदत्रयीति पदादनन्तरमेव इतिहासस्य आख्यानस्य च नामोल्लेखनं भवति । अत्राऽपि अथर्ववेदः अनुल्लिखित एवाऽस्ति । अस्य तात्पर्यमिदमेवास्ति बहोः कालपर्यन्तं वेदत्रयीवद् अथर्ववेदस्य मान्यता नासीत् । मान्यतेयं शनैः शनैः अवान्तरशताब्दीनां प्रयासस्य श्लाघनीयं फलमस्ति ।

## अथर्ववेदोपरि बाह्यप्रभावः

अथर्ववेदस्य स्वरूपोपरि विचारं कुर्वन्, लोकमान्यतिलकमहोदयेनाभिनवसिद्धान्तं प्रकटितम् । तन्मते देशान्तराणामपि धार्मिकसिद्धान्तस्याथर्ववेदोपरि प्रभावं परिलक्ष्यते । प्राचीनकाले वर्त्तमान ईराकदेशस्य नाम 'काल्दिया' आसीत् । खीष्टात्पञ्चसहस्रवर्षपूर्वमेवायं प्रदेशः तुरानियनजनैरधिकृतः । तेषामुपनिवेशोऽयमासीत् । तेषां धार्मिकसिद्धान्तस्य परिचयोऽपि सम्प्रति समुपलब्धोऽस्ति । खीष्टाद् द्विसहस्रवर्षपूर्वं प्रदेशोऽयं 'वेविलोनिया'( बाबुल )नाम्ना ख्यात आसीत् । तस्मिन्नपि युगे तेषां भारतीयैः सह समृद्धव्यापारोऽभवत् । बाबुलदेशस्य महार्घवस्त्रं ( मलमल ) 'सिन्धु'-नाम्ना ख्यातमासीत् ।

बाबुलदेशस्योदयात्प्रागेव 'काल्दिया'-देशेन सह भारतवर्षस्य घनिष्ठतमः व्यावसायिकसम्पर्क आसीत् । तस्मिन् सुदूर-प्राचीनयुगेऽपि उभयोर्देशयोर्मध्ये विचाराणामादान-प्रदानमासीत् । अस्य प्रभावः अथर्ववेदस्य मन्त्रोपरि अस्त्येव । अथर्वस्य पञ्चमकाण्डस्य त्रयोदशसूक्तस्याष्टमे मन्त्रे 'तैमात' 'उरुगूला' इत्यादिशब्दानामवितथशब्दाशयः अस्मिन्नेव 'काल्डिया'-देशस्य प्राचीनधार्मिकतथ्यानामनुशीलनेन ज्ञातो भवितुं शक्यते । तस्य देशस्य विश्वासोऽस्ति यन्नागलोके 'तियामत'-नामधारी एकः बृहत्कायः सर्पः न्यसवत् । तं सर्पं मर्दुकनामकः देवता स्वायुधेन हतवान् । तिकलमहोदयस्यात्र कथनमस्ति—अथर्वस्य 'तैमातः' यो हि सर्पस्य बोधकः शब्दोऽस्ति, अस्यैव 'तिमायत' इति प्रतिरूपमस्ति । 'उरुगूला'-शब्दस्यार्थो भवति एकं विराट् नगरम् अर्थात् पाताललोकः । अथर्ववेदस्योरुगूलाशब्दस्येदमेव स्रोतोऽस्ति । काल्दियानगरे 'अप्सु' किंवा 'अब्जु' अस्यैव तियामतस्य पत्युर्नाम आसीत् यं मर्दुकः हतवान् । अतोऽसौ 'अब्जुजित्' इत्युपाधिना विभूषित आसीत् । तिलकमहोदयस्यानुसारेण वैदिकः 'इन्द्रः' अस्यैव मर्दुकस्यैव प्रतिरूपमस्ति । फलतः वेदे इन्द्रस्योपाधिः 'अप्सुजित्' इति सार्थको-

ऽस्ति। 'अप्सुजित्'-शब्दस्य प्रथमांशः 'अप्'-शब्दस्य सप्तम्यन्तरूपं न भूत्वा, स्वतः व्यक्तिवाचकसंज्ञा अस्ति ( अप्सु = अब्जु )। 'उर्वशी' इति शब्दस्यार्थः— 'उरसा समुत्पन्ना या सा' इति न भूत्वा 'अप्सरा' इत्यर्थो भवितव्यम्। यतः काल्दीभाषायाम् 'उरु'-शब्दस्यार्थो भवति 'पातालः' अथवा 'तत्रस्थजलम्'। फलतः 'उर्वशी' जले समुत्पन्ना काऽपि दिव्याङ्गनाऽस्ति तथा तस्या यथार्थ प्रतिरूपमस्ति 'अप्सरा' ( यस्या उत्पत्तिः जलेन भवति )। वेदे इन्द्रशब्दस्य पर्याये 'सप्तहन्'-शब्दो मिलति। तियामतोऽपि सप्तशीर्षक आसीत्। फलतः 'तियामत' वृत्रस्यैव प्रतिरूपमासीत्। अनेन विचारेण 'वृत्रहा' इन्द्रस्य 'सप्तहन्' इत्यप्युपाधिधारणं किमपि विचित्रं नास्ति। काल्दीभाषायाम् 'किम्मदिम्म' तत्रस्थानां भूतप्रेतपिशाचादीनां नाम अस्ति। तेनास्य प्रतिध्वनिः 'किमीदिन्' ऋग्वेदीयशब्देऽप्यस्ति ('द्वेषो धत्तमनवायं किमीदिने।' ऋ० ७।१०४।२), यस्य यास्केन 'किमीदानीम्'-शब्देन सम्बन्धं संयोज्य 'पिशाचः' इत्यर्थः कृतः। ( 'साधुजनवैरी सदा विरुद्धबुद्धिः पिशुनोऽभिधेयः'—देवराजयज्वा, निघण्टु-निर्वचनम् पृ० ३५६ द्रष्टव्यम्)। हिब्रूधर्मे निर्दिष्टः 'तेहोम'-शब्दोऽपि 'तियामत'-शब्दादेव निष्पन्नोऽभवत्। तिलकमहोदयस्य कल्पनाऽस्ति यदनेकाः काल्दीशब्दाः अथर्ववेदे समुपलब्धा भवन्ति। बहुविधवैदेशिकशब्दानां प्रयोगेणैवाथर्ववेदस्य विशुद्धता सन्दिग्धा अथ च अमान्या दीर्घकालपर्यन्तमासीत्। अवान्तरकाले एव चतुर्वेदेषु अथर्ववेदः स्वस्थानं प्राप्तुं समर्थोऽभवत्। विशेषाध्ययनार्थं तिलक-महोदयस्यास्मिन् विषये काल्दियनवेदविषयकं निबन्धं 'भण्डारकर-अभिनन्दनग्रन्थे, द्रष्टव्यम्।

संक्षिप्ततः वेदेषु अथर्ववेदो बहुलविशिष्टतां निदधाति। यदा हि ऋग्वेदाद-यस्त्रयो वेदा आमुष्मिकं फलं प्रददति तदा अयमथर्ववेदः ऐहिकफलमपि प्रयच्छति। जीवनं सुखसमन्वितं कर्त्तुं येषां साधनानामपेक्षा भवति तेषां सिद्धयर्थमिह वेदे विविधानामनुष्ठानानां विधानं विहितमस्ति।

संक्षेपतः ऋग्यजुःसामाथर्वाख्याश्चत्वारो वेदाः सन्ति, इति तु सुविदितमेव। तत्रैतेष्वाद्यास्त्रयो वैदिकयज्ञियं धर्ममनुसृत्य प्रवृत्ता इत्यपि परम्परानुसृतम्। तथा च ऋग्वेदो होतुः पुरोधसस्तदनुयायिनाञ्च धर्ममाख्याति, यजुर्वेदोऽध्वर्योः पुरोधस-स्तदनुयायिनाञ्च धर्ममथ च सामवेद उद्गातुः पुरोधसस्तदनुवर्तिनाञ्चेति। प्रथमं तावत् परमार्थतो मूलरूपेण त्रय एवैते वेदाः प्रतीता अभूवन्नित्थं मैकडानलः स्वीये संस्कृतसाहित्येतिहासस्य १८५तमे पृष्ठे प्रतिपादयति—'ऋक्सामाथर्वयजु-र्वेद इति त्रय एवेति वेदाः वैदिकसङ्ग्रहाः, यत् एत एव महता यज्ञियेनानुष्ठानेन संस्कारेण च सम्बद्धाः, अथर्ववेदस्तु तत्त्वतोऽसम्बद्धः, एतेनान्तिमाध्यायवर्जं यच्च स्फुटमेव यज्ञियेन विधिनाऽस्य सम्बन्धमाख्यातुं सम्बद्धः। एतेनैव हेतुना सम्भवतो वेदानां 'त्रयी' आख्या परम्परया समजनि। वेदेष्वथर्वणः परिगणनं पश्चा-

त्कालिकमेव । तथाहि छान्दोग्योपनिषदि वेदानां वर्णनप्रसङ्गे—'**ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदपित्र्यं राशिं देवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद् भगवोऽध्येमि (७।२)।**' इत्युक्तम् । तत्र ऋग्यजुःसामभिः साकं वेदशब्दस्य प्रयोगः उपलभ्यते, नाथवर्ण एवमनुक्रमे पञ्चमत्वेन परिगणितयोरितिहासपुराणयोरपि विषये वेदशब्दस्यासम्प्रयोगः । तत्राथर्वणो विषयेष्वन्यसंहितातस्तत्त्वतो भेदो दृश्यते । अतएव भारतीयपरम्परामनुसृत्यास्याथर्वणो विषये महिम्नस्तोत्रस्य सप्तमश्लोकव्याख्यावसरे प्रस्थानभेदरूपेण मधुसूदनसरस्वत्या, कौशिकसूत्राणां ब्लूमफील्डस्य संस्करणे ३०७ पृष्ठे केशवेन च स्वव्याख्यायाम् 'शान्तिकपौष्टिकाभिचारिकाद्भुतानि कर्माणि संहिताविधावुक्तानि' इत्युल्लिखितम् । ततश्च स्पष्टमेवायमथर्वा शान्तेः पुष्टेः शत्रूणामुच्छेदादेश्च विषयमुपवर्णयति । सायणाचार्योऽपि अथर्वव्याख्यायाम्—'**पौरोहित्यशान्तिकपौष्टिकानि राज्ञामथर्ववेदेन कारयेद् ब्रह्मत्वञ्च**' इत्युल्लिख्य विष्णुपुराणोक्तमुद्धरति—

**'शान्तिपुष्ट्यभिचारार्था एकब्रह्मर्त्विगाश्रयाः ।**
**क्रियन्तेऽथर्ववेदेन त्रय्येवात्मीयगोचराः ।।'**

इत्थं नृपाणां निखिलं पौरोहित्यं शान्तिकर्माणि पुष्टिकर्माणि चाथर्ववेदायत्तानि, तथा यज्ञीयब्रह्मणोऽपि सर्वो विधिरथर्वोक्तदिशा विधेय इति समायाति ।

यूरोपीयविद्वांसोऽपि अथर्वणं यातुकर्माणामभिचारादीनाञ्च कृते सर्वोत्तमं वेदं स्वीकुर्वन्ति । आधुनिका भारतीयाश्च विद्वांसः सामान्यरूपेणेमाभेवं विचारसरणिमनुसरन्ति । तथा च मैकडोनलमहोदयोऽथर्वणो विषय इत्थमाख्याति—साकल्येनायमथर्वा विभिन्नजातीयानां मन्त्राणां सङ्ग्रहरूपः । अस्य मुख्यं विधेयमभिचारादिकर्म । यतोऽयं रोगाणां घातकपशूनां भूतप्रेतादीनां शत्रूणां ब्राह्मणोत्पीडकानाञ्च प्रतिपन्थिनां कर्मणां विरोधाय विनाशाय चोपदिशति । किन्त्वत्र बहवो मन्त्राः शुभावहा अपि सन्ति । तथाहि—पारिवारिके ग्रामीणे च जीवने सौमनस्यं समाधातुं शत्रून् विनाशयितुं, दीर्घमायुषमवाप्तुं, स्वास्थ्यमैश्वर्यञ्चाधिगन्तुं मन्त्राथर्वणिमन्त्राः सन्ति । एतदतिरिक्तं यात्रायां सुरक्षार्थं द्यूते विजयार्थञ्चाप्यत्र मन्त्रा विद्यन्ते । इत्थमयमथर्वा शान्त्यर्थं पुष्ट्यर्थं शापार्थञ्चापि मन्त्राणामुल्लेखं समाचरन् स्वीयं द्विविधं रूपं प्रस्तुतीकरोति । विण्टरनिट्जमहोदयोऽपि वेदमिममथर्वाणमथवा यात्वभिचारकर्मणां ग्रन्थं मनुते । सर्वानिमान् विचाराननुसरन् भारतीय-इतिहासवेत्ता श्री आर० डी० बैनर्जी कथयति यदथर्ववेदो यातुकर्मकाणां मन्त्राणां निधानमस्तीति ।

पाश्चात्यैर्विद्वद्भिर्यदुपरि निर्दिष्टं तथ्यं सामान्यतया स्वीकृतं तत्रैतदतिरिक्तं नास्त्यन्यत् किञ्चिद् भ्रामकं यदथर्ववेदः केवलं वशीकरणादियातुकर्माणामेव

वेदः पूर्वोक्तास्त्रयो वेदाः स्तुतिपरा यज्ञपराश्चेति । विदुषां विमर्शार्थमुपस्थापिते ग्रन्थेऽस्मिन् मदीयोऽयमेव प्रयासो यन्नायं निष्कर्षो निकषेण निर्घर्षितोऽङ्गीकार्यश्च तिष्ठति, प्रत्युत सारतः सिद्धान्ततश्चाथर्ववेदोऽपि शेषैरन्यैर्वेदैस्तुल्य एवेति । तत्र सर्वेषां वेदानां सम्यगध्ययनेनालोचनेन चेदं स्पष्टमवगम्यन्ते यत्परम्परया अङ्गीकृता अथर्ववेदस्य शान्तिपुष्टयादिविषया अन्येष्वपि वेदेषु समानमेवोपलभ्यन्ते इति न शान्तिपुष्टयादिविषया अथर्ववेदस्यैव केवलार्था इति । इत्थं व्यतिकरेऽथर्ववेदेऽभिचारविधीनां वैशिष्ट्यं मन्यमानाः विपश्चितोऽन्येषु वेदेषु तदभावमेव यद्मन्वते तदयुक्तम्, यतो हि इतरेष्वपि वेदेषु तदभावाभाव एव वरीवर्त्तते ।

---

# सप्तमोऽध्यायः

## ब्राह्मणग्रन्थाः

### सामान्यपरिचयः

ग्रन्थवाची ब्राह्मणशब्दः विशेषतः नपुंसकलिङ्गे एव प्रयुक्तो भवति । मेदिनीकोशानुसारेण वेदभागस्य सूचकः ब्राह्मणशब्दः नपुंसकमेव भवति । यथा—**'ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम् ।'** ग्रन्थार्थे ब्राह्मणशब्दस्य प्रयोगः पाणिनीयव्याकरणे ( सू० ३।४।३६ ), निरुक्ते ( ४।२७ ), ब्राह्मणे ( शतप० ४।६।९।२० ), ऐतरेयब्राह्मणे ( ६।२५।८।२ ) च न केवलं समुपलब्धो भवति, प्रत्युत तैत्तिरीयसंहितायामस्य सर्वाधिकप्राचीनप्रयोगो मिलति—**'एतद् ब्राह्मणान्येव पञ्च हवींषि'** ( तै० सं० ३।७।१।१ ) । अस्यार्थस्य विषये न काऽपि विप्रतिपत्तिः । ब्राह्मणं ब्रह्मणः व्याख्यापरकग्रन्थानां नाम अस्ति । ब्रह्म-शब्दः स्वयमनेकार्थेषु प्रयुक्तो भवति, येष्वेकोऽर्थः 'मन्त्रः' अर्थात् वेदे निर्दिष्टमन्त्रः ( 'ब्रह्म वै मन्त्रः' शत० ब्रा० ७।१।१।५ ) । अनेन प्रकारेण वैदिकमन्त्राणां व्याख्यानोपस्थितकरणेन ब्राह्मणस्येदं नामकरणम् अभवत् । ब्राह्म।-शब्दस्यापरोऽप्यर्थो भवति—यज्ञः । अर्थात् यज्ञीयकर्मकाण्डस्य व्याख्या-विवरणयोः सम्पादनं ब्राह्मणग्रन्थानां मुख्यविषयमस्ति । ब्राह्मणेषु मन्त्र-कर्म-विनियोगानां व्याख्याऽस्ति । ब्राह्मणानामन्तरङ्गपरीक्षणेन ज्ञातो भवति यदेते ग्रन्थाः यज्ञानां वैज्ञानिकः, आधिभौतिकस्तथाऽध्यात्मिकस्वरूपसम्पादनकर्त्ता एकः महनीयो विश्वकोशोऽस्ति । यथा—

**'ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्यानग्रन्थः ।'**

( भट्टभास्करः—वै० सं० १।५।१ भाष्यम् )

**'नैरुक्त्यं यस्य मन्त्रस्य विनियोगः प्रयोजनम् ।**

**प्रतिष्ठानं विधिश्चैव ब्राह्मणं तदिहोच्यते ।।'** ( वाचस्पतिमिश्रः )

अनेन कथनेन सिद्धो भवति यद् वेदो द्विविधो—मन्त्ररूपो ब्राह्मणरूपश्च । तदयं ब्राह्मणभागोऽपि वेद एव । ब्रह्मवेदस्तद् व्याख्या 'ब्राह्मण' इत्यपि केचित् । वेदशेषभूताः इमे ब्राह्मणग्रन्थाः यज्ञानुष्ठानस्य विस्तृतं वर्णनं कुर्वन्ति । काश्चन कथा अपि ब्राह्मणग्रन्थेषु प्राप्यन्ते । प्रत्येकं वेदशाखानुसारेण ब्राह्मणा आरण्यकग्रन्थाश्च भिन्नाः सन्ति ।

ब्राह्मणसाहित्यमिदं नितरामेव विशालं व्यापकञ्च वर्त्तते । साहित्यमिदं गद्यात्मकं विद्यते । यज्ञस्य विधानं कदा कृतं भवेत् ? कानि च साधनानि तदर्थमपेक्ष्यन्ते ? के च तत्तद् यज्ञानामधिकारिणः ? इत्येतद्विषयाणामुपपादनं ब्राह्मणसाहित्ये कृतमस्ति । समवाप्तानां प्रमुखब्राह्मणानां वेदाननुसरन्ती संख्या

अनेन प्रकारेणास्ति—( १ ) एतरेयब्राह्मणम्, ( २ ) शाङ्खायनब्राह्मणम् ( ऋग्वेदीयम् ), ( ३ ) शतपथब्राह्मणम् ( शुक्लयजुर्वेदीयम् ), ( ४ ) तैत्तिरीयब्राह्मणम् ( कृष्णयजुर्वेदीयम् ), ( ५ ) ताण्ड्यम्, ( ६ ) षड्विंशम्, ( ७ ) सामविधानम्, ( ८ ) आर्षेयम्, ( ९ ) दैवतम्, ( १० ) उपनिषद् ब्राह्मणम्, ( ११ ) संहितोपनिषद्ब्राह्मणम्, ( १२ ) वंशब्राह्मणम्, ( १३ ) जैमिनीयब्राह्मणम् ( सामवेदीयम् ), ( १४ ) गोपथब्राह्मणम् ( अथर्ववेदीयम् )।

ब्राह्मणग्रन्थेषु शतपथब्राह्मणं गुरुतममहत्त्वं भजते। अस्ति च तद्विशालकायम्, यागानुष्ठानानां प्रतिपादनं सर्वोत्तमरीत्या तत्रैव कृतं दृश्यते। प्रस्तौति तद् यज्ञ-यागविषयकं विवरणं साङ्गोपाङ्गम्।

निरुक्तादिग्रन्थेषु 'इति विज्ञायते' कथयित्वा ब्राह्मणग्रन्थानामेव निर्देशः कृतः। शब्दस्यास्य व्याख्यायां दुर्गाचार्येण लिखितम्—'एवं ब्राह्मणेऽपि विचार्यमाणे 'ज्ञायते' ( निरु० टी० ३।११, २।१७ )। पाणिनेः अष्टाध्यायीसूत्रे 'अनुब्राह्मण'-शब्दस्य प्रयोगो मिलति—'अनुब्राह्मणादिनिः' ( पा० सू० ४।२।६२ ) 'तदधीते तद्वेद' इत्यर्थे। ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणं तदधीते अनुब्राह्मणीति। अस्य शब्दस्य प्रयोगः भट्टभास्करेण तैत्तिरीयसंहितायाः भाष्यभूमिकायां कृतः। अनेन प्रतीतो भवति यद् ब्राह्मणस्यैवान्तरभागमनुब्राह्मणपदेन व्यपदिश्यते।

पूर्वमेव कथितं यद् ब्राह्मणग्रन्थानां विस्तारोऽतीव विशालः व्यापकश्चासीत्। आश्वलायनगृह्यसूत्रे ( ३ अ० ३ ख० ) ऋषितर्पणेन सह आचार्यतर्पणोऽपि समुपलब्धो भवति। आश्वलायनमतानुसारेण मन्त्रद्रष्टारः ऋषयो भवन्ति, ब्राह्मणद्रष्टारः आचार्याश्च। एवंविधाचार्याणामत्र त्रयः गणाः समुपलब्धा भवन्ति—( १ ) माण्डूकेयगणः, ( २ ) शाङ्खायनगणः, ( ३ ) आश्वलायनगणश्चेति। एतेषामाचार्याणां क्रमशः नामानि सन्ति—कहोलः, कौषीतकः, महाकौषीतकः, भरद्वाजः, पैङ्ग्यः, महापैङ्ग्यः, सुयज्ञः, शाङ्खायनः, ऐतरेयः, वाष्कलः, शाकलः, गार्ग्यः, सुजातवक्त्रः, औदवाहिः, सौजामिः, शौनकस्तथा आश्वलायनः। पैङ्ग्यमहापैङ्ग्यनामभ्यां प्रतीतो भवति यद् भारतस्तथा महाभारत इव इमौ द्वौ भिन्नग्रन्थौ आस्ताम्। एकः लघुस्तथाऽपरो बृहदिति। सामान्यतः शाङ्खायनब्राह्मण एव कौषीतकब्राह्मणनाम्ना ख्यातमस्ति, किन्त्वास्यां सूच्यां पृथक् पृथग् नामत्वेन ज्ञातो भवति यदिमौ द्वावाचार्यौ स्तः। अत्र निश्चयपूर्वकं किमपि वक्तुं न शक्यते। यदेतैराचार्यैः ब्राह्मणग्रन्थानां निर्माणं कृतम्। किन्त्व एतरेयस्तथा शाङ्खायनस्तु निश्चय एव ब्राह्मणद्रष्टारौ ऋषी स्तः। अनयोः ब्राह्मणग्रन्थावद्यापि समुपलब्धौ स्तः।

## संहिता-ब्राह्मणयोर्विषयस्य पार्थक्यम्

संहिताया ब्राह्मणस्य च स्वरूपे विषये च नितान्तं पार्थक्यं परिलक्ष्यते। संहितायाः स्वरूपमुभयोः प्रकारकयोरस्ति। बहुसंख्यकाः संहिताः छन्दोबद्धाः

सन्ति। तेषां कतिपयांशा एव गद्यात्मकाः सन्ति, किञ्च ब्राह्मणग्रन्थाः सर्वथा गद्यात्मका एव भवन्ति। विवेच्यविषयेऽप्यन्तरमस्ति। ऋग्मन्त्रेषु देव-स्तुतीनां प्राधान्यमस्ति। अथर्वमन्त्रेषु ऐहिकपारलौकिकफलदविषयाणां विवेचनमस्ति। अस्मिन् सूक्ते रोगनिवारणाय, सुयोग्यपतिवरणाय, गृहनिर्माणाय, हलकर्षणाय, बीजवपनाय च बहुविधगार्हस्थ्यजीवनोपयोगिनां विषयाणां वर्णनमस्ति। राजकीयविषयेऽपि—शत्रूणां संहाराय, सैन्यसञ्चालनाय तथा तदुपयोगिनां साधनानां सविस्तरेण विवरणमस्ति। यजुर्वेदसंहितायां दर्शपौर्णमासादि-यज्ञानां सविस्तृतं विवरणं समुपलब्धं भवति। ब्राह्मणानां विवेच्यविषयः उपरि-वर्णितेभ्यो विषयेभ्यः नितान्तं भिन्न एवास्ति। ब्राह्मणानां मुख्यविषयोऽस्ति विधिः—यस्य विधानं कदा भवितव्यम्? केन प्रकारेण तत्कर्म कर्त्तव्यम्? तेषु किमाकाराणां साधनानामावश्यकता भवति? के च तेषां यज्ञानामधिकारिणो भवन्ति? एवंविधानां याज्ञिकविधीनां प्रतिपादनायैव ब्राह्मणसाहित्यस्योद्भवः समुदयश्चाभवत्। याज्ञिकविषये कतिचिद्विरोधोऽपि प्रतीतो भवति, तस्य परिहारोऽपि ब्राह्मणस्योद्देश्यमस्ति। शबरस्वामिनो मतानुसारेण ब्राह्मणविधीनां संख्या दशधा भवति। अस्य कथनस्य तात्पर्यमिदमेवास्ति यत् संहितायां स्तुतीनां प्राधान्यमस्ति, ब्राह्मणग्रन्थे तद्विधीनामेव प्राधान्यमस्ति।

फलतः विधिरेव ब्राह्मणग्रन्थानां मुख्यविषयोऽस्ति। यत्र यत्र समुपलब्धा-वान्तरविषयास्तु तस्यैव विधेः पोषकाः निर्वाहकाश्च भवन्ति। एवंविध-विषयाणां मीमांसकाभिधानम् अथर्ववादो भवति। अर्थवादे निन्दा-स्तुत्योः निवेशनमस्ति। वादेऽस्मिन् यागनिषिद्धवस्तूनां निन्दा अस्ति तथा यागोपयोगिनां द्रव्याणां प्रशंसा वर्त्तते। विधिविधानञ्च सयुक्तिकं भवति। निरुक्तिजन्यार्थेनापि ब्राह्मण-वाक्यानां समर्थनं भवति। ब्राह्मणग्रन्थेषु विधिरेव तत्केन्द्रबिन्दुरस्ति, यं परितः निरुक्त-स्तुति-आख्यान-हेतु-वचनादयः विविधा विषया स्वं स्वम् आवर्त्तनं सम्पूरयन्ति।

जैमिनिमहोदयेनापि पूर्वपक्षं स्थापितम्—'वेदे न केवलं विधिवाक्याना-मस्तित्वमस्ति, तद्भिन्नविषयाणां प्रतिपादकवाक्यानामपि तत्र सत्ता वर्त्तते। फलतः एते वाक्यास्त्वनर्थकाः सन्त्येव, विध्यर्थकत्वाभावे सति नितान्ता व्यर्था अपि सन्ति—**'आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम्।'** सिद्धान्तपक्षस्य कथनमस्ति—'एतेषां वाक्यानामप्युपादेयता वर्त्तते। एतेषां वाक्यानां यद्यपि स्वतः किमप्युपयोगिता नास्ति तथापि एतानि विधि-प्रशंसायां प्रयुक्तानि सन्ति। अतः विधिप्रतिपादितार्थस्यैवावान्तरवाक्यान्येतानि सन्ति। अतः परम्परया एतेषामुपयोगो विधिविधानेऽवश्यमेवास्ति—**'विधिना तु एकवाक्यात् स्तुत्यर्थेन विधीनां स्युः'** ( जैमि० सू० १।२।२७ )। विश्लेषणमिदं ब्राह्मण-विषयान् एव लक्ष्यीकरोति।

ब्राह्मणग्रन्थानां प्रतिपाद्यविषये एतेषां दशवस्तूनां निर्देशः अस्मिन् श्लोके दर्शनीयः—

'हेतुर्निवचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥
उपमानं दशैते तु विधयो ब्राह्मणस्य तु ।'

परक्रिया तथा पुराकल्पशब्दानामर्थे मतैक्यं नास्ति । अनयोरुभयोरर्थः—

'अन्यस्यान्यस्य चोक्तिर्या बुधैः प्रोक्ता पुरा कृतिः ।
यो ह्यत्यन्तपरोक्षार्थः स पुराकल्प उच्यते ॥'
( ब्रह्मा० पु० २, ३४।६३-६४ द्वि० भा० )

राजशेखरेणेमौ द्वौ इतिहासस्य प्रभेदौ कथितौ । यस्यां कथायामेकमेव नायको भवति सा परक्रिया भवति । यथा—रामायणम् । यत्र बहुनायकाः भवन्ति सा कथा पुराकल्प इति कथ्यते । यथा—महाभारतम् । अनयोरुभयोः समावेशोऽत्राऽऽख्यानस्यान्तर्गते भवति ।

किञ्च प्रमुखता तु विधिरेव प्राप्नोति । अन्यविषयस्तु तदङ्गत्वेन तन्निर्वाहकत्वेन च गौणरूपमेवास्ति । ब्राह्मणग्रन्थे विहितयज्ञीयानुष्ठानानामीदृशी विशाला राशिस्तथा बृहत् स्तूपः प्रस्तुतोऽभवत् यत्तेषां यथार्थरूपेण ज्ञातुं तथा समुचितरीत्याऽनुष्ठानं कर्त्तुमेकः दुष्करो व्यापारोऽभवत् । फलतः अनुष्ठाने सौकर्याय कालान्तरे श्रौतसूत्राणामुत्पत्तिरभूत् ।

## विषय-विवेचनम्

'विधि'-शब्दस्यार्थो भवति—यज्ञस्तथा तस्याङ्गानामुपाङ्गानाञ्चानुष्ठानस्योपदेशः । ताण्ड्यब्राह्मणेऽस्यानेकविधयो मिलन्ति । उदाहरणार्थं 'बर्हिष पवमानाय' अध्वर्यु-उद्गातादि पञ्च ऋत्विजां प्रसर्पणस्य विधानमस्ति । सहैव नियमद्वयस्य पालनमपि नितान्तमावश्यकं भवति । ऋत्विजः प्रसर्पणं कुर्वन्तः शनैः शनैः पदक्षेपस्य विधानमस्ति । तत्र तूष्णीभावस्यापि विधानमस्ति । पञ्चसु ऋत्विक्षु अध्वर्यु-प्रस्तोता-उद्गाता-प्रतिहर्त्ता-ब्रह्मादीनां क्रमशः पङ्क्तिबद्धो भूत्वा गमनस्य व्यवस्था वर्तते । पङ्क्तिभङ्गेन प्रत्यवायो भवति, अनर्थस्यापि सम्भावना वर्द्धते । अस्मिन् काले स्वहस्ते किञ्चिद् धृत्वा चलति ।

शतपथब्राह्मणस्तु विधिविधानानामेकः विशालः समूहः उपस्थापयति । आरम्भस्यैव काण्डे दर्शपौर्णमासादीनां मुख्यस्यावान्तरस्य चानुष्ठानानां वर्णनं यागक्रमेणास्ति । द्वितीये काण्डे आधान-पुनराधान-अग्निहोत्र-उपस्थान-आग्रायण-दाक्षायणादियज्ञानां वर्णनं सविस्तरेण पुङ्खानुपुङ्खक्रमेणास्ति । विधिना सहैव हेतोरपि सयुक्तिकं वर्णनमपि कृतमस्ति । शतपथब्राह्मणस्य प्रारम्भिककण्डिकायामेव सहेतुकविधेः निर्देशः समुपलब्धो भवति । पौर्णमासेष्टचां दीक्षितो व्यक्तिराहवनीयगार्हपत्याग्नयोर्मध्ये पूर्वस्यां दिशि स्थित्वा जलस्य स्पर्शं

करोति । अस्य जलस्पर्शस्य किं कारणम् ? जलं मेध्यं भवति । अर्थात् यज्ञायोपयोगी पदार्थोऽस्ति । मिथ्यावादीजनः यज्ञाय नोपयुक्तो भवति । अतः जलस्पर्शेनासौ पापमपहाय मेध्यो भवति । अतः जलस्पर्शेन जनः पवित्रो भूत्वा दीक्षितो भवति । अतोऽसौ जलस्पर्शं करोति । ( **'अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतः । मेध्या वा आपः । मेध्यो भूत्वा व्रतमुपायानीति । पवित्रं वा आपः । पवित्रपूतो व्रतमुपायानीति तस्माद्वा अप उपस्पृशति ।'**

( शत० ब्रा० १।१।१।१ )

## विनियोगः

ब्राह्मणग्रन्थेषु मन्त्राणां विनियोगस्य प्रथमावतारो भवति । कस्य मन्त्रस्य प्रयोगः कस्मिन्नुद्देश्यार्थं भवति ? अस्य सयुक्तिकव्यवस्था ब्राह्मणग्रन्थे सर्वत्रोपलब्धो भवति । ब्राह्मणग्रन्थाः मन्त्रपदादेव विनियोगस्य युक्तिमत्तां सिद्धयन्ति । आपाततः मन्त्राणां तात्पर्यस्य यो बोधो भवति स तु ब्राह्मणानामन्तरङ्गाध्यात्मिकव्याख्यानानन्तरमेव । ताण्डयब्राह्मणस्य द्वित्रा एव दृष्टान्ताः पर्याप्ता भवन्ति ।

**'स नः पवस्व शंगवे'** ( ऋ० ९।११।३ ) अस्या ऋचः गायनं पशूनां रोगनिवृत्त्यर्थं भवति । अस्य विनियोगस्य विशेष-विवेचनस्याऽऽवश्यकता नास्ति, यदियं वार्त्तातु मन्त्रपदादेव सिद्धयति (६।९।६-९), किञ्च—**'आ नो मित्रावरुणा'** (ऋ० ३।६२।१६ ) अस्य मन्त्रगायनस्य विनियोगः दीर्घरोगनिवृत्त्यर्थमेवास्ति । कथनमिदमाश्चर्यजनकं किञ्चित् प्रतीयते । अस्मिन् विषये ब्राह्मणस्य कथनमस्ति यन्मित्रावरुणस्य सम्बन्धः प्राणेनापानेन च सहास्ति । दिवसानां देवता मित्रोऽस्ति तेनासौ प्राणानां प्रतिनिधिरस्ति । अनेनैव क्रमेण निशानां देवता वरुणोऽस्ति, अतोऽसौ अपानस्य प्रतीकोऽस्ति । फलतः दीर्घरोगनिवारणार्थम् अस्य मन्त्रस्य पूर्वोक्तविनियोगः नितान्तं सयुक्तिकोऽस्ति ( ता० ब्रा० ६-१०, ४-५ ) कस्मिंश्चिद्विनियोगस्य प्रसङ्गे कल्पनाया एव विशेषरूपेण प्रभावः परिलक्षितो भवति, किञ्च ब्राह्मणस्य व्याख्या रीत्याऽनुगमनेनेवंविधेषु कतिपयस्थलेषु अपि अस्य युक्तिमत्ता प्रतीतो भवति । ( ता० ब्रा० ६।९।२४-२५ ) 'दविद्युतत्या रुचा' ( ऋ० ९।६४।२८ ) मन्त्रो द्रष्टव्यः ।

## हेतुः

हेतुपदेन तत्कारणानां निर्देशो भवति येन कर्मकाण्डविधिः विशेषरूपेण सम्पन्नो भवति । ब्राह्मणग्रन्थेषु यज्ञीयविधि-विधाननिमित्तकसमुचितकारणस्यापि निर्देशः सविस्तरेण मिलति । अग्निष्टोमयागे उद्गाता सदसाभिधाने मण्डपे औदुम्बरस्य शाखाया उच्छ्रयणं करोति । अस्य विधानस्य कारणस्य निर्देशं कुर्वन् ताण्डयब्राह्मणस्य ( ६।४।१ ) कथनमिदमस्ति यत्प्रजापतिः देवतायै ऊर्जः ( बलस्य ) विभाजनं कृतवान् । तेनैवौदुम्बरवृक्षस्योत्पत्तिरभवत् । अनेन

प्रकारेणौदुम्बरवृक्षस्य देवता प्रजापतिरभवत् । उद्गातुरपि सम्बन्धं प्रजापतिना सहैवास्ति । अतः उद्गातोदुम्बरशाखाया उच्छ्रयणकार्यं स्वप्रथमकर्मणा करोति । एतदतिरिक्तः अस्यावसरे प्रयुक्तस्योच्छ्रयणमन्त्रस्याऽपि व्याख्याऽस्ति । अनेन प्रकारेण द्रोणकलशे सोमरसं स्रावयित्वाऽग्निष्टोमे स्थापनस्य व्यवस्था वर्त्तते । अस्य द्रोणकलशस्य स्थापनं रथस्याधोभागे भवति । अस्य विधानकारणस्य पूर्णनिर्देशः ताण्डयब्राह्मणे ( ६।५।१ ) मिलति ।

प्रजापतिना कामना कृता 'प्रजानां सृष्टिरहं करोमि' प्रजापतेरेवंविधमनसा चिन्तनेनैव तस्य मूर्ध्नः आदित्यस्य सृष्टिरभवत् । तेन प्रजापतेः शिरश्छेदनं कृतम् । तस्मादेव द्रोणकलशस्य सृष्टिरभूत् । तस्मादेव द्रोणकलशात् सोमरसं पीत्वा देवा अमरा बभूवुः । अनेन रूपेण प्रस्तरोपरि द्रोणकलशस्थापनस्य ( अध्यूहनस्य ) विषयेऽपि विधि-विधानानां कारणस्य निर्देशोऽस्ति ( ताण्ड्य० ६।६।१-३ ) । 'वहिष्पवमान'-स्तोत्रे पश्चानामृत्विजामग्रे गमनकर्त्ता अध्वर्युः स्वहस्ते दर्भस्य मुष्टिं नीत्वा गच्छति । कथम् ? अस्य कारणस्य निर्देशनकाले ताण्ड्यब्राह्मणे ( ६।७।१६।२० ) अश्वरूपं धारणं कृत्वा यज्ञात् पलायनस्य दर्भमुष्टिं दृष्ट्वा परावर्त्तनस्य च आख्यानं हेतुरूपेणोपस्थापितम् । अनेन प्रकारेण हेतुवचनेन पाठकाननुष्ठानानां कारणस्य स्वतः परिचयो मिलति तथा समधिकायाः श्रद्धायारुदयोऽपि भवति ।

## अर्थवादः

यज्ञे निषिद्धपदार्थानां निन्दा ब्राह्मणग्रन्थेष्वनेकस्थलेषु समुपलब्धा भवन्ति । यज्ञे माषस्य विधानं निषिद्धमस्ति । अतोऽस्य निन्दाऽस्मिन् वाक्येऽस्ति—'अमेध्या वै माषाः' ( तै० सं० ५।१।८।१ ) । अनुष्ठानस्य हवनीयद्रव्यस्य च देवतानां भूयसी प्रशंसातः ब्राह्मणानां कलेवरं वृद्धिं गतम् । अग्निष्टोमयागस्य विशिष्टप्रशंसा ताण्ड्ये ( ६।३ ) मिलति । सर्वेभ्यः कामेभ्योरुपादेयत्वेनायमेव यथार्थयज्ञः कल्पितः । यागानां समधिकमहत्त्वशालित्वेनायमेव ज्येष्ठयज्ञाभिधानेन मण्डितोऽस्ति ( ता० ब्रा० ६।३।८-९ ) । अनेन प्रकारेण 'वहिष्पवमान'-स्तोत्रस्य स्तुतिरत्रोपलब्धा भवति ( ता० ६।८।५ ) । अर्थवादस्योपयोगविधेरास्थापूर्वकपुष्ट्यर्थमेव भवति । एतैरर्थवादैः प्रशंसावचनैश्चाद्यन्तब्राह्मणग्रन्थाः सम्पूरिताः सन्ति ।

## निरुक्तिः

ब्राह्मणग्रन्थेषु शब्दानां निर्वचनस्यापि स्थाने स्थाने निर्देशो मिलति । निर्देशोऽयमेतावन्मार्मिको वैज्ञानिकश्चास्ति यद् भाषाशास्त्रदृष्ट्याऽपि अतीवमहत्त्वपूर्णः प्रतीतो भवति । निरुक्ते येषां शब्दानां व्युत्पत्तयो मिलन्ति तेषां मूलमेतेषु ब्राह्मणग्रन्थेषूपलब्धमस्ति । निर्वचनमिदं नास्ति काल्पनिकम् । भाषाविज्ञानदृष्ट्याऽस्य वैज्ञानिकताऽक्षुण्णैवास्ति । एतादृशी निरुक्तिः स्वयं संहिता-

भागेऽपि उपलब्धा भवति । यस्या आश्रयं गृहीत्वा ब्राह्मणग्रन्थस्य व्युत्पत्तिः निर्मिताऽभवत् । 'दधि' तथोदकशब्दस्य व्याख्या संहिताग्रन्थेषु अनेन प्रकारेणास्ति—'तद्दघ्नोदधित्वम्' ( तै० सं० २।५।३।३ ), 'उदानिषुर्महीरिति तस्मा दुदकमुच्यते' ( अथ० ३।१३।१ ) । शतपथब्राह्मणे ताण्ड्यब्राह्मणे चैव उपादेयान निरुक्तीनां भाण्डारमस्ति । नानाविधानां स्तोत्राणां सामाभिधानानाञ्च सुष्ठु-निरुक्तिः ताण्ड्यब्राह्मणे समुपलब्धाऽस्ति । आज्यस्तोत्रस्य व्याख्या 'अजि'-शब्दात् कथयित्वा सुष्ठु व्याख्यानस्याप्युपक्रमं मिलति—'यदाजिमायन् तदाऽऽज्यानाम् आजत्वम्' ( ता० ७।२।१ ) । रथन्तरस्य निरुक्तिः ईदृशी भवति—'रथं मर्या क्षेप्लाऽतारीत् इति तद्रथन्तरस्य रथन्तरत्वम्' ( ता० ७।६।४ ) । अनेनैव प्रकारेण बृहत्साम्नः निरुक्तिः—'ततो बृहदनु प्राजायत । बृहन्मर्या इदं स ज्योगन्तरभूदिति तद्बृहतो बृहत्त्वम्' ( ताण्ड्य० ७।६।५ ) । अस्यायमाशयः-यद्रथन्तरसामानन्तरमेव बृहत्सामस्योत्पत्तिरभूत् । प्रजापतेः मनसि सामोऽयं बृहत्कालपर्यन्तं निवसितम् । अतोऽस्य सामस्य विशिष्टनामकरणमस्ति ।

## आख्यानम्

ब्राह्मणग्रन्थेषु विधि अर्थवादस्य विस्तृतं वर्णनं मिलति । इदं वर्णनं पठित्वा साधारणपाठकः समुद्वेलितो भवति; किञ्चैतेषूद्वेजकविषयसमूहेषु यत्र तत्रात्यन्त-रोचकमाकर्षकं महत्त्वपूर्णञ्चाख्यानमपि मिलति । तमसि प्रकाशकिरण इव, दीर्घमरुभूमौ हरितभूमिरिवैतान्याख्यानानि पाठकानामुद्विग्नचित्ताय शान्ति-दायकानि शीतलानि च भवन्ति । विधिविधानानां स्वरूपस्य व्याख्या एवास्याख्यानस्य जननी अस्ति । किञ्च यदा कदाऽऽख्यानमिदं यज्ञस्य सङ्कीर्णप्रान्तं परित्यज्य साहित्यस्य सार्वभौमक्षेत्रे विचरणं करोति तदा कर्मकाण्डस्य कर्कशता तं रोद्धुं न शक्नोति । आख्यानमिदं द्विविधं भवति—स्वल्पकायमाख्यानम्, दीर्घकायमाख्यानञ्चेति । स्वल्पकायिकेष्वाख्यानेषु तासां कथानां गणना भवति यस्यां कथायां सयुक्तिता प्रदर्शनं समुल्लिखितं भवति । एतान्याख्यानानि किञ्चिद्भेदेन सहानेकेषु ब्राह्मणेषु समुपलब्धानि सन्ति । ईदृक्षु लघ्वाख्यानेषु कतिपयमुख्याख्यानान्येतानि सन्ति—'वाचः देवान् परित्यज्य सलिले तदनु वनस्पतौ च प्रवेशः ( ताण्ड्य० ६।५।१०-१२ ); स्वर्भानुरसुरस्याऽऽदित्यस्य च आक्रमणं तथा अत्रिमुनिना तस्यान्धकारस्य विघटनम् ( ताण्ड्य० ६।६।८ ), यज्ञस्याश्वरूपे देवताभिरनाक्रमणं तथा दर्भमुष्ट्या तस्य प्रत्यावर्त्तनं ( ता० ६।७।१८ ), अग्निमन्थनकाले घोटकमग्रे स्थापनम् ( शत० १।६।४।१५ ), देवासुराणां मध्ये बहुविधसङ्ग्रामम्' ( शत० २।१।६।८–१८; ऐत० १।४।२३, ६।२।१ ) ।

एतेषु लघ्वाख्यानेषु यदा कदाऽतीव गम्भीरतात्त्विकतथ्यानामपि सङ्केतो मिलति । यद्ब्राह्मणस्य कर्मकाण्डात्मकवर्णनाद नितान्तं भिन्नं भवति तथा

गूढ-गम्भीरार्थप्रतिपादकमपि भवति । प्रजापतेः प्रार्थनोपांशुरूपेण कर्त्तुं शतपथ-ब्राह्मणे यस्य कथानकस्योपक्रमं मिलति तत्तु नितान्तं रहस्यमयमस्ति । श्रेष्ठता प्राप्तुं वाक्-मनसोः कलहः समुत्पन्नोऽभवत् । मनसः कथनमासीद् यन्मयाऽनभिगतवार्त्ता वाणी न उच्यते । ममानुकरणं कुर्वती मम पश्चाच्चलति ( कृतानुकरा अनुगन्त्री ) । वाण्याः कथनमासीत्—यत्त्वं जानासि तस्य विज्ञापनाऽहमेव करोमि । मनसा ज्ञानं किंवा चिन्तिततथ्यानां प्रकटीकरणं वाण्येव करोति । अतः अहमेव श्रेष्ठाऽस्मि । उभौ प्रजापतिसन्निधौ गतवन्तौ । प्रजापतिना स्व-निर्णयः मनसः पक्षे एव प्रदत्तः । अस्य कथानकस्याभ्यन्तरे मनोवैज्ञानिकतथ्यस्य विशदः सङ्केतो मिलति ( शत० १।४।५।८-२ ) । वाचा सम्बद्धाः बहुविधाख्याः रुचिराः शिक्षाप्रदाश्च सन्ति । गायत्रीछन्दः सोमं देवताभ्यः नीत्वा गच्छतिस्म; मार्गे गन्धर्वास्तमपाहरन् । देवता वाचं तस्य पार्श्वे प्रेषयन् वाक् तं नीत्वा परावर्त्तिता । वाचं स्वपक्षे आनयितुं गन्धर्वाः प्रयत्नशीलाः बभूवुः । ते स्तुति-प्रशंसावचनैः तां सन्तोष्य स्वपक्षे कर्त्तुमैच्छन् । उत देवा अपि गायनैर्वादनैश्च तामावर्जयितुमैच्छन् । वाणी देवातानां कार्यैः प्रसन्ना भूत्वा तेषां पार्श्वेऽगमत् । अस्याः कथायाः प्रतीयमानोपदेशोपरि ब्राह्मणस्याऽग्रहोऽस्ति यदद्यापि स्त्रियः स्तुतेरपेक्षा गायनं प्रति अधिकाकृष्टा भवन्ति । स्त्रियः स्वभाव एवायं भवति । ( शत० ३।२।४।२६ ) ।

सृष्टि-विषयेऽप्यनेकान्याख्यानानि ब्राह्मणग्रन्थे समुपलब्धानि सन्ति । परम-पुरुषेण चतुर्णां वर्णानामुत्पत्तेरुल्लेखस्तु पुरुषसूक्ते एवोपलब्धो भवति । ब्राह्मणे-ष्वपि प्रसङ्गस्यास्य सुष्ठु वर्णनं मिलति । ताण्डयब्राह्मणे ( ६।१ ) प्रजापतेरङ्ग-विशेषेण वर्णानां तथा तत्तद्देवतानामुत्पत्तिः वर्णिताऽस्ति । अस्मिन् वर्णने शूद्र-वर्णानां यज्ञाधिकारान्निष्क्रमणस्यापि सुष्ठूत्पत्तिः प्रस्तुताऽस्ति । प्रजापतिमुखाद् ब्राह्मस्याग्नेश्च बाहोः क्षत्रियस्येन्द्रस्य च, मध्यदेशात् वैश्यस्य विश्वेदेवायाश्च पादेन केवलं शूद्रस्यैवोत्पत्तिं दर्शयित्वा शूद्रस्य कर्त्तव्यमपि निर्देशितम्—**'तस्मात् शूद्र उत बहुपशुरयज्ञियो विदेवो हि । नहि तं काचन देवतान्वसृज्यत । तस्मा-त्पादावनेज्यं नातिवर्धते । पत्तोहि सृष्टः'** ( ताण्डय० ६।१।११ ) ।

कतिपयेष्वाख्यानेषु साहित्यिकसौन्दर्यस्य तथा रुचिराकल्पनायाश्च सुष्ठु अभिव्यञ्जना मिलति । रजन्यारुदयस्य विषये सुष्ठु आख्यानमेकं मैत्रायणी-संहितायां ( १।५।१२ ) मिलति । येन ज्ञातो भवति यस्याः विषादं विस्मरणाय रात्रेरुत्पत्तिरासीत् । यमस्य परलोके गते सति तस्यैव दुःखेन दुःखिता यमी सर्वदा विषीदन्तीं विलपन्तीञ्च समययापनं करोतिस्म । इच्छन्नपि सा तं विस्मर्त्तुं नाशक्नोत् । तस्मिन् काले दिनस्यैव राज्यमासीत् । दिने तं विस्मर्त्तुं सा नाशक्नोत् । प्रजापतिना दयावशेन रात्रिः समुत्पादिता । सकलसंसृतिः तमसाच्छन्नाऽभवत् । तदैव यमी यमं विस्मृतवती । पक्षसम्पन्नानां पर्वतानामिन्द्रेण

पक्षच्छेदनस्य कथाऽप्यत्रैव ( १।१०।१३ ) उपलब्धाऽस्ति। एता आख्यायिका रोचकाः कमनीयाश्च प्रतीता भवन्ति।

बृहत्काख्यानेषु पुरुरवा-उर्वश्योराख्यानम् ( शत० ११।५।१ ), प्राचीन-जलौघस्येतिहासः ( शत० १।८।१ ) शुनःशेपस्याख्यानम् ( ऐत० ७।२ ) मुख्याख्यानि सन्ति। एतेषामनेकाख्यानानां बीजं संहितायामेवान्तरविष्टमस्ति। ब्राह्मणादिपौराणिकग्रन्थेषु तमेवाख्यानबीजं गृहीत्वा स्वपद्धत्यानुरूपेण तस्य पल्लवनं कृतम्। पुरुरवा-उर्वश्योः वर्णनमृग्वेदस्यैकस्मिन् विख्यातसंवादसूक्ते ( १०।९५ ) अस्त्येव। अस्मिन् सूक्ते उभयोः पारस्परिककथनविषयकाः मन्त्राश्च मिलन्ति। शतपथब्राह्मणे इदमेवाख्यानं विस्तरेण सह वर्णितमस्ति। प्राचीनौघस्य अथवा जलप्लावनस्य कथा भारतेतरसाहित्येऽपि उपलब्धा भवति। विषमजलप्लावनादेकः वर्द्धिष्णुमत्स्यः मनोः त्राणं कृतवान्। प्लावना-नन्तरं मनुः मानवीयसृष्ट्या रचनां कृतवान्। कथेयं मत्स्यावतारेण सह सम्बद्धाऽस्ति। पुराणेषु सविस्तरेण वर्णिताऽस्ति (द्रष्ट० भा० पु० स्क० ८।२४) शुनःशेपकथायाः सङ्केतः ऋग्वेदीयसूक्तेषु ( सू० १।२४, सू० ३० ) उपलब्धो भवति। अस्यैव सुष्ठु विन्यासः ऐतरेयब्राह्मणस्य वैशिष्टचमस्ति। अनेन प्रकारे-णाख्यानानां विकासे ब्राह्मणग्रन्थस्यापि विशिष्टैका शृङ्खलाऽस्ति। ब्राह्मण-ग्रन्थान् सरसत्वं, रोचकत्वमाकर्षकत्वञ्च विधातुमस्यैवाख्यानस्य श्रेयोऽस्ति

## ब्राह्मणग्रन्थानां महत्त्वम्

ब्राह्मणग्रन्थेषु वर्णितानां यागानुष्ठानानां विशालं किञ्च सूक्ष्मस्वरूपम् अद्यतनीया आलोचका नगण्यदृष्ट्या पश्यन्ति, किञ्च तेषां भ्रान्तिरियमस्ति। किञ्च तानि स्वरूपाणि तु अतीतयुगस्य संरक्षितनिधिरेव सन्ति, नात्र लेशतोऽपि सन्देहस्यावकाशः। तद्वर्णनं तु वैदिकयुगस्य क्रियाकलापानां भव्यचित्रमेकं धर्म-मीमांसकेभ्यः प्रस्तुतं करोति। परिस्थित्याः परिवर्त्तनेनावश्यमेवमिदं धूमिल-मभवत्, किञ्च धार्मिकदृष्ट्या इदमुपादेयं सङ्ग्रहणीयं मननीयञ्चास्ति। भारतीय-धर्मस्येतिहासे श्रौत्रविधानस्यैकः विचित्र-युग एवासीत्। तं युगं निजसौष्ठवेन पूर्णसौन्दर्येण सहोपस्थापनस्य श्रेय एतेषां ब्राह्मणग्रन्थानामेवास्ति। भक्तेरा-न्दोलनस्य व्यापकत्वेन वैदिककर्मकाण्डस्य सर्वत्र ह्रासोऽभवत्। श्रौतयज्ञ-विधानमद्यातीतस्यैकं स्मृतिमात्रमेवास्ति। वैदिकधर्मस्य कर्मकाण्डात् जनाना-मास्थासमाप्तप्रायाऽभवत्। फलतः न तु कुत्रापि श्रौतयागो भवति न चाप्य-नुष्ठानस्य साक्षात्कर्त्तुमवसरः प्राप्तो भवति। इदमेव कारणमस्ति यदद्य ब्राह्मणानां क्रियाकलापस्य यथार्थज्ञानमेका विषमा समस्यैवास्ति।

ब्राह्मणग्रन्थानामनुशीलनेन ज्ञातो भवति यत्तस्मिन् काले यज्ञयागाद्यनुष्ठान-विषये विद्वत्सु शास्त्रार्था अभवन्। तदैव मीमांसावच्छास्त्रस्योत्पत्तिरभूत्। अस्यैव मीमांसाशास्त्रस्य तर्कपद्धत्यनुसारेण यज्ञीयविषयाणां विमर्शो भवितुं शक्यते।

मीमांसक एवास्माकं प्रथमदार्शनिकोऽस्ति तथा मीमांसा एव प्रथमदर्शनम्। मीमांसा-पद-हेतवे न्यायशब्दस्य प्रयोगः अस्मादेव कारणात् समुपयुक्तः प्रतीतो भवति। ब्राह्मणग्रन्थेषु यज्ञीयविषयकमीमांसका विदुषः ब्रह्मवादिनः कथ्यन्ते। ताण्ड्यमहाब्राह्मणे—'एवं ब्रह्मवादिनो वदन्ति' (६।४।१५) एवमुक्त्वा कतिपयानां यज्ञीयसमस्यानां समाधानमपि मिलति। शतपथब्राह्मणे एवंविधानां ब्रह्मवादिनां मतस्य समीक्षा तथा तेषां 'नाम्नामप्युल्लेखो मिलति। उदाहरणार्थम्—दीक्षाग्रहणात् पूर्वदिने भोक्तव्यम्, न वेति प्रश्नमादाय सावयस आषाढनामकस्याचार्यस्य याज्ञवल्क्येन सह गम्भीरमीमांसा समुपलब्धा भवति (श० ब्रा० १।१।१।७-१०)। आषाढाचार्यस्य मते अनशनमेव व्रतमासीत्, किञ्च याज्ञवल्क्यमते भोजनं करणीयमासीत्। 'मीमांसान्ते' अस्य क्रियापदस्य तथा 'मीमांसा' इव संज्ञापदस्य प्रयोगः ब्राह्मणग्रन्थे बहुलतया मिलन्ति— **'उत्सृज्यां नोत्सृज्यामिति मीमांसान्ते ब्रह्मवादिन इत्याहुः उत्सृज्यामेवेति'** (तै० सं० ७।५।७।१), **'ब्राह्मणं पात्रे न मीमांसेत'** (ता० ६।५।९), **'उदिते होतव्यमनुदिते होतव्यमिति मीमांसान्ते'** (कौषी० ब्रा० २।९)।

अनेन प्रकारेण ब्राह्मणग्रन्थानामनुशीलनं बहुविधसिद्धान्तं प्रति अस्माकं ध्यानाकृष्टं करोति। तद्यथा—

(क) बहुविधानुष्ठानानां याज्ञिकस्वरूपाणाञ्चेतिहासस्य पूर्णपरिचयं ददाति। ब्राह्मणेषु यज्ञः वैज्ञानिकसंस्था इवास्माकं सम्मुखे आयाति।

(ख) वयं तैर्निर्वचनैः परिचितो भवामः यो निरुक्तस्य निरुक्तीनामाधार इवास्ते।

(ग) तेषां सुष्ठु आख्यानानां मूलरूपेणापि वयं परिचिता भवामः, येषां विकासः अवान्तरकालिकेषु पौराणिकग्रन्थेषु विशिष्टरूपेण अभवत्।

(घ) कर्ममीमांसायारुत्थानस्यारम्भस्य च रूपं विज्ञातुं ब्राह्मणग्रन्थाः पूर्वपीठिकायाः कार्यं कुर्वन्ति। ब्राह्मणाध्ययनेन बहुविध-शास्त्राणामुदयस्य कथां ज्ञातुं शक्यते। यज्ञीयावश्यकता-सम्पूत्यर्थं शास्त्रमिदमाविर्भूय स्वविकासस्य कथा सार्वभौमक्षेत्रेऽपि कथं केन प्रकारेण वा सृजति? स्वयमेव ब्राह्मणग्रन्थमाध्यमेन कथयति।

## ब्राह्मणानां देशकालः

ब्राह्मणग्रन्थेषूपलब्धभौगोलिकविवरणेन स्पष्टो भवति यदेतेषां ब्राह्मणग्रन्थानामुदयस्य स्थानं कुरुपाञ्चालप्रदेशस्तथा सरस्वतीनद्याः प्रदेशोऽस्ति। ताण्ड्यब्राह्मणस्य सारस्वतप्रदेशेन सह घनिष्ठतमसम्बन्धमस्ति। सरस्वती नदी यत्र लुप्ताऽभवत् तस्य स्थानस्य नाम 'विनशनम्' अस्ति! तस्याः पुनरुद्गमस्थानस्याभिधानम् 'प्लक्षप्रासवणम्' अस्ति (ताण्ड्य० २५।१०।२१)।

विनशनाच्चतुश्चत्वारिंशद्दिनपर्यन्तं निरन्तरम् अश्वगत्या चलित्वैव प्लक्षप्रासवणस्योपसर्पणम्भवति ( ता० ब्रा० २५।१०।१६ )। न तावदेतावतैव, सरस्वती-दृषद्वत्योः मध्यवर्त्तीप्रदेशस्य तथा तयोः सङ्गमस्थानस्यापि निर्देशो मिलति। सर्वाधिकमहत्त्वपूर्णं सङ्केतमस्ति—प्रजापतेः वेदिस्वरूपेण कुरुक्षेत्रस्य मान्यता— **'एतावतो वात्र प्रजापतेर्वेदिर्यावत् कुरुक्षेत्रमिति'** ( ताण्ड्य० २५।१३।३१ )। प्रजापतेः यज्ञस्य प्रतीकत्वेन 'कुरुक्षेत्रम्' यज्ञवेदि सिद्धो भवति। अर्थादस्मिन्नेव प्रदेशे ब्राह्मणानां सङ्कलनं कृतमासीत्। यज्ञयागस्यापि पूर्णप्रतिष्ठाऽस्मिन्नेव प्रान्तेऽभवत्। मनुस्मृतौ दृषद्वती-सरस्वत्योरुभयोर्देवनद्योर्मध्यवर्त्ती प्रदेशः 'ब्रह्मावर्त्त'-नाम्ना ख्यातोऽभवत् ( मनु० २।२२ )। याज्ञिकसंस्कृत्याः केन्द्रं पीठस्थलञ्चेदमेव स्थानमस्ति यत्र ब्राह्मणानां यज्ञप्रक्रियायाः पूर्णविकासः सम्पन्नोऽभवत्। अस्यैव प्रान्तस्य भाषा 'राष्ट्रभाषा' अभवत्। अत्रत्याचारः समस्तभारतवर्षस्य मान्याचारोऽभवत्। अत्रत्य संस्कृतिरेव समस्तभारतवर्षस्य संस्कृतिरस्ति।

ब्राह्मणग्रन्थानां सङ्कलनकालस्यानुमानः ज्योतिःशास्त्रेण भवति। ब्राह्मण-साहित्येन ज्ञातो भवति यदुपनिषदाद्युदयस्य कालः प्रायः सहस्राधिकवर्षपश्चाद्वर्त्ती मन्तव्यः। शतपथब्राह्मणमतिप्राचीनं मन्यते। ग्रन्थेऽस्मिन् स्वराणां प्रयोगो विधिवदुपलब्धो भवति। अस्य सर्वमान्ये प्राचीनतमद्वितीये काण्डे एकातीवमहत्त्वशालिन्याः घटनायाः ज्योतिःशास्त्रे उल्लेखो मिलति। अस्याशयोऽस्ति—'कृत्तिका' पूर्वस्यां दिशि उदितो भवति तथा तत्रतः प्रच्युतो न भवति। अस्याः घटनायाः स्थितिः प्रसिद्धज्योतिषाचार्यस्य बालकृष्णदीक्षितस्य गणनानुसारेण विक्रमात् सहस्रत्रयवर्षं पूर्वमेव भवितव्यम्। दीक्षितस्यास्यां गणनायामुपरि न कस्याऽपि आंग्लविदुषः ध्यानाकृष्टोऽभवत्, किञ्च विण्टरनित्समहोदयेन जर्मनज्योतिषी प्रो० ए० प्रे० महोदयस्य गणनानुसारेण ग्रहस्थितिरियं खीष्टात् ११०० ई० पूर्वं निश्चितम्। अस्य ज्योतिर्विदः व्याख्यास्ति 'कृत्तिका' स्वोदयकालाद् दीर्घकालपर्यन्तं पूर्वस्यां दिशि दृग्गोचरो भवति। तेन ग्रहस्थितिरियं खीष्टात् ११०० पूर्वमासीत्। किञ्च—**'इताः ( कृत्तिकाः ) ह वै प्राच्यै दिशो न च्यवन्ते'** इत्यस्य शब्दस्याभिनवव्याख्यायाः स्वीकरणस्य न काऽप्यावश्यकताऽस्ति। द्वितीया विप्रतिपत्तिरियमस्ति यद् 'वेदाङ्गज्योतिष' ग्रन्थः सर्वसम्मत्या शतपथब्राह्मणादर्वाचीनरचनाऽस्ति। अस्य कालः खीष्टात् चतुर्दशशतवर्षपूर्वं मान्योऽस्ति। डॉ० मैक्समूलरोऽपि अस्या रचनायाः समयः खीष्टात् ११८१ ई० पूर्वात् पश्चाद्वर्त्ती स्वीकर्तुं कथमपि सन्नद्धो नास्ति। यदि शतपथस्याभिनवकालोऽयं मान्यो भवति तर्हि वेदाङ्गज्योतिषः समयात्तस्य पूर्ववर्त्तिता भङ्गा भविष्यति तथा चेयं मान्यता कथमपि समादरणीया न भवति। मैत्री-उपनिषदि निर्दिष्टा ज्योतिःशास्त्रस्य घटनाया आधारोपरि अस्य समयः खीष्टात् १९०० ई० पूर्वमेव मान्योऽस्ति। घटनेयं स्वमनसि निधाय दीक्षितस्य मतानुसारेण वयमस्य कालः खीष्टात्

सहस्रत्रयवर्षं पूर्वमेव स्वीकर्तुं शक्नुमः । ब्राह्मणयुगोऽयं खीष्टात् सहस्रत्रयवर्षपूर्वादारभ्य खीष्टात् सहस्रद्वयवर्षपूर्वपर्यन्तमासीत् । प्राचीनतमत्वेन शतपथब्राह्मणमस्य कालस्यादौ तथाऽर्वाचीनत्वेन गोपथब्राह्मणमस्य कालस्यान्तिमे भागे समायाति । ( अस्मिन् विषये चिन्तामणिवैद्यस्य History of Vedic Literature. page 18-24 द्रष्टव्यम् ) ।

## भाषा तथा शैली ( शिल्पविधानम् )

समस्ता ब्राह्मणग्रन्था गद्ये एव निबद्धाः सन्ति । ब्राह्मणग्रन्थानां गद्यः अतीव परिमार्जितः, प्रसन्नश्चोदात्तश्चास्ति । दीर्घसमस्तपदानां न तु कुत्राऽपि दर्शनम्भवति न चाप्यर्थज्ञाने काऽपि दुरूहता भवति । भगवती भागीरथ्याः भव्यप्रवाह इव गद्योऽयं स्वप्रवाहेण सह प्रवहति । भाषा, मन्त्राणां भाषा इवैवास्ति तथापि प्राचीनशब्देभ्यः पराङ्मुखो भूत्वाऽभिनवशब्दग्रहणे न काऽपि विप्रतिपत्तिरस्ति । ब्राह्मणानां भाषा—संहिताभाषां पाणिनिना नियमितेन भाषया सह संयोजिका मध्यवर्त्तिनी शृङ्खला इव कार्यं करोति । वाक्यानां विन्यासः सरलः सरसश्चासीत् । यज्ञीयविधानवर्णने नीरसता-समागमनस्य सम्भावना भवति तथापि गद्यमिदं लघुवाक्येषु विन्यस्तः अस्ति । तेन हि वाक्येऽस्मिन् पर्याप्तरूपेण रोचकता, आकर्षकता हृदयावर्जकता च मिलति । आख्यायिकायाः अंशस्तु विशेषरूपेण हृदयङ्गमो भवति । यथा—**"सत्यं वै चक्षुः सत्यं हि वै चक्षुस्तस्मात् यदिदानीं द्वौ विवदमानावेयातम्—'अहमदर्शम्' 'अहमश्रौषम्' इति । य एवं ब्रूयात् अहमदर्शमिति तस्मा एव श्रद्दध्याम् । तत् सत्येनैवैतत् समर्थयति** ( शत० १।३।२ द्र० ) ।"

## ब्राह्मणकालिको धर्मः समाजश्चेति

ब्राह्मणयुगे यज्ञसम्पादनमेव धर्मस्य मुख्य उद्देश्योऽस्ति । यज्ञस्य सूक्ष्मातिसूक्ष्मतरानुष्ठानेभ्यः ब्राह्मणग्रन्थेषु सविस्तरं वर्णनं मिलति । एतेषां विधीनां पूर्णनिर्वाहाय विशेषाग्रहं परिदृश्यते । अग्नेः स्थापना कदा करणीया ? केन विधिना कर्त्तव्या ? आज्यस्थाहुतिः वेद्यां कुत्र स्थातव्या ? वेद्यामुपरि आस्तरणाय कुशाग्रभागं पूर्वाभिमुखमुत उत्तराभिमुखं भवितव्यम् ? इत्यादि प्रश्नानां विवेचनम् अतिसूक्ष्ममतिविस्तृतश्चास्ति । समस्तेषु कर्मेषु यज्ञ एव श्रेष्ठतमः कर्म आसीदिति ( 'यज्ञो वै श्रेष्ठतमं कर्म'—शत० १।७।३।५ ) । ब्राह्मणग्रन्थेषु यज्ञस्य इयती महिमा इयदादरश्च वर्त्तते यद्विश्वस्य सर्वश्रेष्ठदेवता प्रजापतिरपि यज्ञरूपमेवास्ति—'एष वै प्रत्यक्षं यज्ञो यत् प्रजापतिः' ( श० ४।३।४।३ ) । विष्णोरपि प्रतीकः अयमेव यज्ञोऽस्ति ( यज्ञो वै विष्णुः ) । आकाशे दीप्यमानः आदित्योऽपि यज्ञरूपमेवास्ति—'स यः यज्ञोऽसौ आदित्यः' ( शत० ब्रा० १४।१।१।१६ ) ।

समस्तेषु कर्मसु श्रेष्ठतमत्वेनास्मिन् विश्वे यज्ञ एव परमाराध्यः अस्ति ।

जगति यावत् पदार्थाः सन्ति, एतदन्तं देवानां जनकरूपं प्रजापतिरपि यज्ञस्यैवाध्यात्मिकप्रतीकोऽस्ति। 'यज्ञादेव सृष्टिः सम्भूता'। अस्य वैदिकतत्त्वस्य परिचयः पुरुषसूक्ते एव मिलति। ब्राह्मणयुगे यज्ञस्य महनीयत्वे साधनरूपत्वे च नास्ति लेशतोऽपि सन्देहस्यावकाशः। अग्निहोत्रस्यानुष्ठानेन प्राणी सर्वपापात् विमुच्यते—'सर्वस्मात् पाप्मनो निर्मुच्यते य एवं विद्वानग्निहोत्रं जुहोति' ( शत० ब्रा० २।३।१।६ )। अश्वमेधयज्ञकर्त्ता यजमानः ब्रह्महत्यादिसमस्तपापकर्मभ्यः मुक्तो भवति ( शत० ब्रा० १३।५।४।१ )। गोपथब्राह्मणे सुष्ठु उपमाद्वारेण एकं पापनिर्मोचनतत्त्वं विशदीचकार। येन प्रकारेण सर्पः स्वजीर्णत्वचा निर्मुच्यते, मुञ्जात् 'इषीका' निर्मुच्यते तथैव शाकलहवनकर्त्ता समस्तपापेभ्यो मुक्तो भवति—

**'तद् यथाहिजीर्णायास्त्वचो निर्मुच्यते इषीका वा मुञ्जात्।**
**एवं ह वै ते सर्वस्मात् पाप्मनः समुच्यन्ते ये शाकलं जुह्वति ॥'**

( गोपथब्रा० उ० ४।६ )

एतावदुपादेयत्वेनैव यज्ञस्य पूर्णानुष्ठनाय ब्राह्मणस्याग्रहोऽस्ति। संहिताकालस्य मुख्यदेवता अस्मिन् युगे गौणोऽभवत्। तथा गौणदेवता मुख्योऽभवत्। क्वचित् नवीनदेवतायाः परिकल्पनाऽप्यस्ति। ऋग्वेदस्य गौणदेवतासु प्रजापतिः अग्रगण्योऽस्ति। ऐतरेयब्राह्मणस्यारम्भे एव विष्णोः परमदेवत्वस्य सूचना मिलति—'अग्निर्वै देवानामवमो विष्णुः परमः' ( ऐत० १।१, ता० ब्रा० ६।९।७९ )। रुद्राय महादेवशब्दस्य प्रयोगः ब्राह्मणग्रन्थेषु स्पष्टतया उल्लिखितो मिलति। प्रजापतेः पदं तु देवानामग्रस्थानीयमस्ति। प्रजापतिरेव जगतः स्रष्टा अस्ति। प्रजापतिः देवानामपि स्रष्टाऽस्ति। प्रजापतिरेवास्य भूतलस्य सकलपदार्थानां सृष्टिकर्त्ताऽस्ति। स एव देवताः उत्पन्नं कृत्वा तासु बलस्य विभागं करोति। अनेनैवोर्जाविभागेनोदुम्बरवृक्षस्य जन्म बभूव। अतः प्रजापतेः महिमा ब्राह्मणग्रन्थेषु सर्वतो महीयानस्ति।

## चातुर्वर्ण्यम्

ब्राह्मणयुगीयसमाजे ब्राह्मण-क्षत्रिय-वैश्य-शूद्रादीनां चतुर्णां वर्णानां व्यवस्थोपलब्धा भवति। वैदिकयज्ञस्य सम्पादकत्वेन निर्वाहकत्वेन च ब्राह्मणस्य स्थानं चतुर्षु वर्णेषु अग्रतम आसीत्। ब्राह्मणेषु ये वेदशास्त्राणामध्ययनशीला आसन् ते मनुष्यदेवस्य महनीयाभिधानेन मण्डिता बभूवुः ( शत० ब्रा० २।२।२।६ )।

**'ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः।**
**विद्वांसो हि देवाः ॥'** ( शत० ब्रा० ३।७।३।१० )

तैत्तिरीयसंहितायां ( १।७।३।१ ) ब्राह्मणः 'प्रत्यक्षदेवः' इत्युपाधिना विभूषित आसीत्। 'एते देवाः प्रत्यक्षं यद् ब्राह्मणाः।' शतपथब्राह्मणे देवताऽपि द्विधा भवति। अग्नादिहविर्भोजी देवता तथा मनुष्यदेवः ब्राह्मणः। द्वाभ्यां

यज्ञस्य विभागद्वयमस्ति। देवेभ्यः आहुतिस्तथा मनुष्यदेवेभ्यः दक्षिणा भवति। अनेन ते प्रसन्नो भूत्वा यजमानाय कल्याणं कुर्वन्ति ( शत० ब्रा० २।२।२।६ )। राजा स्वं समग्रराज्यमपि दक्षिणारूपे दातुं शक्नोति। अभिषेकस्यावसरे ब्राह्मणो वदति—'हे मनुष्या अयं तव राजा अस्ति। ब्राह्मणानां राजा सोमः अस्ति' ( सोमोऽस्माकं ब्राह्मणानां राजा )। शतपथब्राह्मणस्य व्याख्यानुसारेण राज्ञे प्रजा अन्नस्थानीया भवन्ति ( ब्राह्मणान् विहायैव ), यत ब्राह्मणस्तु कस्यापि भौतिकराज्ञः प्रजा एव न भवति (शत० ब्रा० १३।३।५।३)। ब्राह्मणाय आदर्शो भवति 'ब्रह्मवर्चसी' अर्थात् वेदाध्ययनेन तेजःसम्पन्नत्वमेव ब्राह्मणत्वम्। अतो ब्राह्मणेषु स एव सर्वश्रेष्ठः वीर्यवान् भवति यः वेदज्ञो भवति।

**'तद्ध्येव ब्राह्मणेनैष्टव्यं यद् ब्रह्मवर्चसी स्यादिति।'**

( शत० ब्रा० १।९।३।१६ )

**'यो वै ब्राह्मणानामनूचानतमः स एषां वीर्यवत्तमः॥**

( तत्रैव ४।६।६।५ )

**'ब्राह्मणस्य बलं तस्य मुखे—भाषणे, वाक्शक्त्यामेव भवति, यतस्तस्य सृष्टिः मुखादेवाभवत्—'तस्माद् ब्राह्मणो मुखेन वीर्यं करोति। मुखतो हि सृष्टिः** ( ताण्ड्य० ब्रा० ६।१।६ )।

एवंविधानूचानब्राह्मणस्य वशे क्षत्रियाः यदा भवन्ति तदैव राष्ट्रस्य मङ्गलं भवति। राष्ट्रे वीराः समुत्पन्ना भवन्ति—

**'तद् यत्र ब्राह्मणः क्षत्रं वशमेति तद्राष्ट्रं समृद्धं तद्वीरवदाहास्मिन् वीरो जायते।'** ( ऐत० ब्रा० ८।९ )।

क्षत्रियः राष्ट्रस्य रक्षकस्तथा वैश्यस्तस्य वर्द्धको भवति। पादात्समुत्पन्नत्वेन शूद्रस्य सेवाधर्म एव प्रधानधर्म आसीत्। अनेन प्रकारेण यज्ञप्रधाने वैदिक-समाजे वेदज्ञब्राह्मणानां महती प्रतिष्ठा स्वाभाविकी एवासीत्।

## नैतिकता

यज्ञसम्पादनं बाह्याचारे सत्यपि अन्तराचरणोपरि पूर्णतयाऽवलम्बित आसीत्। यैः पाश्चात्यालोचकैः ब्राह्मणग्रन्थेषु नैतिकताया अभावस्य वार्त्ता कृता, तेषां कथनं कथमपि मान्यं प्रामाणिकञ्च नास्ति ( विण्टरनित्समहोदयस्य History of Indian Literature Vol. I, page 267–268 द्रष्टव्यम्)। तस्य कालस्य समाजः पूर्णरूपेण नैतिक आसीत्। तात्कालिकसमाजः आचार-वान् आसीत् तथा सर्वजनहिताय सत्यानुष्ठाने आग्रही आसीत्। न केवलं दीक्षितजनाय अपितु सामान्यजनाय अपि सत्यवादनमावश्यकमासीत्। मिथ्या-वादिनो जना यज्ञाय सगुपयुक्ता न भवन्ति। ( 'अमेध्यो वै पुरुषो यदनृतं वदति' श० ३।१।३।१८ )। असत्यवादनं जलेनाग्नेः सेचनमिवासीत्, सत्य-वादनञ्च घृतेनाग्नेः सेचनमिवासीत्। असत्यवादिनो जनस्य तेजः शनैः शनैः

क्षीणो भवति । सः नित्यपापी भवति । अतएव सदा सत्यं वक्तव्यम् । एवंविधे सत्योपरि आग्रहकर्तॄणां ब्राह्मणानामुपरि नैतिकहीनताया आरोपः कथमपि क्षम्यं न भवति ।

ब्राह्मणकालिकसमाजः पापात्मनः आवर्त्तनशीलस्वभावेन पूर्णतया परिचितः आसीत् । असावजानात् यद् यो मानवः एकदा पापं करोति सोऽभ्यासवशेन तदनन्तरं पापान्तरस्यापि आचरणं करोति ।

**'यः सकृत् पापकं कुर्यात् कुर्यादेनस्ततोऽपरम् ।'**

( ऐत० ब्रा० ७।२७ )

अतः पापं विहाय पुण्यं कर्त्तव्यम् । सत्यस्य श्रद्धायाश्चाचरणेन मानवः स्वर्गलोके गच्छति । वाग्देवतायाः स्तनद्वयमस्ति—सत्यम् अनृतञ्चेति । सत्यं वाग्देव्याः पुत्रानुपासकांश्च रक्षति किञ्च तमनृतं हन्ति ।

**'वाचो वाव तौ स्तनौ सत्यानृते वावते । अवत्यैनं सत्यं न तमनृतं हिनस्ति य एवं वेद'** ( ऐत० ब्रा० ४।१ ) ।

ताण्ड्यब्राह्मणे अनृतभाषणं वाण्याः छिद्रं कथितः 'एतद्वाचश्छिद्रं यदनृतम्' ( ता० ८।६।१२ ) । अस्य तात्पर्यमिदमस्ति—यथा छिद्राभ्यन्तरात् सर्ववस्तूनि पतन्ति तथैव मिथ्यावादिनो वाण्याः सारतत्त्वं निःसरति । सारतत्त्वविहीना वाणी स्वप्रभावेन कमपि जनं प्रभावयितुं समर्था न भवति । शतपथब्राह्मणे सत्यानृतयोः रूपनिर्देशायैका सुष्ठूपमायाः प्रयोगः कृतः । ऐतरेयब्राह्मणे श्रद्धा-सत्ययोः मिथुनकल्पनाऽतीव मनोहराऽस्ति । श्रद्धा पत्नी अस्ति, सत्यं यजमा-नोऽस्ति । यजमानः स्वपत्न्या सह मिलित्वा यज्ञेन स्वर्ग्यमवाप्तुं समर्थो भवति । तेनैव प्रकारेण सत्यमपि श्रद्धया सह संयुक्तो भूत्वा स्वर्गलोकं जयति ।

**'श्रद्धापत्नी सत्यं यजमानः । श्रद्धासत्यं तदित्युत्तमं मिथुनम् ।**
**श्रद्धया सत्येन मिथुनेन स्वर्गाल्लोकान् जयतीति ॥'**

( ऐ० ब्रा० ७।१० )

समाजे दानस्यातिथ्यस्य च प्रतिष्ठाऽऽसीत् । यो नरः देवान्, पितॄन्, अति-थीन् च दानेन न तृप्तमकरोत् सः पुरुषः 'अनद्धा' 'अनृतम्' कथ्यते ( 'क अनद्धा पुरुष इति ? न देवान्, न पितॄन्, न मनुष्यान् इति' ऐत० ब्रा० ७।९ ) । सायं-काले समागतस्यातिथेः केनापि प्रकारेण निराकरणं न कर्त्तव्यमिति ( 'यदा वै अतिथिं परिवेविषत्यापीन इव वै स तर्हि भवति' ।—ऐ० ब्रा० १।१७ ) । यः पुरुषः अतिथिसेवां करोति स वै पीनो भवति, प्रसन्नो भवति । तस्मिन् काले आतिथ्यः यज्ञस्य शिर आसीत् । अतिथिपूजनं तदा यज्ञपूजनमिवासीत् ।

**'शिरो वा एतद् यज्ञस्य यद् आतिथ्यम् ।'**

( ऐत० १।२५ )

## नार्याः महिमा

समाजे स्त्रियः महत्त्वपूर्णस्थानमस्ति । यज्ञे पत्नी यजमानस्य सहधर्मचारिणी भवति । 'पत्नी'-शब्दस्य व्युत्पत्तिरपीमामेव विशिष्टतां प्रति सङ्केतं करोति । पत्नीं विना कोऽपि पुरुषः यजनस्याधिकारी भवितुं न शक्यते, यतः दम्पत्योः सहाधिकारात् । ( 'अयज्ञो वा एषो योऽपत्नीक' तैत्ति० ब्रा० २।२।२।६ ) पत्नी अर्द्धाङ्गिनी भवति । ( 'अथा अर्धो वा एष आत्मनो यत् पत्नी' तै० ब्रा० ३।३।३।५ ) । वेद्याः रचनाप्रसङ्गे शतपथब्राह्मणं स्त्रीसौन्दर्यायैकं महनीयमादर्शं प्रति सङ्केतं करोति । स्थूल-जघनम्, स्कन्धयोर्मध्ये उरोभागः, जघनापेक्षयाऽल्पतर-स्थूलः कटिप्रदेशः हस्तग्राह्यः स्त्रियाः शारीरिकसुषमायाः श्लाघनीयः प्रतीकः आसीत् ( 'एवमिव हि योषं प्रशंसन्ति पृथु श्रोणिर्विमृष्टान्तरांसा मध्ये सङ्ग्राह्येति' शत० १।२।५।१६ ) । एवंविधं नारीरूपं सुन्दरकेशपाशैस्तथाऽन्यवस्त्राभूषणैः सुसज्जिता भूत्वाऽदीव्यत् । एतादृश्या रुचिरया स्त्रिया सह वैदिककालिक-पुरुषः विवाहसम्बन्धं विधाय गुणज्ञपुत्रं समुत्पाद्य स्वर्गप्राप्तेः कामनामकरोत् । ऐतरेयब्राह्मणे पुत्रस्य भव्या प्रशंसा समाजे वीरसन्ततेः मूल्याङ्कनाय पर्याप्तमन्यत । पितरः पुत्रैः क्लेशसागरादुद्धर्त्तुं समर्थाः भवन्ति । पुत्रः आत्मनः जन्म गृहीत्वा आत्मस्वरूपमेव भवति । सोऽन्नेन पूरिताः तरिः भवति यः संसृति-सागरात्समुद्धर्त्तुं नितान्तः समर्थो भवति—'स वै लोकोऽवदावदः ।' पुत्रः स्वर्ग-लोकस्य प्रतीको भवति, तस्य निन्दा कदापि न कर्त्तव्या । 'ज्योतिर्हं पुत्रः परमे व्योमन्', 'नापुत्रस्य लोकोऽस्ति' इत्येतानि श्रुतिवाक्यानि पुत्रस्य सामाजिक-मूल्यस्य परिकल्पनायाः कतिपयानि निदर्शनान्येव सन्ति । स्त्रियै पातिव्रत-धर्मस्य पालनं परममङ्गलदायकममन्यत ।

शतपथब्राह्मणानुसारेण ( २।५।२।२० ) या स्त्री सत्यपि स्वपतिं परपुरुषेण सह रतिं करोति, स वरुण्यकार्यं करोति । 'वरुण्यं वा एतत् स्त्री करोति यद-न्यस्य सती अन्येन चरति । वरुण्यः=पापः । वरुणो वा एतं गृह्णाति यः पाप्मना गृहीतो भवति' ( शत० १२।७।१।७ ) । तात्कालिकसमाजे कस्यापि प्रकारस्य नैतिकस्खलनस्य किंवा शैथिल्यस्य चिह्नमपि नालभत । एतादृशे ब्राह्मणकालिके समाजे अनैतिकताया आरोपः न कोपि कर्त्तुं शक्नोति ।

## ब्राह्मणसाहित्यम्

ब्राह्मणसाहित्यं नितरामेव विशालं व्यापकञ्च वर्त्तते, किञ्चाद्यानेकब्राह्मण-ग्रन्थाः कालकवलिताः बभूवुः । तेषां नामनिर्देशस्तथा तदुद्धरणानि च कतिपयेषु श्रौतग्रन्थेषूपलब्धानि भवन्ति । साहित्ये समुद्धृताः किञ्चानुपलब्धाः ब्राह्मणग्रन्थेषु कतिपयानां महत्त्वशालिग्रन्थानां नामोल्लेखमेवात्र क्रियते । डॉ० बटकृष्णमहोदयेनैवंविधानामनुपलब्धब्राह्मणग्रन्थानामुपलभ्यमानोद्धरणानाञ्चैकत्र प्रकाशनस्य श्लाघनीयः प्रयत्नो विहितः । ( द्रष्टव्यस्तस्य ग्रन्थः Collection of Fragments of Lost Brahman, Calcutta 1953 ) ।

एवंविधेषु ब्राह्मणेषु—( १ ) शाकटायनब्राह्मणमत्यन्तमहत्त्वपूर्णं प्रतीतो भवति। अस्य ग्रन्थस्य सप्ततिरुद्धरणान्यद्याप्युपलब्धानि भवन्ति। एतान्युद्धरणानि च विशेषरूपेण ऋग्वेदस्य सायणभाष्ये—१।१०५।१०; ७।३३।७; ८।९१।१; ८।९१।५ इत्यादयस्तथा ताण्ड्यब्राह्मणस्य सायणभाष्ये—४।२।१०; ४।३।२; ४।५।१०; ४।६।२३ मिलन्ति। एतान्युद्धरणान्येव ग्रन्थस्य महत्तायाः पर्याप्तसूचको भवति। अस्य कतिपयान्युद्धरणानि च जैमिनीयब्राह्मणग्रन्थे अक्षरशः उपलब्धानि भवन्ति।

( २ ) 'भाल्लविब्राह्मणम्' सामवेदस्यैवेकाशाखायाः ब्राह्मणमासीत्। अस्य निर्देशः श्रौतग्रन्थातिरिक्तैः पतञ्जलेः महाभाष्ये ( ४।२।१०४ ) तथा काशिकायाम् ( ४।२।६६; ४।३।१०५ ) सूत्रोपरि मिलति।

( ३ ) जैमिनीयम् अथवा तवलकारब्राह्मणम्—सामवेदस्य जैमिनिशाखया सह सम्बद्धं ब्राह्मणमिदमस्ति। यद्यपि ग्रन्थोऽयं बृहदाकारवान् महत्त्वपूर्णश्चास्ति तथापि पूर्वोक्तग्रन्थे नोद्धृतोऽस्ति। शाट्यायनेन सह ईदृशी समानता वर्त्तते येनास्योद्धरणस्यावश्यकतैव प्रतीता नाभवत्। एतदतिरिक्ता महत्त्वपूर्णाः कतिपया ग्रन्थाः एवंविधाः सन्ति—

( ४ ) आह्वरकब्राह्मणम् ( चरणव्यूहे निर्दिष्टः चरकशाखया सम्बद्धः ) ( ५ ) कंकतिब्राह्मणम्, ( ६ ) कालावधिब्राह्मणम् (पुष्पसूत्रे शाट्यायनब्राह्मणेन सह सम्बद्धः ), ( ७ ) चरकब्राह्मणम्, ( कृष्णयजुर्वेदस्य प्रधानशाखया चरकेन सह सम्बद्धः ), ( ८ ) जाबालिब्राह्मणम्, ( ९ ) पैङ्गायनि-ब्राह्मणम्, ( १० ) माषशराविब्राह्मणम्, ( ११ ) मैत्रायणिब्राह्मणम्, ( कृष्णयजुर्वेदीय मैत्रायणीयशाखया सह सम्बद्धः ), ( १२ ) रौरुकिब्राह्मणम्, ( १३ ) शैलालिब्राह्मणम् ( महाभाष्ये ६।४।१४४ तथा काशिकायां निर्दिष्टः ), ( १४ ) श्वेताश्वतरब्राह्मणम्, ( १५ ) हारिद्रविकब्राह्मणम् ( चरणव्यूहे निर्दिष्टस्तथा चरकशाखया सह सम्बद्धः )।

एतदतिरिक्तोऽपि निम्नलिखिता अष्टब्राह्मणग्रन्थानां नामानि मिलन्ति—

काठकब्राह्मणम्, खाण्डिकेयब्राह्मणम्, औखेयब्राह्मणम्, गालवब्राह्मणम्, तुम्बुरुब्राह्मणम्, आरुणेयब्राह्मणम्, सौलभब्राह्मणम्, पराशरब्राह्मणम्। ( अस्यार्थे द्रष्टव्यं भगवदत्तस्य वैदिकवाङ्मय का इतिहास, भा० द्वि० पृ० २६-३४ )।

ऋग्वेदस्य ऐतरेयब्राह्मण-शांखायनब्राह्मणञ्चेति ब्राह्मणद्वयम् अनयोरैतरेयब्राह्मणमतिप्रथितम्। अत्राष्टौ पञ्चिकाः, प्रतिपञ्चिकं पञ्चाध्याया इति मिलित्वा ४० अध्यायाः सन्ति।

शुक्लयजुर्वेदस्य—शतपथब्राह्मणं नितान्तप्रसिद्धम्, अत्र शतमध्याया विद्यन्ते।

कृष्णयजुर्वेदस्य—तैत्तिरीयब्राह्मणनामा ब्राह्मणभागो विद्यते ।

सामवेदस्य—बहवो ब्राह्मणभागाः सन्ति । तद्यथा—( १ ) ताण्ड्यब्राह्मणम्—अतिप्रसिद्धतरमिदं ब्राह्मणम् । अयं ग्रन्थः पञ्चविंशत्यध्यायशाली, अतएव पञ्चविंशब्राह्मणसंज्ञयापि प्रसिद्ध्यति । ( २ ) षड्विंशब्राह्मणम्, ( ३ ) सामविधानब्राह्मणम्, ( ४ ) आर्षेयब्राह्मणम्, ( ५ ) दैवतब्राह्मणम्, ( ६ ) उपनिषद्ब्राह्मणम्, ( ७ ) संहितोपनिषद्ब्राह्मणम्, ( ८ ) वंशब्राह्मणम्, ( ९ ) जैमिनीयब्राह्मणम् ।

अथर्ववेदस्य—गोपथब्राह्मणम् ।

अत्र खण्डद्वयमेवास्ति । प्रथमखण्डे पञ्चाध्यायाः सन्ति, द्वितीयखण्डे च षडाध्यायाः सन्ति । ब्राह्मणग्रन्थेषु सर्वतो नवोऽयं ग्रन्थः कथ्यते ।

सम्पूर्णब्राह्मणसाहित्यमिदं गद्यात्मकमेवास्ति । यज्ञस्य विधानं कदा कृतं भवेत् ? केन प्रकारेण च कृतं स्यात् ? कानि च साधनानि तदर्थमपेक्ष्यन्ते ? इत्येतद्विषयाणामुपपादनं ब्राह्मणसाहित्ये कृतमस्ति ।

## वैदिकग्रन्थानां सूची

| वेदः | शाखा | ब्राह्मणम् | आरण्यकम् | उपनिषद् |
|---|---|---|---|---|
| ऋग्वेदः | १. शाकलशाखा ( उपलब्धा )<br>२. वाष्कल-शाखा | ऐतरेय ब्राह्मणम्<br>कौषीतकिब्राह्मणम् ( शांखायननाम्ना ख्यातः ) | ऐतरेय-आरण्यकम्<br>शाङ्खायन-आरण्यकम् | ऐतरेयोपनिषद् (आर०२।४।६)<br>१. कौषीतकि उपनिषद् (आरण्यक३-६)<br>२. वाष्कल-मन्त्रोपनिषद् |
| साम-वेदः | १. कौथुमशाखा (उपलब्धा) | १. पञ्चविंशब्राह्मणम् (प्रौढताण्ड्यब्राह्मणम्)<br>२. षड्विंशब्राह्मणम् (अद्भुदब्राह्मणमन्तिमे प्रपाठकेऽस्ति)<br>३. सामविधानब्राह्मणम्<br>४. आर्षेयब्राह्मणम्<br>५. मन्त्र (उपनिषद्) ब्राह्मणम्<br>६. देवताध्यायब्राह्मणम्<br>७. वंशब्राह्मणम्<br>८. संहितोपनिषद्-ब्राह्मणम् | | छान्दोग्योपनिषद् (ब्राह्मणस्यान्तिमाष्टप्रपाठकाः) |
| | २. रायमायणीया (अनुपलब्धा) | कतिपये सूत्रग्रन्थे एव रक्षिता<br>१. जैमिनीयब्राह्मणम् ( आर्षेयः ) | | केनोपनिषद ( ब्राह्मणम् ४।१८-२१) |

| वेदः | शाखा | ब्राह्मणम् | आरण्यकम् | उपनिषद् |
|---|---|---|---|---|
| | ३. जैमिनीय-शाखा (उपलब्धा) | २. जैमिनीयतवलकार-ब्राह्मणम्<br>३. जैमिनीयोपनिषद्-ब्राह्मणम् (छान्दोग्य-ब्राह्मणम् ) | | |
| कृष्ण-यजुर्वेदः | १. तैत्तिरीय शाखा<br>२. मैत्रायणीसं० (उपलब्धा)<br>३. कठसंहिता (सम्पूर्णोपलब्धा)<br>४. कापिष्ठल-कठसंहिता (अनुपलब्धा)<br>५. श्वेताश्वतरसंहिता | १. क–तैत्तिरीयसंहिता ( ब्रा०भा० )<br>१.ख–तैत्तिरीयब्राह्मणम् (संहिता भागं विहाय)<br>मैत्रायणीसंहिता ( ब्रा० भा० )<br>काठकसंहिता (ब्राह्मण-भागः )<br>कापिष्ठलकठसंहिता ( ब्राह्मणभागः ) | तैत्तिरीय-आरण्यकम् | १. तैत्तिरीय-उपनिषद् (आरण्यक७-९)<br>मैत्रायणी उपनिषद् ( मैत्री-उपनिषद् )<br>कठोपनिषद्<br>श्वेताश्वतरोपनिषद् |
| शुक्ल-यजुर्वेदः | १. काण्वशाखा (समुपलब्धा) | शतपथब्राह्मणम् | बृहदारण्यकम् ( ब्राह्मणस्य सप्तदश-काण्डानि ) | १. ईशावास्योपनिषद् (संहिता ४०अ०) |
| | २. माध्यन्दिन-शाखा (सम्पूर्णोपलब्धा) | शतपथब्राह्मणम् | बृहदारण्यकम् ( ब्राह्मणस्य चतुर्दश-काण्डानि ) | २. बृहदारण्यकोपनिषद् (आरण्यकानि ४-९ ) |
| अथर्व-वेदः | १. पैप्पलाद-शाखा ( अनुपलब्धा )<br>२. शौनकशाखा | गोपथब्राह्मणम् | | प्रश्नोपनिषद्<br>१.मुण्डकोपनिषद्<br>२. माण्डूक्योपनिषद्<br>३. अनेकपश्चाद्वर्त्तिन उपनिषद् |

## विशिष्टाभिज्ञानम्

### ( ऐतरेय-ब्राह्मणम् )

ऐतरेयब्राह्मणमेव ऋग्वेदीयब्राह्मणेषु सर्वप्रथमोल्लेखनीयग्रन्थोऽस्ति। अस्य रचयिता ऋषिः महिदास ऐतरेय एव मन्यते। अस्य नाम्नः व्युत्पत्त्या आधारोपरि सायणाचार्येणैका कथा कल्पिता। कथेयं सायणभाष्यस्यारम्भे एवास्ति।

अनया कथयानुसारेण अस्य महिदासस्य माता शूद्रकुलोत्पन्नाऽऽसीत् । तस्या नाम 'इतरा' आसीत् । किञ्चास्या कथायामैतिहासिकतथ्यानामभावः प्रतीतो भवति । अवेस्तायामृत्विजः अर्थे व्यवहृतः 'एथ्रे्य'-शब्दः उपलब्धो भवति । विदुषां मतानुसारेण 'ऐतरेयशब्दोऽपि 'एथ्रे्य'-शब्देन सह साम्यं स्थापयति ।

ऐतरेयस्य लेखनशैली विशुद्धब्राह्मणोचितैवाऽस्ति । संहिताकालिकभाषातः सा नातिदूरे तिष्ठति । अस्याः रचनायां सर्वत्र समरूपता वर्त्तते । अस्मिन् विषयेऽवान्तरप्रक्षेपस्य कल्पना सर्वथा निराधारैवेति । आश्वलायनस्य तर्पणविधौ कस्यापि महैतरेयस्याऽपि नामोल्लेखो भवति, येनास्य ग्रन्थस्य कस्यापि विशाल-संस्करणस्य कल्पना कर्त्तुं शक्यते । किञ्चैतादृशः ग्रन्थस्य स्थितिः सम्प्रति क्लिष्टकल्पनैवास्ति । चेदस्य नाम्नः कोऽपि ब्राह्मणग्रन्थः सुदूरातीतेऽभविष्यत्त-थाप्यधुनासौ विनष्टोऽभवत् ।

ऐतरेयब्राह्मणमतिप्रथितमस्ति । अत्र अष्टौ पञ्चिकाः सन्ति । प्रतिपञ्चिकं पञ्चाध्यायाः सन्ति । सर्वे मिलित्वा चत्वारिंशदध्यायाः सन्ति । ग्रन्थेऽस्मिन् पञ्चाशीत्यधिकद्विशततमाः कण्डिकाः सन्ति । ऋग्वेदेन सम्बद्धोऽयं ग्रन्थः यज्ञे होतृनाम्नः ऋत्विजः विशिष्टकार्यकलापानां विशेषविवरणं प्रस्तुतं करोति । प्रथम-द्वितीयपञ्चिकायां अग्निष्टोमयागे होतुः विधिविधानस्य कर्त्तव्यस्य च विस्तृतवर्णनमस्ति । अयमेवाग्निष्टोमः समस्तसोमयागानां प्रकृतिरस्ति । अतोऽस्य विशेषविवरणमत्र प्रदत्तमस्ति । तृतीय-चतुर्थपञ्चिकायां प्रातःसवनस्य, माध्यन्दिनसवनस्य, सायंसवनस्य प्रयुज्यमानशस्त्राणां वर्णनमस्ति । सहैवाग्नि-ष्टोमस्य विकृतयः—उक्थ्य-अतिरात्र-षोडशीनाम्नां यागानामपि संक्षिप्तं विवेचन-मस्ति । पञ्चमपञ्चिकायां द्वादशाहयागानां तथा षष्ठपञ्चिकायां सप्तदिवसात्मानां यागानां वर्णनमस्ति । तेषु यागेषु होतॄणामृत्विजाञ्च कार्याणां विवेचनं पर्याप्त-रूपेण मिलति । सप्तमपञ्चिकायाः प्रधानविषयः राजसूययज्ञोऽस्ति । अस्मिन्नेव प्रसङ्गे शुनःशेपस्य प्रख्यातमाख्यानमपि विस्तरेण वर्णितमस्ति । अष्टमपञ्चिका ऐतिहासिकदृष्टया अतीवगरिमामयी अस्ति । अस्यां पञ्चिकायां प्रथमतः ऐन्द्रमहाभिषेकस्य तथा तदनन्तरं तस्यैवाधारोपरि चक्रवर्त्तिनः नृपस्य महा-भिषेकस्यातीव रोचकं वर्णनमस्ति । अन्तिमाध्याये पुरोहितेभ्यः धार्मिकस्य राजनैतिकस्य च महत्त्वस्य प्रतिपादनं नितान्तमुपादेयमस्ति । अनेन प्रकारेणै-तरेयब्राह्मणं सोमयागस्य बहुविधस्वरूपस्य तथा तस्येतिहासस्य प्रदर्शनेऽतीव गौरवमावहति ।

## महत्त्वम्

धार्मिकदृष्टया ऐतरेयब्राह्मणस्यालोचना नानाविधानां प्रामाणिकतथ्यानां ज्ञानं कारयति । अस्यानुशीलनेन ज्ञातो भवति यदस्य युगे केन प्रकारेण विष्णोः

महिमा वैदिकसमाजे विशिष्टस्थानं ग्रहणमकरोत् । शुनःशेपस्याख्यानेन ब्राह्मणमिदं वैदिकग्रन्थेषु चिरस्मरणीयोऽभवत् । शुनःशेपः ऋग्वेदस्य ऋषिः अस्ति तथा प्रथममण्डलस्यानेकानां सूक्तानां ( २४-२७ पर्यन्तम् ) द्रष्टाऽपि अस्ति । शुनःशेपस्य आख्यानमतीव करुणोत्पादकत्वेन साहित्यिकदृष्ट्याऽपि पठनीयमस्ति । राजा हरिश्चन्द्रः वरुणस्य दयया प्राप्तपुत्रस्य तस्मै बलिं दातुमिच्छति । समर्थो भूत्वा पुत्रो रोहितः वनं जगाम । पिताऽपि वरुणस्य कोपेनोदररोगपीडितोऽभवत् । इमं समाचारं श्रुत्वा पुत्रो रोहितः गृहाभिमुखं प्रस्थितः । किञ्च मार्गे देवेन्द्रस्तं गृहे परावर्त्तनात् रोद्धुमिच्छति । अन्ततः पितुःपीडया व्यथितो भूत्वा रोहितः गृहे समागतः अजीगर्तसौवयसि नाम्ना ब्राह्मणेन तस्य मध्यमं पुत्रं शुनःशेपं बलिदानाय गोमूल्येन क्रीत्वा आनीतः । वरुणस्य यज्ञे पिता एव स्वपुत्रं बलिं दातुं दक्षिणां गृहीत्वा स्वीयेनैव तत्परोऽभवत् । बलिदानाय काष्ठस्थूणे संयतः शुनःशेपः देवान् सम्प्रार्थ्य केनाऽपि प्रकारेणात्मरक्षणमकरोत् । यज्ञे समुपस्थितः विश्वामित्रस्तं शुनःशेपं स्वपोष्यपुत्रं कृतवान् । तेषां पञ्चाशत्पुत्राणां मध्ये येषां पुत्राणां घटनेयं मान्या न भवति ते पितुः शापाद् आर्यदेशस्य प्रान्तभूमौ आन्ध्र-मूतिव-पुलिन्दादिम्लेच्छो भूत्वा निवसति ।

ऐतरेयस्य कथनानुसारेण ऋक्-शतगाथोपरि आश्रितेदमाख्यानमस्ति— **'ऋक्-शतगाथं शौनःशेपमाख्यानम्'** । किञ्च वस्तुतः एताः ऋचः संख्यायां सप्तनवतिरेव सन्ति । पाश्चात्यवेदज्ञाः आख्यानमिदं वैदिकयुगे मानवबलिदानस्य परिचायकं प्रमाणं मन्वते । किञ्चास्य कथनस्य सप्रमाणखण्डनं कृतं कीथमहोदयेन एतरेयस्याङ्ग्लानुवादग्रन्थस्य भूमिकायाम् । भारतीयार्यधर्मे मानवबलिदानस्य कुत्रापि विधानं नास्ति । शाङ्खायनश्रौतसूत्रे राजसूययज्ञस्यावसरे पुरुषमेधस्य या योजना मिलति सा तु प्रतीकात्मकैवास्ति । राज्ञोऽभिषेककालेऽस्याऽऽख्यानस्य कथनमेकस्य आवश्यकतथ्यस्य सङ्केत एवास्ति । नृपाय प्रतिज्ञापालनमावश्यकः धर्म आसीत् । हरिश्चन्द्रेणापि स्वपुत्रस्य बलिदानस्थाने निष्कृतिदानेन स्वकीयसत्यसन्धत्वमेव प्रमाणितम् । 'चरैवेति चरैवेति' इत्यादिपदानां शिक्षा आर्याणामभ्युदयस्य संबलोऽस्ति । कर्मणः दृढोपासना एवार्यसंस्कृतेः मेरुदण्डः अस्ति । आर्यधर्मः कर्मण्यतायाः पक्षधरोऽस्ति तथाऽऽकर्मण्यतायाः प्रतिद्वन्द्वी ।

आख्यानमिदं आर्याणां दक्षिणदेशे प्रसारस्येतिहासस्य तथा तेषां समयस्य च पूर्णसाक्षी वर्त्तते । ऐतरेययुगे एव आर्यजनाः स्वाभ्यस्तसीमातो बहिर्गत्वा स्वनिवासं चक्रुः । आर्याणां सीमान्तप्रदेशे पौण्ड्र-आन्ध्र-पुलिन्द-मूतिव-शबरादि अनार्यजातयः निवसन्तिस्म । तैः सह तेषां सम्पर्कमासीत् । पौण्ड्रः वङ्गदेशं प्रति सङ्केतयति । आन्ध्रस्तु अद्यापि स्वस्थाने एवाऽस्ति । पुलिन्दशबरादयः मध्यभारतस्य वन्यजातय आसन् । मूतिवः क आसीत् ? इति तु अद्यापि अज्ञात एवास्ति ।

ऐतरेयस्य भौगोलिकसम्बन्धं मध्यदेशेनैवास्ति । यतः अस्मिन् ब्राह्मणे मध्यदेशस्योल्लेखः स्वाभिमानेन सह मिलति । आर्यैः मध्यदेशोऽयं ध्रुवस्तथा प्रतिष्ठापदेनाभिहितः । ( **'ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि'**—ऐत० ८।४ ) किञ्च ऋग्वेद इवास्य प्रचारः सम्प्रत्यपि महाराष्ट्रे एवास्ति । अतः 'ड' इत्यक्षरस्य स्थाने 'ल' इत्यस्य बहुलप्रयोगोऽस्मिन् ब्राह्मणे मिलति ।

अस्योपरि तिस्रः व्याख्याः मिलन्ति—

( १ ) सायणकृतभाष्यम् ( स०, आनन्दाश्रमः सं० सीरिज पूनातः प्रकाशिता ) ।

( २ ) षड्गुरुशिष्यरचित 'सुखप्रदा' नाम्नी लघु व्याख्या ( अनन्तशयनं ग्रन्थमाला 'त्रिवेन्द्रम्' नगरीतः प्रकाशिता )

( ३ ) गोविन्दस्वामिनः अप्रकाशिता व्याख्या । अनया व्याख्यया सम्प्रत्यपि अस्य ग्रन्थस्य महिमा ज्ञातो भवति ।

## शाङ्खायनब्राह्मणम्

शाङ्खायने किञ्च कौषीतकिब्राह्मणे केवलं त्रिंशदध्यायाः सन्ति । अध्यायः खण्डेषु विभक्तोऽस्ति । सम्पूर्णखण्डानां संख्या २२६ अस्ति । खण्डाभ्यन्तरे दीर्घगद्यमस्ति । अस्मिन् ब्राह्मणे कौषीतकिनाम्नः आचार्यस्योल्लेखः पैग्यनाम्नः आचार्यस्य विरोधे प्रदर्शितः । कौषीतकिमतस्य यथार्थता प्रमाणितास्ति ( द्रष्टव्यः ८।९; २६।३ ) । कौषीतकिमतस्य निर्देशः अन्यस्थलेऽप्यस्ति ( ११।५; २५।१५ ) ।

विषयदृष्ट्या इदमपि ऐतरेयस्यानुगामि वर्त्तते । अस्य महत्ता निम्नप्रकारेण ज्ञातव्येति—

( १ ) उदीच्यजनानां संस्कृतज्ञानं प्रशंसनीयमासीत् । तदा भाषाशिक्षितुं जना उदीच्यप्रान्ते गच्छन्तिस्म । शिक्षां समाप्य समागते सति ते समाजे समादरणीया अभवन् ( **'उदञ्च एव यान्ति वाचं शिक्षितुम्, यो वै तत आगति तं सुश्रूषन्ते'**–८।६) । भाषाशास्त्रदृष्ट्या बहुमूल्यमिदं कथनमस्ति । पाणिनिरपि उदीच्य एवासीत् । तस्य जन्मस्थानं शालापुरं तक्षशिलायाः पार्श्वे एवाऽसीत् । अनेन सङ्केतेन पाणिनेः भाषाज्ञानं श्लाघ्यमासीत् ।

( २ ) रुद्रस्य विशिष्टो महिमा वर्णितोऽस्ति । सः देवेषु ज्येष्ठः श्रेष्ठश्च अमन्यत ( **'रुद्रो वै जेष्ठश्च श्रेष्ठश्च देवानाम्'** २५।१३ ) । षष्ठाध्याये भवशिव-पशुपति-उग्र-महादेव-रुद्र-ईशान-अशनिप्रभृतयः शिवस्य नामानि सन्ति । एतेषां नाम्नामुत्पत्तिर्विचित्ररूपेण प्रदर्शिता भवति । शिवव्रतस्याप्यत्र विशिष्टरूपेण निर्देशो मिलति ।

( ३ ) सप्तमाध्याये अग्निः निम्नस्तरीयो देवस्तथा विष्णुरुच्चस्तरीयो देवश्च मन्यते । ( **'अग्निरवरार्ध्यैः विष्णुः परार्ध्यः'** ) । इयमस्य युगस्य धार्मिक-

मान्यताऽऽसीत् । यस्याः सम्पुष्टिः ऐतरेयब्राह्मणेनाऽपि भवति । तस्य युगस्योदात्तभावनायाः प्रतीको यज्ञ आसीत् तथा यज्ञस्य प्रतीको विष्णुरासीत् ( **'यज्ञो वै विष्णुः'** ) ।

( ४ ) यज्ञे हिंसितपशूनां विषये कथितमस्ति यत्ते पशवः अपरस्मिन् लोके गत्वा यज्ञकर्तृनेव खादन्ति । येन ज्ञातो भवति पशुयागं प्रति तथा मांसभक्षणं प्रति सामान्यजनेषु घृण्यभावस्योदयोऽभवत् । जनाः अस्मात्कर्मणः पराङ्मुखा भवितुं चेष्टामकुर्वन् ( **'अमुष्मिन् लोके पशवो मनुष्यानश्नन्ति' ११।३** ) ।

( ५ ) एकस्मिन्नध्याये ( २३।२ ) शक्वरीछन्दसो नाम्नः ऐतिहासिकनिरुक्तिरस्ति । एभिः छन्दोभिः इन्द्रः वृत्रं हन्तुं समर्थोऽभवत् । इदमेव शक्वरेः शक्वरीत्वमस्ति ( **'इन्द्रो वृत्रमशकद् हन्तुमाभिस्तस्मात् शक्वर्यः'** ) : महानाम्नी सामे शक्वर्यः ऋचः सन्ति तथेयमृच् मुख्यतयेन्द्रं प्रति कथितमस्ति ।

( ६ ) अस्मिन् काले गोत्रस्य प्रचलनं तथा प्रभावः सुदृढोऽभवत् । एकस्मिन् स्थाने ब्राह्मणं प्रति कथनमेकमस्ति समानगोत्रेण सहैव ब्राह्मण-क्षत्रिय-वैश्याः स्थातव्याः नेतरेण सहेति ( **ब्राह्मणे समानगोत्रे वसेत्, यत् समाने गोत्रेऽन्नाद्यं तस्योपाप्त्यै—२५।१५** )

## यजुर्वेदीयब्राह्मणानि

### शतपथब्राह्मणम्

ब्राह्मणग्रन्थेषु सर्वाधिकमहत्त्वशाली विपुलकायस्तथा यागानुष्ठानस्य सर्वोत्तमप्रतिपादको ग्रन्थः इदमेव शतपथब्राह्मणमस्ति । यजुर्वेदस्योभयोः काण्व-माध्यन्दिन-शाखयोः शतपथब्राह्मणमुपलब्धमस्ति । विषये सत्याप्येकतावर्णनक्रमे तथाऽध्यायस्य संख्यायामत्रान्तरमस्ति । माध्यन्दिनशतपथब्राह्मणे काण्डानां संख्या १४ कथिता । अत्र शतमध्यायाः विद्यन्ते । प्रपाठकानां संख्या ६८, ब्राह्मणानां संख्या ४३८ तथा कण्डिकानां संख्या ६८०६ कथिता । माध्यन्दिनशतपथे प्रथमकाण्डादारभ्य नवमकाण्डपर्यन्तं पिण्डपितृयज्ञं विहाय विषयाणां क्रमः माध्यन्दिनसंहितानुसारेणैवाऽस्त । पिण्डपितृयज्ञस्य वर्णनं संहितायां दर्शपौर्णमासानन्तरमेवास्ति । किञ्च ब्राह्मणे आधानस्थानन्तरमेवाऽस्ति, इदमेवान्तरमस्ति । अवशिष्टकाण्डेष्वपि संहिता-क्रम एवाङ्गीकृतमस्ति । उभयोः शतपथयोरारम्भे एवैकमन्तरं प्रतिभाति । माध्यन्दिनशतपथप्रथमकाण्डस्य विषयः ( दर्शपूर्णमासेष्टिः ) काण्वस्य द्वितीयकाण्डे उपलब्धो भवति । द्वितीयकाण्डस्य विषयः ( आधानम्-अग्निहोत्रादयः ) काण्वस्य प्रथमकाण्डे एव समाविष्टोऽभवत् । अन्यत्र विषयास्तु तथैव किञ्च तेषां क्रमः भिन्नोऽस्ति ।

माध्यन्दिनशतपथस्य प्रथमकाण्डे दर्शपौर्णमासेष्टीनां तथा द्वितीयकाण्डे आधान-अग्निहोत्र-पिण्डपितृयज्ञ-आग्रायण-चातुर्मास्यादीनां वर्णनमस्ति । सोमयागस्य नानायागानां विवरणेन सम्बद्धः तृतीय-चतुर्थकाण्डौ स्तः । पञ्चमकाण्डे

वाजपेयस्य राजसूययज्ञस्य च विवेचनमस्ति। षष्ठकाण्डादारभ्य दशकाण्डपर्यन्त-मुषासम्भरणविष्णुक्रम-वनीवाहनकर्म-चयनादीनां सम्पूर्णवर्णनमस्ति। शतरुद्रिय-होम-चितिसम्पत्ति-उपनिषदादीनाम् अग्नेः उपासनासहितं वर्णनमस्ति। प्रथम-काण्डपञ्चके याज्ञवल्क्यस्य चतुर्दशकाण्डे यः समस्तशतपथस्य कर्त्ता मन्यते, प्रामाण्यं सर्वातिशायी भवति। किञ्च द्वितीयकाण्डपञ्चके याज्ञवल्क्यस्य नाम-निर्देशोऽपि नास्ति। तत्र शाण्डिल्यऋषेरेव प्रामाण्यमस्ति। अयमेव शाण्डिल्यः दशमकाण्डे वर्णितस्याग्निरहस्यस्य प्रवक्ता निर्दिष्टोऽस्ति। अन्तिमकाण्डचतुष्टये ( ११-१४ ) अनेकेषां नवीनविषयाणां विवेचनमुपलब्धं भवति। विषयोऽयं सामान्यरीत्या ब्राह्मणग्रन्थेषु न विवेचितः नापि सङ्केतितो भवति। विषयेष्वेतेषु कतिपया महत्त्वशालिनो विषया एतादृशाः सन्ति—उपनयनम् ( ११।५।४ ); स्वाध्यायः—यः ब्रह्मयज्ञस्य रूपे स्वीकृतमस्ति ( ११।५।५-८ ); और्ध्वदैहिक-क्रियाणामनुष्ठानम् ( १३।८ ); अश्वमेध-पुरुषमेध-सर्वमेधादीनां विशदविवेचनं त्रयोदशतमे काण्डे तथा प्रवर्ग्ययागस्य वर्णनं चतुर्दशतमे काण्डे कृतमस्ति। शत-पथब्राह्मणस्यान्ते बृहदारण्यकोपनिषदस्ति, यस्य विवेचनमग्रे वक्ष्यामः।

शतपथब्राह्मणस्य महत्ताऽनया घटनया एव प्रस्फुटा भवति यदयं ग्रन्थः प्रायः समग्रयज्ञयागानां साङ्गोपाङ्गं विवरणं प्रस्तुतं करोति। अन्यब्राह्मणेषु दुर्लभमिदमस्ति। यज्ञस्यारम्भः वैदिकयुगस्यारम्भकालादेवास्ति। पूर्वं तु यज्ञस्य विधानं संक्षेपतः एवाभवत् किञ्च कालान्तरे याज्ञिकसंस्थेयमतिविस्तृताऽभवत्। ब्राह्मणयुगः याज्ञिकसंस्थायाः पूर्णविकासस्य युगोऽस्ति। अस्य परिचयो विभिन्न-ब्राह्मणग्रन्थेषु मिलति। स्वकीयवर्ण्यविषयानां गम्भीरविचारहेतुना सम्पूर्णब्राह्मण-साहित्यस्य शतपथब्राह्मणमिदं मुकुटमणिः मन्यते। अनेनैव कारणेन शतपथ-ब्राह्मणं नितान्तप्रसिद्धमस्ति।

शतपथब्राह्मणस्य सम्बन्धं शुक्लयजुर्वेदेन सहास्ति। अतः संहितायां येन प्रकारेणेष्टिस्तथायागः अस्ति तेनैव क्रमेण तयोरुल्लेखः अत्राप्यस्ति। शतपथस्य नवमकाण्डपर्यन्तं वाजसनेयीसंहिताया अष्टादशतमाध्यायानां क्रमबद्धा व्याख्या समुपस्थापितास्ति। अस्मिन् वर्णने ब्राह्मणोचिताऽऽख्यायिकानामपि यत्र तत्र समावेशोऽस्ति। अनेन समावेशेन याज्ञिकशुष्कवर्णनमपि रोचकमभवत्। इष्टिसु दर्शपूर्णमासयागो प्रमुखो मन्यते। दर्श इष्टिः प्रति अमावस्याया अनन्तरं प्रति-पत्तिथौ सम्पन्नो भवति। पूर्णमासयागः पूर्णिमाया अपरस्यां तिथौ सम्पन्नो भवति। अनेन प्राधान्येनास्य साङ्गोपाङ्गविवरणं शतपथस्य प्रथमकाण्डे प्रदत्त-मस्ति। एतेभ्यरिष्टिभ्यः समुपयुक्तमन्त्राणां निर्देशः संहितायाः प्रथमाध्यायस्य पञ्चमकण्डिकातः नीत्वा द्वितीयाध्यायस्याष्टाविंशतितमाध्यायपर्यन्तं कृतोऽस्ति। द्वितीयकाण्डेऽग्निहोत्रस्य प्रथमतो वर्णनमस्ति। गृहस्थानां कृते अग्नेः आधानं कृत्वा सायं-प्रातःकरणीयस्य हवनस्य विधिर्वर्णितोऽस्ति। अस्यैव नाम अग्निहोत्र इति अस्ति। पिण्डपितृयज्ञः पितॄणां तृप्तिनिमित्ताय कृतो भवेद्। नवानेष्ट्यां

नवान्नेन हवनस्य विधानमस्ति। चातुर्मास्योऽपि एको विशिष्टयागोऽस्ति। पूर्वोक्तचतुर्णां यागानां विवरणं शतपथस्य द्वितीयकाण्डे मिलति।

तृतीय-चतुर्थकाण्डयोर्विषयः सोमयागोऽस्ति। सोमयागे सोमलतां चूर्णयित्वा तस्याः रसनिष्कासनस्य प्रक्रिया भवति। तस्मिन् रसे गोदुग्धेन सह मधुनः मिश्रणं कृत्वोचितसमयोपरि देवनिमित्ताय अग्नौ जुहोति। सोमयागस्य प्रकृति-भूतयागः अग्निष्टोम इति कथ्यते। अस्योपयोगिनां मन्त्राणां सङ्कलनं वाज-सनेयिसंहितायाः चतुर्थाध्यायादारभ्याष्टमाध्यायपर्यन्तमस्ति। प्रकृतियागत्वेना-ग्निष्टोमस्य वर्णनं तृतीयकाण्डे अस्ति। चतुर्थकाण्डे ज्योतिष्टोमादीतरयागानां वर्णनमस्ति। पञ्चमकाण्डे वाजपेयस्य तथा राजसूययज्ञस्य विस्तृतं विवरणमस्ति। राजसूयस्त्वेकः अत्यन्तमहत्त्वपूर्णो यागोऽस्ति। मूर्धाभिषिक्तः क्षत्रियनरेश एवास्याधिकारी भवति। अभिषेकस्तु प्राचीनभारते राजनैतिकाधिपत्यस्य सूचकः एको महनीयो व्यापार आसीत्। कोऽपि अभिषिक्तराजन्य एव राजसूय-यज्ञानुष्ठानस्य सम्पादको भवितुमर्हति। षष्ठकाण्डादारभ्य दशमकाण्डपर्यन्त-मग्निचयनस्य विशिष्टं विस्तृतञ्च विवरणमस्ति। एतेषु काण्डेषु शाण्डिल्यस्य प्रामाण्यं विशेषरूपेण स्वीकृतमस्ति। शाण्डिल्यस्य सम्मतिरपि अत्यादरेण सहो-द्धृतोऽस्ति। एतेषु शाण्डिल्यकाण्डेषु गान्धार-केकय-शाल्वादिजनपदानामुल्लेखोऽपि मिलति। इतरकाण्डेषु कुरु-पाञ्चाल-कोशल-विदेहादिजनपदविशेषाणामुल्लेखो मिलति। डॉ० मैक्डोनलमहोदयस्य मतानुसारेणैतेषां काण्डानां रचयिता शाण्डिल्य एवाऽस्ति न तु याज्ञवल्क्यः। किञ्च वस्तुस्थितिस्तु भिन्नैवाऽस्ति। प्राच्योल्लेखेन प्रतीतो भवति यद् याज्ञवल्क्यस्तु विदेहनगरस्य निवासी आसीत्। विदेहाधिपतिः जनकस्तु तस्य शिष्य आसीत्। सम्भवतः शाण्डिल्यस्य सम्बन्धमुत्तरपश्चिमप्रान्तेन सहासीत्। आर्यनिवासिनः तस्मिन् काले खण्डत्रयेषु पारस्परिकघनिष्ठसम्बन्ध-स्याभावो नासीत्। एते त्रयः प्रान्ताः आसन्—(क) गान्धारः (पंजाबः), (ख) कुरुपाञ्चालः एवं मध्यदेशः, (ग) पूर्वीयभागः विदेहः कौशलश्चेति। ब्राह्मणेषु स्पष्टं निर्देशो मिलति यद् व्याकरणस्याध्ययनं विशेषरूपेणोत्तरखण्डे एवाऽभवत्। कर्मकाण्डस्याध्ययनं मध्यदेशे एवाऽभवत्। वैयाकरणपाणिनेः जन्म गान्धार-प्रदेशस्य शालातुरनामकग्रामेऽभवत्। कुरुपाञ्चालप्रदेशस्तु आर्याणां संस्कृतेः विकासस्य क्षेत्रमासीत्। अनेन कारणेनैव सत्यपि शाण्डिल्यस्योल्लेखः, आसां रचनानां श्रेयः याज्ञवल्क्यस्यैवोचितः प्रतीतो भवति।

शतपथब्राह्मणस्यान्तिमचतुर्णां काण्डानां विषययोजना मूलसंहितायाः आधा-रोपरि एवास्ति। एकादशतमे काण्डे पशुबन्ध-पञ्चमहायज्ञ-दर्शपौर्णमासादीना-मवशिष्टविधानस्य वर्णनमस्ति। भूतयज्ञ-मनुष्ययज्ञ-पितृयज्ञ-देवयज्ञ-ब्राह्मयज्ञा-दीनां प्रख्यातयज्ञ एव 'महायज्ञ' नाम्नाऽङ्कितोऽस्ति (११।५।६)। वेदानां स्वा-ध्यायः अध्ययन-महायज्ञस्यैव रूपान्तरमस्ति। अस्यात्र (११।५।७) भूयसी प्रशंसाऽतीवालङ्कारिकरीत्या कृताऽस्ति। ऋचः अध्ययनं देवेभ्यः पयसः आहुति-

रिवास्ति । यजुषः आज्याहुतिः, सामस्य सोमाहुतिः, अथर्वाङ्गिरसो मेदाहुतिश्च देवेभ्यः मधुनः आहुतिरिवास्ति । अनेन प्रकारेण वेदाङ्गविद्या-वाकोवाक्य-इतिहास-पुराणनाराशंसीगाथाप्रभृतीनामध्ययनमपि देवेभ्यो मधुनः आहुतिरिवैवाऽस्ति । अत एव वेदाङ्गानुशीलनाय शतपथस्य विशिष्टाग्रहो दृश्यते । नानाप्रमाणैः 'स्वाध्यायोऽध्येतव्यः' इत्यादिकथनस्य समर्थनमस्य काण्डस्य महिमामयसिद्धान्तोऽस्ति । द्वादशतमे काण्डे द्वादशसत्रं-संवत्सरसत्रं-सौत्रामणिसत्रं 'और्ध्वदैहिकादीनाञ्चानुष्ठानानां विस्तृतवर्णनमस्ति । प्रथमदिनादारभ्य द्वादशदिनपर्यन्तं यो यज्ञः चलति, तत्तु 'क्रतुः' इत्यभिधीयते । द्वादशाधिकदिनपर्यन्तं यो यज्ञश्चलति स तु 'सत्र' इति कथ्यते। द्वादशाहस्तु द्विविधो भवति—सत्रम्, अहीनश्चेति । द्वादशसत्र-संवत्सरसत्रयोः पश्चाद् सौत्रामणीनामकस्य प्रख्यातयागस्य सविस्तरं विवरणमस्ति । ( १२।७।१ ) । अस्य यागस्याध्यात्मिकरूपस्यापि मार्मिकविवरणम् अस्ति ( १२।९।१ ) ।

त्रयोदशतमे काण्डे अश्वमेध-पुरुषमेध-सर्वमेध-पितृमेधादीनां विस्तृतं विवरणं दर्शनीयमस्ति । मूर्धाभिषिक्तराजन्यमेव अश्वमेधयज्ञसम्पादनस्याधिकार आसीत् । अश्वमेधस्त्वनेकदिनेषु व्याप्तं भवितुं याज्ञिकविधानमासीत् । यज्ञीयाश्वहवनस्यास्मिन् यज्ञे विधानमस्ति । याज्ञिकप्रसङ्गे एतेषां यज्ञानां विशिष्टविवरणं वक्ष्यामः । चतुर्दशतमे काण्डे प्रवर्ग्यस्य वर्णनमस्ति । अन्तिमखण्डे चतुर्थाध्यायादारभ्य नवमाध्यायपर्यन्तं बृहदारण्यकोपनिषद् निबद्धोऽस्ति । अस्यापि वर्णनमुपनिषदां वर्णनप्रसङ्गे यथास्थाने वक्ष्यामः । अनेन प्रकारेण यज्ञस्य विविधं, विस्तृतं, प्राञ्जलं प्रामाणिकञ्च विवरणप्रदाने शतपथब्राह्मणमद्वितीयमस्ति । अस्मिन् कथने कथमपि काऽपि विप्रतिपत्तिः नास्ति ।

## यज्ञानामाध्यात्मिकमहत्त्वम्

यज्ञकर्मणि नानाकर्मणामनुष्ठानं प्राप्नोति । तेऽप्येकस्मिन् विशिष्टक्रमे सम्पन्ना भवन्ति । क्रमोऽप्ययं सयुक्तिकोऽस्ति । शतपथब्राह्मणेऽस्य क्रमस्य प्रत्येकपदार्थस्योपयोगिता प्रमापयितुमुदात्तं प्राञ्जलञ्च व्याख्यानमस्ति । तथ्यन्त्विदमेवास्ति—भौतिकयागः एकः प्रतीकात्मको व्यापारोऽस्ति । अन्तर्यागे, बहिर्यागे बहिर्यागे च पूर्णसामञ्जस्यमानुरूप्यञ्चास्ति । अग्निसन्धानानन्तरे, आहुतिद्वयदानस्य व्यवस्था भवति । प्रथमाहुतिः मनसे भवति, इयमाहुतिः पूर्वाधाराहुतिः कथ्यते, द्वितीयाहुतिः वाचे भवति, तत्तु उत्तराधाराहुतिरभिधीयते । भौतिकरथकर्षणाय यथा द्वावश्वावश्यकौ भवतस्तथैव यज्ञचक्रस्याकर्षणाय उभयोर्मनोवाचोरावश्यकता भवति । मनः कस्यापि वस्तुनः प्रथमतः सङ्कल्पं करोति, तदनन्तरं वाक्वचनव्यापारेण तस्य प्रतिपादनं करोति । मनः-वाचोः संयोगं विना कस्यापि कर्मणः विशेषतः यज्ञवदाध्यात्मिककर्मणः यथार्थसम्पादनमसम्भवोऽस्ति । अनया दृष्टया उभयोराहुत्योः निष्पत्तिः क्रमशः स्रुवः 'स्रुच्' इति

नाम्ना पात्रेण भवति। अस्मिन् जगति द्वौ प्रधानतत्त्वौ स्तः—अग्निः सोमश्च ( अग्नीसोमात्मकं जगत् )। अग्निररित अन्नादः ( अन्नस्य भक्षणकर्ता पुरुषतत्त्वम् ) तथा सोमोऽस्ति अन्नम् ( उपभोग्या स्त्रीतत्त्वम् )। अनयोः तत्त्वयोः यथार्थसम्मेलनेन सामञ्जस्येन च जगतः कल्याणं भवति। अग्नौ सोमरसाहुतिदानस्यायमेवाभिप्रायोऽस्ति यदन्नादेन सहान्नस्य परस्परसंयोगेन जगन्मङ्गलसाधिका सामग्री प्रस्तुता भवति। उपनिषत्सु तत्त्वमिदं 'रयिः' तथा प्राणेति नाम्ना उल्लिखितमस्ति। यज्ञस्य लघ्वीक्रियाया अपि स्वारस्यमस्य मूलतत्त्वस्य पीठिकायां पूर्णतयाऽभिव्यञ्जकत्वस्य श्रेयः शतपथब्राह्मणस्यैवास्ति। पूर्वाधारस्याहुतिः होता उपविश्यैव ददाति, उत्तराधारस्याहुति उत्थाय ददाति। अस्याः प्रक्रियाया आभ्यन्तरे विद्यमानतत्त्वस्य स्पष्टीकरणं शतपथब्राह्मणेऽतीव विस्तरेण सहास्ति ( १।४।५ )। वस्तुतः यज्ञस्य विधानं साधारणदृष्टया निर्जीवाडम्बरमिव प्रतीतो भवति, किञ्च शतपथब्राह्मणस्यानुशीलनेन अस्यान्तर्निहिततत्त्वानामुन्मीलनं तथोदात्तस्वरूपञ्च ज्ञातो भवति। ( द्रष्टव्यम्—मोतीलालशर्मा द्वारा रचित शतपथब्राह्मण का वैज्ञानिक भाष्य, जयपुर )

## शतपथब्राह्मणस्य प्राचीनता

सम्प्रति समुपलब्धब्राह्मणग्रन्थेषु शतपथब्राह्मणम् प्राचीनतमं मन्यते। भट्टोजिदीक्षितस्य सिद्धान्तकौमुद्यां निर्दिष्टेनैकेन सूत्रेण ब्राह्मणमिदमर्वाचीनं प्रतीतो भवति। यथा—"पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ( ४।३।१०४ ) तृतीयान्तात् प्रोक्तार्थे णिनिः स्यात् यत्प्रोक्तं पुराणप्रोक्ताश्चेत् ब्राह्मणकल्पास्ते भवन्ति। पुराणेन चिरन्तनेन मुनिना प्रोक्ताः। भल्लुः, भाल्लविनः। शाटचायनः, शाटचायनिनः। कल्पे, पिङ्गेन प्रोक्तः पैङ्गी कल्पः। पुराणेति किम्? याज्ञवल्क्यानि ब्राह्मणानि, अश्मरथः कल्पः। अत्र याज्ञवल्क्याश्मरथ्यशब्दौ कण्वादी, तेन ताभ्यां यजन्ताभ्यां वृद्धाच्छो न भवतीत्याशयेनाह अणि आपत्यस्येति। 'याज्ञवल्क्यादयो ह्यचिरकालाः' इति भारतादिषु व्यवहारः स एवानुसृतः सूत्रकृता।" भट्टोजिदीक्षितस्य मतमिदं प्राचीनवैयाकरणस्य मतेन नितान्तं विरुद्धमस्ति तेनास्य मत उपेक्षणीयमेवास्ति। दीक्षितेन वररुचेः वार्तिकमिदमुपेक्षितम् 'याज्ञवल्क्यादिभ्यः प्रतिषेधः, तुल्यकालत्वात्।' वार्त्तिकमिदं स्पष्टतः याज्ञवल्क्यस्य पूर्वनिर्दिष्टानाम् ऋषीणां 'तुल्यकालत्वात्' समकालिकं मन्यते। पतञ्जलिना महाभाष्ये वार्तिकमिदं स्वीकृतम् ( द्रष्टव्यम् ४।३।१०५ भाष्यम्, )। मीमांसकमतेन वैयाकरणमहोदयानां दृष्टयां भाल्लविब्राह्मणं तथा शाटचायनब्राह्मणम् सम्प्रति अनुपलब्धौ स्तः—असन्दिग्धरूपेण द्वावपि ब्राह्मणग्रन्थौ प्राचीनतमौ आस्ताम्। याज्ञवल्क्येन प्रोक्तः शतपथब्राह्मणग्रन्थोऽपि, अनेनैव कालेन सम्बद्धः ग्रन्थ आसीत्। भट्टोजिदीक्षितस्य 'ब्राह्मणमिदमर्वाचीनम्' इति कथनं कथमपि न्याय्यं नास्ति। नागोजिदीक्षितस्य 'लघुशब्देन्दुशेखरे याज्ञवल्क्यमर्वाचीनकथनं

सर्वथा तस्याभिमानः कथितः—'**याज्ञवल्क्यानीति कण्वादिभ्यः इत्यण्। ते हि पाणिन्यपेक्षया आधुनिका इत्यभिमानः भाष्ये तु शाटचायनादितुल्यकालत्वात्; याज्ञवल्क्यादिभ्यः प्रतिषेधस्तद्विषयता च नेति वचनमेवारब्धम्।**' ( नागेशः ) अतः दीक्षितपूर्वं दीक्षितपश्चाच्चोभयविधाभ्यां वैयाकरणाभ्यां शतपथब्राह्मणस्य प्राचीनताऽक्षुण्णा एव सिद्धा भवति।

भाषाशास्त्रदृष्टचा पाश्चात्यविद्वत्सु शतपथब्राह्मणस्य कालनिर्णयविषये द्वे मते स्तः। डॉ० बाकरनागेलमहोदयः पञ्चविंशब्राह्मणं तैत्तिरीयब्राह्मणञ्च प्राचीनतमब्राह्मणग्रन्थाभ्यन्तरे मन्यते, ऐतरेयब्राह्मणं शतपथब्राह्मणञ्च तस्य दृष्टचामर्वाचीनौ ग्रन्थौ स्तः। संस्कृतगद्यस्येतिहासप्रतिपादके स्वकीयग्रन्थे डॉ० ओल्डनवर्गमहोदयः प्राचीनगद्यस्योदाहरणं तैत्तिरीयसंहितास्तथाऽर्वाचीन-गद्यस्योदाहरणं शतपथब्राह्मणतः प्रदत्तवान्। एतेषां मतानां विपरीतं मतमस्ति डॉ० कीथमहोदयस्य। अस्य दृष्टचामन्यब्राह्मणापेक्षया शतपथ-ब्राह्मणं प्राचीनतरमस्ति। मतमिदं युक्तितरं प्रतीतं भवति। शतपथब्राह्मणं स्वराङ्कितरूपेण समुपलब्धमस्ति। तैत्तिरीयब्राह्मणं विहाय कोऽप्यन्यः ब्राह्मण-ग्रन्थः स्वराङ्कितः समुपलब्धो न भवति। शतपथब्राह्मणस्य प्राचीनतायाः सूचक-मिदमस्ति। अस्य स्वराङ्कनपद्धतिः सामान्यस्वराङ्कनपद्धत्या भिन्ना एवास्ति। वाजसनेयीसंहितायाः स्वराङ्कनपद्धतिरपि अन्यवैदिकस्वराङ्कनपद्धत्या भिन्ना एवेति। अनेन कारणेनात्राऽपि भिन्नता सम्भावनीया, किञ्च शतपथब्राह्मणस्यो-च्चारणं वाजसनेयीसंहिताया अनुरूपमेवास्ति—यकारस्योच्चारणं भवति जकारः, षकारस्य खकारः, अनुस्वारस्य 'गुँ' पदस्यादौ वकारस्य द्वित्ववकारः (व्व), एवम् ऋकारेण युक्तस्य रेफस्य 'रे' (यथा—'सहस्रशीर्षा' इत्यस्य पदस्य सहस्रशीरेखा ( उच्चारणं भवति ) तथा उष्मयुक्तलकारस्योच्चारणं 'ले' भवति। इयमुच्चारणपद्धतिः माध्यन्दिनशाखायाः स्वविशिष्टताऽस्ति, तदन्त-र्भुक्तत्वेन शतपथब्राह्मणेऽपि स्वरूपमिदं स्वाभाविकमस्ति।

## शतपथब्राह्मणस्य वैशिष्टचम्

अनेकया दृष्टचा ब्राह्मणग्रन्थेषु शतपथब्राह्मणस्य महत्त्वमस्ति। मनोरमया रीत्या वैदिकविधानस्य याज्ञिकव्यवहारस्य च शिक्षार्थमेव शतपथब्राह्मणं प्रवृत्तमिति यावदुपरितनाद् वर्णनात् स्पष्टमेव। अस्मिन् ग्रन्थे यज्ञविद्या स्वपूर्ण-वैभवेन सहालोचकानां सम्मुखे समुपस्थिताऽभवत्। यज्ञीयानुष्ठानस्य क्षुद्रातिक्षुद्र-तरोऽपि विधिविधानस्य विशदवर्णनमस्मिन् ग्रन्थेऽस्ति। यज्ञीयक्रियायै हेतुनिर्देशः, प्राचीनाख्यानानां सरसविवेचनम्, अस्य ब्राह्मणस्योत्कर्षं प्रदर्शयितुं पर्याप्तमस्ति। पुराणेषूल्लिखितमत्स्यावतारस्य बीजमस्यामेव कथायामस्ति (शतप० १।८।१), येन ज्ञातो भवति केन प्रकारेण ननु मानवीयसृष्टचा तेन मत्स्यसाहाय्येन जलौ-घात् त्रातुं समर्थोऽभवत्। जलौघे यदा मानवानां विनाशोऽभवत् तदा पुनः तेन

सञ्चितबीजेनैवास्मिन् भूतले तेषां प्रादुर्भावोऽभवत् । घटनेयं हिमालयस्योपरि घटिताऽऽसीत् । एवंविधस्य प्रलयकारीजलौघस्य घटना कथा प्राचीन 'बाइबिल' नामक धर्मग्रन्थेऽपि मिलति । इयं कथा शतपथब्राह्मणात् नीताऽस्ति अथवा पाश्चात्यदेशे स्वतन्त्ररूपेणाविभूर्ता अभवत् ? इति तु प्रामाण्याभावात् निर्णेतुमशक्योऽस्ति ।

आर्यावर्त्ते आर्याणां प्रसार-वृत्तज्ञाननिमित्तकैतिहासिकघटनाया वर्णनं शतपथब्राह्मणं करोति । अस्य प्रथमकाण्डे (४।१।१०-१६) माथवविदेथस्य तथा तेषां पुरोहितानां गौतमराष्ट्रगणादीनामृषीणामतीवरोचकाख्यायिका प्रदत्ताऽस्ति । शतपथानुसारेण विदेथमाथवः सरस्वतीनद्यास्तटे वासश्चक्रुः । तत्स्थानात् अग्निः वैश्वानरः सर्वं स्थानं भस्मसात् कुर्वन् हिमालयान्निःसृतसदानीराख्यानदीपर्यन्तं समागतः । तत्पश्चात्तत्रैव स्थिरोऽभवत् । राजा पुरोहितेन सहाग्निमनुसरन् तत्रागतः । स्वकीयनिवासविषये जिज्ञास्यमानं नृपमग्निरवदत्—त्वमस्याः सदानीरा( गण्डकी )नद्याः पूर्वीयतटे निवासं कुरु । अनया कथया वैदिकधर्मस्य सारस्वतमण्डलात् पूर्वस्यां दिशि प्रसारस्य सङ्केतो मिलति । सदानीरानद्याः पूर्वाञ्चलप्रदेशः ब्राह्मणेभ्यो निवासायानुपयुक्त आसीत् । ( तत एव हि **प्राचीना बहवो ब्राह्मणाः वद्ध अक्षेत्रतर-निवास-त्रावितरमिब आस्वादितमग्निना वैश्वानरेणेति—शत० १।४।१।१५** ) । अस्मादेवानन्तरात् असौ आर्यप्रदेशोऽभवत् । तदनन्तरमेवास्मिन् प्रदेशे ब्राह्मणा अवसन् । सदानीरायाः पार्श्वस्थभूखण्डे मिथिलायां शतपथब्राह्मणस्य मान्यो राज्ञः जनकस्योल्लेखो मिलति । अस्य जनकस्य प्रधानोपदेष्टा याज्ञवल्क्यमुनिरासीत् । अनेकप्राचीनराज्ञामुल्लेखोऽप्यत्राश्वमेधस्य प्रसङ्गे मिलति । दुष्यन्त-भरतादयः राजानः अश्वमेधयज्ञस्य कर्त्तार आसन्, इत्यादीनामप्युल्लेखो मिलति ( शत० ब्रा० १३।५।४ ) । महाराजजनमेजयस्याऽपि तत्र निर्देशोऽस्ति । स्मर्तव्यमस्ति—तस्मिन् काले मिथिलायाः नृपतीनामुपाधिरेव 'जनकः' इत्यासीत् । शतपथब्राह्मणो याज्ञवल्क्यस्य गुरोः उद्दालक आरुणिमहोदयस्य व्यक्तित्वं पाण्डित्यश्चातीवाकर्षकमस्ति ।

## तैत्तिरीयब्राह्मणम्

'तैत्तिरीयब्राह्मणम्' कृष्णयजुर्वेदीयशाखाया एकमात्रमुपलब्धं ब्राह्मणग्रन्थोऽस्ति । काठकब्राह्मणस्य केवलं नाम एव श्रूयते । अद्यावधिस्तस्योपलब्धिर्नास्ति । तैत्तिरीयब्राह्मणस्य पाठः स्वरयुक्तो मिलति शतपथब्राह्मणमिवेति । फलतः इदमपि नितान्तं प्राचीनं प्रतीतं भवति । परिमाणेऽपीदं न्यूनं नास्ति । काण्डत्रये विभक्तोऽयं ग्रन्थोस्ति । पश्चादृग्वेदीयविभाग इव अष्टकनाम्ना प्रसिद्धोऽभवत् । प्रथम-द्वितीयकाण्डेऽष्टाध्यायाः सन्ति तथा तृतीयकाण्डे द्वादशाध्यायाः सन्ति । अस्यावान्तरखण्डः 'अनुवाक्' इति नाम्ना ख्यातोऽस्ति ।

तैत्तिरीयब्राह्मणस्य प्रथमकाण्डे अग्न्याधान-गवामयन-वाजपेय-सोम-नक्षत्रेष्टि-राजसूयादीनां वर्णनमस्ति । द्वितीयकाण्डे अग्निहोत्र-उपहोम-सौत्रामणी-

बृहस्पतिसव-वैश्यसवादीनां नानासत्राणां विवरणमस्ति। सौत्रामणीसत्रे सोमस्थाने सुरापानस्याऽपि विधानमस्ति। प्रत्यनुष्ठानं ऋग्मन्त्राणामपि सर्वत्रोल्लेखोऽस्ति। अस्मिन् अनेका ऋचः ऋग्वेदात् समुद्धृताः सन्ति। नासदीयसूक्तस्य ( ऋ० १०।१२९ ) मन्त्राणां विनियोगः सामान्योपहोमनिमित्तायैवास्ति। उपनिषदीयब्रह्मतत्त्वस्य सङ्केतोऽत्राविस्मरणीयशब्देषु कृतोऽस्ति। यस्य वेदिमेव पृथिव्याः परमन्तं मध्यञ्च मन्यते ( **वेदिमाहुः परमन्तं पृथिव्याः वेदिमाहुर्भुवनस्य नाभिम्**' ( तै० ब्रा० २।७।४-१० )।

तृतीयकाण्डस्तु अवान्तरकालिका रचना कथ्यते। अस्मिन् काण्डे प्रथमतः नक्षत्रेष्टयाः वर्णनमस्ति। चतुर्थप्रपाठके पुरुषमेधस्योपयुक्तानां पशूनां वर्णनमस्ति। वर्णनमिदं कृष्णयजुर्वेदस्य संहितायामनुपलब्धमस्ति। अस्य काण्डस्यान्तिमाः त्रयः प्रपाठकाः ( १०-१२ ) काठकनाम्नाऽभिहिताः सन्ति। सम्भवतः अंशोऽयं काठकशास्त्रीयब्राह्मणस्य भवेत्तथा केनाऽपि विशिष्टोद्देश्येनात्र सङ्गृहीतो भवेत्। एकादशप्रपाठके ऋषिभरद्वाजः स्वब्रह्मचर्येण मुष्टित्रयमेवालभत्। इदमेव त्रयीविद्या नाम्ना ख्याताऽभवत्। द्वादशप्रपाठके चातुर्होत्र-वैश्वसृज्यागादीनां वर्णनमस्ति। वैश्वसृज्यागस्तु प्रतीकात्मकानुष्ठानमस्ति। अस्मिन् यज्ञे समस्तानां पदार्थानां होमः सम्पन्नो भवति। देवास्तु सहस्रवर्षपर्यन्तमनुष्ठानमिदं कृतवन्तः। तेन ते ब्राह्मणैः सह सायुज्यम्, सालोकता, सार्षिता, समानलोकता चालभन्।

अस्मिन् ब्राह्मणे सामवेदः समस्तानां वेदानां शीर्षस्थानीयो मन्यते। मूर्त्तिस्तथा वैश्यस्योत्पत्तिः ऋग्वेदात्, गतिस्तथा क्षत्रियस्योत्पत्तिः यजुर्वेदात्, ज्योतिस्तथा ब्राह्मणस्योत्पत्तिः सामवेदादिति उक्त्वा सामवेदस्य श्रेष्ठत्वं स्थापितमनेन ब्राह्मणेन। नानाविधेषु यज्ञेषु गवां दक्षिणाया एव सर्वत्र विधानमस्ति। वर्णव्यवस्थायाः पूर्णप्रतिष्ठा सर्वत्र समादरणीयास्ति। अश्वमेधस्तु केवलं क्षत्रियराज्ञे एव विहितोऽस्ति। अस्य वर्णनमत्र ( ३।८।९ ) विस्तरेण विशदतया सहास्ति। वर्णनमिदं शतपथब्राह्मणस्य विवरणेन सह साम्यं भजते। क्षत्रियेषु भेदद्वयं दृश्यते। (१) राज्याधिकारिणः क्षत्रियाः राजपुत्रा इति कथ्यन्ते, अनधिकारिणः क्षत्रियास्तु 'उग्र' इति नाम्ना ख्याता आसन्। शूद्रास्तु यज्ञाय अपवित्राः आसन्। दुग्धोऽपि यच्छूद्रो दोग्धि यज्ञायापवित्रम् एवासीत् ( **'अहविरेव तद् यच्छूद्रो दोग्धीति'** तै० ब्रा० ३।१।३ )। पुरुषमेधाय निर्दिष्टपशूनामालोचनया प्रतीतो भवति यत्तदा सङ्करजातीनामपि समुत्पत्तिरजायत। समाजे स्त्रीणां विशेषः समादर आसीत्। तदर्थमुपयुक्ताभूषणानामपि वर्णनं मिलति। ऋत्विजः यज्ञीयदक्षिणास्वरूपे स्त्रीभ्य आभूषणानां महत्त्वं विशेषरूपेणाददः ( ३।१०।४ )। ब्राह्मणा यज्ञावसरे यज्ञीयविषयोपरि शास्त्रार्थमकुर्वन्। पुराणेषूल्लिखिताऽवतारकथानां बीजमपि समुपलब्धो भवत्यत्र ( १।२ )। वाराहावतारस्य स्पष्टतः सङ्केतो मिलति।

## सामवेदीयब्राह्मणानि

सामवेदस्य ब्राह्मणानां संख्या इतरवेदस्य ब्राह्मणापेक्षयाऽत्यधिकाऽस्ति। सामवेदीयब्राह्मणानां संख्या सायणाचार्यमतानुसारेण निम्नलिखिताऽस्ति—

**'अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिमम्।**
**षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत्॥**
**आर्षेयं देवताध्यायो भवेदुपनिषत् ततः।**
**संहितोपनिषद् वंशो ग्रन्था अष्टावितीरिताः॥'**

(१) प्रौढब्राह्मणम् (ताण्डयपञ्चविंशब्राह्मणम्), (२) षड्विंशब्राह्मणम्, (३) सामविधिः (सामविधानम्), (४) आर्षेयब्राह्मणम्, (५) देवताध्यायः, (६) उपनिषद्ब्राह्मणम्, (७) संहितोपनिषद्ब्राह्मणम्, (८) वंशब्राह्मणम्।

सम्भवतः एतेष्वनेकब्राह्मणेषु एकस्यैव विस्तृतसामब्राह्मणस्य विविधा भागाः भवन्तु, ये कारणवशात् सम्प्रति स्वतन्त्ररूपेणाऽस्माकं सम्मुखे सन्ति। तथाप्येतेषां पारस्परिकसंवलनस्य प्रामाण्यं एतेषां ब्राह्मणानामनुशीलनेनैव स्पष्टो भविष्यति।

### (१) ताण्ड्यब्राह्मणम्

सामवेदस्य प्रधानब्राह्मणमिदमस्ति। ताण्डिशाखातः सम्बद्धमिदं ब्राह्मणमस्ति। ब्राह्मणमिदं पञ्चविंशतिः अध्यायेषु विभक्तमस्ति, तेन पञ्चविंशनाम्ना तथा विशालकायत्वेन महाब्राह्मणनाम्ना ख्यातमस्ति (सायणभाष्ये द्रष्टव्यम्)। यागानुष्ठानेषूद्गातॄणां कार्याणां विपुलमीमांसैव ब्राह्मणमिदं महनीयमकरोत्। अस्य द्वितीय-तृतीयाध्याये त्रिवृत्-पञ्चदश-सप्तदशप्रभृतीनां स्तोमविष्टुतीनां विशदं वर्णनमस्ति।

चतुर्थ-पञ्चमाध्याये गवामयनस्य वर्णनमस्ति। यज्ञोऽयं वर्षपर्यन्तं चलति तथा समस्तानां सत्राणां प्रकृतिरस्ति।

षष्ठाध्यायादारभ्य द्वादशाध्यायपर्यन्तं तथा द्वितीयाध्यायेऽपि ज्योतिष्टोम-उक्थ्य-अतिरात्रादियागानां वर्णनमस्ति। यज्ञोऽयम् एकाहस्याहीनस्य च प्रकृतिः भवति। षष्ठाध्याये ज्योतिष्टोमस्योत्पत्तिः, उद्गात्रा औदुम्बरीशाखायाः स्थापना तथा द्रोणकलशस्य स्थापनाया वर्णनं कृतमस्ति।

सप्तमखण्डस्य षष्ठ-सप्तमाध्यायादारभ्य सप्तमस्य द्वितीयखण्डपर्यन्तं प्रातःसवनस्य माध्यन्दिनसवनस्य च वर्णनमस्ति। वर्णनेऽस्मिन् रथन्तर-बृहत्-नौधस-कालेयादिसामानां विस्तृतं विवरणमस्ति।

अष्टमस्य शेषखण्डादारभ्य नवमाध्यायपर्यन्तं सायनसवनस्य तथा सायंकालिकपूजायाः विधानमस्ति। दशमाध्यायादारभ्य पञ्चदशाध्यायपर्यन्तं द्वादशाहयागानां विधानमस्ति। अस्मिन् विधाने क्रमशः प्रथमदिनादारभ्य दशम-

दिनपर्यन्तस्य विधानस्य तथा विविधानां साम्नां विशिष्टं वर्णनमस्ति। षोडशाध्यायादारभ्योर्नविंशतितमाध्यायपर्यन्तं नानाविधस्यैकाहयागानां विवरणमस्ति।

विंशतितमाध्यायाद् द्वाविंशतितमाध्यायपर्यन्तमहीनयागानां वर्णनमस्ति। अस्मिन् यागे वर्णत्रयाणामधिकारोऽस्ति। दक्षिणा भवति, अन्ते अतिरात्रसंस्था भवति तथाऽनेकयजमानकर्तृको यागो भवति—**'त्रैवर्णिकाधिकारिकः सदक्षिणोऽतिरात्रसंस्थाकः, एकद्वित्रिचतुराद्यनेक-यजमान-कर्तृकः सोमयागोऽहीनः।'**

त्रयोविंशत्यध्यायादारभ्य पञ्चविंशत्यध्यायपर्यन्तं सत्राणां वर्णनमस्ति। सत्रस्य लक्षणमस्ति—**'ब्राह्मणकर्तृकोऽदक्षिणा उभयतोऽतिरात्रसंस्थाकः सोमयागविशेषः सत्रम्।'** सत्रे आहिताग्न्यग्निष्टोमसंस्थायाः सम्पादकत्वस्य न्यूनातिन्यूनं सप्तदशास्तथा अधिकादधिकं चतुर्विंशतितमाः अधिकारिणो भवन्ति। सर्वे यजमानाः भवन्ति। अतः सत्र-जन्यफलानि सर्वान् समानरूपेणैव मिलन्ति। यागेऽस्मिन् दक्षिणा न भवति। यत्र सर्वे यजमानाः भवन्ति तत्र सप्तदशतमाधिकारिपक्षे—एकः गृहपतिः कथ्यते, अवशिष्टषोडशाः ब्रह्मादीनां कार्यं कुर्वन्ति। चतुर्विंशत्यधिकारिपक्षे अष्टौ गृहपतिर्भवेत् तथा षोडश ऋत्विगादीनां कार्यं कुर्वन्ति। अस्मिन्नेवाध्याये त्रयोदशदिवसाभ्यन्तरे समाप्य यज्ञादारभ्य सहस्रसंवत्सरसमाप्यसत्रस्य विशदं विवेचनमस्ति।

ताण्ड्यब्राह्मणे साम्नः सोमयागस्य च वर्णनं मुख्यविषयोऽस्ति सामवेदेन सह सम्बद्धत्वेन सामवेदस्य विशिष्टभेदानां तथा तेषां नामकरणस्य उदयस्य च विवेचनमत्रौचित्यं प्राप्तमेवास्ति। कस्यापि सामनामकरणस्याधारस्तस्य द्रष्टा ऋषिरेव भवति। यथा—वैखानससाममन्त्रस्य द्रष्टा वैखानस ऋषिरेवासीत् (१४।४।७), शार्कराख्यसामस्य द्रष्टा ऋषिः शर्कर आसीत् (१४।५।१४)। यत्र तत्र साम्नां स्तुतिस्तथा साम्नां नामकरणस्येयमेव परिपाटी अस्ति। यथा वात्ससाम्न महत्ताप्रदर्शनार्थं प्राचीनं रोचकञ्चाख्यानमपि प्रदत्तमस्ति। यथा वात्ससाम्न विषये—वत्स-मेधातिथिनामकौ द्वौ ऋषी आस्ताम्। एकदा मेधातिथिः वत्सम् अब्राह्मणस्तथा शूद्रपुत्रं कथयित्वा अनादृतवान्। वत्सः वात्ससाम्ना तथा मेधातिथिः मेधातिथ्यसाम्ना चाग्नेः पार्श्वे ब्राह्मीयसः निर्णयार्थं गतवन्तौ। वत्सः स्वशरीरमग्नौ निपातयत् किञ्चाग्नौ तस्य लोमभग्नोऽपि नाभवत्। (**तस्य लोम च नौषत्**)। तस्मादेव कालात् वात्ससोमः कामनापूरकत्वेन 'कासमनिः' इति नाम्ना विख्यातोऽभवत् (१४।६।६)। अनेनैव प्रकारेण 'विङ्कसाम्ना च्यवनऋषिस्तारुण्यं लब्धवान्'। अस्याऽऽख्यायिकायाः अप्युल्लेखो मिलति (१४।६।१०)।

अस्मिन् ब्राह्मणे यज्ञीयप्रधानविषयमधिकृत्य विभिन्नानां ब्रह्मवादिनां मतस्य बहुशः उल्लेखः समुपलब्धो भवति। (ताण्ड्य० १४।५।८; १५।१२।३)।

विभिन्नाचार्याणां मतस्य खण्डनं कृत्वा स्वाभीष्टमतस्य स्थापनमप्यकरोत्। व्रात्ययज्ञे अग्निष्टोमसाम्न विधानं कस्मिन् मन्त्रोपरि भवतु, प्रसङ्गोऽयं (१८।१।११-१२) दर्शनीयोऽस्ति। कस्याऽपि सम्मतिरस्ति—'देवाः किंवा द्रविणोदायाः (सामः, उत्तरार्चिकः, ७।१।१०) उपरि साम्नः विधानं भवितव्यम्। अन्येः आचार्यास्तु—'अर्दशिगातुवित्तम' (उत्तरा० ७।१।११), सतो वृहतीत्याद्युपरिसामस्थापनस्य पक्षधराः सन्ति। ताण्ड्ये (१७।१।१२) अस्य खण्डनं कृत्वा पूर्वमतस्य स्थापनमस्ति। ताण्ड्यब्राह्मणस्य रचनाकालः यज्ञोत्कर्षस्य प्रतीकोऽस्ति। ताण्डचब्राह्मणे एकस्मिन् स्थाने उल्लेखोऽस्ति (१८।१।९)। एकदा देवेन्द्रः अयज्ञकर्तॄन् यतयः शृगालेभ्यः भक्षणार्थमददात्। अनेनैव कारणेन नागा अपि स्वलौकिकीं समृद्धिं कामयमानाः यज्ञमकुर्वन्।

आर्याणां समकक्षाय व्रात्यानानयतुं ताण्डचब्राह्मणे व्रात्ययज्ञस्य वर्णनमेको महत्त्वपूर्णविषयोऽस्ति। ताण्डचब्राह्मणस्य सप्तदशतमाध्यायस्य प्रथमखण्डे व्रात्यानां वेशभूषायाः, आचारविचारस्य च विषये बहुमूल्यपदार्थानां निर्देशो मिलति। निर्देशोऽयं धार्मिकदृष्टचा विशेषमहत्त्वपूर्णमस्ति। प्रवासी तथा आचारविहीनः आर्य एव व्रात्यनाम्नाऽभिज्ञायते। अस्य व्रात्यस्य चत्वारो भेदाः सायणभाष्ये मिलन्ति। एतेषां दोषमुक्तये विभिन्नयज्ञानां विधानं ताण्ड्ये (१७।१।१) मिलति। एतेषां दोषविमुक्तये पृथग्-पृथग् यज्ञानां विधानमत्र मिलति। व्रात्यानां गृहपतेस्तथाऽन्यजनानां दक्षिणायामपि अत्र पार्थक्यं कृतमस्ति। एषां वस्तूनां सूच्याः परिदर्शनेन व्रात्यसाधनानां परिचयः प्राप्तुं शक्यते। गृहपतेः देया दक्षिणा (१७।१।१४) उष्णीष-प्रतोद-ज्याह्नोड-फलकास्तीर्ण-विपथ-कृष्णश-वास-कृष्ण-श्वेताविचर्म-रजतनिष्कप्रभृतयः सन्ति। अन्येषां व्रात्यानां दक्षिणायामेतेषां वस्तूनां निर्देशो मिलति—रक्तवास-द्वावुपानहौ-शुक्ल-कृष्णाजिनप्रभृतयः (१७।१।१५)।

ब्राह्मणयुगीयभौगोलिकज्ञानायाऽपि अस्य ब्राह्मणस्य प्रकृष्टोपयोगिताऽस्ति। ताण्डचब्राह्मणस्य भौगोलिकक्षेत्रं-कुरुक्षेत्रं तथा सरस्वत्याः मण्डलमस्ति। क्षेत्रमिदं स्वर्ग इव मन्यते (२५ अ०)। आकुरुक्षेत्रात् नैमिषारण्यमभिव्याप्य प्रदेशः यज्ञभूमेः स्वरूपे उल्लिखितोऽस्ति। रोहितकुलीयसामस्य व्याख्यायां (१४।३।१३) भरतैः सह विश्वामित्रस्य रोहित (यमुना) नद्यास्तटभूविजयस्योल्लेखोऽपि मिलति। अथ प्रतापी यशस्वी च कर्णः नकुलश्च महाभारतीय-कथानुसारेण रोहितकजनान् विजित्य रोहितनद्यावधि समग्रां भूमिं जिगाय। विनशनः (२५।१०।१) प्लक्षः, प्रास्रवणश्च (२५।१०।१६) यमुना तथा कारपञ्चवः (२५।१०।१६) इत्यादीनां भौगोलिकस्थानानामत्र निर्देशो मिलति।

## ( २ ) षड्विंश-ब्राह्मणम्

षड्विंशब्राह्मणस्य विभाजनं प्रकारद्वयेन समुपलब्धो भवति—( १ ) प्रपाठकस्तथा खण्डः, ( २ ) अध्यायस्तथा खण्डः। जीवानन्दसंस्करणे सम्पूर्णग्रन्थे पञ्चखण्डा एव सन्ति किञ्च तिरुपतिसंस्करणे ग्रन्थोऽयं षडध्यायेषु विभक्तमस्ति। अस्यैवान्तरभागः खण्डनाम्नाऽभिहितोऽस्ति। अस्मिन् प्रारम्भिकपञ्चमाध्यायपर्यन्तं याज्ञिकविषयस्यैव वर्णनमस्ति, किञ्चान्तिमभागस्य विषयः पूर्वभागापेक्षया भिन्न एवाऽस्ति। ब्राह्मणमिदं पञ्चविंशब्राह्मणस्यैव भागोऽस्ति। तात्कालिकधार्मिकधारणानामपि विशिष्टः सङ्केतो मिलति। आभिचारकालिकालिनाम् ऋत्विजां वेशवर्णनमपि मिलति—**'लोहितोष्णीषा लोहितवाससो निवीता ऋत्विजः प्रचरन्ति' अ० ४, ख० २२।** महाभाष्ये ( १।१।२७; २।२।२४ ) तथा काव्यप्रकाशस्य पञ्चमोल्लासे—**'लोहितोष्णीषा ऋत्विजः प्रचरन्ति।'** पूर्वोक्तवाक्यस्यैव सङ्क्षिप्तसङ्केतः प्रतीतो भवति। ब्राह्मणेभ्यः सन्ध्यावन्दनकालः अहोरात्रस्य सन्धिकाले एव दर्शितः—**'तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते'** ( ५।५।४ )। एवंविधस्यान्योपादेयतथ्यानां सङ्कलनमपि कर्त्तुं शक्यते।

## ( ३ ) सामविधानब्राह्मणम्

अन्यतमेदं ब्राह्मणं सामवेदस्याऽस्ति। अस्य विषयः ब्राह्मणान्तरेषूपलब्धेभ्यो विषयेभ्यः नितान्तं भिन्नमस्ति। ब्राह्मणेऽस्मिन् अभिचाराय, ग्रामान्निष्कासनाय, शत्रूणां विनाशाय, धनार्जनाय, नानाविधोपद्रवाणां शमनाय च सामगानेन सह कतिपयस्य विशिष्टानुष्ठानस्य विधानमस्ति। अस्य ब्राह्मणस्य वर्णनशैली न पुनरुक्तिप्रधानाऽस्ति न चाप्यत्यन्तसंक्षिप्ताऽस्ति। सप्तमशतकीयेन कुमारिलभट्टमहोदयेन सामवेदस्याष्टानां ब्राह्मणानां नामनिर्देशोऽपि कृतः, येषु अन्यतमेदं ब्राह्मणमस्ति।

ब्राह्मणेऽस्मिन् प्रकरणत्रयमस्ति। प्रथमप्रकरणे कृच्छ्रः, अतिकृच्छ्रादयः स्मृतिषु बहुशः वर्णितव्रतानां वर्णनं समुपलब्धो भवति। पुराणेषु वर्णितव्रतानां मूलमपि ब्राह्मणेऽस्मिन् समुपलब्धं भवति। यथा जले स्थित्वा कस्यापि विशिष्टमन्त्रस्य जपेन विशिष्टफलस्य प्राप्तिर्भवति। अस्मिन् ब्राह्मणे काम्यप्रयोगाणां तथा विविधप्रायश्चित्तानां विधानमपि वृद्धिं प्राप। एतेषां विषयाणामेव ग्रहणं धर्मसूत्रेषु तथा कालान्तरे धर्मशास्त्रेषु विशेषरूपेणोपलब्धं भवति। सामविधानमस्यैव वैशिष्ट्यस्य परिचायकमस्ति।

सामविधाने ( २।६।१४ ) कमपि शत्रुं ग्रामान्निष्कासनस्य, चतुष्पथि चिताभस्मानयनाय तथा शत्रुगृहेऽथवा शय्योपकरणे तत्प्रक्षेपणस्य वर्णनमस्ति। अनेन प्रकारेण सुवर्णप्राप्तिनिमित्ताय मांसबलिना तथा सामगायनेन सह मणिभद्रयक्षविशेषस्य पूजाविधानमस्ति ( ३।३।३ )। पुराणेषु प्रसिद्धः रुद्रानुचराणां शान्तयेऽप्यत्र सामविधानं कौतूहलवर्द्धकोऽस्ति। विनायकस्य तथा स्कन्दस्य च

शान्तये सामद्वयेन, तथा रुद्रस्य विष्णोश्च शान्तये सामद्वयान्येन विधानं विहितमस्ति ( १।४।६-१९ )। शत्रोः मारण विधानस्याप्यत्रोल्लेखो मिलति ( २।५। ४ )। राजयक्ष्मा प्राणहन्ता व्याधिरासीत्, तदुपशमनस्यापि विधेर्वर्णनमुपलब्धं भवति ( २।४।९ )।

तृतीयपरिच्छेदे ऐश्वर्याय, अभिनवगृहे प्रवेशाय आयुष्यवर्द्धनाय च बहुविधानामनुष्ठानानां वर्णनं विभिन्नसामगायनेन सह कृतमस्ति। भूत-प्रेत-गन्धर्व-अप्सरा-देवतादिभ्यः साम्नां प्रयोगोऽपि दर्शनीयोऽस्ति ( ३।७।६ )। यो हि पुरुषः कमपि मन्त्रं सकृदेव श्रुत्वा तस्य पाठं कर्त्तुं शक्यते सः 'श्रुतिनिगादी' भवति। एतस्यै सिद्धयेऽपि सामगानस्य विधानमस्ति।

ब्राह्मणग्रन्थोऽयं धर्मसूत्राणां पूर्वपीठिकाऽस्ति। धर्मसूत्रेषु सविस्तरेण वर्णिताः दोषापराधप्रायश्चित्तादिविषया ब्राह्मणेऽस्मिन् मुख्यतया प्रतिपादिताः। तदा समाजोऽयं चतुर्षु वर्गेषु विभक्त आसीत्। शूद्रया सह विवाहः सर्वथा निषिद्ध आसीत्। येभ्यः पापाचरणेभ्यः प्रायश्चित्तस्य विधानमत्रास्ति तान् दृष्ट्वा तात्कालिकसमाजस्य स्थितेः परिचयः प्राप्तुं शक्यते। अनेन प्रकारेण विचित्रविधानस्य परिचयाय ग्रन्थोऽयं स्ववैशिष्ट्यं प्रतिपादयति।

## ( ४ ) आर्षेयब्राह्मणम्

सामवेदस्य चतुर्थोऽयं ब्राह्मणग्रन्थः। ग्रन्थोऽयं त्रिषु प्रपाठकेषु तथा द्वयशीतितमेषु खण्डेषु विभक्तोऽस्ति। ब्राह्मिदं सामवेदायानुक्रमण्याः कार्यं करोति। अस्मिन् ब्राह्मणे सामोद्भावकानामृषीणां नाम तथा सङ्केतो मिलति। सामगायनस्य वैज्ञानिकानुशीलननिमित्ताय ब्राह्मणमिदं महदुपादेयमस्ति। सामवेदस्य वर्णनसमये सामयोनिऋचस्तथा सामसु विभेदः प्रदर्शितः। ब्राह्मणमिदं सामगायनस्य प्रथम-प्रचारकाणामृषीणां वर्णनं करोति। तेनेदमैतिहासिकदृष्ट्याऽपि महत्त्वपूर्णमस्ति। सामगानस्य विषयं दुष्करं दुर्बोधश्चास्ति। अस्याध्ययनं विशिष्टाध्यवसायस्य, मनोयोगस्य तथानुशीलनस्य च परिणामं भवितुं शक्यते। अस्मिन् कार्ये माण्डूक्यादिसामवेदीय-शिक्षाणां गम्भीराध्ययनमपेक्षितमस्ति। अस्मिन् कार्ये आर्षेयब्राह्मणमसन्दिग्धरूपेण विशेषोपकारकं लाभप्रदश्चास्ति। अस्य नाम्नैव कार्यमपि स्पष्टमेवेति।

## ( ५ ) देवताध्यायब्राह्मणम्

दैवतब्राह्मणमिदं सामवेदीयब्राह्मणेषु लघ्वाकारमस्ति। अस्मिन् ग्रन्थे खण्डत्रयमस्ति। प्रथमखण्डे देवतानां वर्णनमस्ति। प्रथमकण्डिकानुसारेण सामदेवतानां नाम्नः निर्देशोऽनेन प्रकारेणास्ति—अग्निः, इन्द्रः, प्रजापतिः, सोमः, वरुणः, त्वष्टा, अङ्गिरस्, सरस्वती तथेन्द्रादयः। एतेषां देवतानां प्रशंसायां गेयसाम्नां विशिष्टनामान्यप्यददस्मिन् ब्राह्मणे। द्वितीयखण्डे छन्दसां देवताः तथा तेषां वर्णानां विशेषवर्णनमस्ति। तृतीयखण्डे छन्दसां निरुक्तयः सन्ति। एताभ्यः

निरुक्तिभ्यः कतिपयाः निरुक्तयः यास्केन स्वकीयनिरुक्तग्रन्थे गृहीताः ( ७।१२। १३ )। खण्डोऽयं भाषाशास्त्रीयदृष्ट्याऽतीव महत्त्वपूर्णोऽस्ति। अत्र छन्दसां नाम्नः निर्वचनमतीवप्रामाणिक-रीत्या सम्पादितमस्ति। गायत्रीछन्दसः नाम्नः अर्थोऽस्ति—स्तुत्यर्थक-'गै'-धातोः निष्पन्नः देवतानां प्रशंसकात् तथा वेदसमुदायस्य गानकर्त्तुर्ब्राह्मणात्समुत्पन्नो छन्दः। अनेन प्रकारेणान्येषां छन्दसामपि निर्वचनं समुपलब्धो भवति।

## ( ६ ) उपनिषद्ब्राह्मणम्

ब्राह्मणमिदं दशसु प्रपाठकेषु विभक्तमस्ति। अस्मिन् द्वौ ग्रन्थौ सम्मिलितौ स्तः।

### ( क ) मन्त्रब्राह्मणम्

अस्यैवापरं नाम छान्दोग्यब्राह्मणमप्यस्ति। अस्मिन् ब्राह्मणे द्वौ प्रपाठकौ स्तः। प्रतिप्रपाठकमष्टौ खण्डानि सन्ति। ब्राह्मणमिदं गृह्यसंस्कारेषु प्रयुक्तमन्त्राणामेकं सुष्ठु सङ्ग्रहमस्ति। इमे एव मन्त्राः खादिरगृह्यसूत्रे तथा गोभिलगृह्यसूत्रेषु यथावसरं प्रयुक्ताः भवन्ति। शङ्कराचार्यस्तु ब्रह्मसूत्रभाष्ये मन्त्रब्राह्मणात्तथा छान्दोग्योपनिषदः उद्धरणप्रदानकाले इमावुभौ ग्रन्थौ ताण्ड्यशाखातः सम्बद्धावकथयत्। शङ्कराचार्यस्य निम्नलिखितान्युद्धरणानि सन्ति—

ताण्डिनाम् ( मन्त्रसमाम्नायः )—देवसवितः (मन्त्र ब्रा० १।१।१), ब्रह्मसूत्र० ३।३।२५ अस्ति। ताण्डिनां श्रुतिः—'अश्व इव रोमाणि' ( छा० उप० ८।१३।१ ) ब्रह्म० भा० ३।३।२६। ताण्डिनामुपनिषदि—'स आत्मा तत्त्वमसि' ( छा० उप० ६।८।७ ) ब्रह्मसूत्रभाष्यम् ३।३।३६।

आर्षेयब्राह्मणं तथा देवताध्यायब्राह्मणमुभे इमे ब्राह्मणे एकस्यैव मूलभूतब्राह्मणस्य भागौ प्रतीतौ भवतः। यतोऽत्र प्रथमे सामगानामृषीणां तथाऽपरे तत्सम्बद्धदेवतानां विवरणं प्रदत्तमस्ति। देवताध्यायस्य ४।४ सूत्रेणोभयोः सम्पृक्तभावस्य स्पष्टप्रमाणं समुपलब्धं भवति। सूत्रमस्ति —**'स्वस्ति देवऋषिभ्यश्च'**। अस्य सूत्रस्य सायणभाष्ये—**'देवा ऋषयश्च ये आर्षेय देवताध्यायाभ्यां प्रतिपादितास्तत्सकाशाच्च स्वस्ति भवति।'** अत्रोभयोर्ब्राह्मणयोः परस्परस्यैकाङ्गीभावस्य प्रमाणमुपलब्धं भवति।

एतेषां ब्राह्मणानां २५७ मन्त्राः सन्ति। गृह्यसूत्रादेकादश मन्त्रा सभाष्यं सङ्कलिताः सन्त्यस्मिन् ब्राह्मणे। प्रथमप्रपाठके विवाह-गर्भाधान-सीमन्तोन्नयन-चूडाकरण-उपनयन-समावर्त्तनेभ्यस्तथा गोवृद्धये मन्त्राः सन्ति। द्वितीयप्रपाठके भूतबलि-आग्रहायणीकर्म-पितृपिण्डदान-देवबलिहोम-दर्शपूर्णमास-आदित्योपस्थान-नवगृहप्रवेश-स्वस्त्ययन-प्रसादप्राप्त्यादीनां मन्त्राः सन्ति। यद्यप्यन्यस्मादपि संहिता-ग्रन्थात् मन्त्राः अत्र सङ्कलिताः सन्ति तथापि एतेषां मन्त्राणां भाषा सरला, आकर्षका तथा प्रसादपूर्णा अस्ति ( १।२।२ )।

'इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती ।
दीर्घायुरस्तु मे पतिः शतं वर्षाणि जीवतु ॥' १।३।८।९ ।

दाम्पत्यजीवनस्य हार्दिकैकतायै द्रष्टव्यमस्ति मन्त्रोयऽमिति ।

गुणविष्णोः भाष्यं मन्त्राणां गूढभावं सङ्क्षिप्तरूपेण प्रकटीकरणे सक्षममस्ति । भाष्यकारेण सर्वत्र ऋषि-देवता-च्छन्द-मन्त्राणां विनियोगः दर्शितः । तेन हि अर्थस्य महत्त्वं दर्शयितुं **'स्थाणुरयं भारहारः किलाभूत्'** ( आर्षे० ब्रा० ३, निरु० ११८ ) मन्त्रमुद्धरन् स्वभाष्यारम्भः कृतस्तथा तदनन्तरमेव ऋष्यादीनां महत्त्वं दर्शयितुं—**'यो ह वा अविदितार्षेयच्छन्दो दैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वाच्छति**.......' इत्यादिः ( आर्षे० ब्रा० १।१ ) समुद्धृतम् । सर्वत्र तेनार्थं स्पष्टीकुर्वता ऋषि-च्छन्द-देवतादिविनियोगानां संक्षिप्ततया कथनस्य स्तुत्यः प्रयासो विहितः । सायणस्य भाष्यं गुणविष्णोः भाष्यस्यानुवर्त्तनमेव करोति ।

## ( ख ) छान्दोग्योपनिषद्ब्राह्मणम्

अस्य ब्राह्मणस्यान्तिमाष्टप्रपाठकाः प्रसिद्धच्छान्दोग्योपनिषदस्ति । अस्यानेकानि संस्करणानि भाषान्तरेषु बभूवुः । अस्योपनिषदः विशेषवर्णनमग्रिमप्रकरणे भविष्यत्येवेति ।

## ( ७ ) संहितोपनिषद्ब्राह्मणम्

ब्राह्मणमिदं सामगायनस्य विवरणप्रदाने स्वकीयगौरवमावहति । संहितायाः उपनिषद् अर्थात् संहितायाः रहस्यप्रतिपादकब्राह्मणमिदं सामवेदीयब्राह्मणेषु वैशिष्ट्यं स्थापयति । संहितायाः सामान्यार्थो भवति 'मन्त्राणां समुदायः' । किञ्चात्रास्य तात्पर्यमस्ति—'साम्नः गायनानां संहिता ।' यतः अत्राऽपि सातत्यं विद्यमानमस्ति । अस्मिन्नेवाऽर्थे शब्दोऽयमत्र व्यवहृतोऽस्ति । ब्राह्मणेऽस्मिन् पञ्चखण्डानि सन्ति । प्रतिखण्डं सूत्रेषु विभक्तमस्ति । प्रथमखण्डे त्रिविधगानसंहितायाः स्वरूपस्य फलस्य च विवरणमस्ति । संहिता त्रिविधा भवति । ( क ) देवहूसंहिता, ( ख ) वाक्शबहूसंहिता, ( ग ) अमित्रहूसंहिता इति । आसु प्रथमसंहिता कल्याणकारिणी भवति तथाऽन्तिमे द्वे चामङ्गलप्रदे स्तः । एतदतिरिक्तमपि संहितात्रयमस्ति यासां, नाम-फलयोर्विवरणमस्य खण्डस्यान्तिमे भागे प्रदत्तमस्ति । द्वितीये तृतीये च खण्डे गानसंहितायाः विधि-स्तोम-अनुलोम-प्रतिलोमादिस्वराणां व्यापकं प्रतिपादनमस्ति । विषयोऽयं सातिशयः वैज्ञानिकोऽस्ति । सामगायनमर्मस्योद्घाटनमत्र विस्तृतेन सह कृतमस्ति । एतेषां खण्डानामभिज्ञता सामगायनविधानाय नितान्तमावश्यकमुपादेयञ्चास्ति । तृतीयखण्डस्यान्तिमे भागे गुरु-शिष्ययोर्योग्यतायाः विवेचनं तथा पात्रे दानस्य भूयसी प्रशंसा कृताऽस्ति । चतुर्थ-पञ्चमखण्डयोर्विषयः पूर्वोक्ततथ्यस्य पूरकोऽस्ति । अतः सामगायनरहस्यस्य परिचयार्थमिदं ब्राह्मणमद्वितीयमस्ति । अस्य ग्रन्थस्य

टीकाकर्त्तुः द्विजराजभट्टस्येयं संस्तुतिः यथार्थ एवेति—**'सामब्रह्मरसज्ञानां विशुद्धज्ञानहेतवे ।'**

अस्य ग्रन्थस्य टीकाद्वयस्य प्रकाशनमभवत् । ( क ) सायणभाष्यं प्रथमखण्डपर्यन्तमेवोपलब्धमस्ति । ( ख ) विष्णुभट्टात्मजद्विजराजभट्टेन रचितं भाष्यम् । सायणाचार्यस्य भाष्यं संक्षिप्तमस्ति किञ्च द्विजराजभाष्यं तु सविशेषेण विस्तृतमस्ति । टीकाभिराभिः सहास्यैकं विशुद्धसमीक्षणात्मकं संस्करणं तिरुपतिनगरात्प्रकाशितमभवत् (१९६५ ई०) । अस्य विद्वान् सम्पादकः डा० के० रा० शर्मा ग्रन्थस्यास्य भूमिकायां समालोचनात्मकटिप्पणीषु अनेकेषां प्रमेयानां महत्त्वपूर्णां व्याख्यां कृतवान् । ब्राह्मणमिदमतीतकालेऽतीवप्रसिद्धमासीत् । निरुक्तकारः स्वग्रन्थे ( २।४ ) **'विद्या ह वै ब्राह्मणमाजगाम ।'** इति मन्त्रस्य भावानुवादः मनुस्मृतौ (२।११४) मनुना कृतः । अनेन ज्ञातो भवति यद्ब्राह्मणमिदं निरुक्तात् मनुस्मृतेश्च प्राचीनतममस्ति नात्र लेशतोऽपि सन्देहवकाशः ।

## ( ८ ) वंशब्राह्मणम्

स्वरूपेणेदं ब्राह्मणं लघ्वाकारमस्ति । ग्रन्थेऽस्मिन् खण्डत्रयमेवाऽस्ति । १८७३ खीष्टाब्दे बर्नलमहोदयेन ब्राह्मणमिदं प्रकाशितम् । १८९२ खीष्टाब्दे कलकत्तानगरीतः उषानाम्नि पत्रिकायां ब्राह्मणमिदं सत्यव्रतसामश्रमीमहोदयेन प्रकाशितम् । १९६५ खीष्टाब्दे केन्द्रीयसंस्कृतविद्यापीठ-तिरुपतिनगरीतः ब्राह्मणग्रन्थोऽयं प्रकाशितोऽभवत् । ग्रन्थेऽस्मिन् सामवेदीयाचार्याणां वंशपरम्परा सङ्कलिताऽस्ति । प्राचीनानाम् ऋषीणां परिचयप्राप्त्यर्थमिदं ब्राह्मणमतीवोपयोगि भवति ।

## ( ९ ) जैमिनीयब्राह्मणम्

जैमिनि-शाखाया ब्राह्मणमिदं सम्पूर्णरूपेणाद्यावधि नोपलब्धमासीत् । छिन्न-भिन्नस्वरूपेणांशमात्रमेवास्य ब्राह्मणस्य मिलतिस्म । डा० आर्टलमहोदयेनांशस्य प्रकाशनममेरिकातः कृतम् । डा० कैलेण्डमहोदयोऽस्य विशेषांशान् जर्मनभाषायामनूद्य प्रकाशनमकरोत् । डॉ० रघुवीरः अस्य महत्त्वपूर्णस्य सम्पूर्णब्राह्मणस्य प्रकाशनं खीष्टस्य १९५४ ईशवीये नागपुरतः अकरोत् । ब्राह्मणेषु शतपथ इव ब्राह्मणमिदं विपुलकायमस्ति । यागानुष्ठानरहस्यं ज्ञातुं नितान्तोपादेयं महत्त्वपूर्णञ्चेदमस्ति । जैमिनीयोपनिषद्ब्राह्मणमप्यस्य महतः ब्राह्मणग्रन्थस्यैवांशमात्रमेवास्ति । ग्रन्थोऽयं 'गायत्र्युपनिषद्' इति नाम्ना प्रख्यातोऽस्ति । अस्य ग्रन्थस्य सम्पादनं डा० ओर्टलमहोदयेन रोमनलिप्यां कृतम् ( द्रष्टव्यम्—Journal of American Oriental Society, part 16, 1894 ) नागराक्षरेष्वपि १९२१ ईसवीये लाहौरनगरातः ग्रन्थोऽयं प्रकाशितोऽभवत् ।

## अथर्ववेदीयब्राह्मणम्

### गोपथब्राह्मणम्

अथर्ववेदस्य केवलमेकमेव ब्राह्मणमस्ति, यस्य नाम गोपथब्राह्मणमस्ति। अस्य द्वौ भागौ स्तः। १. पूर्वगोपथब्राह्मणम्, २. उत्तरगोपथब्राह्मणञ्चेति। प्रथमग्रन्थे पञ्चप्रपाठकाः सन्ति, द्वितीयग्रन्थे षट्प्रपाठकाश्च सन्ति। प्रपाठकानां विभाजनं कण्डिकास्वभवत्। तत्र कण्डिकानां संख्याः २५८ वर्त्तते।

ब्राह्मणसाहित्ये ग्रन्थोऽयमुत्तरकालिका रचना मन्यते। अस्मिन् ब्राह्मणेऽथर्ववेदस्य महिमा एव स्वभावतः गीयते। अथर्ववेद एव सर्वेष्वपि ब्राह्मणेषु सर्वश्रेष्ठः अग्रगण्यश्च मन्यते। अथर्वादिव वेदत्रयाणामुत्पत्तिः कथ्यते। न केवलमेतदेव प्रत्युत, ऊँकारस्यापि येन विश्वमिदं सर्वं जातमुत्पत्तिरपि, अथर्ववेदादेवाभवत्। पूर्वगोपथब्राह्मणस्य प्रथमप्रपाठके ओंकारस्य तथा गायत्र्याः महिम्नः सुष्ठु वर्णनमस्ति। द्वितीयप्रपाठके ब्रह्मचारिणो नियमानां विशिष्टवर्णनमस्ति। प्रत्येकं वेदस्याध्ययनाय द्वादशाब्दपर्यन्तं कालो निर्धारितोऽस्ति। तृतीयप्रपाठके यज्ञस्य चतुर्णामृत्विजां कार्यकलापस्य वर्णनमस्ति। चतुर्थप्रपाठके ऋत्विजां दीक्षायाः विशिष्टवर्णनमस्ति। पञ्चमप्रपाठके प्रथमतः संवत्सरसत्रस्य वर्णनमस्ति। तदनन्तरमश्वमेध-पुरुषमेध-अग्निष्टोमादियज्ञानामपि विवरणमस्ति। उत्तरगोपथब्राह्मणस्य विषयवर्णनं न तावदेवं सुव्यवस्थितमस्ति। तथापि बहुविधानां यज्ञानां तथा तत्सम्बद्धाख्यायिकानामुल्लेखेनायापि भागोऽयं पूर्वापेक्षयाऽधिकं रोचते विद्वद्भ्यः।

गोपथब्राह्मणस्य रचयिता निश्चयेन गोपथऋषिरेवास्ति। अथर्ववेदीयानाम् ऋषीणां नामावल्यां गोपथऋषेरपि नाम विराजत एव। किञ्चान्यवेदानामृषीणां नामावल्यामस्य ऋषेर्नाम नायाति। अस्य ब्राह्मणस्य देशकालगतपरिचयः अनुमानेनैव ज्ञातुं शक्यते। अस्मिन् निर्दिष्टदेशे कुरुपाञ्चाल-अङ्गमगध-काशी-कोशल-शाल्वमत्य-वशउशीनरादीनां नामान्यायान्ति ( गोपथ० पू० २।१० )। अस्य रचयिता मध्यदेशीयः प्रतीतो भवति। अथर्ववेदीयप्रथममन्त्रस्योल्लेखः 'शन्नो देवीरभिष्टयः' इत्यनेन मन्त्रेणैव करोति। येन तस्य पिप्पलादशाखा-भविष्यतीत्यनुमीयते। यास्केन स्वनिरुक्ते गोपथब्राह्मणस्य मन्त्रमुद्धृतम्। यथा—**'एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धम्'** ( निरु० १।१६; गोपथब्रा० २।२।६; २।४।२। इत्यनेनोद्धरणेन सिद्धो भवति यद् अयं ग्रन्थः निरुक्ताद् पूर्वकालिक इति। ब्लूमफील्डमहोदयस्तु ब्राह्मणमिदं वैतानसूत्रादपि अर्वाचीनं मन्यते। किञ्च डा० कैलेण्डमहोदयस्तथा कीथमहोदयौ ग्रन्थमयं प्राचीनतरं मन्येते। विक्रमशतकस्य सहस्राब्दपूर्वकालिकेयं रचनाऽस्ति, इति सम्भाव्यते तथा विक्रमात् सहस्राब्दपूर्वमेव गोपथस्य सत्ता बभूवेति निश्चयेन वक्तुं शक्यते।

ग्रन्थेऽस्मिन् कतिपयाभिनवविचाराणां सङ्कलनमस्ति। अस्यान्तिमे खण्डे अथर्वस्य विपुला प्रशंसा मिलति। ब्रह्मणा कमलोपरि ब्रह्मणः उदयम् (पृ० १६), ब्राह्मणा नैव गानं कर्त्तव्यम्, न नृत्यं कर्त्तव्यम्, माम्लागृधोऽपि न भवितव्यम्, (**'तस्माद् ब्राह्मणो नैव गायेन्न नृत्येन्न माम्लागृधः'** २।२१)। वेदमन्त्रस्योच्चारणात्पूर्वमोंकारस्योच्चारणं कर्त्तव्यम्। कस्याप्यनुष्ठानस्य पूर्वं वारत्रयमाचमनं करणीयम् (१।३९)। ऋग्वेदादनेकमन्त्राः समुद्धृताः सन्ति। किञ्च मन्त्राणामृषीणां विषये पार्थक्यं दृश्यते।

भाषाशास्त्रदृष्टया गोपथब्राह्मणस्य सङ्केता महत्त्वपूर्णाः सन्ति। **'परोक्षप्रिया हि देवाः प्रत्यक्षद्विषः।'** इत्यादीनां शब्दानां निर्वचनस्य प्रसङ्गेष्वपि अत्रानेकोल्लेखाः मिलन्ति। उदाहरणार्थम्—(१) 'वरुणः' इत्यस्य शब्दस्य व्युत्पत्तिः वरणाद्भवति। राजा वरणेन भवति (**'तं वा एतं वरणं सन्तं वरुण इत्याचक्षते'** गोपथ० पूर्व० १।६) (२) 'मृत्युः' इत्यस्य शब्दस्य व्युत्पत्तिः 'मृत्यु'-शब्दात् भवति। (३) 'अङ्गिरा' इत्यस्य शब्दस्य व्युत्पत्तिः 'अङ्गिरस्' इति शब्दाद्भवति। (४) 'दीक्षितः' इत्येतस्य शब्दस्य व्युत्पत्तिः 'धीक्षितशब्दाद्भवति (**'श्रेष्ठां धियं क्षियतीति तं वा एतं धीक्षितं सन्तं दीक्षित इत्याचक्षते'** गोपथ० पूर्व० ३।१९)। एताः व्युत्पत्तयः भाषाशास्त्रदृष्टया स्वकीयं महत्त्वं स्थापयन्ति। बहूनामुल्लेखोऽवान्तरकालिकनिरुक्तग्रन्थेषु कृतोऽस्ति।

## ब्राह्मणानि—वेदानामविभाज्याङ्गानि

ब्राह्मणान्तर्गते त्रिप्रकारकाणां ग्रन्थानां समावेशोऽस्ति। (१) ब्राह्मणम्, (२) आरण्यकम्, (३) उपनिषदश्चेति। **'मन्त्रब्राह्मणयोर्वेदनामधेयम्।'** आपस्तम्बस्यानेन सूत्रानुसारेण मन्त्र इव ब्राह्मणोऽपि वेदनामधेयम्। निघण्टुनिरुक्तकारौ वेद इव ब्राह्मणं मन्येते। दार्शनिकसूत्राणां भाष्याणाञ्च रचयिता पाणिनि-कात्यायन-पतञ्जलयोऽपि तथैव ब्राह्मणं वेदस्याविभाज्यमङ्गं मन्यन्ते। मनुनाऽपि मन्त्रेण सह ब्राह्मणमपि वेद एव कथ्यते।

निघण्टुग्रन्थे वेदादिव ब्राह्मणादपि शब्दाः सङ्गृहीताः सन्ति। यास्कोऽपि स्वनिरुक्ते संहिताग्रन्थादिव ब्राह्मणग्रन्थादप्युद्धरणानि समाविशति। पाणिनिस्तथा कात्यायनोऽपि स्वरवैदिकीप्रक्रियायां स्वकीयसूत्रेषु 'वेदे' 'छन्दसि' इत्यादिपदानां प्रयोगं कृत्वा ब्राह्मणमसन्दिग्धरूपेण श्रुतिः कथनं प्रति स्पष्टरूपेण सङ्केतं करोति। महर्षिपाणिनिरपि 'छन्दसि' इत्यत्र मन्त्रब्राह्मणयोः समावेशमकरोत्। **'चतुर्थ्यर्थे बहुलं छन्दसि'** (पाणिनि सू० २।३।६२) इत्यनेन सूत्रेण मन्त्रब्राह्मणात्मकवेदेऽपि षष्ठीविधानमकरोत्। मन्त्रादेव 'पुरुषमृगश्चन्द्रमसः' तथा 'पुरुषमृगश्चन्द्रमसे' इत्यादीनामुदाहरणानां सङ्कलनं कृत्वा षष्ठीविधानमकरोत्। बहुलग्रहणात् **'चन्द्रमसेरुदमीरात्र्यै'** इत्यादौ षष्ठ्याभावोऽपि दृश्यते। **'या खर्वेण पिबति तस्यै खर्वः'** इत्यत्र **'षष्ठ्यर्थे चतुर्थीति वाच्यम्'** इत्यनेन

'तस्याः' इति षष्ठीस्थाने 'तस्यै' इति चतुर्थी समुपलब्धा भवति । **'यां मलवद् वाससं सम्भवन्ति, यस्ततो जायते सोऽभिशस्तो, यामरण्ये तस्यैतेनो, या स्नाति तस्या अप्सु मारको, याऽभ्यङ्क्त तस्यै दुश्चर्मा'** एवंविधान्यनेकब्राह्मणवचनानि महाभाष्ये मिलन्ति । कथनस्य तात्पर्यमिदमस्ति यद् 'छन्दसि' इति कथनेन मन्त्रब्राह्मणयोरुभयोर्ग्रहणमत्र पाणिनेरभीष्टमस्ति । तेन हि सः ब्राह्मणानि वेदानामविभाज्याङ्गानि मन्यते ।

कतिपयेषु सूत्रेषु पाणिनिः भाषाविषयकाणां नियमानां निर्देशं कृतवान् । भाषातः भिन्नो भवति वेदः । फलतः एवंविधानां सूत्राणां प्रत्युदाहरणे सः मन्त्र-ब्राह्मणात्मकाभ्यां ग्रन्थाभ्यां समानरूपेणोद्धरणानि दत्तवान् । 'प्रथमायाश्च द्विवचने भाषायाम्' ( पा० सू० ७।२।२८ ) एवंविधमेव सूत्रमस्ति । युष्मद्-शब्दस्य प्रथमाद्विवचने भाषायां 'युवाम्' इति रूपो भवति, किञ्च भाषाभिन्ने तस्य रूपं 'युवम्' भवति । अन्यदप्युदाहरणानि यथा—'युवं सुतरामविश्वना ( वाज० सं० २०।७६ ), युवं वै ब्रह्मणौ भिषजौ ( शत० ब्रा० ८।३।२।१ ); युवमिदं निस्कुरुतम्' ( ऐत० ब्रा० २।२८ ) । स्पष्टमस्ति पाणिनेः सम्मतौ मन्त्रब्राह्मणयोर्मध्येन केनापि प्रकारकेण भेदमस्ति । उभावपि वेदस्यैवाभिन्न-मङ्गेऽस्तः ।

महर्षिपाणिनिः स्वयमेव वेदभाण्डागारस्यानुशीलनं कृत्वा स्वरवैदिकीप्रक्रियायाः स्वकीयसूत्राणां प्रणयनं कृतवान् । स्वरवैदिकीप्रक्रिया एव तस्य वेद-विषयकस्य विस्तृताध्ययनस्य तथा स्वरविश्लेषकगम्भीरज्ञानस्य प्रत्यक्षसूचिकाऽस्ति । पाणिनिः एकस्मिन् सूत्रे ( ३।१।१२३ ) निपातनात् सिद्धशब्दानां सूची अददत् । अत्र निष्टर्क्य-देवहूय-प्रणीय-उन्नीयादिशब्दान् छन्दसि सिद्ध एव मन्यते । परिगणितेषु शब्देषु कतिचिच्छब्दास्तु संहितायामेवोपलब्धाः भवन्ति । कतिचित्तु ब्राह्मणग्रन्थेषु मिलन्ति एतेषु षट्शब्दास्तु ऋग्वेद-यजुर्वेदयोर्मध्ये नियमतः मिलन्त्येव । यथा—'देवहूयः' ( ऋ० ७।८५।२ ), खन्यः ( तै० सं० ७। ४।१३।१ ), ब्रह्मवाद्यः ( तै० सं० २। ५, ८, ३ ), उच्छिष्यः ( मै० सं० ३। ९, २ ), प्रणीयः (मै० स० ३, ९, १) तथा उपचाय्य पृडम् (काठ० ११, १) । अस्मिन्नेव सूत्रे निर्दिष्टशब्देषु 'स्तर्याध्वर्यः' अप्यस्ति । महाभाष्ये प्रदत्तास्य व्याख्यानुसारेण काशिकाकारस्तथा भट्टोजिदीक्षितः पदच्छेदः स्तर्या+अध्वर्यः करोति तथा स्त्रीलिङ्गस्तर्याशब्दमस्मिन् निपाते परिगणति पुल्लिङ्ग-स्तर्यस्तु नैव । किञ्च स्त्रीलिङ्ग-'स्तर्या' शब्दः कस्मिन्नपि वैदिकग्रन्थे समुपलब्धो नास्ति । शतपथब्राह्मणमेवैवंविधः वैदिकग्रन्थोऽस्ति यत्र पुल्लिङ्ग-'स्तर्यः'-शब्दस्य प्रयोगो मिलति । तथा सहैव तत्र नञ्समासप्रयुक्तः 'अस्तर्यः'-शब्दस्यापि प्रयोगो मिलति । उभावपि पुल्लिङ्गे एव प्रयुक्तौ स्तः । अत्रापि स्त्रीलिङ्गे अप्रयुक्त-मेवास्ति । शतपथब्राह्मणे ( २, २, २, १० ) अनेन रूपेणोद्धरणमस्ति—

**'हन्तेदम् अमृतम् अन्तरात्मन्नादधामहै, त इदमनृतम् अन्तरात्मन्नाधाय अमृता भूत्वा स्तर्यान् सपत्नान् मर्त्यानभिभविष्याम इति ।'**

सायणोऽपि स्वभाष्येऽस्मिन्नेवार्थं प्रति सङ्केतयति—

**'अमृतरूपाग्निधारणेन यस्मादाहिताग्निः अहिंस्यः, तस्मात् विवदमानोऽसौ अनाहिताग्निम् अभिभवितुं शक्नोति इत्यर्थः ।**

सायणस्तु स्तर्यस्यार्थं अहिंस्यः मनुते । पूर्वोक्तस्य पाणिनिसूत्रानुशीलनस्य फलमिदमस्ति—

( क ) स्तर्याध्वर्यस्य पदच्छेदः स्तर्य + अध्वर्यः कर्त्तव्यः न तु स्तर्या + अध्वर्यः ।

( ख ) पाणिनिः शतपथब्राह्मणेन पूर्णपरिचितोऽस्ति । फलतः संहिता-ब्राह्मणयोरुभयोः ग्रन्थयोः सङ्केतः, असौ 'छन्दस्'-शब्देन स्पष्टतः करोति । अनेन सिद्धो भवति—शतपथब्राह्मणं वेदस्याविभाज्यमङ्गमस्ति ।

पतञ्जलिना महाभाष्ये निम्नलिखितनिर्देशः कृत इति—

( १ ) **स्थानिवदादेशोऽनल्विधौ** ( १।१।५६ ) अस्य व्याख्यायाम्—**'वेदेऽपि सोमस्य स्थाने पूतिकातृणान्यभिषुणुयादित्युच्यते ।'** अत्र ब्राह्मणवचनं वेद इति कथ्यते ।

( २ )'एकः पूर्वापरयोः' ( १।३।८४ ) अस्य सूत्रस्योपरि भाष्यमस्ति—**वेदे खल्वपि बसन्ते ब्राह्मणोऽग्निहोत्रादिभिः क्रतुभिर्यजते ।'** अत्र ब्राह्मणवाक्यं वेदशब्देनाभिहितमस्ति ।

( ३ ) **'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति ।'** वाक्यमिदं श्रुतिमन्त्रभागेऽनुपलब्धमेवाऽस्ति । स्पष्टतो वाक्य-मिदं ब्राह्मणवाक्यमस्ति ।

( ४ ) **'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः, तस्माद् ब्राह्मणेन न म्लेच्छितवै, नापभाषितवै । म्लेच्छो ह वा एष यदपशब्दः ।'** महाभाष्यकारेण श्रुत्युपस्थापितवाक्यमिदमस्ति, किञ्च संहितायां कुत्रापि उपलब्धं नास्ति ।

( ५ ) पस्पशाह्निके पतञ्जलिना ब्राह्मणस्य चत्वारि वाक्यानि वेदशब्देनो-द्धृतानि, यथा—**'योऽग्निष्टोमेन यजते य उ एनं वेद'** इत्यादिवाक्यानि तैत्तिरीय-ब्राह्मणस्यैव सन्ति ( ३।११।७।२ ) ।

एवं विधोदाहरणेन ज्ञातो भवति यद् भाष्यकारः वेदशब्देन ब्राह्मणानामपि ग्रहणं करोति ।

महर्षिकणादोऽपि ब्राह्मणं परमेश्वरकर्तृकमेव मन्यते । **'बुद्धिपूर्वानाम-कृतिर्वेदे'** ( वैशेषिकसूत्रम् ६।१।१ ) । अस्य तात्पर्यमस्ति 'स्वर्गकामो यजेत' इत्यादिवाक्यानां रचना सर्वथा निर्दोषः स्वतन्त्रः सर्वज्ञपुरुषेणाऽभवत् । अपरस्मिन् सूत्रे—**'ब्राह्मणे संज्ञाकर्मसिद्धिलिङ्गम्'** (वै० सू० ६।१।२) । अस्य सूत्रस्य तात्पर्यं-

मस्ति, यथा—लोके पिता स्वपुत्रस्य नाम विष्णुमित्रादि करोति तथैव ब्राह्मण-भागे 'उद्भिदा यजेत्, अभिजिता यजेत्' इत्यादि वाक्येषूद्भिदादिनामकरणं सर्वज्ञपरमेश्वरेणैव भवति। फलतः ब्राह्मणभागोऽपि 'परमेश्वरकर्त्तृक एवास्ति' इति कणादमुनेर्मान्यताऽस्ति।

न्यायसूत्रकारः गौतमस्तथा भाष्यकारः वात्स्यायनश्च वेदेष्वनेकान् दोषान् दर्शयित्वा तेषां विधिवत् प्रामाणिकरूपेण सामाधानं कृतवन्तौ। इमे द्वे कर्मणी—दोषारोपणं समाधानञ्चेति ब्राह्मणवाक्योपरि एवेति। गौतमस्तु वेदस्याप्रामाण्यार्थं दोषत्रयाणामुद्भावनं कृतवान्—**'तदप्रामाण्यमनृत-व्याघात-पुनरुक्तदोषेभ्यः'** (न्या० सू० २।१।५)। तद्यथा (क) 'अनृतदोषः' 'पुत्रकामनया पुत्रेष्टिं यज्ञं कर्त्तव्यम्' यज्ञे कृते सत्यपि पुत्रप्राप्तिर्न भवति, इति तु अनृतदोषोऽस्ति। (ख) व्याघातदोषस्यापि सत्ता वेदेऽस्ति। उदिते सूर्ये होतव्यम्, सूर्योदयात्पूर्वमेव होतव्यम्। व्यतीतेऽपि सूर्यस्य वेलायां होतव्यम्—एवमत्र आदेशोऽस्ति, किञ्चास्या देशस्य तत्रैव निन्दाऽपि कृताऽस्ति। (ग) पुनरुक्तिदोषः—प्रथमम् ऋचं वारत्रयम्, अन्तिममृचञ्चाऽपि वारत्रयमुच्चरितव्यम्—नियमोऽयं पुनरुक्ति-दोषस्योदाहरणमस्ति।

अस्य दोषारोपणस्य समाधानमपि तत्रैव प्रदत्तमस्ति। यथा—

(क) **'कर्मकर्त्तृसाधनवैगुण्यात्'** (न्या० सू० २।१।५८) अस्योपरि भाष्यम्। पुत्रेष्टियागानां यथाविधि अनुष्ठानेन पुत्रादेर्फलस्य प्राप्तिर्भवत्येव। कर्मकर्तुः साधनानां वैगुण्येन फलाभावो भवति। तेन वेदस्याप्रामाण्यं नैव सिद्ध्यति।

(ख) **'अभ्युपेत्यकाले दोषवचनात्'** (२।१।५९) अत्र भाष्यं दर्शनीयम्। उदिते, अनुदिते एवं समयाध्युषिते—हवनाय पक्षत्रयं निर्दिष्टमस्ति। अत्र सङ्कल्पितपक्षे दृढनिष्ठाप्रकटनाय पक्षान्तरे दोषदर्शनमस्ति। अतोऽत्र व्याघात-दोषाभाव इति।

(ग) सामधेनीऋचः एकादश सन्ति। तां पञ्चदशसंख्याकं कर्त्तुमेवान्तिमा ऋक् वारत्रयेणावृत्तिं भजते। **'अनुवादोपपत्तेश्च'** (न्या० सू० २।१।६०) सूत्रेऽस्मिन् स्पष्टरूपेण कथितमस्ति यत् कस्यापि प्रयोजनसिद्धये कृताऽवृत्तिः अनर्थका न भवति। यथा—'तथा च मन्त्राभिवादः—**'इदमहं भ्रातृव्यं पञ्च-दशावरेण वाग्वज्रेणापबाधे योऽस्मान् द्वेष्टि यं च वयं द्विष्मः।'** अतोऽत्रापि पुनरुक्तदोषाभाव इति।

उपनिषदां मीमांसा ब्रह्मसूत्रे उपन्यस्ताऽस्ति।

ब्रह्मसूत्रञ्चेदमनेकत्रोपनिषदमिमां श्रुतिनाम्नैवाभिहितः। यथा—

(क) **परात्तु तच्छ्रुतेः** (ब्र० सू० २।३।४९) सूत्रेऽस्मिन्नविद्यावस्थायामेव जीवस्य कर्त्तृत्वं विचारितम्।

( ख ) **'सूचकश्च हि श्रुतेराचक्षते हि तद्विदः'** ( ब्र० सू० ३।२।४ )। सूत्रस्याशयोऽस्ति—भविष्ये यद्भविष्यति तेषां साधु-असाधुकर्मणां सूचकः नियमेन भवति। अस्य तथ्यस्य सूचकः श्रुतिवाक्यमस्ति। अस्य तथ्यस्य सूचकः श्रुतिवाक्यमस्ति। वाक्येऽस्मिन् छान्दोग्योपनिषदः ( ५।२।९ ) निर्देशः शङ्कराचार्येण कृतः। यथा—

**'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।**
**समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने॥'**

( छान्दोग्योप० ५।२।९ )

( ग ) **'तदभावो नाडीषु तच्छ्रुतेरात्मनि च'** (ब्र० सू० ३।२।७)। सूत्रेऽस्मिन् बादरायणेन सुषुप्तिविषयकश्रुतीनामुल्लेखः कृतः। शाङ्करभाष्ये छान्दोग्य० ८।३।३; बृहदा० २।१।१९; कौषी० ४।१९; बृहदा० २।१।१७ इत्यादिविभिन्नवाक्यानामुद्धरणं दत्त्वाऽस्य विषयस्य पूर्णमीमांसा कृताऽस्ति। अनेन सिद्धो भवति यदेते ऋषयः ब्राह्मणग्रन्थान् वेदस्याविभाज्याङ्गम् अमन्यन्त।

महर्षिजैमिनेः ग्रन्थनिर्माणस्योद्देश्य एव धर्ममीमांसा वर्त्तते। तेनास्यादिमः सूत्रमस्ति—'अथातो धर्मजिज्ञासा' तथाऽस्य धर्मस्य स्वरूपं ब्राह्मणेष्वेव प्रतिपादितमस्ति।

**'शेषे ब्राह्मणशब्दः'** ( मीमांसा सू० २।१। ६० )। अत्र भाष्यकारशवरस्वामिनः स्पष्टं कथनमस्ति—

**'मन्त्राश्च ब्राह्मणञ्च वेदः। तत्र मन्त्रलक्षण उक्ते परिशेषसिद्धत्वाद् ब्राह्मलक्षणमवचनीयम्।'**

जैमिनिना धर्मस्य लक्षणमुक्तम्—**'चोदनालक्षणोऽर्थो धर्मः'** ( जै० सू० १।१।२ )। विधिवाक्यमिदमस्ति तथा विधिवाक्यं तु ब्राह्मणे एवोपलब्धं भवति। फलतो विभिन्नानां भारतीयदार्शनिकानां दृष्टौ ब्राह्मणग्रन्थः वेदानामविभाज्याङ्गमस्ति।

मनुस्मृत्या अनुशीलनेन ज्ञातो भवति यद् ब्राह्मणग्रन्थः श्रुतिरेवास्ति। यथा—

( १ ) **'धर्मं जिज्ञास्यमानानां प्रमाणं परमं श्रुतिः'** (मनु० १।१३)। अत्र शतपथब्राह्मणस्यापीयमुक्तिः दर्शनीया—**'अग्निहोत्रं जुहुयात्'** (श० ब्रा० २।७)।

( २ ) **'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः** ( म०स्मृ० २।१०)। अत्र श्रुतिवेदयोरभेदत्वं प्रतिपादितमस्ति। **'विविधाश्चोपनिषधीरात्मसंसिद्धये श्रुतीः'** ( म० स्मृ० ६।२९ )। अत्र मनुना उपनिषदं श्रुतिः प्रोक्तम्। उपनिषदस्तु ब्राह्मणस्यैवाङ्गमस्ति।

( ३ ) **'उदितेऽनुदिते चैव समयाध्युषते तथा।**
**सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥'**

( मनु० २।१५ )

मनुरत्र—'उदिते जुहोति, अनुदिते जुहोति' ब्राह्मणवाक्यमिदं श्रुतिपदेनाभिधीयते।

( ४ ) मनुस्मृतौ ब्राह्मणेषु प्रयुक्तानां विशिष्टशब्दानां स्थाननिर्देशपूर्वकः प्रयोगो मिलति। युद्धे विजयिने सैन्याय मनुरादिशति—'उद्धार' 'स्वराज्ञे देहि। उद्धारशब्दस्यार्थो भवति—'उत्तमं द्रव्यमुद्धृत्य दद्युरि'त्यर्थः (मेधातिथिः), 'उद्ध्रियते इति उद्धारो जितधनादुत्कृष्टधनं सुवर्णरजतकुप्यादिकं राज्ञे समर्पणीयम्' ( कुल्लूकभट्टः )।

( ५ ) **'राज्ञश्च दद्युरुद्धारमित्येषा वैदिकीश्रुतिः'** ( ७।७९ )। अत्र वैदिकीश्रुतिशब्दात् तात्पर्यम् ऐतरेयब्राह्मणस्यानेन वाक्येनास्ति—**'इन्द्रो वै वृत्रं हत्वा............समहान् भूत्वा देवता अब्रवीद् उद्धारं म उद्गरत'** ( ऐ० ब्रा० ३।२१)।

**निष्कर्षः**—ब्राह्मणग्रन्थस्तु वेदस्य व्याख्यानं कथ्यते। ब्राह्मणग्रन्थेष्वपि मन्त्राणामिवापौरुषेयता विद्यमानाऽस्ति। अत उभावपि श्रुतिरेवास्तः। ब्राह्मणसाहित्यमिदं नितरां विशालं व्यापकञ्च वर्त्तते। यागानुष्ठानानां प्रतिपादनं सर्वोत्तमरीत्या अत्रैव कृतं दृश्यते। प्रस्तौति तद् यज्ञयागविषयकं विवरणं साङ्गोपाङ्गम्। अतः ब्राह्मणान्येतानि वेदानामविभाज्याङ्गानि वर्त्तन्ते, इति शम्।

---

# अष्टमोऽध्यायः

## आरण्यकम्

### सामान्यपरिचयः

आरण्यकोपनिषदौ ब्राह्मणानां परिशिष्ट-ग्रन्थ इव स्तः। एतेषु ग्रन्थेषु ब्राह्मणग्रन्थानामिव सामान्यप्रतिपाद्यविषयेभ्योभिन्नविषयाणां प्रतिपादनं सर्वत्र विद्यमानं प्राप्यते। सायणाचार्यसम्मतौ ग्रन्थस्यास्यारण्ये पाठ्यत्वेन 'आरण्यकम्' इति नामकरणं सार्थमेवेति। यथा—

**'अरण्याध्ययनादेतद् आरण्यकमितीर्यते।**
**अरण्ये तदधीयीतेत्येवं वाक्यं प्रवक्ष्यते॥'**

(तै० आ० भा०, श्लो० ६)

एतेषां ग्रन्थानां मननस्थानमरण्यस्यैकान्तशान्तवातावरणमेवोपयुक्तमासीत्। ग्रामाभ्यन्तरेऽस्याध्ययनं कदापि लाभप्रदमुचितञ्चोपादेयं नासीत्। आरण्यकस्य मुख्यप्रतिपाद्यविषयः न केवलं यज्ञ एवास्ति, प्रत्युत यज्ञ-यागाद्यभ्यन्तरे विद्यमानस्याध्यात्मिकतथ्यस्य मीमांसाप्यस्ति। यज्ञीयानुष्ठानेन सह तदनन्तर्गतदार्शनिकविचारोऽप्यस्य मुख्यविषयोऽस्ति। संहिता-मन्त्रेषु यस्या विद्यायाः सङ्केतमात्रमेवोपलब्धं भवति तस्या विश्लेषणञ्चात्रास्ति।

आरण्यकस्य महत्त्वं सर्वत्र स्वीकृतमस्ति। महाभारतस्य कथनमस्ति यदौषधिभ्यो यथाऽमृतमुद्धृतं तथैव वेदेभ्यः सारं समुद्धृत्यारण्यकं प्रणीतम्। यथा—

**'आरण्यकञ्च वेदेभ्य ओषधिभ्योऽमृतं यथा।'**

(महाभा० १।२६५)

मन्त्रब्राह्मणात्मकवेदस्य यस्मिन्नंशे प्राणविद्यायाः प्रतीकोपासनायाश्च विषयस्य वर्णनमस्ति तदेवांशः आरण्यकं कथ्यते। आरण्यकमपि ब्राह्मणस्यैवांशोऽस्ति। तस्य विशिष्टताप्रदर्शनाय 'रहस्यब्राह्मणम्' इति नाम्ना ख्यातोऽस्ति। निरुक्तस्य टीकायां (१।४) दुर्गाचार्येण 'ऐतरेयके रहस्यब्राह्मणम्' इति कथयित्वा ऐतरेयारण्यकस्योद्धरणं दत्तम् (२।२।१)। अनेन रहस्यब्राह्मणारण्यकयोरेकतायाः सिद्धिर्भवति। आरण्यकस्य नामान्तरं रहस्यमप्यस्ति, (गोपथ० ब्रा० २।१०)। अस्य कारणमिदं प्रतीतो भवति यदारण्यकं यज्ञीयगूढरहस्यस्य प्रतिपादनं करोति तथा कर्मकाण्डस्य दार्शनिकव्याख्याऽपि प्रस्तौति। मुख्यतः ब्रह्मविद्यारहस्यशब्देनाभिहिताऽस्ति। विषयविवेचनस्य दृष्ट्याऽरण्यकोपनिषदोः साम्यमस्ति। अतो बृहदारण्यकादिग्रन्थाः उपनिषच्छब्देनापि व्यपदिश्यन्ते। किञ्च वर्णनविषयसाम्यत्वेनाऽपि तयोर्मध्ये किञ्चित् पार्थक्यमपि परिलक्ष्यते। आरण्यकस्य मुख्यविषयः प्राणविद्या तथा प्रतीको-

पासनाऽस्ति । उपनिषदां वर्ण्यविषयः निर्गुणब्रह्मणः प्राप्त्युपाय एवाऽस्ति । सत्यपि भेदावगमे यत्किञ्चित् पार्थक्यमस्ति तेनैव हि द्वावपि ग्रन्थौ रहस्यग्रन्थौ स्तः ।

## विषयविवेचनम्

तैत्तिरीयब्राह्मणस्यारम्भिकांशे कालस्य पारमार्थिक-व्यावहारिकरूपयोः निदर्शनमतीव सुष्ठुरूपेण कृतमस्ति । कालस्तु निरन्तरं प्रवहत्येव । अखण्ड-संवत्सरस्वरूपेऽस्यैव कालस्य परिदर्शनमस्माकं भवति । व्यावहारिकः कालस्तु-अनेकस्तथाऽनित्योऽस्ति । व्यवहाराय तस्य नाना-खण्ड-मुहूर्त-दिवारात्रि-पक्ष-मासादि कृते सत्यपि वस्तुतः कालस्तु एकरूपः एकाकार एव तिष्ठति । अस्मिन् प्रसङ्गे तस्य तुलना तया महानद्या सह कृताऽस्ति याऽक्षय्यस्रोतसा सदा प्रवाहिता भवति, नानानद्यः मिलित्वा तां सञ्चारयन्ति । यथा—

**'नदीव प्रभवात् काचिद् अक्षय्यात् स्यन्दते यथा ।**
**तां नद्योभिसमायान्ति सोरुः सती न निवर्त्तते ॥'**

( तैत्ति० आ० १।२ )

अस्यारण्यकस्य तृतीय-चतुर्थानुवाके ऋतूणां स्वरूपस्य वर्णनमतीव वैज्ञानिकं मार्मिकञ्चास्ति । ग्रन्थेऽस्मिन्ननेकेषां ज्ञातव्यतथ्यानां सङ्कलनमस्ति । यथा वर्षर्त्तौ रोगाणामुत्पत्तिस्तथा पाण्डुरोगस्य प्रसारः ( अदुःखो दुःखचक्षुरिव तथा पीत इव दृश्यते )। पञ्चमहायज्ञानां विवेचनम्, तथा स्वाध्यायाध्ययनस्य मीमांसाऽतीवरमणीयास्ति ( २।१० ) । अन्यत्र च पुण्योपार्जनस्य पापवर्जनस्य चालङ्कारिकभाषायां निदर्शनमस्ति ( १०।११ ) ।

प्राणविद्यायाः महत्त्वप्रदर्शनमारण्यकस्य विशिष्टो विषयः प्रतीतो भवति । आरण्यकस्य शान्तवातावरणमस्यै विद्योपार्जनाय नितान्तमुपादेयं भवति । ऐतरेयारण्यके अस्य समधिकं महत्त्वपूर्णवर्णनमस्ति ( २।१-३ ) । आरण्यकः स्वकथनस्य सम्पुष्टौ ऋग्वेदीयमन्त्राणामुद्धरणं ददाति ( ऋ० ६।१६४।३१; १।१६४।१८ ) । अनेन प्राणविद्यायाः दीर्घकालिकपरम्परायाः परिचयो मिलति । सर्वेष्विन्द्रियेषु प्राणानां श्रेष्ठता आख्यायिकाद्वारेण प्रतिपादिताऽस्ति । यथा—

**'सोयमाकाशः प्राणेन बृहत्या विष्टब्धः, तद्यथामाकाशः प्राणेन बृहत्या विष्टब्धः, एवं सर्वाणि भूतानि आपिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येवं विद्यात् ।'** ( ऐत० आर० २।१।६ )

प्राणाः सर्वत्र व्याप्ताः सन्ति । **'सर्वं ह्रीदं प्राणेनावृतम् ।'** प्राणः विश्वस्य धारकोऽस्ति । अतस्तदेव तस्य रक्षकोऽस्ति । अतएव मन्त्रे 'प्राणम्' 'गोपा' इति कथ्यते । प्राण एवायोः कारणमस्ति । यथा—

**'यावद्धयस्मिन् शरीरे प्राणो वसति तावदायुः ।'**

( कौषी० उ० १२ )

प्राणेनैवान्तरिक्षस्य वायोश्च सृष्टिरभवत् । प्राणः पिताऽस्ति । अन्तरिक्ष-वायू तस्य सन्ततिरस्ति । यथा कृतज्ञपुत्रः स्वकीयेन सत्कर्मणा पितरं प्रीणाति

तथैवान्तरिक्षवायूरूपौ द्वौ पुत्रावपि प्राणस्य सेवायां संलग्नौ स्तः। अन्तरिक्षस्यानुसरणं कृत्वैव प्राणिमात्रस्य सञ्चरणं भवति तथाऽन्तरिक्षसाहाय्येनैव लोकाः दूरे कथितान् शब्दानपि शृण्वन्ति। अनेन रूपेणान्तरिक्षं प्राणस्य परिचर्यां करोति। वायुरपि शोभनगन्धेन प्राणं पिप्रीषति। तद्यथा--

**'प्राणेन सृष्टावन्तरिक्षं च वायुश्च। अन्तरिक्षं वा अनुचरन्ति। अन्तरिक्षमनुशृण्वन्ति। वायुरस्मै पुण्यं गन्धमावहति। एवमेतौ प्राणपितरं परिचरतोऽन्तरिक्षं च वायुश्च।'** ( ऐत० आरण्य० )।

ध्यानाय प्राणस्य विभिन्नानां गुणानामुल्लेखः विस्तृतरूपेण कृतोऽस्ति। तत्तद्रूपेण प्राणस्य ध्यानं कर्त्तव्यम्। तत्तद्रूपेणोपासनां कृते सति फलान्यपि तद्रूपेणैवोपासकाः प्राप्नुवन्ति।

प्राण एवाहोरात्रस्वरूपे कालात्मकोऽस्ति। दिवसः प्राणरूपमेवास्ति रात्रिश्चापानरूपमस्ति। प्रातः प्राण एव सर्वाणीन्द्रियाणि शरीरे प्रसारयति। प्रतननमिदं दृष्ट्वा लोकाः कथयन्ति 'प्राताथि' अर्थात् प्रकर्षरूपेण प्राणः विस्तृतोऽभवत्। अनेनैव कारणेन दिवसारम्भकालः यस्मिन् प्राणस्य प्रसरणं दृग्गोचरीभवति सः 'प्रातः' इति कथ्यते। दिवसावसाने इन्द्रियेषु सङ्कोचं परिदृश्यते। अनेनैव कारणेन तं कालं सायमित्युच्यते, तस्मिन् काले कथयति 'सामगात्' इति। विकासहेतुना दिवसः प्राणरूपोऽस्ति तथा सङ्कोचनकारणेनैव रात्रिः अपानमस्ति। प्राणस्य ध्यानमनेन प्रकारेणाहोरात्ररूपे कर्त्तव्यम्।

प्राण एव देवतात्मकोऽस्ति। वाचि अग्निदेवताया निवासोऽस्ति। चक्षुः सूर्योऽस्ति। चन्द्रमा मनसो जातः, श्रोत्रमेव दिशः सन्ति। प्राणे आसां देवतानां ध्यानं कर्तव्यम्। 'हिरण्यादन् वेद' नामकः एकः ऋषिः प्राणमेवंविधमजानात् तथा देवतारूपेणैव प्राणस्योपासनामकरोत्। अस्याः उपासनायाः विपुलं फलं तेनोपलब्धम् ( ऐत० आरण्य० १०३-१०४ )।

प्राण एव ऋषिरूपमस्ति। ऋग्वेदीयमन्त्राणां द्रष्टारो बहवः ऋषयः आसन्। तेषां सर्वेषामृषीणां भावना प्राणे एव कर्त्तव्यम्, यतः प्राण एव एतेषां मन्त्रद्रष्टॄणामृषीणामाकारे विद्यमानोऽस्ति। प्राण एव शयनकाले वाक् चक्षुरादीन्द्रियाणां निगरणकरणेन 'गृत्सः' इति कथ्यते तथा रतिकाले वीर्यस्य विसर्गजन्यमदोत्पन्नकरणेनापानमेव मदोऽभवत्। अतः प्राणापानयोः संयोगमेव 'गृत्समदः' इति कथ्यते। प्राण एव विश्वामित्रोऽस्ति। यतोऽस्याः प्राणदेवताया निखिलं विश्वं भोग्यमस्ति, तेनासौ विश्वस्य मित्रमस्ति—**'विश्वः मित्रं यस्य असौ विश्वामित्रः।'** प्राणं दृष्ट्वा वागाद्यभिमानिनो देवता अकथयन्—'अयमेवास्मासु 'वामः' वन्दनीयः, भजनीयः सेवनीयश्च भवति, यतोऽयमस्माकं श्रेष्ठोऽस्ति। अनेन हेतुना देवेषु वामत्वेन प्राण एव वामदेवोऽस्ति। प्राण एवात्रिः, यतोऽयं प्राण एव जगदिदं पापात्त्रातुं समर्थोऽस्ति ( **'सर्वपाप्मनोऽत्रायत इति**

**अत्रिः'** )। प्राण एव भरद्वाजोऽस्ति। गतिसम्पन्नत्वेन मनुष्यदेहः 'बाज' इति नाम्ना ख्यातोऽस्ति। प्राणस्त्वस्मिन् शरीरे प्रविश्य तस्य सततं रक्षां करोति। अतोऽयं प्राणः 'विभ्रद्वाज' इति कथ्यते। अनेनैव कारणेन प्राणोऽयं भरद्वाज इति कथ्यते। देवताः प्राणं दृष्ट्वा कथितवन्तः—त्वं वशिष्ठोऽसि, यतोऽस्मिन् शरीरे इन्द्रियाणां निवासस्य कारणं प्राण एवास्ति, अतोऽयं वशिष्ठोऽस्ति। अनेन निर्वचनेन सिद्धो भवति यत् प्राण एव ऋषिरूपेऽस्ति। अतः प्राणे एतेषाम् ऋषीणां भावना कर्त्तव्या तथा तद्रूपोपासनाऽपि कर्त्तव्येति। अस्मिन्नारण्यके प्राणस्य विषये एतत्पर्यन्तं कथितमस्ति—**'सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव। प्राण ऋच इत्येव विद्यात्।'** ( ऐत० २।२।१० )।

अनेन प्रकारेणारण्यकेषु तेषां महनीयाध्यात्मिकतत्त्वानां सङ्केतः उपलब्धो भवति। यस्य पूर्णविकासः उपनिषत्सु दृश्यते।

## ऐतरेयारण्यकम्

ऋग्वेदस्य द्वयोरारण्यकयोर्मध्येऽन्यतममिदमारण्यकमस्ति। इदमारण्यकमेतरेयब्राह्मणस्यैव परिशिष्टभागोऽस्ति। अस्मिन् पञ्चारण्यकानि सन्ति। एतान्यारण्यकानि पृथक्-पृथक् ग्रन्थरूपेण मन्यन्ते।

प्रथमारण्यके महाव्रतस्य वर्णनमस्ति। महाव्रतमिदमेतरेयब्राह्मणस्य प्रपाठकत्रयस्य गवामयनस्यैवेकोंऽशोऽस्ति। द्वितीयप्रपाठकस्य प्रथमत्रिष्वध्यायेषु उक्थ-निष्कैवल्यशस्त्र-प्राणविद्या-पुरुषप्रभृतीनां विवेचनमस्ति। चतुर्थ-पञ्चम-षष्ठाध्यायेषु ऐतरेयोपनिषदस्ति। तृतीयारण्यकस्यापरनामास्ति संहितोपनिषद्। अस्मिन्नुपनिषदि संहिता-पदक्रमपाठानां वर्णनं तथा स्वरव्यञ्जनादिस्वरूपस्य च विवेचनमस्ति। अस्मिन् खण्डे शाकल्यस्य माण्डुकेयस्य च मतानामुल्लेखोऽस्ति। अंशोऽयमसन्दिग्धरूपेण प्रातिशाख्यनिरुक्ताभ्यां प्राचीनतरोऽस्ति। व्याकरणविषयकस्याप्ययमंशः नितान्तं प्राचीनविवेचनमस्ति। एतेनास्यारण्यकस्य समयस्य पूर्वसीमा विक्रमपूर्वसहस्रशतकमिति मन्तव्यं भवति। एतादृश्या कतिपयतुलनयाऽऽरण्यकमिदं यास्कपूर्ववर्त्ति इति मन्यन्ते। यतोऽस्मिन्नंशे निर्भुज-प्रतृण्ण-सन्धिसंहितादयः पारिभाषिकशब्दाः प्रयुक्ताः सन्ति। चतुर्थारण्यकमतीव लघ्वाकारमस्ति। अस्मिन् आरण्यके महाव्रतस्य पञ्चमेऽहनि प्रयोक्तव्या महानाम्न्यः ऋचः सन्ति। अन्तिमारण्यके निष्कैवल्यशस्त्रस्य वर्णनमस्ति। एतेष्वारण्यकेषु प्रथमत्रयस्य रचयिता ऐतरेयः, चतुर्थस्याश्वलायनः तथा पञ्चमस्य शौनको मन्यन्ते। शौनकोऽयं बृहद्देवतायाः निर्माताऽस्ति। सर्वसन्दर्भं विभाव्य डॉ० कीथमहोदयः आरण्यकमिदं निरुक्तादर्वाचीनं मत्वाऽस्य समयं विक्रमपूर्वं षष्ठशतकं मन्यते। किञ्च यथार्थतः आरण्यकमिदं निरुक्तात्प्राचीनतरमस्ति। आरण्यकमिदं महिदास-ऐतरेयस्य प्रथमत्रयाणामारण्यकानां कर्तृत्वेन ऐतरेय-ब्राह्मणस्यैव समकालिकं सिद्धं भवति।

## शाङ्खायनारण्यकम्

ऋग्वेदस्येदं द्वितीयमारण्यकमस्ति । अस्मिन् पञ्चदशाध्यायाः सन्ति । आतृतीयाध्यायात् षष्ठाध्यायपर्यन्तं कौषीतकि-उपनिषदिति कथ्यते, तथा सप्तमाष्टमावध्यायौ संहितोपनिषदिति कथ्येते । एतद्भिन्नाध्यायेषु आरण्यकस्य मुख्यविषयाणां प्रतिपादनमस्ति ।

प्रथम-द्वितीयाऽध्यायोः महाव्रतस्य वर्णनमुपलब्धमस्ति । वर्षावधौ सम्पाद्यमानस्य गवामयननामकयज्ञस्योपान्त्यदिने महाव्रतस्यानुष्ठानं भवति । अस्मिन्नेव दिने सवनत्रयमपि भवति । अस्मिन्नारण्यके होतृनामकेन ऋत्विजा प्रयुक्तशस्त्राणां वर्णनमस्ति । महाव्रतस्य समग्राऽनुष्ठानिकविधानानां विवरणं शाङ्खायनश्रौतसूत्रे समुपलब्धमस्ति । अस्यानुष्ठानस्य सर्वाधिकमहत्त्वपूर्णमङ्गं महदुक्थस्याथवा निष्केवल्यशस्त्रस्य सविस्तृतं वर्णनं तत्रैवान्याध्यायेषु ( १।४।५,२=१-१७ ) उपलब्धो भवति ।

कौषीतकिब्राह्मणोपनिषद् चतुर्ष्वध्यायेषु विभक्तो भूत्वा ( तृती०-षष्ठ० अध्या० ) अस्यैवारण्यकस्यांशोऽस्ति तथा संहितोपनिषद् पुरोभागस्य द्वयोरध्याययोः विद्यमानमस्ति । इमे द्वे उपनिषदौ शाङ्खायनारण्यकस्याविभाज्यमङ्गमस्ति । अस्य वर्णनमुपनिषदां वर्णनप्रसङ्गेऽग्रे भविष्यति । नवमाध्याये प्राणस्य श्रेष्ठताया वर्णनमस्ति । दशमाध्याये आन्तराग्निहोत्रस्यातीव साङ्गोपाङ्गं वर्णनमस्ति । अस्याध्यायस्य कथनमस्ति यदग्निहोत्रेण सन्तृप्तस्तथाऽऽप्यायितो देवः जीवस्याभ्यन्तरे एव विद्यमानोऽस्ति । बाह्याग्निहोत्रेणास्य तृप्तिर्भवति । यो हि साधकः अज्ञात्वैव तत्त्वमिदं केवलं बाह्यहवने एवासक्तो भवति सः भस्मचये एव जुहोति । मृत्योरपसारणायैकस्य विशिष्टयागस्यैकादशतमाध्याये विस्तृतं विवरणं प्रदत्तमस्ति । द्वादशतमाध्याये बिल्वफलेन मणिनिर्माणस्य प्रक्रियायाः, कालस्य तथा स्वरूपस्य च वर्णनमस्ति । यं धृत्वा साधकः शत्रूणामुपरि विजयं लभते । त्रयोदश-चतुर्दशतमाध्यायेऽतिसंक्षिप्तेनात्मनः ब्रह्मणा सहैकस्य प्राप्तेः प्रतिपादनं जीवस्य सर्वोत्तमोपलब्धिः कथ्यते । **'आत्मावगम्योऽहं ब्रह्मास्मीति'** इयमेवोक्तिः अस्यारण्यकस्य सर्वोच्चोपदेशोऽस्ति—

**'ऋचां मूर्धानं यजुषामुत्तमाङ्गम्,**
**साम्नां शिरोऽथर्वणां मुण्डमुण्डम् ।**
**नाधीतेऽधीत वेदमाहुस्तमज्ञं**
**शिरस् छित्वासौ कुरुते कबन्धम् ॥'**

पञ्चदशतमाध्याये आचार्यस्य वंशवर्णनमस्ति । अनेनाध्ययनेन स्पष्टरूपेण प्रतीतो भवति यदस्यारण्यकस्य द्रष्टु ऋषेर्नाम गुणाख्यशाङ्ख्यायनमासीत् । तस्य गुरोर्नाम कहोलः कौषीतकि इति आसीत् । उभावेतावन्तिमाचार्यौ स्तः । अनेनैव कारणेनास्य शाङ्ख्यायनारण्यकस्यान्तर्गतोपनिषद् कौषीतकि-नाम्ना ख्याताऽस्ति ।

## बृहदारण्यकम्

यथास्य नाम्ना ज्ञातो भवति, वस्तुतः इदमारण्यकमेवास्ति । आरण्यकमिदं यजुर्वेदेन सह सम्बद्धोऽस्ति । किञ्चात्मतत्त्वस्य विशेषविवेचकत्वेनेयमुपनिषदपि कथ्यते । इदमप्यारण्यकं प्राचीनतमं मान्यतमञ्चाऽस्ति । कृष्णयजुर्वेदीयमैत्रायणीयशाखाया अप्येकमारण्यकमस्ति, यन्मैत्रायणीयोपनिषद्-नाम्ना ख्यातमस्ति ।

## तैत्तिरीयारण्यकम्

अस्मिन्नारण्यके दशपरिच्छेदाः अथवा प्रपाठकाः सन्ति । प्रपाठकोऽयं सामान्यतः 'अरण' इति पदेन ज्ञायते । अस्य नामकरणमप्याद्यपदानुसारेणैव भवति । यथा प्रथमस्य नाम अस्ति—'भद्रः', द्वितीयस्य—'सहवै', तृतीयस्य—'चितिः', चतुर्थस्य—'युञ्जते', पञ्चमस्य—'देव वै', षष्ठस्य–'परे', सप्तमस्य–'शिक्षा', अष्टमस्य—'ब्रह्मविद्या', नवमस्य—'भृगुः', दशमस्य—'नारायणीयः' इति । अस्मिन् सप्तम-अष्टम-नवम-प्रपाठका मिलित्वा 'तैत्तिरीयोपनिषदिति कथ्यते । दशमप्रपाठकोऽपि महानारायणीयोपनिषदिति कथ्यते । प्रपाठकोऽयमस्यारण्यकस्य परिशिष्टं मन्यते । प्रपाठकानां विभाजनमनुवाकेष्वस्ति । नवमप्रपाठकपर्यन्तानुवाकसंख्या १०७ अस्ति । तैत्तिरीयब्राह्मणमिवात्रापि प्रत्येकस्मिन्ननुवाके दशवाक्यानामेकाङ्को भवति । प्रत्येकस्य दशकस्यान्तिमं पदमनुवाकस्यान्तिमे परिगणितं कृतमस्ति । अस्मिन् आरण्यके ऋग्वेदस्य ऋचामुद्धरणं पर्याप्तरूपेण मिलति ।

प्रथमः प्रपाठकः आरुण-केतुकनामकस्याग्नेरुपासना तथा तदर्थमिष्टिकाचयनस्य वर्णनं करोति । द्वितीयप्रपाठके स्वाध्यायस्य तथा पञ्चमहायज्ञानां वर्णनमस्ति । अत्र गङ्गा-यमुनयोः मध्यदेशः पवित्रः प्रथितस्तथा मुनीनां निवासायोत्कृष्टभूमिः कथितोऽस्ति । तृतीयप्रपाठकः चातुर्होत्रचितेरुपयोगिनां मन्त्राणां सङ्ग्रहोऽस्ति । चतुर्थाध्याये प्रवर्ग्यस्योपयोगिनां मन्त्राणां सङ्ग्रहोऽस्ति । अत्र कुरुक्षेत्रस्य खाण्डवस्य च वर्णनं भौगोलिकस्थित्यनुसारेणैवाऽस्ति । अस्मिन् प्रपाठकेऽभिचारमन्त्राणामपि सत्ता वर्त्तते । आभिचारिकमन्त्राणां प्रयोगः शत्रु-मारणाय भवति । ४।२७ मन्त्रे तथा ४।३७ मन्त्रे **'छिन्धी भिन्धी हन्धी कट'** एवंविधस्य मन्त्रस्य स्पष्टरूपेणात्र सङ्केतो मिलति । ४।३८ मन्त्रेऽथर्ववेदीयाभिचारिकमन्त्रं प्रति स्फुटरूपेण सङ्केतो मिलति । पञ्चमे प्रपाठके यज्ञीयसङ्केतानामुपलब्धिर्भवति । षष्ठे प्रपाठके पितृमेधसम्बन्धिनां मन्त्राणामुल्लेखोऽस्ति । सप्तम-अष्टम-नवमप्रपाठकेषु तैत्तिरीयोपनिषदस्ति । दशमे प्रपाठके नारायणीयोपनिषदस्ति । अस्य प्रपाठकसंख्याऽपि अस्तव्यस्तैवाऽस्ति ।

अस्मिन् आरण्यके स्थाने स्थाने कतिपया विशिष्टा वार्त्ता अपि मिलन्ति । यथा ( १ ) कश्यपस्यार्थो भवति सूर्यः । अस्य व्युत्पत्तिः पर्याप्तरूपेण वैज्ञानिकी वर्तते । ( **'कश्यपः पश्यको भवति । यत् सर्वं परिपश्यति सौक्ष्म्यात्'** १।८।८ )

अर्थात् पश्यकशब्दात् वर्णव्यत्ययस्य नियमेन कश्यपशब्दः निष्पन्नो भवति। अनेन प्रकारेण वर्णव्यत्ययेन निष्पन्नशब्दस्य सुष्ठूदाहरणमिदमस्ति। (२) पाराशर्यव्यासस्याप्युल्लेखोऽत्र मिलति (१।९।२)। (३) द्वितीयप्रपाठकस्यारम्भे एव सन्ध्यायां प्रयुक्तस्य सूर्यस्यार्घ-जलस्य महिमा वर्णिताऽस्ति। तेन जलप्रभावेण मन्देहनामकस्य दैत्यस्य सर्वथा विनाशो भवति (२।२)।

सामवेदेनाऽपि सम्बद्धमेकमारण्यकमस्ति। आरण्यकमिदं तवलकारारण्यकमिति नाम्नेति प्रसिद्धमस्ति। इदमेवारण्यकं 'जैमिनीयोपनिषद्ब्राह्मणमि'तिकथ्यते। अस्य चत्वारोऽध्यायाः सन्ति। प्रत्येकस्मिन् अध्यायेऽनुवाकोऽस्ति। चतुर्थाध्यायस्य दशमानुवाके प्रसिद्धः तवलकारः किंवा केनोपनिषदस्ति। अथर्ववेदस्य न किमप्यारण्यकमुपलब्धमस्ति। अनेन वेदेन सम्बद्धाः या उपनिषदः सन्ति, ताः कस्याप्यारण्यकस्यांशो न भूत्वा प्रारम्भादेव स्वतन्त्रग्रन्थरूपेण विद्यमानाः सन्ति।

पुराणेषु आरण्यकस्याचार्यरूपेण शौनकस्य नामोल्लिखतमस्ति—**'शौनको नाम मेधावी विज्ञानारण्यके गुरुः'** (पद्मपुरा० ५।१।१८) पुराणस्य वाक्यमिदं यथार्थमस्ति। यतः आचार्यशौनकः एको ब्रह्मवेत्ता ऋषिः आसीत्। अनेन वेदानामध्यात्मपरका व्याख्या कृताऽस्ति। यतोऽस्य वामीयभाष्ये आत्मानन्देन लिखितम्—**'अध्यात्मविषयां शौनकादिरीतिम्'**। पद्मपुराणस्य विज्ञानारण्यकशब्दोऽपि आरण्यकस्वरूपस्य परिचायकोऽस्ति। आरण्यकं विज्ञानस्य, विशिष्टज्ञानस्य, अध्यात्मज्ञानस्य वा बोधको ग्रन्थोऽस्ति, इत्यप्यनेन शब्देन सङ्केतो मिलति।

---

# नवमोऽध्यायः

## उपनिषद्-ग्रन्थाः

### उपनिषत्परिचयः

उपनिषदः पराविद्येति पदेन व्यपदिश्यन्ते। वेदान्ता उपनिषद् इत्याख्यायन्ते। उपनिषच्छब्दस्य रहस्यमर्थः, अध्यात्मविद्यारहस्यप्रतिपादका वेदभागा उपनिषदः कथ्यन्ते। तासु महर्षय आध्यात्मिक्या विद्ययागूढतमानां रहस्याणां विशदतया विचारं कुर्वाणाः प्राप्यन्ते। भारतीयदर्शनसाहित्ये सन्ति त्रयः प्रस्थानग्रन्थाः। ते वेदानवलम्बमाना मानवजीवनस्य चरमं लक्ष्यं तत्प्राप्तिसाधनञ्चोपदिशन्ति। भारतीयविचारशास्त्रस्य श्रेष्ठोपजीव्यग्रन्थत्वादुपनिषदः प्रस्थानत्रय्यां प्रथमप्रस्थानत्वेन-गृह्यन्ते। श्रीमद्भगवद्गीता द्वितीयं प्रस्थानमिति कथ्यते। गीताया द्वितीयप्रस्थानत्वमधःस्थितेन श्लोकेन स्पष्टमेव प्रकटीक्रियते—

**'सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।**
**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्॥'**

बादरायणव्यासप्रणीतं ब्रह्मसूत्रं तृतीयप्रस्थानमस्ति। तत्राऽऽपाततो विरोधिभूतानामुपनिषद्वाक्यानां समन्वयस्तथा कृतो येन ज्ञातं स्यात् तेषां सर्वेषामपि वाक्यानां ब्रह्मनिष्ठत्वमथ च तत्र तार्किकाणां युक्तयोऽपि प्राबल्येन निराकृताः सन्ति। भारतीया वैदिकधर्मग्रन्था दर्शनानि च इमामेव प्रस्थानत्रयीमवलम्बन्ति। उपनिषदां गीताब्रह्मसूत्रयोराश्रयप्रदायिनीत्वात् ताः सन्ति महनीयतमाः।

उप-नि-पूर्वकस्य विशरणगत्यवसादनार्थकस्य 'षद्लृ'-धातोः क्विबन्तस्य रूपमिदमुपनिषदिति। उपनिषदामध्ययनेन दृष्टानुश्रविकविषयवितृष्णमुमुक्षूणां संसारस्य बीजभूता विद्या नश्यति, ब्रह्म प्राप्तं भवति दुःखानि च क्षीणानि भवन्ति। ब्रह्मणः स्वरूपस्य तदवाप्त्युपायस्य जीवस्य जगतश्च किञ्चात्मादिविषयाणां सविस्तरं वर्णनपरत्वात् 'उपनिषद्' इत्येषा संज्ञा युक्तैव सार्थकैवेति।

**'सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम्'** इत्येतन्मुक्तिकोपनिषद्वाक्येन ज्ञायते यद् उपनिषदष्टोत्तरशततोऽप्यधिका आसन्। प्राप्तासु अष्टोत्तरशतसंख्याकासूपनिषत्सु प्रायेण द्वादशोपनिषदः प्राचीनत्वाद् विशदतया च विषयस्य प्रतिपादकत्वादतितरां प्रामाणिका मता भवन्ति। तत्र १० उपनिषदः ऋग्वेदसम्बद्धाः, १९ उपनिषदः शुक्लयजुर्वेदसम्बद्धाः, ३२ कृष्णयजुर्वेदसम्बद्धाः, १६ सामवेदसम्बद्धाः, ३१ अथर्ववेदसम्बद्धाः। वेदान्ताचार्या एतासूपनिषत्सु कतिचनोपनिषदः स्वमतानुसारिण्यया व्याख्यया भूषितवन्तः। तासु दशोपनिषदः प्रसिद्धाः।

ऋग्वेदीयोपनिषत्सु ऐतरेय-कौषीतकी, सामपरकोपनिषत्सु छान्दोग्यकेनोपनिषदौ, कृष्णयजुर्विषयकासूपनिषत्सु तैत्तिरीय-महानारायण-कठ-श्वेताश्वतर-मैत्रायण्युपनिषदः, शुक्लयजुरधिकृत्य लिखितेशावास्योपनिषद् बृहदारण्यकञ्चाथर्वनिष्ठासु मुण्डक-माण्डूक्य-प्रश्नोपनिषदश्च नितरां प्रथिताः प्राचीनाः प्रमाणप्राप्ताः सन्ति। मुण्डिकोपनिषदि उपनिषदां संख्या निम्नरूपेण वर्णिताऽस्ति—

**'ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरिः ।**
**ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश ॥'**

एतासु दशोपनिषदः प्रसिद्धाः—ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-बृहदारण्यकोपनिषदः। श्वेताश्वतरोपनिषदेकादश्यपि प्रसिद्धा।

कतिचनोपनिषदो गद्यात्मिकाः, कतिचन पद्यात्मिकाः कतिचन गद्यपद्योभयात्मिकाश्च। आसामुपनिषदां कालो भिन्न-भिन्नः, परं प्रसिद्धाः कतिचनोपनिषदो बुद्धकालात्प्राचीना एवेति संस्कृतसाहित्येतिहासलेखका वदन्ति।

उपनिषदो भारयीयाध्यात्मविद्याया ज्वलन्ति रत्नानि महर्षयो यान्याध्यात्मिकतत्त्वानि ज्ञानदृशा साक्षादकुर्वन् तानि सर्वाणि तत्त्वान्यत्र वर्णितानि सन्ति।

सप्तदशशतके दाराशिकोहनामा शाहजहाँ-नाम्नः सम्राजः पुत्रः ५० संख्याकाः उपनिषदः पारसीभाषायां ब्राह्मणपण्डितानां साहाय्येनानूदितवान्। शोपेन हावेर( Shopen Howers )-नामा प्रसिद्धो वैदेशिको दार्शनिक उपनिषदः स्वगुरुषु गणयतिस्म। सम्प्रत्यपि पाश्चात्येषूपनिषदां महान् प्रभावो विद्यते, प्रायः सर्वास्वेव सभ्यभाषास्वासामुपनिषदामनुवादो जातः।

उपनिषदोऽतिसरलशैल्यां तत्त्वं ग्राहयन्ति, तेन तासां महत्त्वं लोकप्रियत्वं चानुदिनमवर्धत। आसां तत्त्वप्रकाशनशैली यथा कठोपनिषदि—

**'आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥**
**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥'**

भगवद्गीताप्युपनिषदेवेति बोध्यम्।

पूर्वमेवोक्तं मया इमाः उपनिषदो नैकस्मिन् काले प्रणीता अजायन्त अपि तु काले काले ता रचिता अभूवन्। प्रधानोपनिषदो बुद्धात्प्रागेवावतेरुरिति। आसामुपनिषदां कालनिरूपणाय तथा पारस्परिकसम्बन्धनिर्धारणाय चार्वाचीनविद्वांसः अतीवोद्योगं कृतवन्तः। जर्मनविद्वान् डायसनमहोदयस्तूपनिषदश्चतुर्षु स्तरेषु विभक्तं कृतवान्।

( क ) प्राचीनगद्योपनिषदः—यासां गद्यं ब्राह्मण-गद्यमिव प्राचीनं, लघुकायं सरलञ्चास्ति। यथा—( १) बृहदारण्यकोपनिषद्, ( २ ) छान्दोग्योप-

निषद्, ( ३ ) तैत्तिरीयोपनिषद्, ( ४ ) ऐतरेयोपनिषद्, ( ५ ) कौषीतकि-उपनिषद् ( ६ ) केनोपनिषच्चेति ।

( ख ) प्राचीनपद्योपनिषदः—यासां पद्यं प्राचीनं, सरलं तथा वैदिकपद्य-मिवास्ति । यथा—( ७ ) कठोपनिषद्, ( ८ ) ईशोपनिषद्, ( ९ ) श्वेताश्व-तरोपनिषद् ( १० ) महानारायणोपनिषच्चेति ।

( ग ) उत्तरकालिकगद्योपनिषदः—( ११ ) प्रश्नोपनिषद्, ( १२ ) मैत्रा-यणीयोपनिषद् ( १३ ) माण्डूक्योपनिषच्चेति ।

( घ ) आथर्वणोपनिषद्, यासामुपयोगः तान्त्रिकोपासनायां विशिष्टरूपेण स्वीकृतमस्ति—( १ ) सामान्योपनिषद्, ( २ ) योगोपनिषद्, ( ३ ) सांख्य-वेदान्तोपनिषद्, ( ४ ) शैवोपनिषद्, ( ५ ) वैष्णवोनिषद् ( ६ ) शाक्तो-पनिषच्चेति ।

अस्मिन् क्रमसाधने वहुदोषान् सम्भाव्य तांश्च दर्शयित्वा डॉ० बेल-वेलकर-राणाडेमहोदयाभ्यामेकाऽभिनवा योजना प्रस्तुतेति । (द्रष्टव्यः—Belvel-kar and Ranade—History of Indian Philosophy. Vol 2 p.p. 87-90 ) ग्रन्थेऽस्मिन्नुपनिषदां विभिन्नकालिकस्तराणां कल्पना इयती यथे-प्सिता प्रमाणविरहिता चास्ति यदविश्वसनीया भवति । ईशावास्योपनिषदं द्वितीयस्तरे स्थापनं कदापि न्यायसङ्गतं न भवति । यतो ह्यस्मिन् यज्ञस्य महत्त्वं ब्राह्मणकालमिव स्वीकृतमस्ति ( **'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः'** ) तथा बृहदारण्यकेणोद्घोषिता कर्मसंन्यासभावनायाः घोषणा नास्त्येवेति (**'पुत्रैष-णायाश्च लोकैषणायाश्च ह्युत्थाय भिक्षाचर्यं चरन्ति'**—बृहदारण्य०) । अन्योप-निषदामिवारण्यकस्यांशो न भूत्वा ईशोपनिषद् माध्यन्दिनसंहिताया भागोऽस्ति तथा मुक्तिकोपनिषदः मान्यपरम्परानुसारेणेयं समस्तोपनिषदां गणनायां प्रथम-स्तरीयेवेति । अतो बेलवेलकरमहोदयस्य कथनं कस्यापि तत्त्वजिज्ञासुजनस्य हृदये विश्वासं नोत्पादयति ।

श्रीचिन्तामणिविनायकवैद्योऽपि स्वग्रन्थे उपनिषदां प्राचीनतां प्रमाणयितुं साधनद्वयं समुपस्थापयति । विष्णोः शिवस्य च परदेवस्वरूपे वर्णनम् । प्रकृति-पुरुषस्य तथा सत्त्व-रजस्तमसां त्रिविधगुणानां साङ्ख्यसिद्धान्तस्य प्रतिपादनं युक्तितरोऽयं सिद्धान्तः प्रतिभाति । तिलकमहोदयानुसारेणो-पनिषत्कालः १९०० वि० पूर्वं शतकं भवितव्यम् । अनेन प्रकारेण उपनिषत्-कालस्य समारम्भः २५०० वि० पूर्वं शतकं कथयितुं शक्यते ।

## प्रतिपाद्यो विषयः

उपनिषत्सु अद्वैतविशिष्टाद्वैतश्रुतीनां सद्भावो भाति । आचार्यैः स्वसिद्धान्त-प्रतिष्ठापिकाः श्रुतयः प्रधानत्वेन स्वीकृताः, अन्यासां श्रुतीनां गौणत्वञ्च तैरुप-पादितम् । शङ्करः स्वभाष्येण अद्वैतं श्रीरामानुजाचार्यानुगा विशिष्टाद्वैतं तत्र प्रतिपादयन्ति । वस्तुतः उपनिषत्सु दर्शनानां सर्वेषामपि बीजानि निहितानि

सन्ति। न केवलमास्तिकदर्शनानामपि तु नास्तिकदर्शनानामपि मूलसिद्धान्ताः समुपलभ्यन्ते। सत्यं हि इदम् उपनिषद् ऋषीणामाध्यात्मिकविचाराणां मनोज्ञो बहुमूल्यशाली च महान् कोषः।

उपनिषदां प्रधानत्वेन प्रतिपाद्यो विषयोऽस्त्यात्मा। संहितात आरण्यकं यावत् तद्ब्रह्म आत्मनो भिन्नमित्येतेन रूपेण प्रतिपादितमस्ति। तदुपनिषत्सु ततो न भिन्नमित्येतेन प्रकारेण व्याख्यातमस्ति। द्वयोरप्यभिन्नत्वाद् दैवाध्यात्मिकतत्त्वयोरेकत्वाच्चात्मैवैकः सर्वत्र न च तं विहाय कोऽप्यन्यः पदार्थ इत्युपनिषद्भिर्युक्तिभिः साधु निरणायि। तच्चात्मारण्यं तत्त्वं पूर्णमस्ति। तदेव तत्त्वं दृष्टिः तदेव च दृश्यम्। न द्रष्टृदृश्ये भिन्नतां वस्तुतः श्रयतः। आत्मैव सर्वव्यापी वर्त्तते। विश्वस्य सर्वेष्वपि पदार्थेषु स एव व्याप्तोऽस्ति। तस्मिन्नेव समग्रस्याऽपि प्रपञ्चस्य लयो भवति। ततो व्यतिरिक्तं न किमपि। अतएव बृहदारण्यकोऽप्याह—'**स वायमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयः**।' एतेन भवतीति स्फुटं यत्संसारस्य यावन्तोऽपि सन्ति स्थूला वा सूक्ष्माः पदार्थाः सर्वेऽपि नात्मनो भिन्नाः। ते सर्वे आत्मत्वेनैव वेदितव्याः, नात्मनः परं किमपि प्रियतरम्। ऋषिभिर्बहुधा स आत्मा वर्णितः। कथयन्ति ते यद् आत्मैव प्राणापानव्यानोदानवायुरूपेणास्मच्छरीरमवन्ति। आत्मैव क्षुत्-पिपासाशोकमोहजरामरणेभ्योऽस्मान्नुद्धरति। आत्मनो ज्ञानानन्तरमेव मानवः सुतसम्पत्सुन्दरीस्वर्गादिसमवाप्तीच्छातो विरतो भूत्वा परिव्राजो जीवनं वहति। पूर्णत्वादखण्डत्वाच्चात्मा सदसल्लघुगुरुदूरादूरान्तर्बहिरादिसकलविरुद्धधर्माणामेकाधारः। सर्वेऽपि दर्शनकारा अतएवेदं परमतत्त्वमात्माभिधेयं विभिन्नरूपेण स्वस्वमूलतत्त्वं मत्वा भिन्नभिन्नया दृष्टिसरण्या भिन्नभिन्नानि दर्शनानि व्यरचन्।

ब्रह्मतत्त्वं यः कोऽपि जिज्ञासति, ज्ञातुं शक्नुते; यः कोऽपि मानवस्तत् लिप्सति लब्धुं प्रभवति। तदर्थं तपस्या काम्यते अभिलष्यते सत्यानुरागो बलिष्ठा निष्ठा विमलञ्च ज्ञानम्। नायमात्मा वेदाध्ययनेन लब्धुं शक्यो न च सद्धारणाशक्त्यैव। साधको हि यमात्मानं वृणुते तेनैव स तमवाप्तुमीष्टे। सम्प्रति हि स्वयमेवात्मा स्वकीयं रूपमभिव्यनक्ति। उपनिषद आहुः—

**'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैव आत्मा विवृणुते तनूं स्वाम्॥'**

ब्रह्मणो मूर्त्तामूर्तभेदेन रूपद्वयम्। तदस्ति मर्त्यममर्त्यञ्च। स्वलक्षणं लक्षणातीतञ्च। तत् परमात्मेत्येतदप्युच्यते। अयमेव परमात्मा अविद्याहेतोर्बन्धने निपत्य जीवात्मेत्येतदपि निगद्यते। गतजनुः कर्मवशात् सुखानि च भोक्तुं जगति जन्म गृह्णाति। पुनः पुनः जायते म्रियते च। संसारागमनानेहसि भोगा-

नुकूलं स्थूलं वपुर्बिभर्त्ति । स लोके परलोके च भ्रमति; स्वप्नावस्थायां लोकद्वयस्याऽपि ज्ञानमाप्नुते । स्वप्ने च सुखं दुःखञ्च विन्दति । स्वप्ने स्वप्नगतविषयदर्शनार्हंशरीरं धारयति । भवति च तच्छरीरं स्थूलाद् भिन्नम् । उपनिषदो वदन्ति यज्जीवो भोगनिमित्तेन स्वप्ने स्वयं नवनवविषयाणां सृष्टिं कुरुते । परं वस्तुतः स्वप्नस्यापि सृष्टिरस्ति ब्रह्मणा एव । जीवात्मब्रह्मणोरेकत्वात् ।

यथा जाग्रदवस्थातो जीवः स्वप्नावस्थायां प्रविशति तथैव च नैजं स्थूलं शरीरं हित्वा अविद्याप्रभावात् शरीरान्तरं धारयति । शरीरत्याग एव मरणमिति कथ्यते । जीवमरणसमयावस्थां वर्णयन्ता उपनिषदः शंसन्ति यज्जीवस्तदा दुर्बलतां संज्ञाशून्यताञ्च प्रयाति हृदयञ्चाधितिष्ठति । प्रथमं तस्य रूपज्ञानं नश्यति, इन्द्रियैः सार्धमन्तःकरणमपि श्लथतामुपैति । तदानीं हृदयबाह्यभागः प्रकाशितो जायेत । तत्प्रकाशमेवाश्रित्य जीवः स्वकर्मप्रभावात् शरीरस्य भिन्नभिन्नछिद्रमार्गेण निर्गच्छति । तस्मिन्नपि समये जीवे वासना स्फुटतयैव विभासते । अस्या वासनाया एव सामर्थ्याज्जीवस्य भाविनो जीवनस्य स्वरूपं निर्णीयते ।

उपनिषदां कथनमेतत्—वर्त्तमानसमये जीवाः स्वकीये जीवने यादृशं कर्म आचरन्ति ते भाविनिकाले तादृशमेव जीवनमपि लप्स्यन्ते । सन्ति कर्माण्येव जीवनघटकानि । जीवनं ह्युत्तमं सर्वविधतया समुन्नतञ्च कर्त्तुं सततं शुभान्येव कर्माणि कर्त्तव्यानि । ज्ञानात् ऋते न मुक्तिस्तस्मात् ज्ञानमर्जनीयम् । ज्ञानाधिगमनं योगाभ्यासेन सम्भवम् । सत्कर्मकर्त्ता जीव उपरते सति सत्स्वरूपं सद्देशं सच्छरीरमश्नुते । एतेनैव स्फुटं जीवस्यास्मात् लोकात् परलोकगमनं तत् तद् भोगाधिगमनञ्च । तपश्चरणात्पुण्यानां ह्यभ्युदयाञ्च ज्ञानबलेन वासना विनश्यति, क्रियमाणानि कर्माणि विलीयन्ते सञ्चितानि कर्माणि हतशक्तिकानि जायन्ते । एवंविधां दशां प्रपन्ना एव जना जीवनमुक्ता उच्यन्ते । जीवनमुक्तायां प्रारब्धकर्मानुरूपं जीवस्य स्थूलं शरीरं सन्तिष्ठते नष्टे च सति प्रारब्धकर्मणि शरीरमपि निपतति । ततश्च जीवः स्वकीयस्य रूपस्य प्रत्यक्षभावेनानुभूतिं कुरुते ।

सृष्टिवर्णनमप्युपनिषत्सु कृतमस्ति । तत्रोक्तमादौ सृष्टिर्नासीत् किमपि, केवलं मृत्युरवर्त्तत । ततश्च मनः मनःसलिलानलभुवः समुद्भूताः । प्रजापतेरनन्तरं सुरासुराश्चोद्बभूवुः । क्वचिदिदमप्यभिहितं प्रथमं पुरुषस्य ततश्च स्त्रियाः उत्पत्तिरभवत् । ताभ्याञ्च विश्वस्य सृष्टिरभूत् । एतद्विधाया वर्णनं छान्दोग्योपनिषदि बृहदारण्यके च दृष्टं भवति । उपनिषदामध्ययनेन ज्ञातो भवति यत् सर्वतः प्रथममेकमव्यक्तं रूपमासीत् । तस्मादेव व्यक्तमिदं जगत् सृष्टमभूत् । इदमव्यक्तं रूपं हि 'परब्रह्म' अस्ति । समस्तमपि जगत् तस्मादेव प्रादुर्बभूव अन्ततश्च तत् तस्मिन्नेव लीयते—

**'यतो वा इमानि भूतानि जायन्ते ।**
**तेन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति ।**
**तद् ब्रह्म एव जगतो निमित्तकारणमुपादानकारणञ्चास्ति ।'**

उपनिषत्सु कर्मगतिरपि सविस्तरं वर्णिताऽस्ति। तत्र देवयानपितृयानयोर्निरूपणमालोक्यते। पुण्यकर्मभ्यः पुरुषः सुयोनिमध्ये पापेभ्यश्च कर्मभ्यः कुत्सितायां योन्यां जननमुपाददाति।

आत्मानं द्रष्टुं किंवा ब्रह्म ज्ञातुं जीवस्य कर्त्तव्यमिदं यत् सः कायं वाचं मानसञ्च संयच्छेत्। किञ्च ब्रह्मणः साक्षात्काराय सत्यस्याचरणं, न कस्याऽपि वस्तुनोऽपहरणं, ब्रह्मचर्यस्य रक्षणम्, इन्द्रियाणां निग्रहणं, हिंसायाः परित्यजनम्, मातृ-पितृदेवातिथिगुरुजनानामभ्यर्चनं, निन्दनीयकर्मपरिवर्त्तनं, सांसारिकेषु विषयेषु विरजनम्, अन्तःकरणस्य परिक्षालनमेतानि कर्माण्यतितरामपेक्ष्यन्ते।

परिशुद्धेन कायेन वचनेन हृदयेन अहंभावरूपस्थितम्, प्रत्यक्चेतनमवबोद्धुं प्रयतेत जीवः। तदर्थं निदिध्यासनमपेक्षितमस्ति। योगशास्त्रोक्तसाधनानि साधनीयानि। एतस्मिन्नध्यवसाये तदैव सफलता भवति यदा श्रद्धा भवति गुरुम्प्रति स्वसमर्पणं कृतं जायते। अहम्भावविनाशाय सर्वाण्यप्येतानि कार्याणि कर्त्तव्यानि सन्ति। गुरुस्तत्त्वं प्रहीणदोषायैव प्रददाति। उक्तञ्च—

**'प्रशान्तचित्ताय जितेन्द्रियाय च**
**प्रहीणदोषाय यथोक्तकारिणे।**
**गुणान्वितायानुगताय सर्वदा**
**प्रदेयमेतत् सततं मुमुक्षवे॥'**

गुरुर्जिज्ञासवे 'तत् त्वमसि' इत्येतदुपदिशति। शान्तोदान्तः शुद्धान्तःकरणः साधकः 'अहं ब्रह्मास्मि' इत्येतं गुरूपदेशं निशम्य स्वयमेवात्मनि ब्रह्मणोऽनुभूतिं कर्त्तुमारभते। साधकोऽभ्यासवशात् शनैः शनैः 'तत्' 'त्वम्' 'अहम्' 'अयम्' इत्यनयोर्मध्ये ऐक्यमेवानुभवति। स न स्वकीयं रूपमात्मनो भिन्नत्वेन जानाति। 'एकेन विज्ञानेन सर्वं विज्ञातं भवति' इत्येतदुपनिषद्वचसोऽनुसारेण स साधकः सर्वपदार्थावबोधानन्तरं 'सर्वं खल्विदं ब्रह्म' इत्येतत् साक्षाद्भावेनानुभवति। ततश्चासौ संसार-बन्धनान्मुक्तिमवाप्य अनामयं सच्चिदानन्दपदं प्रपद्यते। न पुनः संसारेऽस्मिन् स निवर्तते। उक्तञ्च गीतायाम्—

**'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।**
**यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम॥**
**न तद्भासयते सूर्यो न शशाङ्को न पावकः।**
**यद् गत्वा न निवर्त्तन्ते तद्धाम परमं मम॥'**

इत्थं ह्युपनिषदुपदेशनिष्कर्षोऽयं यदेकमेव तत्त्वमस्ति। तस्मादेव समग्रोऽपि संसारः समुत्पद्यते पुनश्चान्ततस्तत्रैव लीयते। श्रुतिश्चामनुते—**'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्।'** निर्गुण-सगुणभेदेन ब्रह्म द्विविधम्। तत्र निर्गुणं ब्रह्म न वक्तुं शक्यम्। तदस्ति सर्वथैव वागगोचरम्। न तत् केनाऽपि प्रकारेण गातुं शक्यं यत् तत् एवंविधम्। निर्विकल्पत्वान्निरुपाधित्वाच्च

तदस्त्यनिर्देश्यम् । अत एव तु बाष्कलिना ब्रह्मणि पृष्टो बाध्वो मौनमालम्ब्यैव तत्कृतप्रश्नमुत्ततार । निषेधमुखेनैव तद् वर्ण्यते यत् तदिदं न । अत एव श्रुतयो नेति नेतीत्युक्त्वा तद्गायन्ति । कठोपनिषदाह—

**'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।**
**अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ।।'**

बृहदारण्यकोपनिषदि याज्ञवल्क्यः तदधिकृत्य गार्गीमित्थमुपदिशति—'गार्गि ! न तदक्षरं ब्रह्म स्थूलं नाणु न ह्रस्वं न दीर्घम् । तद् असङ्गं रस-गन्ध-रहितम् । न तच्चक्षुःश्रोत्रमनोवाणीगम्यम् ।' केनोपनिषद् तन्निष्प्रपञ्चं ब्रह्म वर्णयत्येव—

**'यद् वाचाऽनभ्युदितं येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।।'**

देशकालनिमित्तातीतत्वात् तद् भवति सर्वथैव विचित्रम् । प्रमाणातीतत्वात् तदप्रमेयमस्ति किञ्च चैतन्यात्मकत्वात् स्वयमेव विषयि । कठोपनिषत्तन्महीयस्कतायामाह—

**'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।।'**

मुण्डकोपनिषदेवमुद्गायति तत्—

**'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।**
**यथासतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम् ।।'**

कस्यचन वस्तुनो बोधाय तल्लक्षणमपेक्ष्यते । लक्षणञ्च तटस्थस्वरूपभेदेन द्विविधं भवति । तटस्थलक्षणेन वस्तुनो स्थायिपरिवर्त्तनशीलगुणा वर्ण्यन्ते । स्वरूपलक्षणेन च वस्तुनः शुद्धं रूपं तात्त्विकञ्च रूपमुपलभ्यते । सगुणब्रह्मण उभयविधं लक्षणं ह्युपनिषत्सु प्राप्यते । स्वरूपलक्षणेन ब्रह्म सत्यं ज्ञानमथ चानन्तरूपमस्ति । उक्तञ्च तैत्तिरीयोपनिषदा—

**'सत्यं ज्ञानमनन्तं ब्रह्म ।'** तच्च ब्रह्मविज्ञानमानन्दश्चास्ति । बृहदारण्यकोपनिषदाह—**'विज्ञानमानन्दं ब्रह्म'**। उपनिषत्सु ब्रह्मणः तिसृणां स्वाभाविकशक्तीनामुल्लेखः कृतोऽस्ति । श्वेताश्वतरोपनिषदाह—

**'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'** ।

सगुणब्रह्मणस्तटस्थलक्षणं छान्दोग्योपनिषदेवं प्रस्तौति—**'तज्जलानीति शान्त उपासीत ।'**

उक्तं हि सिद्धान्तं तैत्तिरीयोपनिषल्ललितशब्दावलिना व्याख्याति—

**'यतो वा इमानि भूतानि जायन्ते, यतो जातानि जीवन्ति, यत् प्रयन्त्यभिविशन्ति तद् विजिज्ञासस्व तद्ब्रह्म ।' 'जन्माद्यस्य यतः ।'**

इत्येतस्मिन् ब्रह्मसूत्रेऽपि ब्रह्मणस्तटस्थलक्षणं दर्शितम् । माण्डूक्योपनिषदपि तद् ताटस्थ्येन वर्णयति—

**'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवोऽप्यसौ हि भूतानाम् ।'**

सगुणं ब्रह्म संसारस्यास्य शास्तृ निखिलस्यापि जगतो हि जीवानां भाग्यस्य विधातृ वर्त्तते । शुभकार्यकर्त्तॄणां जीवानां तत् कल्याणसम्पादयितृ, मुक्ति-भुक्तिप्रदातृ, अशुभकर्मकारि प्राणिनिग्रहीतृ च । तदेव सगुणं ब्रह्म ईश्वर-विराट्-हिरण्यगर्भसंज्ञया व्यपदिश्यते । अस्य विश्वस्य सर्वेऽपि प्राणिनस्तस्यैव शरीर-मिति कथ्यन्ते । सगुणत्वात् तत् पादाभ्यां चलति, हस्ताभ्यां कार्यं करोति, नेत्राभ्यां पश्यति, कर्णाभ्याञ्च शृणोति ।

ब्रह्मणः शक्त्यैव देवतासु शक्तिः सञ्चरति । तस्यैव शक्तिभूतत्वेन जगतः पदार्थाः जायन्ते शक्तिमन्तः । तस्मात् न केनापि पदार्थेन स्वशक्तौ गर्वः कार्यः, इत्येतदुपदेष्टुकामा केनोपनिषदु माहेमवतीनामकमुपाख्यानं प्रस्तौति ।

उपनिषदां व्यवहारविषयकः पक्षो नितरां मनोभिरामः । दार्शनिकानि तत्त्वानि व्यवहारे प्रयुज्योपनिषद्विद्या मानवीयजीवनमतितरां रमयति, इत्ये-तद्धि तदीयं ललितं वैशिष्टचम् । उन्नतं समृद्धञ्चाध्यात्मिकपथमारोढुं बहवः सद्गुणाः सन्त्यपेक्षिताः । अतः उपनिषदो मनोरमाख्यायिकां निधाय जनसमु-दायं तान् सद्गुणान् वरीतुमुपदिशन्ति । आत्मसंयम-तपोदानार्जवाहिंसासत्यादि-सद्गुणा जीवनं निःसन्दिग्धतया समुन्नमयन्ति तस्मात् ते उत्तमा गुणा उपनिष-द्भिस्तथाऽऽलेखिताः यद् अवलोक्य जनमानसं झटिति तान् स्वीकर्त्तुमुपक्रमते । तैत्तिरीयोपनिषत् 'सत्यं वद, धर्मं चर' इत्यादिना, छान्दोग्योपनिषद् सत्यकाम-जाबालकथादिभिः, प्रश्नोपनिषद् अनृतनिन्दादिना, मुण्डकोपनिषद् सत्यश्लाघा-दिना संसारं सन्मार्गं दर्शयन्त्यो हि केन न प्राप्यन्ते ?

ज्ञानस्य सिद्धिर्विवेकवैराग्याधीना । ब्रह्मावाप्त्यर्थं तावज्जीवो न प्रवर्त्तते यावत् तत्र विवेक-वैराग्ययोरुदयो न सञ्जायते । मुण्डकोपनिषद् एतद्गुणद्वितयं प्रत्येकं पुमान् गृह्णीयादेतदर्थं पूर्णबलेन प्रयतमानास्ते । कर्मभिः प्राप्तालोकाः सन्ति विनश्वराः इत्येतद् विज्ञायैव ब्राह्मणस्य मानसं निर्विण्णतामुपैति । विवेको बोधयतीदं यत् कृतेन ( कर्मणा ) अकृतस्य ( नित्यब्रह्मणः ) समुपलब्धिर्न भवितुं शक्यास्ति ।

कर्मानुष्ठाने प्राणी सर्वथा स्वतन्त्रोऽस्ति । उपनिषदामभिधानमिदं यज्जीवः कर्माचरणेऽस्ति स्वाधीनः । पुरुषः काममयोऽस्ति यादृशी तदीयेच्छा भवति तादृश एव तस्य सङ्कल्पो भवति । बृहदारण्यके प्रोक्तम्—**'अथो खल्वाहुः काम-मय एवायं पुरुष इति । स यथा कामो भवति तत्कर्त्तुर्भवति तत्कर्म कुरुते तदभि-सम्पद्यते ।'** आत्मज्ञानलाभानन्तरमेव मानवः सर्वेष्वपि लोकेषु पर्यटितुं प्रभ-वति । स यत् कामयते तत् सङ्कल्पमात्रेण लभते । उपनिषदः पुरुषार्थोपदेशिकाः सन्ति । मुक्तिकोपनिषद् वक्ति—

**'शुभाशुभाभ्यां वहन्ती मार्गाभ्यां वासना सरित् ।**
**पौरुषेण प्रयत्नेन योजनीया शुभे पथि ।**
**अशुभेषु समाविष्टं शुभेष्वेषावतारयेत् ॥'**

मानवस्य कर्त्तव्यमस्ति यदसौ समुद्धर्त्तुं शुभवासनाभिः स्वकीयं मनो विभूषयेत् न सः अशुभवासनासु निपतेत् । ताभिर्मनो भवत्यपवित्रं दूषितञ्च । **'ओ३म् यज्जाग्रतो दूरमुदैती'**त्यादिभिर्मन्त्रैः श्रुतयो मानवं शिवसङ्कल्पशीलं स्वान्तं विधातुं प्रेरयन्ति । मनुष्यमात्रस्य धर्मोऽयं यदसावुच्चोद्देश्यवान् भवेत् । स स्वकीयं बहुमूल्यं जीवनं साधारणवस्तूपलब्धौ न योजयित्वाऽऽत्मसमवाप्त्यां योजयेत् । श्वेताश्वतरोपनिषदुपदिशति सस्नेहम्—

**'तमेव विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय ।'**

उपनिषदन्त्यलक्ष्यं नास्त्यात्मतत्त्वविषयकं ज्ञानम् । तच्चरमलक्ष्यन्त्वस्त्यात्मनोऽपरोक्षानुभूतिः । परोक्षानुभूत्या न सिद्ध्यति स्वार्थः । स्वतात्त्विकरूपावगमनं स्वकीयस्य रूपस्य साक्षादनुभवनमेवापेक्ष्यते । अत एव मानवस्य यत् कर्त्तव्यं मुख्यमस्ति तदिदमेव यत् स स्वरूपेऽवतिष्ठेत ।

आत्मनो दर्शनेन, आत्मन्यवस्थानेन आत्माधिगमनेन हि स्वराज्यं भवत्युपलब्धम् । जन आत्मनि रमते, आत्मनि क्रीडति, आत्मनि विहरति, आत्मनि नन्दति च । आत्मनो ह्यानन्दमयत्वादसौ जीवो निरतिशयानन्दमास्वदते । न लौकिकेन दृष्टान्तेन न तदानन्दस्य लवोऽपि प्राप्यो भवति । बृहदारण्यकोपनिषल्लौकिकोदाहरणद्वारेण तदानन्दस्य तुच्छतराभासमात्रं प्रस्तुतीकरोति । सा प्राह—

**'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्, एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं तद् वा अस्य एतदाप्तकामं आत्मकामम् अकामं रूपम् ।'**

आत्मवेत्ता जन एव तं लोकोत्तरं निरतिशयमानन्दमनुभवति । परं तमानन्दमभ्यारूढो हि पुरुषो भवत्यवरुद्धवाग्व्यापारः । वस्तुतः स आनन्दो न वाग्भ्यः नान्येनापि केनापि साधनेन लभ्यः । स तु स्वानुभूत्यैव गम्यो वेद्यो ज्ञेयश्च जायते । एतस्या एवापरोक्षानुभूतेः प्रतिपादनमेवोपनिषदामभीष्टमन्त्यम् । अन्येषां सिद्धान्तानां प्रतिपादनन्तु एतस्मात् प्रयोजनाद् विहितं यत् तत् सहायतया सा लब्धा स्यात् ।

उपनिषदो वस्तुतो भारतीयाऽध्यात्मसाहित्यस्य परमभास्वराणि रत्नानि सन्ति । तेषाम् उपनिषद्रत्नानां दिव्यया हि आभया भुवि को न मतिमान् आवर्जितोऽनुजातः ।

## उपनिषदां भाषान्तरेष्वनुवादः

शाहजहाँसुतस्य दाराशिकोहस्योपनिषत्प्रेम जगति विदितमेव । १६५७ ख्रीष्टाब्दे दिल्लीनगरस्य निगमबोधनामकस्थाने षण्मासाभ्यन्तर एवाश्रान्तपरि-

श्रमेणायं पञ्चाशदुपनिषदामनुवादं संस्कृतपण्डितानां साहाय्येन कारितवान्। वैदेशिकानां विपश्चितां समक्षे यदैवायमलौकिको विश्वाभिरामः प्रकाशः समागतः, तदा तत्क्षणमेव ते विद्वांसोऽमुह्यन्। १७७५ ख्रीष्टाब्दे एक्वेटिलडुपेरनो लैटिनभाषायामनूदितवानुपनिषदः। ओथमरफ्रांकमहाभागः १८०१ ख्रीष्टाब्दे उपनिषद्ग्रन्थानधीत्य तान् संक्षेपेण प्रकाशमानिनाय। तत्प्रकाशितग्रन्थान् इमान् पठित्वा उपनिषद्ज्ञानं प्रति प्रतीच्यानां पण्डितानामुत्सुकता वृद्धिं ययौ। औपनिषत्के साहित्ये श्री जे० डी० लुंजुईनामो यत्कार्यं श्रमश्च चकार तत्स्तुत्यम्। वेबरमहोदयस्योद्योगेन तूपनिषद्ज्ञानस्य प्रचारः समग्रेऽपि पश्चिमीये संसारेऽभवत्। उपनिषदामनुवादस्तेन १८०२ ख्रीष्टाब्दे जर्मनभाषायां कृतः। 'इडिस्केन स्टडियन' इत्येतेन नाम्ना स उपनिषद्विषयकं ग्रन्थमजग्रन्थत्। महापण्डितो मैक्समूलरः उपनिषदोऽङ्ग्रेजीभाषायामनुववाद। अन्ये च पालडयूसन-आर० ई० ह्यूमप्रभृतिविद्वांसोऽतितरामुपनिषत्सु भक्तिं प्रकटीचक्रुः।

## ( १ ) ईशोपनिषद्

माध्यन्दिनशाखीयेयं यजुर्वेदसंहितायाश्चत्वारिंशत्तमाध्यायोऽस्ति। **ईशावास्यमिदं सर्वं**'मित्यादिपदस्याधारोपरि अस्या नामकरणमस्ति। ग्रन्थेऽस्मिन् अष्टादशमन्त्रा एव सन्ति। अस्मिन् ज्ञानदृष्ट्या कर्मोपासनाया रहस्यं वर्णितमस्ति। उपनिषदियं कर्मसंन्यासस्य पक्षपातिनी न भूत्वा यावज्जीवनं निष्कामकर्मभावेन कर्मसम्पादनस्यानुरागिणी वर्त्तते। अत्राद्वैतभावनायाः स्पष्टं प्रतिपादनमस्ति। अत्र ब्रह्मणः स्वरूपवर्णनानन्तरं विद्या-अविद्या-सम्भूति-असम्भूत्यादीनां विवेचनमस्ति।

## ( २ ) केनोपनिषद्

**'केनेषितं पतती'**त्यादि स्वकीयप्रारम्भिकपदस्याधारोपरि अस्या उपनिषदः नाम 'केन' तथा स्वशाखानामोपर्यस्याः नाम तवलकारोपनिषदित्यस्ति। लघुस्वरूपेयं किञ्च परममार्मिकोपनिषदस्ति। अस्यामुपनिषदि चत्वारः खण्डा एव सन्ति। प्रथमखण्डे उपास्यब्रह्म-निर्गुणब्रह्मणोर्मध्येऽन्तरं दर्शितमस्ति। द्वितीयखण्डे ब्रह्मणः रहस्यमयस्वरूपस्य वर्णनमस्ति। तृतीय एवं चतुर्थखण्डे उमाहेमवत्या रोचकमाख्यानेन परब्रह्मणः सर्वशक्तिमत्ता तथा देवतानाम् अल्पशक्तिमत्तायाः सुष्ठु निदर्शनमस्ति।

## ( ३ ) कठोपनिषद्

कृष्णयजुर्वेदस्य कठशाखानुयायिनीयमुपनिषद् स्वगम्भीराद्वैततत्त्वाय नितान्तं प्रख्याताऽस्ति। अस्यां द्वावध्यायौ स्तः। प्रत्यध्यायं त्रयो बल्लयः सन्ति। तैत्तिरीयाऽरण्यके नचिकेतोपाख्यानेनेयमारब्धाऽभवत्। यमेन प्रोक्तः अद्वैततत्त्वस्य मार्मिकोपदेशोऽत्र दर्शनीयोऽस्ति। **'नेह नानाऽस्ति किञ्चन'** इत्यस्याः उपनिषदः गम्भीरः शङ्खनादोऽस्ति। नित्येषु नित्यं चेतनेषु चेतनमेकमेवासौ ब्रह्म

सर्वेषां जीवानामात्मनि निवसति, तस्यैव दर्शनं शान्त्या एकमात्रं साधनमस्ति ( २।२१३ )। योग एव तस्य साक्षात्कारस्य प्रधानसाधनमस्ति। मौञ्जेः इषीकावत् अस्य शरीरस्याभ्यन्तरे विद्यमानस्यात्मन उपलब्धिः योगद्वारेणैव कर्त्तव्या अयमेव कठोपनिषदः व्यावहारिकोपदेशोऽस्ति।

'न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥'

## ( ४ ) प्रश्नोपनिषद्

अस्यामुपनिषदि ब्रह्मविद्यामन्वेष्टुं षड्ऋषयः महर्षिपिप्पलादस्य पार्श्वे गताः। तत्र ते तमाध्यात्मिकप्रश्नानां समुचितमुत्तरं पृच्छन्ति। प्रश्नोत्तरेषु निबद्धोऽयं ग्रन्थः, तेनास्य नाम प्रश्नोपनिषदिति सर्वथा सार्थकमस्ति। आध्यात्मिकजगतः समस्याः एवैतेषां प्रश्नानां विषयोऽस्ति। स्वकीयसमीक्षणेन पिप्पलादोऽत्र विशिष्टतत्त्वज्ञानीस्वरूपेणैवास्माकं सम्मुखे समायाति। तत्र मीमांस्यप्रश्नाः सन्ति—( १ ) प्रजाया उत्पत्तिः कस्मात्स्थानाद्भवति। ( २ ) प्रजानां धारणं किं संख्यकाः देवताः कुर्वन्ति ? कतमः प्रकाशयन्त्येतान् ? एतेषु कतमः श्रेष्ठतमोऽस्ति ? ( ३ ) प्राणानामुत्पत्तिः, शरीरेषु तेषामागमनमुपक्रमणञ्चेत्यादिविषयकानां प्रश्नाः ( ४ ) स्वप्न-जागरण-स्वप्नदर्शनादिविषयकादीनां प्रश्नाः, ( ५ ) ओङ्कारपुरुषस्योपासना तथा तेन लोकानां विजयः, ( ६ ) षोडशकलासम्पन्नस्य पुरुषस्य विवेचना। एतेषां प्रश्नानामुत्तरेषु ह्याध्यात्मस्याखिलसमस्यानां विवेचनमतिगम्भीरतया प्रतिपादितमस्ति। अक्षरब्रह्म एवास्य जगतः प्रदर्शिताऽस्ति।

## ( ५ ) मुण्डकोपनिषद्

अथर्ववेदीयोपनिषदियं मुण्डक-निमित्ताय निर्मिताऽस्ति। मुण्डकपदस्यार्थो भवति मुण्डन-सम्पन्नो जन इति। अस्यामुपनिषदि स्वज्येष्ठसुतायाथर्वणे ब्रह्मणा प्रदत्तं ब्रह्मविद्याया उपदेशमस्ति। यज्ञीयानुष्ठानमदृढरूपप्लवोऽस्ति, येन संसार-सन्तरणं कदापि भवितुं न शक्यते। इष्टापूर्तम्—यागाद्यनुष्ठानमेव सर्वश्रेष्ठं मन्तारो जनाः स्वर्गलोकं सम्प्राप्य अपि अस्मिन् भूतलेऽन्ततः समागच्छन्त्येवेति (१।२।१०)। अनेन प्रकारेणात्र कर्मकाण्डस्य हीनता तथा दोषाणामनन्तरं ब्रह्मज्ञानस्य श्रेष्ठता प्रतिपादितास्ति। द्वैतवादस्य प्रधानस्तम्भरूपो मन्त्रः—**'द्वा सुपर्णा सयुजा सखाया'** ( ३।१।१ ) अस्यामुपनिषदि समायाति। वेदान्तशब्दस्यापि सर्वप्रथमप्रयोगोऽत्रैवोपलब्धो भवति ( ३।२।६ )। ब्रह्मज्ञानिनो ब्रह्मणि विलीनस्य तुलना नाम-रूपं परित्यज्य नदीनां समुद्रे विलयनेन सह कृताऽस्ति। अस्यामुपनिषदि सांख्य-वेदान्तयोः तथ्यानामपि यत्किञ्चित्प्रभावः परिलक्ष्यते।

## ( ६ ) माण्डूक्योपनिषद्

उपनिषदियमाकारे यादृशी स्वल्पकायिकाऽस्ति, सिद्धान्ते तादृश्यैव विशालाऽस्ति। अस्यां केवलं द्वादशखण्डानि किंवा वाक्यानि च सन्ति, यस्मिन् चतुष्पादात्मनोऽतीव मार्मिकं रहस्यमयञ्च विवेचनमस्ति। ओंकारस्य मार्मिकव्याख्याकरणस्य श्रेयः इमामेवोपनिषदमस्ति। ओंकारे तिस्रो मात्रा भवन्ति, तथा चतुर्थोंऽशः 'अमात्र' एव भवति। चैतन्यस्य तदनुरूपेणैव चतस्रोऽवस्था भवन्ति—जागर्या, स्वप्नः, सुषुप्तिस्तथा चैतन्यस्याऽव्यवहार्यतुरीया दशा। आसामाधिपत्यधारणकर्त्ताऽऽत्माऽपि क्रमशश्चतुर्धा भवति—वैश्वानरः, तैजसः, प्राज्ञस्तथा प्रपञ्चोपशमरूपी शिवः, येष्वन्तिम एव चैतन्यात्मनो विशुद्धरूपमस्ति। अस्योपरि गौडपादाचार्यः माण्डूक्यकारिकाख्या व्याख्यां लिलेख। कारिकेयं मायावादिनः अद्वैतवेदान्तस्य पूर्णप्रतिष्ठा मन्यते।

## ( ७ ) तैत्तिरीयोपनिषद्

उपनिषदियं तैत्तिरीयारण्यकस्य सप्तम-अष्टम-नवमखण्डानाम् एव सम्मिलितांशोऽस्ति। अस्यारण्यकस्य सप्तमप्रपाठकस्य नामाऽस्ति 'संहिती उपनिषदि'ति याऽत्र 'शिक्षावल्ली' नाम्ना ख्याताऽस्ति। आरण्यकस्य वारुणी-उपनिषद् भृगुवल्ली च नाम्ना प्रख्याताऽस्ति। अतो ब्रह्मविद्याया दृष्ट्या वारुणी-उपनिषद एव प्राधान्यमस्ति, किञ्च चित्तशुद्धयर्थं तथा गुरुकृपाप्राप्त्यर्थं शिक्षावल्या अपि गौणरूपेणोपयोगमस्ति। अस्मिन् कतिधा उपासनाया गुरुशिष्यसम्बन्धिनः शिष्टाचारस्य निरूपणमस्ति। एकादशतमेऽनुवाके स्नातकेभ्य उपयोगिनः शिक्षाया एकत्र निरूपणमस्ति। अनेन निरूपणेन शिक्षाया उच्चादर्शस्य पूर्णपरिचयः प्राप्तो भवति। ब्रह्मानन्दवल्ल्यां ब्रह्मविद्याया निरूपणमस्ति। तदनन्तरं भृगुवल्ल्यां ब्रह्मप्राप्तेर्मुख्यसाधनस्य वर्णनमस्ति। वर्णनमिदं भृगु-वरुणयोः संवादरूपेण 'पञ्चक्रोश'-नाम्ना विख्यातमस्ति।

## ( ८ ) ऐतरेयोपनिषद्

ऐतरेयारण्यकस्य द्वितीयारण्यकान्तर्गताऽऽचतुर्थात् षष्ठाध्यायपर्यन्तस्य नाम ऐतरेयोपनिषदस्ति। अस्यामुपनिषदि त्रयोऽध्यायाः सन्ति, येषु द्वितीय-तृतीयाध्यायौ तु एकैकस्य खण्डस्यैवस्तः। प्रथमाध्याये द्वौ खण्डौ स्तः, ययोः सृष्टितत्त्वस्य मार्मिकविवेचनमस्ति। मानव-शरीरमेव पुरुषायोपयुक्तायतनं प्रमाणीकृतमत्र, यस्य विभिन्नावयवेषु देवताः प्रवेशमाप्नुवन्, तदनन्तरं परमात्मा तस्य मूर्धसीमां विदार्य प्रवेशं करोति तथा जीवभावं सम्प्राप्य भूतैः सह तादात्म्यं स्थापयति। तदनन्तरं गुरुकृपया बोधानन्तरं सर्वव्यापकस्य तस्य शुद्धस्वरूपस्य साक्षात्कारो भवति। अन्तिमाऽध्याये प्रज्ञानस्य विशिष्टा महिमा प्रदर्शिताऽस्ति। अनेनोपनिषदियमसन्दिग्धरूपेणादर्शवादस्य प्रतिपादिका प्रमाणिता भवति।

## ( ९ ) छान्दोग्योपनिषद्

सामवेदीयोपनिषदियं प्राचीनता, गम्भीरतमा तथा ब्रह्मज्ञानप्रतिपादनदृष्ट्या चोपनिषत्सु नितान्तप्रौढा, प्रामाणिका, प्रमेयबहुला चाऽस्ति । अस्यामष्टाध्यायाः किंवा प्रपाठकाः सन्ति । अस्य ग्रन्थस्यान्तिमास्त्रयोऽध्याया आध्यात्मिकज्ञान-दृष्ट्याऽतीव महत्त्वपूर्णाः सन्ति । प्रारम्भिकाऽध्यायेष्वनेकविधानामोङ्कारस्य साम्नः च गूढस्वरूपस्य विवेचनमस्ति । द्वितीयाध्यायस्यान्ते 'शौव' उद्‌गीथोऽस्ति, यः केवलं भौतिकस्वार्थपूर्त्यर्थं यागानुष्ठानस्य सामगायनस्य कर्तॄणामुपरि मार्मिक-व्यङ्ग्यमस्ति । तृतीयाध्याये सूर्यस्य देवमधुनः रूपे उपासनाऽस्ति । गायत्री-वर्णनम्, घोराङ्गिरसद्वारेण देवकीसुतं श्रीकृष्णमाध्यात्मिकशिक्षाप्रदानम् (३।१७), अन्ते सूर्यप्रादुर्भावस्य ( ३।१९ ) सुष्ठु विवेचनमस्ति । अस्याध्यायस्य प्रसिद्धोऽयं सिद्धान्तः **'सर्वं खल्विदं ब्रह्म'** ( ३।१४।१ ) अद्वैतवादस्य विजयघोषोऽस्ति । चतुर्थाध्याये रैक्वस्य दार्शनिकतत्त्व-विवेचनम्, सत्यकामजाबालस्तथा तस्य मातुः कथा ( ४।४।९ ), सत्यकामजाबालेनोपकोशलं ब्रह्मज्ञानस्य प्राप्तिः (४।१०-१७) सुष्ठुरूपेण विवेचितमस्ति । पञ्चमप्रपाठके प्रवाहणजैबालेः दार्शनिकसिद्धान्तस्य केकयाश्वपतेः सृष्टिविषयकतथ्यानां विशदं वर्णनमस्ति । अस्मिन् वर्णने षड्दार्श-निकानां सिद्धान्तस्य समन्वयं कृतमस्ति ( ५।११-२४ ) । षष्ठप्रपाठके महर्षि-आरुणेरैक्यप्रतिपादकसिद्धान्तस्य रोचकव्याख्याऽस्ति । **'तत्त्वमसि'** आरुणेरध्या-त्मशिक्षायाः पीठस्थानीयो मन्त्रोऽस्ति । सप्तमप्रपाठके सनत्कुमार-नारदयोर्विश्रुत-वृत्तान्तमस्ति । अस्योपदेशस्य पर्यवसानमस्ति—**'यो वै भूमा तदमृतम्, अथ यदल्पं तन्मर्त्यम्'** । अन्तिमप्रपाठके इन्द्र-विरोचनयोः कथाऽस्ति । आत्मप्राप्तेः व्यावहारिकोपायस्य सुष्ठु सङ्केतमस्ति ।

## ( १० ) बृहदारण्यकोपनिषद्

न केवलमियं परिमाणे विशालाऽस्ति, प्रत्युत तत्त्वज्ञानस्य प्रतिपादनेऽपि गम्भीरा प्रामाणिका चास्ति । अस्यां षडध्यायाः सन्ति । अस्या उपनिषदः सर्वस्वं दार्शनिकयाज्ञवल्क्योऽस्ति, यस्योदात्ताध्यात्मिकशिक्षातः ओतप्रोतमियमस्ति । प्रथमाध्याये प्राणानां श्रेष्ठतायास्तथा सृष्टिविषयकसिद्धान्तानाञ्च वर्णनमस्ति । द्वितीयाध्यायस्यारम्भे अभिमानिनः गार्ग्यस्य तथा शान्तस्वभावस्य काशीराज्ञः अजातशत्रोः रोचकसंवादोऽस्ति । अस्मिन्नेवाध्याये याज्ञवल्क्येन सहास्माकं साक्षात्कारो भवति, यः स्वपत्न्यौ मैत्रेयी-कात्यायन्योर्मध्ये स्वकीयं धनं विभाज्य वनं गतः । अत्रैव मैत्रेयीम्प्रति तस्य दिव्यदार्शनिकसन्देशः श्रवण-गोचरो भवति । तृतीये चतुर्थे चाध्याये जनक-याज्ञवल्क्ययोराख्यानमस्ति । पञ्चमाध्याये नानाविधानां दार्शनिकविषयाणां विवेचनमस्ति । षष्ठाध्याये प्रवहण-जैबलेस्तथा श्वेतकेतु-आरुणेयस्य दार्शनिकसंवादोऽस्ति । अस्मिन् जैवलिः पञ्चा-ग्निविद्याया विशदविवेचनं कृतवान् । याज्ञवल्क्यस्य तत्त्वज्ञानमतीवविशदं,

प्रामाणिकं तर्कपूर्णञ्चास्ति। उपनिषद्युगस्यासौ सर्वमान्यतत्त्वज्ञ आसीत्, यस्य सम्मुखे तत्त्वविद्जनकोऽपि नतमस्तको भूत्वाऽभ्यासेन ज्ञानार्जनात्पराङ्मुखो नाऽभवत्। न केवलमसौ सिद्धान्तवादी आसीदपितु व्यवहारे तत्त्वज्ञानस्याप्युपदेशक आसीत्। तस्यायमुपदेशो बृहदारण्यकस्याध्यात्मिकशिक्षाया महत्त्वपूर्णमङ्गमस्ति—**'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि'** ( बृहदा० ४।५।६ )।

## ( ११ ) श्वेताश्वतरोपनिषद्

उपनिषदियं शैवधर्मस्य गौरवप्रतिपादनायैव निर्मितेति प्रतीतो भवति। द्वितीयाध्याये योगस्य विशदं प्राचीनञ्च विवेचनमस्ति। तृतीयाध्यायादारभ्य पञ्चमाध्यायपर्यन्तं शैव-सांख्यसिद्धान्तयोः प्रतिपादनमस्ति। अन्तिमाध्याये गुरुभक्तितत्त्वं वर्णितमस्ति। गुरुभक्तिः देवभक्त्या रूपमेवास्ति—**'देवे नराभक्तिर्यथा देवे तथा गुरौ'** ( ६-२३ )। भक्तितत्त्वस्य प्रथम-प्रतिपादनमस्य उपनिषदः प्रमुखविशेषताऽस्ति। त्रिगुणानां साम्यावस्थारूपायाः प्रकृत्या विवेचनमत्राऽस्ति ( **अजामेकां लोहितकृष्णशुक्लाम्** ४।५ )। क्षर-प्रधान-अक्षरादितत्त्वानां समावेशः गीतायामत्रत एवाऽस्ति ( १।१० )। शिवः परमात्मतत्त्वरूपेणानेकशः वर्णितोऽस्ति ( **अमृताक्षरं हरः** १।१० )। अनेन प्रकारेण सांख्यवेदान्ततत्त्वयोरुदयकालिकसिद्धान्तस्य परिचयार्थमियमुपनिषद् महत्त्वपूर्णाऽस्ति।

## ( १२ ) ( क ) कौषीतकि-उपनिषद्

इयमुपनिषद् शांख्यायनारण्यकस्य चतुर्षु अध्यायेषु आतृतीयाध्यायात्षष्ठाध्यायपर्यन्तस्य भागः कौषीतकि-उपनिषद् नाम्ना ख्यातोऽस्ति। अत्र प्रजानां प्राणानाञ्च महत्ता वर्णिताऽस्ति। प्रज्ञया जीवः नानालोकेषु भ्रमणं कृत्वा ऊर्ध्वतमब्रह्मलोकं गच्छति ( प्र० अ० )। अनन्तराध्यायेषु कौषीतकि-ऋषिः प्राणस्य श्रेष्ठतां निरूपयति। इन्द्रोपदेशस्य मुख्यरूपमस्ति—प्राणस्य प्रज्ञायाश्च महत्ता। प्राणेनायोस्तथा प्रज्ञया सत्यसङ्कल्पस्य च प्राप्तिर्भवति। इन्द्रेण प्रदत्तस्तदुपदेशोऽस्ति, यज्ज्ञात्वाऽऽत्मज्ञानस्य उपलब्धिर्भवति—**एता भूतमात्राः प्रज्ञामात्रास्वर्पिताः। प्रज्ञामात्राः प्राणेर्ऽपिताः। स एव प्राण एव प्रज्ञात्मानन्तोऽजरोऽमृतो न साधुना कर्मणा भूयान् भवति नो एवासाधुना कनीयान्** ( ५।८ )।

## ( ख ) संहितोपनिषद्

इयमुक्तोपनिषदा सम्बद्धाऽस्ति। यज्ञस्याध्यात्मिकस्वरूपस्य वर्णनप्रसङ्गेऽत्रानेकाध्यात्मिकसमीकरणं प्रदत्तमस्ति। तत्तदृषीणां नामाऽपि तत्र निर्दिष्टमस्ति। एतेषां तथ्यानां परिचयार्थमस्याः उपनिषदः महत्ताऽस्ति। अस्याम् (८।४) चत्वारः पुरुषाः निर्दिष्टाः सन्ति। शरीरपुरुषः ( **दैहिकी आत्मा यस्याशरीरप्रज्ञात्मैव रसोऽस्ति** ), छन्दः पुरुषः ( **अक्षरसमाम्नायरूपं यस्याकार एव रसोऽस्ति** ), वेदपुरुषः ( **येन वेदस्य ज्ञानं भवति, अस्य ब्रह्म एव रसोऽस्ति** ), महा-

पुरुषः ( **संवत्सररूपं यस्यादित्य एव रसोऽस्ति** ) । एतेषु चतुर्षु एकत्वं स्थापितमस्ति । यो ह्यशरीरप्रज्ञात्माऽस्ति, सः सैवाऽदित्योऽस्ति । उभयोरेक एव मन्तव्यम् । अस्य तथ्यस्य सम्पुष्टौ—'**चित्रं देवानामुदगादनीकं**' (ऋ० १।११५।१) मन्त्रोऽयं प्रमाणरूपेणोद्धृतवान् । अत्रैव दैवी-मानुषीवाण्योरपि परस्परं साम्यं दर्शितम् ( ८।९ ) । अस्या उपनिषद अन्ते हवनस्य मुख्यतात्पर्यं प्रदर्शितम् । अस्यां हवनवाचिनः प्राणस्य हवनमस्ति तथा प्राणे वाचः हवनमस्ति (**वाचि हि प्राणं जुहुमः, प्राणो वाचम् ८।११**) । अस्यामुपनिषदि नानाप्रकाराणां संहितानां कल्पनाऽस्ति । अस्या उपनिषदः चतुर्थाध्याये गार्ग्यबालाकिमुनेः आवासस्य वर्णनं निर्दिष्टमस्ति । अस्मिन् प्रसङ्गे उशीनर-मत्स्य कुरु-पाञ्चाल-काशी-विदेहादीनां नाम प्रदत्तमस्ति । अनेन ज्ञातो भवति कौषीतकि-उपनिषदः भौगोलिक-क्षेत्रमुत्तरीयभारत एवासीत् ।

## ( १३ ) मैत्रायणी-उपनिषद्

स्वविशिष्टसिद्धान्तायैवेयमुपनिषत् सदा प्रख्याता स्थास्यति । अस्यामुपनिषदि सप्तप्रपाठकाः सन्ति । सम्पूर्णोपनिषद् गद्यात्मिकैवास्ति किञ्च स्थाने स्थाने पद्यमपि प्रदत्तमस्ति । अन्यासामुपनिषदामप्युद्धरणानि अत्र मिलन्ति । यथा—**विद्वान् पुण्यपापे विधूय** ( मै० ६।१८ = मुण्डकः ३।१।३ ); शब्दब्रह्मणि **निष्णातः परं ब्रह्माधिगच्छति** ( मै० ६।२२ = ब्रह्मबिन्दु उप० १७ ); **यदा पञ्चावतिष्ठन्ते** ( मै० ६।३० = कठ० ६।१० ); **सर्वं मम एव** ( मै० ६।३० = बृहदा० १।५।३ ) । ईश-कठयोर्द्वे द्वे उद्धरणे मिलतः । त्रयोदशोपनिषत्स्वियमपेक्षाकृतमर्वाचीना मन्यतेऽनेनैव कारणेनेति ।

## ( १४ ) महानारायणोपनिषद्

सायणभाष्येण सह प्रकाशितः तैत्तिरीयारण्यकस्य दशमप्रपाठकस्तथा तत्पूर्ववर्त्तिनो भट्टभास्करस्य भाष्येण सह प्रकाशितस्तद्ग्रन्थस्य षष्ठप्रपाठकः, महानारायणोपनिषद्, याज्ञिकोपनिषद् किंवा केवलं नारायणीयोपनिषदिति नाम्नाऽभिहितोऽस्ति । पाठस्यानेकरूपतां दृष्ट्वा तथा वेदान्त-संन्यास-दुर्गा-नारायण-महादेव-दन्ति-गरुडादिशब्दानामत्र सङ्कलनं दृष्ट्वा चोपनिषदियमतिप्राचीनेति कथितुं न शक्यते तथाऽपि विण्टरनित्समहोदयस्त्वियमुपनिषद् मैत्र्युपनिषदः प्राचीनतरं मन्यते । बौधायनसूत्रेष्वस्या विवरणं मिलति, तेनेमामत्यर्वाचीनामपि कथयितुं न शक्यते । अस्यां नारायणस्योल्लेखः परमात्मतत्त्वरूपेण बहुशो मिलति । यथा—६४ अनु० ११ प्रपा० अनु० १–५ मन्त्रैः सहैव स्नानाचमनहोमादिभ्यः उपयुक्तमन्त्राणां तत्र सत्ता, एवं चान्ते तत्त्वज्ञपुरुषजीवनस्य यज्ञरूपेण चित्रणमस्ति । एतेषामेव तथ्यानामाधारोपर्यास्या नाम नारायणीयोपनिषत् किंवा याज्ञकी-उपनिषदिति पदेन स्मर्यते । अस्यामात्मतत्त्वस्य निरूपणं विशदरूपेणास्ति । एकैव परमसत्ताऽस्ति, सैव सर्वरूपभागिति—

'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णपुरुषेण सर्वम् ।'

( अनु० १० मन्त्रः २० )

एवंविध-निरूपणेन सह तस्य परमात्मनोऽभिव्यक्तिः अनेकशो मिलति । मेधार्थं प्रार्थना, पापनिवृत्त्यर्थं त्रिसुपर्णमन्त्राः, पुण्यकर्मणः प्रशंसा च मिलन्ति— 'यथा वृक्षस्य सम्पुष्पितस्य दूराद् गन्धो वात्येवं पुण्यस्य कर्मणो दूराद् गन्धो वाति ।' अनु० ९ ।

सत्य-तपस्-दम-शम-दान-धर्म-प्रजनन-अग्नि-अग्निहोत्र-यज्ञमानसोपासनेत्यादीनां र्णनमतीव प्रभावोत्पादकमस्ति । उदाहरणार्थं सत्यस्य वर्णनं पश्य—

'सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि ।
सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितम् ।
तस्मात्सत्यं परमं वदन्ति ।'

## ( १५ ) बाष्कलमन्त्रोपनिषद्

उपनिषदियं तासु चतसृषु नवप्राप्तोपनिषत्स्वन्यतमाऽस्ति, या केवलं पारसी-लैटिन-जर्मनाद्यनुवादानां माध्यमेनैवास्माकं स्मृतिपटले आसीत्, किञ्च सम्प्रत्यस्या एका पाण्डुलिपि आड्यारपुस्तकालये प्राप्ताऽस्ति । अस्याः प्रकाशनं वारत्रयमभवत् । ( १ ) मद्रासनगरीतः, ( २ ) डॉ० बेल्वेलकरेण, ( ३ ) अष्टादशोपनिषदामन्तर्गते वैदिकसंशोधनमण्डले पूनानगरीतः । ऋग्वेदस्य तद्वाष्कलशाखान्तर्गतेयमिति यत्सम्प्रति अप्राप्याऽस्ति । अस्यां पञ्चविंशति मन्त्रा एव सन्ति । अस्याः प्रतिपाद्यविषय आत्मतत्त्वमस्ति । यथा—

'अहं वेदानामुत यज्ञानामहं छन्दसामविदं रयीणाम् ।
अहं पचामि सरसः परस्य यदि देतीव सरिरस्य मध्ये ।। १४ ।।
अहं चरामि भुवनस्य मध्ये पुनरुच्चावचं व्यश्नुवानः ।
यो मां वेद निहितं गुहाचित् स इवित्था बोभवीदाशयध्यै ।। १८ ।।
अहमस्मि जरिता सर्वतोमुखः पर्यारणः परमेष्ठी नृचक्षाः ।
अहं विष्वङ्ङहमस्मि प्रसात्वानहमेकोऽस्मि यदिदं नु किञ्च' ।।२५।।

## ( १६ ) छागलेयोपनिषद्

बाष्कलमन्त्रोपनिषदिवास्या अप्येकैव पाण्डुलिपिः आड्यारपुस्तकालये मिलति । अस्याः प्रकाशनमपि पूर्ववदेव पूर्वोक्तरूपेणैवाऽभवत् । अतिलघ्वीयमुपनिषदस्ति । अस्या अन्ते सकृदेव 'छागलेयः' इति नाम आयाति । सरस्वतीनद्यास्तटे ऋषीणां सत्रस्योल्लेखो मिलति । तैः कवष ऐलूषस्य निन्दा 'दास्याः पुत्र' इति कथयित्वा कृता । 'कवष ऐलूषः' पार्श्ववर्त्ती आत्रेयस्य शवं प्रति सङ्केतयित्वाऽपृच्छत्—यो हि आत्रेयः शुनकानां सत्रे 'अच्छावाक्'-रूपेण महा-

यज्ञीयकार्यमकरोत्, तस्य तत्सर्वज्ञानं किमभवत् ? ऋषिः प्रत्युत्तरयितुं नाशक्नोत् । तेन प्रार्थितः कवष ऐलूषः तमृषिं कुरुक्षेत्रे बालिशनामकस्य ऋषेः पार्श्वे तदर्थं प्रेषितः । तत्र तेन वर्षमधीतम् । ततस्तैरप्यस्य दृष्टान्तेन स उपदिष्टः—

**'यथैतत्कूबरस्तक्षणायोज्झितो नेङ्गते मनाक् ।**
**परित्यक्तोऽयमात्मना तद्वदेहो विरोचते ॥'**

## ( १७ ) आर्षेयोपनिषद्

इयमपि उपर्युक्ते द्वे उपनिषदाविव पाण्डुलिपिनैव ज्ञाता प्रकाशिता चाऽस्ति । अस्यामपि मात्रानुच्छेद एवास्ति । ऋषीणां ब्रह्मविचारः पारस्परिक-विमर्शेन वर्णितमस्ति । अत्र विश्वामित्र-जमदग्नि-भरद्वाज-गौतम-वशिष्ठादि-प्रमुखऋषयः सन्ति । एतेषामृषीणां विचारविमर्शस्य विवरणमत्रास्ति । अनेनैव कारणेनास्य नाम्नः आर्षेयस्य सार्थकताऽस्ति ।

## ( १८ ) शौनकोपनिषद्

उपर्युक्तानां तिसृणामुपनिषदां कोटौ शौनकोपनिषदपि आडयारपुस्तकाल-यस्थपाण्डुलिपिना ज्ञाता प्रकाशिता चास्ति । खेदस्यायं विषयो यदद्य यावदुप-निषदस्याः किमपि भाष्यं विवरणं वा नैव मुद्रितम् । उपलभ्यते केनाऽपि ऋषिणा निर्मितं परं प्रसन्नगम्भीरं हस्तलिखितं पाण्डुलिपिः आडयारग्रन्थालये । तथैव ए० बी० कीथ-नामकेन विपश्चिता कृतं तस्य अंग्रेजीभाषान्तरमपि नाविदितं विदुषा ह्यन्ते चास्याः पाण्डुलिप्याः उपदेष्टृरूपेण शौनकस्योल्लेखो मिलति, तेनास्याः नाम शौनकोपनिषदित्यस्ति । असुराणामुपरि देवानां विजयः एवमिन्द्रस्य महत्त्वपूर्णवर्णनेन सह छन्दसामप्युल्लेखः कुर्वन्नेकाक्षरोङ्कारस्यो-पासनाकरणस्योपदेशः प्रदत्तोऽस्ति ।

**निष्कर्षः**—यद्यपि उपनिषद्ग्रन्थस्याऽपि विधिप्रतिपादनमेव मुख्यो विषयः तथाऽपि प्रस्तुतेऽस्मिन् ऐतिहासिकग्रन्थे प्रायेणाथर्ववादेषु निबद्धाः पूर्ववर्णिता विषया इव प्रसङ्गागतास्तदानीन्तनरीतिनीत्यादिपरिचायका विषयास्तथा औप-निषदिकतथ्यानां क्रमेण वर्णनं नूनं विदुषां छात्राणाञ्च मनस्तोषायैतिहासिक-ज्ञानवृद्धये च भवेदिति नो विश्वासः ।

---

# दशमोऽध्यायः

## वैदिकवाङ्मयस्य वैलक्षण्यम्

वैदिकवाङ्मयस्य पद्येषु गद्येष्वपि तादृशं सौष्ठवं वैलक्षण्यञ्च प्राप्यते यत्तेन विदुषां मनांसि हठादाकृष्यन्ते। लौकिकेषु काव्येषु जातेष्वपि वैदिकवाङ्मयगता काव्यमाधुरीनापकृष्टतां गता तत्पठतां मनांसि वैदिकं काव्यमेव प्रथमं मन्यन्ते, ततोऽन्तरं लौकिकादि किञ्चिदन्यत्। वेदे समायातानि पाञ्चाल-मिथिलाप्रभृति-नगरीवर्णनानि यथा कलायुतानि तथैव यथार्थान्यपि। वृत्रस्य विकरालस्य रूपस्य देवासुरयोः सङ्ग्रामस्य च वर्णनमेकतो यदि रोमाञ्चमुदञ्चयति, तदा कतिपयादि पठ्यमानमेव हृदयं स्तिमितयति नयने उदस्रयति च।

वैदिका ऋषयः मनोभिलषितभावाभिव्यक्तीकरणे परमपटव आसन्। यत्र तत्रान्तर्भावानामभिव्यक्तिहेतवेऽलङ्कारविधानेऽपि ते पराङ्मुखा नासन्। किमितोऽधिकमुपमालङ्कारस्य नितान्तं भव्यं मनोरमं तथा हृदयावर्जकं रूपमस्माकं मन्त्रेष्वेव दृग्गोचरीभवति। तथ्यं त्विदमेवास्ति यदुपमायाः काव्यसंसारे पूर्वावतारस्तावदेव प्राचीनोऽस्ति यावत्कवितायाराविर्भावः। आनन्देन सिक्तहृदयकवेर्वाणी उपमाऽलङ्कारेण स्वात्मानं विभूषयितुं कोमलोल्लासस्य तथा मधुमयानन्दस्य च बोधं करोति। प्रसङ्गानुकूलालङ्काराणां प्रयोगे ऋषिः स्वीयां सूक्ष्ममर्मज्ञतां प्रकाशयति। स तानुपयुज्य प्रचुरतरपदविभाव्यं वक्तव्यं परिमिततरपदेष्वेव प्रकटीकर्त्तुं सदवसरं सरलतयैव हस्तगतं करोति। वैदिकवाङ्मये व्यर्थमेवालङ्काराणामुपयोगो न दृश्यते। अतः सा स्फुटचन्द्रतारका विभावरीव विभाति। तत्रानुप्रासच्छटा, उपमावैभवता च अनायासेनैव च समागतास्ति। उत्प्रेक्षा दृष्टान्तार्थान्तिरन्यासादिका अलङ्कारा वैदिकऋषेर्बहुश्रुतत्वं व्यापकदृष्टित्वञ्च ज्ञापयन्ति।

वैदिकवाङ्मयस्योपमानां रसात्मकत्वाद्रसरमणीयत्वमतितरामेव च मर्मस्पर्शित्वमवलोक्यते। औचित्ये सन्दर्भे च शोभायाः समुत्पादनस्य कला तासु नितान्तमभिनन्दनीयास्ति। स्वानुभूतिषु तीव्रताऽऽनयनाय तथा तां सरलतया सहृदयहृदयपर्यन्तं सम्प्रेषणाय कवेर्वाणी येषामन्तरङ्गमधुमयकोमलसाधनानामुपयोगं करोति, अलङ्कारस्तु तेषामेवान्यतमरूपमस्ति। वयमेवंविधस्य काव्ययुगस्य कल्पनाऽपि कर्त्तुं न शक्नुमः, यासु भावभङ्गीषु कोमलविलाससञ्चारहेतवे कस्यापि प्रकारकस्य साम्यविधानस्याश्रयो न भवति। अत एव वैदिकमन्त्रेषु अलङ्काराणां, विशेषत औपम्यगर्भालङ्काराणां विधानोपरि आलोचका विस्मयान्तःकरणा भवन्ति।

वैदिकसूक्तेषु नानादेवताभिर्यज्ञे समागमनाय, भौतिकसौख्यसम्पादनाय, आध्यात्मिकान्तर्दृष्ट्युन्मेषणाय बहुविधेषु छन्दःसु प्रार्थना कृताऽस्ति। तासां रूपाणां भव्यवर्णनं कवेः कलाया विलासमेवास्ति। प्रार्थनाऽवसरे तेषां पवित्र-भावानां कान्तभावनानाञ्च रुचिराभिव्यञ्जनाऽप्यस्ति। व्यङ्ग्यार्थविलसितानि व्यञ्जकपदावलिपेशलानि च वाक्यानि विद्यन्ते। परमोच्चविचारबन्धुरोऽस्ति वैदिकऋषिः। न तस्मै जीवनस्य कलारहितत्वं रोचते। स जीवनं कलासु कुशलं द्रष्टुमनाः। तद्विचारेण जीवनं तदेव यत्र कला विलसन्ति। वेदेषु विराजमानाः कलाः स्फुटतयैव बोधयन्तीदं यत् स कलाकलितमेव जीवनं सम्भावयति। वेद-वेदाङ्गेषु क्वचिदुषाविषयकमन्त्रेषु सौन्दर्यभावनायाराधिक्यं परिस्फुरति तदा क्वचिदिन्द्रविषयकमन्त्रेषु तेजस्वितायाः प्राचुर्यं परिलक्ष्यते। यद्यग्नेः रूपवर्णन-प्रसङ्गे स्वभावोक्त्याराश्रयो वर्त्तते तर्हि वरुणस्तुतौ हृद्गतकोमलभावानां माधुर्यस्याभिव्यक्तिरस्ति। **'उतत्वः पश्यन् न ददर्श वाचं, जायेव पत्ये उषती सुवासा'**। **'द्वा सुपर्णा सयुजा सखाया'** इत्यादिकानि सन्त्यनेकानि वाक्यानि, येषां भावान् न साहित्यशात्रानभिज्ञो ज्ञातुं प्रभवति, अथ च यो जनः साहित्य-शास्त्रे निष्णातो नाऽस्ति स व्यञ्जनाप्रतिपाद्यमानान् वैदिकार्थानपि नावबोद्धुं शक्नोति। अनेन प्रकारेण वैदिकमन्त्रेषु काव्यगतगुणानां पर्याप्तदर्शनं काव्यजगतः न काऽप्याकस्मिकी घटना वरीवर्त्ति। तन्मयताया अनन्यतायाश्चेदं विशद-परिचायकं चिह्नमस्ति, भावानां सहजा सरला चाभिव्यक्तिरस्ति। असन्दिग्ध-रूपेण वेदेषु एतेषां विशालं साम्राज्यमस्ति।

## (१) रसविधानम्

ऋग्वेदस्य मन्त्रेषु अनेकरसानां मनोमुग्धकरं संविधानकमस्माकं मनसः प्रधानाकर्षणमस्ति। वैदिकऋषेर्मनोगतभावानां सरलनिदर्शनमेतेषु मन्त्रेषु समुपलब्धं भवति। फलतोऽत्र रसानां सङ्केतः स्वाभाविकोऽस्ति। इन्द्रस्तुतौ वीररसस्याभिव्यञ्जना स्वकीयभव्यरूपेणोपस्थिता भवति। दाशराज्ञसूक्ते वसिष्ठेन राज्ञः दिवोदासस्य तथा तेषां प्रतिपक्षिणां सङ्घर्षस्य सुष्ठु वर्णनं कृतम्।

गृत्समदऋषिरिन्द्रस्यानेकासु स्तुतिषु इन्द्रस्य वीरताया विशदं सङ्केतं करोति—

**'यस्मान्न ऋते विजयन्ते जनासोऽयं युध्यमाना अवसे हवन्ते।**
**यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः॥'**

(ऋग्वेद २।१२।९)

इन्द्रं विना न कोऽपि मानवो विजेतुं न शक्नोति। योद्धारो जना आत्म-रक्षार्थं तमेवाह्वयन्ति। विश्वस्मिन्नसौ श्रेष्ठतमोऽस्ति। अच्युतान् च्यावयत्यसौ। यतो ह्यसौ शौर्यस्य वीर्यस्य च प्रतीकोऽस्ति।

इत्थं सर्वत्र स्थितानां भावानामभिव्यक्तिः कविना समुचितेन प्रशंसनीयेन प्रकारेण कारिताऽस्ति। कवेर्लेखन्याः प्रभूतबलशालिनीत्वात् तस्या एकैकं पदं बहुकार्यसम्पादनकारि सिद्धयति। अतएवैतस्माच्छ्लोकान्न केवलमप्रस्तुतविधान-सौन्दर्यं दृक्पथेऽवतरत्यपि तु ओजसश्छटा रीतेः प्रकर्षः पूर्णोपमाप्रस्तुतप्रशंसा तद्गुणाख्यानामलङ्काराणां कान्तिश्च सम्यक् पाठकानां चेतांसि आकर्षयन्ति युगपदेव। अहो! ऋषेरत्र सर्वे प्रयासाः वीररसमेव परिपोषयन्तो दृष्टा भवन्ति।

सर्वेषामपि सुधियामिदं तथ्यं सुविदितमेव यत् सौन्दर्यमेव काव्येषु 'रस' इत्येतेन नामधेयेन विश्रुतम्। कविस्तमेव साधयितुं काव्यं कवयति। मङ्गलानां विधानं स रसः शृङ्गारकरुणादिभेदेन नवविधतां भजते। नवस्वपि रसेषु शृङ्गारो नाम रसो रसराज इति सर्वेऽपि साहित्यशास्त्रिणः साधु विदन्ति। यथा त्वरया स मानसं मथ्नाति, मदयति चपलयति च तत्तथा नान्यस्तस्मात् स रसेषु श्रेष्ठो रसो मतः। संयोग-विप्रलम्भभेदेन सो द्विविधः। उभयोरपि भेदयो-र्विप्रलम्भः शृङ्गारो मधुरतरः। तत्र चेतसो द्रुतीकरणक्षमतातितरां तरस्विनी भूत्वा विभाति, तस्मात्ततः परं मधुरिमाणं न कोऽप्यन्यो रसो विन्दति।

ऋग्वेदस्यानेकेषु सूक्तेषु शृङ्गाररसस्याऽपि सुष्ठु भावनाया रोचक उल्लेखो मिलति। एकस्मिन् सूक्ते (१०।९५) पुरूरवा-उर्वश्योः प्रणयप्रसङ्गे विरह-खिन्नस्य नायकस्य कथने विप्रलम्भशृङ्गारस्यास्माकं सङ्केतो मिलति—

**'इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः।**
**अवीरे क्रतौ विदविधुवन्नोरा न मायुं चितयन्त धुनयः॥'**

शृङ्गाराभासस्याऽपि सङ्केतो यम-यमीसूक्तेऽपि (१०।१०) उपलब्धो भवति। यत्र यमी निजभ्रात्रा यमेन प्रणय-याञ्चां करोति। यमस्तु तस्याः प्रलोभनेनात्मानं संरक्षति।

## (२) अलङ्कार-विधानम्

ऋग्वेदस्य मन्त्रेषु अलङ्काराणां छटा स्वीयां सूक्ष्ममर्मज्ञतां प्रकटयति। एते अलङ्काराः स्वत आविर्भूता अलङ्काराः सन्ति। वैदिकाऽलङ्कारेषु यत्सौष्ठवं यत्पाटवं, यदार्जवं शोभते न तदन्यत्र प्राप्यते। वैदिकऋषिः कविष्वस्ति कविः। सः प्रेमपर्युपासको महान् भावुकहृदयवान् सौन्दर्यसेविषु शिरोमणिरिति सर्वमपि जगज्जानाति। वैदिकमन्त्रेषु प्रयुक्ताऽलङ्काराः सौन्दर्यस्य कोमलां भावनां सम्य-गभिजानात्येव न, तत्प्रकटीकरणेऽपि ते परमप्रवीणाः सौन्दर्याभिव्यक्तीकरणे तेषां सरलभावनां केन न प्रेक्ष्यते? एतेऽलङ्काराः कविकथनं प्रभावशालीकरणे, प्रतिपाद्यविषयाणां रोचकचित्रार्पणे, हृदयगतभावमावर्जयितुञ्च सर्वथा समर्थाः सन्ति। रूपकन्तु वेदस्यैकः प्रशंसनीयो बहुलप्रयुक्तालङ्कारोऽस्ति। वेदानां शैल्येव रूपकमयी वर्त्तते। सुष्ठूपमानामेका सन्ततिः ऋग्वेदीयमन्त्रेषूल्लसिता भवति।

अन्यालङ्कारेष्वतिशयोक्ति-व्यतिरेक-समासोक्त्यादीनामनेकानामप्यलङ्काराणामत्र दर्शनं भवति ।

ऋग्वेदीयकवेरुपमाऽतिप्रियोऽलङ्कारोऽस्ति, यस्य शृङ्खलाऽतीव चारुतया विन्यस्ता कृताऽस्ति—

**'अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम् ।**
**जायेव पत्य उशती सुवासा उषा हस्रेव: निरिणीते अप्सा ।।'**

उषा कदाचिद् भ्रातृहीना भगिनीव स्वदायभागमवाप्तुं पितृस्थानीयसूर्यस्य पार्श्वे समायाति, कदाचित्सुवस्त्रं धारणं कृत्वा पतिं स्वानुरागरज्जौ संयमनाय कमनीया कामिनीव स्वपत्युः सम्मुखे निजसौन्दर्यं प्रकटीकरोति ।

वैदिककविः स्वोपमानं सञ्चयितुं पार्श्ववर्त्तिनः पशुजीवनमप्यवलम्बनं करोति । सायंकाले गोचरभूम्यां प्रत्यागतानां गवां दृश्यस्तमतीव प्रियोऽस्ति ।

इन्द्रस्तुतौ ( १।३२ ) आङ्गिरसहिरण्यस्तूपऋषेरुक्तिरियमस्ति यत् त्वष्ट्रा-निर्मितेन स्वरयुक्तवज्रेण यदेन्द्रः पर्वताश्रितं वृत्रं जघान तदा रम्भणं कुर्वन्तीं समागतानां गवामिव जलानि समुद्रमनुजग्मुः—

**'अहन्नहिपवते शिश्रियाणां त्वष्टास्मै वज्रं स्वयं ततक्ष ।**
**वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमवजग्मुरापः ।।'**

( ऋग्वेद १।३२।२ )

अत्रत्योपमा तत्सर्वमपि अतितरामेव समीचीनतया प्रकाशयन्ती लक्ष्यते, यन्निखिलं विशालैका पदपङ्क्तिरपि नैतावत्या ललिततयाऽऽविर्भावयितुं सक्षमाऽस्ति । 'वाश्रा धेनवः' इत्यनेन पदेन वत्सदर्शनाऽऽकुलिताभिः नदन्तीभिः धेनुभिः सह वृष्टयाः साम्यं कृत्वा वैदिकऋषिः वेदपाठकानामग्रे वृष्टया आश्चर्यवत्वं झञ्झावातेन सह वर्षणत्वं समुद्रं प्रति वेगेन प्रवहणशीलत्वं त्वरित्वञ्चानेकविधस्थितेरलङ्घ्यत्वञ्च इत्यादि बहून् भावान् समुपस्थापयतीति सुधीभिर्विचारणीयम् ।

हृदयवृत्तीनां मार्मिकाभिव्यक्तये वरुणसूक्तानामनुशीलनं विशेषेण सहायकः सिद्धो भवति । महर्षिणा वसिष्ठेनैकस्मिन्नितान्त-भावप्रवणसूक्ते (ऋ० ७।८६) स्वकीयाराध्यदेवं वरुणं प्रति स्वकीयं कोमलोद्गारं प्रकटितम् । ऋषिरसावात्मानं पृच्छति—कदाऽहं वरुणेन सह मैत्रीमाप्स्यम् ? क्रोधरहितो भूत्वा प्रसन्नचित्तेन वरुणः कदा मद्दत्तं हविष्यं ग्रहीष्यति ? कदाऽहं प्रसन्नमनसा तस्य प्रसादं प्राप्स्यामि ?

**'उतस्वया तन्वा संवदे तत्कदान्वन्तर्वरुणे भुवानि ।**
**किं मे हव्यमहृणानो जुषेत कदा मृडीकं सुमना अभिख्यम् ।।'**

( ऋग्वेद ७।८६।२ )

विदुषां मीमांसया वरुण-कोपेन यदा सोऽवगतोऽभवत्, तदा सः कथयति—हे देव ! पितृभिः कृतद्रोहानपेहि, तान् द्रोहान् विरोधान् चापह्रियताम्, ये मया स्वशरीरेण कृताः। यथा पशूनपहर्त्तारं चौरम् तथा रज्वा बद्धं वत्सं जना मुक्तं कुर्वन्ति तथैव ममापराधरज्वा बद्धं वसिष्ठमपि त्वं मोचय।

'अव द्रुग्धानि पित्र्या सृज्या नोऽव या वयं चकृमा तनूभिः।
अव राजन् पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥'
(ऋग्वेद ७।८६।५)

आत्मसमर्पण-नम्रता-दीनता-अपराधस्वीकृत्यादिभव्यभावनाभिर्मण्डितं सूक्तमिदं तद्वैष्णव-भक्तानां वाणीं स्मारयति, यस्यां ते सहस्रापराधं कृत्वाऽपि भगवता सहात्मसात्कर्त्तुं याचयन्ति।

सूर्योदयस्य दृश्यमपि तं प्रियमस्ति। अस्यापि वर्णनं बहुविधाऽलङ्कारमाश्रित्य कृतं तेन। प्रभातवर्णनप्रसङ्गे सः कथयति यथा कोऽपि जनः कमपि चर्म नीत्वा जलाभ्यन्तरे स्थापयन्ति तथैवोदिते सूर्ये तस्य किरणानि अन्धकारं निक्षिपन्ति—

'दविध्यतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः।'
(ऋग्वेद ४।१३।४)

रूपकाणामपि बाहुल्यमृग्वेदस्य मन्त्रेषूपलब्धमस्ति। सूर्यः आकाशस्य स्वर्णिमो मणिरस्ति (**दिवो रुक्म उरुचक्षा उदेति**—७।६३।४)। सूर्यस्तु तद्रञ्जितप्रस्तरखण्डमस्ति यदाकाशे स्थापितमस्ति (**मध्ये दिवो निहितः पृश्निरश्मा**—५।४७।३)। अग्निः स्वप्रभयाऽऽकाशं स्पृशति। स्पष्ट एवास्ति यदेते मन्त्रा अतिशयोक्तिमूलकाः सन्ति। (**धृतप्रतीको बृहता दिवि स्पृशा**—५।१।१)। ऋग्वेदेऽतिशयोक्त्या उदाहरणस्य प्रख्यातोऽयं मन्त्रोऽस्ति, सायणानुसारेण यस्मिन् यज्ञस्य अथवा पतञ्जल्यानुसारेण शब्दस्य अथवा राजशेखरानुसारेण काव्यस्य स्तुतिः कृताऽस्ति—

'चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याम् आविवेश ॥'
(ऋग्वेद ४।५८।३)

अपरमप्युदाहरणमस्ति—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥'

सुष्ठु पक्षधरौ, सहवासिनौ, समानख्यातौ, द्वौ पक्षिणौ एकस्यैव वृक्षस्योपरि स्थितौ, तयोरेकः सुस्वादुफलं भक्षयति, अपरस्तु अभुक्त्वैव विराजमानोऽस्ति। अत्र पक्षीद्वयस्योपमानेन जीवात्मापरमात्मारूपमुपमेयस्य सर्वथा निगरणत्वेना-

तिशयोक्तिरस्ति। उत्तरार्द्धे पक्षीद्वयस्य स्वभावे वैभिन्येन व्यतिरेकाऽलङ्कारस्यापि गूढः सङ्केतो मिलति। व्यतिरेकस्यापरमपि सुष्ठूदाहरणमृतचक्रस्य वर्णनमस्ति—'द्वादशारं नहि तज्जराय वर्वर्त्ति चक्रं परिद्यामृतस्य' ( ऋग्वेद० १।१६४।११ )।

उपनिषत्स्वप्यनेकेषां सुष्ठु अलङ्काराणां दृष्टान्ता मिलन्ति। कठोपनिषदि रथस्य रूपकं शरीरमस्ति ( १।३।३ )। ऋग्वेदे ऋतुवर्णनस्याप्यनेके मन्त्रा मिलन्ति। पर्जन्यसूक्ते ( ५।८३ ) वर्षाया अतीव नैसर्गिकं वर्णनमस्ति। मण्डूकसूक्तेऽपि ( ७।१०३ ) वर्षाकालस्यैको रमणीयः दृश्योऽस्ति। अत्रैकस्य दर्दुरस्य शब्दः श्रुत्वाऽपरोऽपि टरटरायते। ध्वनिरियं गुरुवचनं श्रुत्वा वेदध्वनिकर्तॄणां शिष्याणां पाठध्वनिरिव प्रतीतो भवति—

'यदेषामन्यो अन्यस्य वाचं शाक्तस्येव वदति शिक्षमाणः।
सर्वं तदेषां समृधेव पर्व यत् सुवाचो वदतनाध्यप्सु ॥ ५ ॥'

अनेन प्रकारेण वेदेषु अलङ्काराणां प्रभाऽऽलोचकानां दृष्टिं बलादाकर्षति।

## ( ३ ) सौन्दर्यपरिकल्पना

उषादेव्या विषये समुपलब्धानां सूक्तानां पर्यालोचनेन ज्ञातो भवति यदेतानि सूक्तानि काव्यदृष्ट्याऽपि नितान्तानि सरसानि सहजानि भव्यभावमण्डितानि च सन्ति। प्रभाते अरुणिमामण्डितं, सुवर्णच्छटाविच्छुरितं प्राची नभोमण्डलं कस्य सहृदयस्य हृदयं नावर्जयति? वैदिकऋषिस्तत्सौन्दर्यं प्रेमपूरितदृष्ट्यैव पश्यति। तद् दिव्यरूपं दृष्ट्वैव परिमुह्यति। उषादेवी मानवीस्वरूपे एव कविवल्लभा भवति। चेद् उषा महान् स्वर्गलोकस्यैवाधिकारिणी मात्रैव भवेत् तदाऽस्या विश्वस्योपरि ऊर्ध्वलोक एव स्वदिव्यच्छविना जगदाकर्षयन्ती स्वात्मन्येव दीव्यति किञ्चात्र उषादेव्या सह वैदिकऋषेरनन्यता प्रतिभाति।

'कस्यचन पदार्थस्य सम्यग्विलोकनं कृत्वा तस्य स्वाभाविकतया यद् यथायथवर्णनं तदेव कलाया उत्कृष्टत्वं स्मृतम्'। यद्रस्किन आह तद्वैदिकऋषेः प्रकृतिवर्णने कृत्स्नतयाऽन्वर्थी भवति। तदीये प्रकृतिवर्णने, उषादेव्याः सौन्दर्यकथने च तस्य निरीक्षणनूतनता सहृदयताया उदात्तता, कल्पनाया अभिनवोन्मेषो विद्योतते। तत्प्रकृतिश्रियस्तस्य प्रकृतिजनन्युत्सङ्गे शैशवादेव क्रीडनं वर्द्धनञ्च वेदयन्ति। अतः उषावर्णने प्रकृतिलक्ष्मी तथा विराजते यथा मणिमालायां स्वर्णसूत्रम्। उषा केवलं वाह्यसौन्दर्यस्यैव प्रतिमा नास्ति प्रत्युत सा कवये आन्तरिकसुषमाया अपि प्रतिमूर्त्तिरूपेणावस्थिताऽस्ति। पद्मिन्युपमितत्वात्तस्याः सुकोमलत्वं कृशाङ्गत्वं सितत्वस्पर्शं सुखत्वादिकञ्च कियन्मनोज्ञभावेन पाठकस्य पुरतः समुपस्थितं भूत्वा तन्मनो नन्दयन्तीहेत्यपि विलोकनीयं वर्त्तते।

वैदिकऋषेः प्रतिभाचातुरी उषादेव्याः चरित्रचित्रणेऽपि सर्वथैव कुशला। अतः कविरत्र उषादेव्या यच्चरित्रमत्र चित्रयति तत्सजीवतां प्राप्य हृदयावर्जकं

च जायते। अतएव कविः कथयति—'हे प्रकाशवती उषे! त्वं कमनीया कन्या इव अत्यन्ताकर्षणमयी भूत्वाऽभिमतफलदातुः सूर्यस्य पार्श्वे गच्छसि तथा तत्र तत्सम्मुखे स्मिताननना तरुणीव स्ववक्षम् अनावृतं करोति।' ईदृक् रूपं को विस्मर्त्तुं शक्नोति? अनावृतं वक्षःस्थलं सम्प्रेक्ष्य को न मानवः प्रेरणाविशेषमश्नुते? अनेन रूपेण उषादेवी कस्यचनादिजनस्य हृदयात् स्रस्तो भवितुमर्हति? पश्य—

'कन्येव तन्वा शाशदानां एषिदेवि देवमियक्षमाणम्।
संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुसे विभाती॥'
(ऋग्वेद १।१२३।१०)

अत्र कवेर्मानवीकरणस्य भावनाऽतिप्रबलाऽस्ति। अत्र उषादेव्याः कुमारी रूपस्य कल्पना वर्त्तते। स्मितवदना तस्याः सुन्दरस्वरूपं प्रकटयति। युवति-कन्यायाः कल्पना, सूर्यस्य समीपगमनस्य भावना कवेर्व्यापकदृष्टित्वं ज्ञापयति।

उषादेव्या उपरिकृतान्या कल्पनाऽपि तथैव दृग्गोचरी भवति, उषा स्व-प्रकाशेन संसारं तथैव संस्कृतं करोति यथा कोऽपि योद्धा स्वं शस्त्रं घर्षयित्वैव तं संस्करोति। यथा—

'अपेजते शुरो अस्तेव शत्रून् बाधते तमो अजिरा न बोल्हा।'
(ऋग्वेद ६।६४।३)

उषा स्वप्रकाशं तथैव प्रसारयति यथा गोपाः गोप्रचारभूमौ स्वकीया गाः प्रसारयन्ति अथवा काऽपि नदी स्वजलानि प्रसारयति—

'पशून्न चित्रा सुभगा प्रथाना सिन्धुर्नक्षोद उर्विया व्यश्वैत।'
(ऋग्वेद १।९२।१२)

उषा प्रतिदिनमुदेति, इति तस्याः अमरत्वस्योद्घोषणाऽस्ति—

'उषः प्रतीची भुवनानि विश्वोर्ध्वा तिष्ठस्य मृतस्य केतुः।'
(ऋग्वेद ३।६।३)

कवेर्दृशि नित्यं प्रति उषादेव्याः आगमनं चक्रावर्त्तनमिवास्ति, येन प्रकारेण चक्रं सदैवावर्त्तितं भवति तथैवोषाऽपि स्वावर्त्तनं करोति।

'समानामर्थं चरणीयमाना चक्रमिव नव्यस्यावर्वृत्स्व।'
(ऋग्वेद ३।६।३)

एतेषूदाहरणेषूपमाया विधानम् उषादेव्या रूपभावनां तीव्रयितुमतीवोचित-रीत्या प्रयुक्तं कृतमस्ति।

उषाविषयकमन्त्राणामनुशीलनेन वयं वैदिकऋषीणां प्रकृतिं प्रति उदात्त-भावनां ज्ञातुं शक्नुमः। प्रकृतिचित्रणं प्रकारद्वयेन भवितुमर्हति—

## (१) अनावृतं वर्णनम्

अर्थात् प्रकृत्याः स्वत आलम्बनत्वेन वर्णनम्, यत्र प्रकृत्या नैसर्गिकमाधुर्यं कविहृदयमाकृष्टं करोति तथा स्वकीयाऽऽनन्देन कविमानसञ्च तोषयति।

## ( २ ) अलङ्कृतवर्णनम्

अलङ्कृतवर्णने प्रकृत्यास्तथा तासां व्यापाराणां मानवीकरणं भवति। प्रकृतिः सचेष्टं भूत्वा चैतन्यप्राणिनामिव नानाविधानां व्यापाराणां सम्पादनं करोति। सा कदाचित् स्मितवदना कुमारी इव दर्शकानां हृदयमाकृष्टं करोति, कदाचिदुग्ररूपेण भीषणजन्तुरिवास्माकं हृदये भयं क्षोभश्च समुत्पादयति।

वैदिककवेरस्या द्विविधाया भावनायाः स्फुटनिदर्शनमस्माकं मिलति उषया सह सम्बद्धभावनायाम्। प्राच्यां प्रभाते कोमलारुणाभमुषायाः स्वरूपं दृष्ट्वा वैदिककवेः हृदयमानन्देन पूरितो भूत्वा कथयति—

**'उषो देव्यमर्त्या विभाहि चन्द्ररथा सूनृता ईरयन्ती।**
**आत्त्वा वहन्तु सुयमासो अश्वाः हिरण्यवर्णा पृथुवाजसो ये।'**

( ऋ० ३।६१।२ )

हे प्रकाशमयी उषे ! त्वं सुवर्णरथे आरूढो भूत्वा अमरणशीलत्वेन दीव्य। तवोदयकाले खगाः श्रुतिमधुरं कलरवं कुर्वन्ति। हिरण्यवर्णाः, सुशिक्षिताः, सुदर्शनाश्वाः पृथुबलेन त्वां वहन्तु।

अलङ्कृतवर्णनावसरे उषायाः मनोमुग्धकररूपस्य व्यापारस्य च हृदयरञ्जकं वर्णनं दर्शनीयमस्ति—

**'जायेव पत्या उशती सुवासा उषा हस्रेव निरिणीते अप्सः।'**

( ऋ० १।१२४।७। )

अत्र कविः नार्यः कोमलहृदयस्य स्पर्शं करोति। नारीजीवनं प्रेम्णि स्थितम्। प्रेम प्रकृत्यामपि प्राणप्रदां शक्तिं सञ्चारयति। तेन तज्जीवति, श्वसिति, वर्धते च। जीवनस्य मूलभूतं लक्ष्यैव वर्तते नारीप्रेम। न केवला नारी प्रत्युत नारीनरावुभावपि तदपेक्षिणौ स्तः। वैदिककविः उषाचरित्रेण तस्या रूपवर्णनेन च मानवजीवनस्येदं प्रधानं तत्त्वं सर्वेष्वपि मानवेषु उच्चैः संवृद्धिमासादयद् विलोकयितुमाकाङ्क्षति। स इच्छति यज्जीवनं प्रेम्णा पावनं भवेत्, तत्तदनुग्रहेणानुगृहीतं स्यात्। न स तत् प्रेम प्रेम इति पुनीतेनाभिधानेन व्याहर्त्तुमीष्टे यदनाचारदोषेण दूषितं स्वार्थविशेषसम्पृक्तं वा विद्यते। तस्मात् सपूतप्रेमपेशले जीवने महतीमेव श्रद्धां निदधाति। कविः प्रेमव्रतरक्षके जीवने मन्ये—

**'नेवत्वा स्तेनं यथा रिपुं तपाति सूरो अर्चिषा। सुजाते अश्वसूनृते।'**

( ऋ० ५।७९।९ )

उषादेव्या अपरमपि रूपं महनीयम्—

**'अधिपेशांसि वपते नृतुरिवापोर्णुते वक्ष उस्रेव वर्जहम्।'**

( ऋ० १।९२।४। )

## वैदिकाऽऽख्यानम्

आख्यानस्योद्गमभूमिर्भारतवर्षमेव। अधुना पाश्चात्याऽप्युपाख्यानस्य गौरवं स्वीकुर्वन्तु नाम, किञ्च ते उपाख्यानस्याधारं भारतीयोपाख्यानत एव लब्धवन्तः। पाश्चात्योपाख्यानस्येतिहासं जानन्तो विद्वांसः प्रतियन्ति यद् भारत-भूमिरेवाऽऽख्यानस्योत्पत्तिक्षेत्रम्। षष्ठशताब्द्यां भारते तान्युपाख्यानानि प्रसिद्धानि आसन्, येषामुपलब्धिरस्माभिः पञ्चतन्त्रे क्रियते। पञ्चतन्त्रेण विश्वसाहित्ये महती उपयोगिता समर्पिता। वेदादेव प्रवहन्ती पुराणेषु स्वरस्रोतस्त्वमागतो-पाख्यानधारा नानारूपाऽजायते।

संहिताऽध्ययनेनेतिहासस्याऽऽख्यानस्य चास्तित्वस्य प्रमाणमुपलब्धं भवति। अथर्ववेदे इतिहासपुराणस्योल्लेखो मिलति। छान्दोग्योपनिषदि ( ७।१ ) अध्य-यनाध्यापनस्य मुख्यविषयः इतिहासपुराणमेवासीत्। विक्रमपूर्वतृतीयशतके कौटिल्येनेतिहासान्तर्गते पुराण( प्राचीनाख्यानानि )-इतिवृत्त( इतिहासः )-आख्यायिका( कथा )-उदाहरण-धर्मशास्त्र-अर्थशास्त्रादीनां गणना कृताऽस्ति। अपराह्णकाले ज्ञानवर्द्धनाय नृपेण तेऽवश्यमेव श्रोतव्यानीति। इतिहासस्येयं परि-बृंहितकल्पनाऽवान्तरकालेन सह सम्बन्धं स्थापयति। प्राचीनकालेऽपि एवंविधस्य साहित्यस्य स्थितिरवश्यमेव विद्यमानाऽऽसीत्।

वेदानां व्याख्याप्रणाल्याः अन्यतमप्रकार ऐतिहासिकानामप्यासीत्, यस्यो-ल्लेखः यास्केनानेकशः कृतः। वृत्रस्य व्याख्यायामैतिहासिकानां कथनमासीद् यदयं 'त्वाष्ट्रः' असुराणां संज्ञाऽस्ति। अनेन प्रकारेणैतेषां व्याख्याकाराणां सम्मतौ वेदेषु अनेकानि महत्त्वपूर्णाऽऽख्यानानि सन्ति। ऋग्वेदेऽपि आख्यानानां संख्या नात्यल्पाऽस्ति। एतेषु कानिचिदाख्यानानि वैयक्तिकदेवताविषयकानि सन्ति, कानिचिच्चाऽऽख्यानानि काऽपि सामूहिकघटनामभिलक्ष्य प्रवृत्तानि भवन्ति। तथ्यमिदमस्ति यद् एतेषामाख्यानानां मूलरूपस्याभिव्यक्तिः ऋग्वेदीयमन्त्रेष्वेव मिलति। अनन्तरयुगेष्वेवाख्यानं परिस्थित्याः परिवर्त्तनेनाथवाऽभिनवयुगस्या-भिनवाकल्पनायाः प्रभावेन परिवर्त्तितं परिबृंहितञ्च भूत्वा दृग्गोचरं भवति। अनेन प्रकारेण ऋग्वेदस्याऽऽख्यानानि ब्रह्मसु, उपनिषत्सु, सूत्रग्रन्थेषु, रामायणे महाभारते तथा विभिन्नपुराणेषु स्वकीयघटनायाः स्थितिविषये विशेषरूपेण विकसितानि परिवर्त्तनानि च भूत्वा उपलब्धानि भवन्ति। अस्य विकासस्योपरि तत्तद्युगस्य धार्मिकस्य सामाजिकस्य च परिस्थितिजन्यप्रभावस्य स्वरूपं स्पष्ट-रूपेण दृग्गोचरं भवति। ऋग्वेदे इन्द्रस्य तथाऽश्विनौदेवस्य विषयेऽपि अनेका-न्याख्यानानि मिलन्ति। एतेष्वाख्यानेषु देवानां वीरता-पराक्रम-उपकारादीनां भावनां स्पष्टरूपेणाङ्किताऽस्ति। ऋग्वेदाभ्यन्तरे त्रिंशदाख्यानानां स्पष्टनिर्देशो मिलति, येषु कतिपयानां प्रख्याताऽऽख्यानानां महत्त्वपूर्णा सूचीयमस्ति—शुनः-शेपः ( १।२४ ), अगस्त्यः तथा लोपामुद्रा ( १।१७९ ), गृत्समदः ( २।१२ );

वसिष्ठश्च विश्वामित्रः (३५३, ७।३३ प्रभृतयः), सोमस्यावतरणम् ( ३।३३ ), वरुणश्च वृषजानः ( ५।२ ), अग्नेरुत्पत्तिः ( ५।११ ), श्यावाश्वः ( ५।३२ ), बृहस्पतेर्जन्म ( ६।७१ ), राजा सुदासः (७।१८), नहुषः ( ७।९५ ), अपाला ( ८।९१ ), नाभानेदिष्टः ( १०।६१-६२ ), वृषाकपिः ( १०।८६ ), उर्वशी तथा पुरूरवा ( १०।९५ ), सरमा एवं पणिः ( १०।१०८ ), देवापि एवं शन्तनु ( १०।९८ ), नचिकेता ( १०।१३५ ), एतदतिरिक्तः दानप्रसङ्गेष्वनेकेषां भूभृतां नामोपलब्धमस्ति ।

## प्रख्याताऽऽख्यानानि

### ( क ) शुनःशेपोपाख्यानम्

शुनःशेपोपाख्यानमृग्वेदस्यानेकेषु सूक्तेषु मिलति ( १।२४-२५ )। तेनेयं घटना सत्याश्रिताऽऽसीदिति प्रतीयते । ऐतरेयब्राह्मणे ( ७।३ ) इदमाख्यानमतिविस्तरेण सह वर्णितमस्ति । अस्योपाख्यानस्यादौ हरिश्चन्द्रस्य अन्ते विश्वामित्रस्य च सम्बन्धं परिकल्प्य परिवर्धितं कृतमस्ति । वरुणस्य कृपातः ऐक्ष्वाकुनृप-हरिश्चन्द्रस्य गृहे पुत्रोत्पन्नमभवत् । समर्पणसमयेऽरण्ये तस्य पलायनम्, हरिश्चन्द्रमुदरजन्यरोगोत्पत्तौ, मार्गे अजीगर्तस्य मध्यमपुत्रशुनःशेपस्य क्रयणम्, देवतायाः कृपातस्तस्य वध्यपशुत्वान्मुक्तिः विश्वामित्रद्वारेण तं कृतक-पुत्रकरणादीनां घटनायाराख्यानमतिप्रसिद्धमस्ति ।

### ( ख ) उर्वशी-पुरूरवसोरुपाख्यानम्

वैदिकयुगस्येयमेका रोमाञ्चकारिणी प्रणयगाथाऽस्ति । सत्यपि देव्युर्वशी नरपतिना पुरूरवसा सह तस्य प्रणयपाशे आबद्धा बभूवेति । एतदर्थं पणत्रयमासीत् । तद्यथा—

( १ ) सा सदैव घृताऽऽहारं करिष्यति ।

( २ ) तस्या द्वौ प्रियौ भेडकौ सदैव तस्याः पर्यङ्किकापार्श्वे रज्जुभ्यां बद्धौ भविष्यतः, येन कोऽपि तावाहर्तुं न शक्ष्यति किंवा न चोरयिष्यति ।

( ३ ) कस्याप्यवस्थायां सा राजानं नग्नं द्रष्टुं न शक्ष्यति, यदि क्षणमप्येवं भवेत् तदा सा तं विहाय गमिष्यति ।

राजा उर्वश्याः पणत्रयं सहर्षं स्वीचकार । तया सह सानन्दं समयं यापयन् विचचार । किञ्चोर्वशीं विना गन्धर्वान् स्वर्गं नीरसं निर्जीवञ्च प्रतीतो भवितुमारभत । ततस्ते कपटप्रबन्धेन ग्लहभङ्गं कर्त्तुं समुद्यता बभूवुः । रात्रावेकदा ते मेषमेकमुर्वशीपार्श्वादचोरयन् । मेषस्य कारुणिकनादं श्रुत्वैवोर्वशी राजानं चौरेण सह योद्धुं प्रेरयामास । राजाऽपि शीघ्रमेव मेषं चौरात्त्रातुमाकाशेऽधावन् । तदैवाकाशे विद्युत्प्रकाशे गन्धर्वाः कपटेन राज्ञो नग्नस्वरूपमुर्वशीमदर्शयन् । राजानं नग्नं दृष्ट्वा साऽपि तदैव बहिरगच्छत् । राजा तां विना विरहातुरो भूत्वा उन्मत्त इव भूमण्डले विचचार । एकदा कुरुक्षेत्रस्यैकस्मिन्

जलाशये हंसी-स्वरूपे स्वप्रियामपश्यत् । परावर्त्तनाय तां स राजा अनेकशः प्रार्थयामास । किञ्च सा राज्ञः पार्श्वे पुनरागमनाय समुद्यता न बभूव । राज्ञः दयनीयां दशां दृष्ट्वा गन्धर्वाणामपि हृदये सहानुभूतिरुत्पन्ना बभूव । सोऽपि तस्मै अग्निविद्याया उपदेशमददात् । तस्यानुष्ठानेन सः उर्वश्याः अविच्छिन्न-समागममलभत् ।

ऋग्वेदस्य प्रख्यातसूक्ते ( १०।९५ ) उभयोः कथोपकथनमात्रमेवाऽस्ति । शतपथब्राह्मणे ( ११।५।१ ) कथानकमिदं रोचकं विस्तरेण सह वर्णितमस्ति । तत्रास्य कथानकस्याङ्कने साहित्यिकसौन्दर्यस्यापि परिचयं प्रदत्तमस्ति । विष्णु-पुराणे ( ४।६ ), मत्स्यपुराणे ( अ० २४ ), भागवतपुराणे ( ९।१४ ) चास्य कथानकस्य रोचकं विवरणं वयमाप्नुमः । महाकविना कालिदासेन विक्रमोर्वशीय-नाम्नि त्रोटके अस्मै कथानकाय नितान्तं मञ्जुलं नाटकीयरूपं प्रदत्तम् । अस्या-ख्यानस्य विकासे एकस्य विशेषतथ्यस्य सत्ता मिलति । पुराणेषु कथानकमिदं प्रणयगाथारूपेण व्यक्तोऽस्ति । किञ्च वैदिकाऽऽख्याने पुरूरवा प्रथमो व्यक्तिरस्ति, यो हि श्रौताग्नेरर्थादाहवनीयः, गार्हपत्यः, दाक्षिणाग्निश्च नामकस्य त्रेधाग्नेः स्थापनाया रहस्यं ज्ञात्वा यज्ञसंस्थायाः प्रथमं विस्तारं कृतवान् । पुरूरवसो-ऽस्य परोपकारीरूपस्याभिव्यक्तिर्वैदिकाऽऽख्यानस्यास्य वैशिष्ट्यमस्ति ।

## ( ग ) च्यवानभार्गवस्य तथा मानवीसुकन्याऽऽख्यानम्

आख्यानमिदं भारतीयनारीचरित्रस्यैकं नितान्तमुज्ज्वलं दृष्टान्तं समुप-स्थापयति । कथेयमृग्वेदस्याश्विनेन सम्बद्धाऽनेकेषु सूक्तेषु ( १।११६, ११७ प्रभृतयः ) सङ्केतिताऽस्ति । इयमेव कथा ताण्ड्यब्राह्मणे ( १४।६।११ ), निरुक्ते (४।१९), शतपथब्राह्मणे ( का० ४ ), भागवतपुराणे (स्क० ९ अ० ३) चाप्यतिविस्तरेण मिलति । च्यवनस्य वैदिको नाम 'च्यवानः' इत्यस्ति । सुकन्याया वैदिककथा तस्याः पौराणिककथाऽपेक्षयाऽधिकोदात्ताऽऽदर्शमयी चास्ति । पुराणेषु सुकन्याऽपराधिनी स्वयमस्ति च्यवनस्य दिव्याक्ष्णोः स्फोटनं सा करोति । अस्मै कर्मणे तस्यै दण्डविधानं स्वाभाविकमेवास्ति । किञ्च वेदे तस्यास्त्यागः उच्चकोटेरस्ति । सैनिकबालकेभ्यः कृताऽपराधनिवारणाय वृद्ध-च्यवानस्य सम्मुखे आत्मसमर्पणं करोति । तस्या दिव्येन प्रेम्णा प्रभावितो भूत्वा तं वार्द्धक्यात् मुक्तमकुरूतामश्विनौ तथा तस्मै नूतनं यौवनमदत्ताम् ।

तुलनात्मकाऽध्ययनेन प्रतीतो भवति यदनेकान्याख्यानानि कालान्तरे विकृ-तानि भवन्ति । विकासप्रक्रियायामनेकावान्तरकालिकी घटनास्तैराख्यानेभ्यः संश्लिष्टो भूत्वा तान्यभिनवरूपाणि ददति । एतानि परिवर्तितरूपाणि मूलरूपतो भिन्नानि भवन्ति । शुनःशेपस्य, विश्वामित्र-वसिष्ठयोः कथानकयोरनुशीलनेनास्य विचित्रसिद्धान्तस्य प्रदर्शने दृष्टान्तं समुपस्थापितो भवति । शुनःशेपस्याख्यानम् ऋग्वेदस्य प्रथममण्डले ( सू० २४, २५ ) स्पष्टतः सङ्केतितोऽस्ति । अस्यैव

विस्तार ऐतरेयस्य समयपञ्चिकायामुपलब्धो भवति । अत्र शुनःशेपस्याऽऽख्यानमारम्भे राज्ञः हरिश्चन्द्रस्य पुत्रः रोहिताश्वेन सह तथा कथाऽन्ते मुनिना विश्वामित्रेण सह सम्बद्धो भूत्वा भव्यमेकं रूपं धारयति । कालान्तरेऽस्मिन् कथानके रोचकतावर्द्धनायैव तस्य भ्रातृद्वयस्य, पितुर्दारिद्रचस्य, तस्य विक्रयणस्य च परिकल्पना कृतेति प्रतीतो भवति । शुनःशेपस्याप्यत्रार्थो न भवति 'कुक्कुरः' । 'शुनः'-शब्दस्यार्थो भवति 'सुखम्' कल्याणञ्चेति तथा 'शेप'-शब्दस्यार्थो भवति 'स्तम्भः' । अतः शुनःशेपस्यार्थो भवति 'सौख्यस्य स्तम्भः' । अनेन प्रकारेण कथानकमिदं वरुणपाशाद्विमुक्तेः सन्देशं ददत् कल्याणस्य मार्गं प्रशस्तयति ।

## ( घ ) वसिष्ठविश्वामित्रयोराख्यानम्

ऋग्वेदे स्वतःसङ्केतितमिदमाख्यानमस्ति । इमौ ऋषी सम्भवतो भिन्न-भिन्नकाले राज्ञः सुदासस्य पुरोहितावास्ताम् । चातुर्वर्ण्यस्य क्षेत्राद् बहिर्युगस्येमौ ऋषी आस्तामिति स्वीकर्तुं शक्यते । उभयोर्मध्ये परमसौहार्द्रभावानायाः साम्राज्यमासीत् । उभौ तपःपूतौ, तेजःपुञ्जौ, अलौकिकगुणशालिनौ महापुरुषावास्ताम् । किञ्चावान्तरग्रन्थेषु—रामायण-पुराण-बृहद्देवतादिषु—उभयोर्मध्ये सङ्घर्ष-वैमनस्य-विरोधादीनां कल्पनायारुदयोऽभवत् । विश्वामित्रः क्षत्रियाद् ब्राह्मणत्वप्राप्त्यर्थं लालायितोऽभवत् । वसिष्ठेन तमनङ्गीकृतम् । तेन क्रुद्धो भूत्वा विश्वामित्रो वसिष्ठस्य पुत्राणां संहारकोऽभवत् । इमामेव कल्पनामाधारीकृत्य आलोचकाः क्षत्रिय-ब्राह्मणयोर्मध्ये घोरविद्रोहस्यामङ्गलस्य च प्राचीरं स्थापितवन्तः । वस्तुतो विचारोऽयं निराधारः, उपेक्षणीयस्तथा नितान्तभ्रामकोऽस्ति । वैदिकाऽऽख्यानेनापरिचितो व्यक्तिरेव एवंविधानां पावनचरित्राणामृषीणामवान्तरकालिकवर्णनेन भ्रान्तो भवति । वैदिकाऽऽख्यानानां विकासः अवान्तरयुगे केन प्रकारेण सम्पन्नोऽभवदित्यध्ययनस्यैको गम्भीरो विषयोऽस्ति । कतिपयानामाख्यानानां विकासस्येतिहासः रोचकरीत्या विद्वद्भिर्वर्णितोऽस्ति ( द्रष्टव्यम्—हरिअप्पा—ऋग्वैदिक लीजेण्ड्स थ्रू दि एजेज पूना, १९५३ ) ।

## वैदिकाऽऽख्यानानां तात्पर्यम्

वैदिकाऽऽख्यानानां तात्पर्यं किमस्ति ? अस्य प्रश्नस्योत्तरे विद्वत्सु वैमत्यं विलोक्यते । अमेरिकास्थः विद्वान् डॉ० ब्लूमफील्डमहोदयः अस्य विषयस्य चर्चां कुर्वन् तेषां विदुषां मतस्य खण्डनमकरोद्, ये विद्वांसः वैदिकाऽऽख्यानस्य रहस्यवादिनीं व्याख्यां कृतवन्तः । उदाहरणार्थम्—एते रहस्यवादिनो वैदिकपुरूरवसः आख्यानाऽभ्यन्तरे एकस्य गम्भीररहस्यस्य दर्शनं कुर्वन्ति । तेषां विचारे पुरूरवा सूर्यस्तथोर्वशी उषाऽस्ति । उषा-सूर्ययोः पारस्परिकसंयोगः क्षणिको भवति । तयोर्वियोगकालः अतिदीर्घोऽस्ति । वियुक्तः सूर्यः उषान्वेषणे आदिवसं तत्पश्चाद् भ्रमति ; अन्येद्युः प्रभाते तयोर्मिलनं भवति । प्राचीनभारतीयविदुषां वैदिका-

ऽऽख्यानस्येदमेव स्वरूपमासीत् । अतो मानवीयमूल्यविहीनानां वैदिकाऽऽख्यानानां चित्रणं कथमपि न्याय्यमुपयुक्तञ्च नास्ति ।

एतेषामाख्यानानामनुशीलनस्य विषये तथ्यद्वयस्योपरि ध्यानं दातव्यम्—

( क ) ऋग्वेदीयाऽऽख्यानमेवंविधान् विचारान् व्यापारांश्चाग्रे सारयति वर्णयति च यन्मानव-समाज-कल्याण-साधनाय नितान्तमपेक्षितं भवति । अस्याध्ययनमपि तथैव मानवीयमूल्यदृष्टया कर्त्तव्यम् । ऋग्वेदीय-ऋषिः एतेष्वाख्यानेषु मानवानां कल्याणायोपादेयतत्त्वानां समावेशं कृतवान् ।

( ख ) तस्यैव युगस्य वातावरणं स्मृत्वा तस्मिन्नेव परिवेशे एतेषामुपाख्यानानां मूल्यनिर्धारणं कर्त्तव्यम् । तस्मिन्नेव युगे एतेषामाख्यानानां मूल्यनिर्धारणं कर्त्तव्यम्, यस्मिन् युगे एतेषामाख्यानानामाविर्भावोऽभवत् । अर्वाचीनदृष्टया किंवा नवीनदृष्टया एतेषां मूल्यनिर्धारणमितिहासं प्रति अन्यायं भविष्यति । एतेषां तथ्यानामाधारशिलायामुपरि आख्यानानां व्याख्या समुचिता वैज्ञानिका च भविष्यति ।

वैदिकाऽऽख्यानानां शिक्षा मानवसमाजस्य सामूहिककल्याणाय विश्वमङ्गलस्याभिवर्द्धनाय च भवति । भारतीयसंस्कृत्याऽनुसारेण मानवा देवैः सह सम्बद्धाः सन्ति । मानवो यज्ञेषु देवेभ्य आहुतिं ददाति । देवोऽपि प्रसन्नो भूत्वा तं प्रसादयति तस्याभिलाषं पूरयति । इन्द्रविषयकः अश्विनीविषयकश्चाऽऽख्यानमस्य कथनस्य विशदो दृष्टान्तोऽस्ति । यजमानैः प्रदत्तं सोमरसं पीत्वा इन्द्रो नितान्तं प्रसन्नो भवति । सः तस्य कामनां सफलयति । अवर्षणस्य वृत्राख्यं दैत्यं स्ववज्रेण भित्वा नदीः प्रवाहयति । वृष्टया मानवाः आप्यायिता भवति । संसारे शान्ति विराजते । वैदिकतथ्यमिदमल्पाक्षरेणैव महाकविकालिदासेन व्यक्तीकृतम् ( रघु० ४।१६ ) ।

प्रत्येकस्याऽऽख्यानस्यान्तराले मानवानां शिक्षणार्थं तथ्यमन्तर्निहितमस्ति । आत्रेयी-कपालयोः ( ऋक्० ८।९१ ) आख्यानं नारीचरित्रस्योदात्ततायास्तेजस्वितायाश्च विशदं प्रतिपादकमस्ति । राज्ञां त्र्यरुण-त्रैवृष्ण-वृषजानानामाख्यानम् ( ऋग्० ५।२; ताण्ड्यब्रा० १३।६।१२; ऋग्विधान, १२।५२; बृहद्देवता ५। १४-२३) वैदिककालिकस्य पुरोहितस्य महिम्नो गरिम्णश्च स्पष्टरूपेण सङ्केतं करोति । सोभरिकाण्वस्याख्यानम् ( ऋग्० ८।१९, ८।८१; निरुक्तिः ४।१५; भाग० ९।६ ) सङ्गत्या महिम्नः प्रतिपादयति । उषस्तिचाक्रायण ( छान्दोग्यः, प्रथ० प्रपाठ० खण्ड० १०।११ ) इत्येतस्याऽऽख्यानमन्नस्य सामूहिकप्रभावस्य तथा गौरवस्य कमनीया कथाऽस्ति । शुनःशेपस्याऽऽख्याने देवताऽनुकम्पायारुज्ज्वलः सङ्केतो मिलति । देवानां कृपया शुनःशेपः स्वात्मानं त्रातुं समर्थोऽभवत् । वसिष्ठ-विश्वामित्रयोराख्यानमप्युचितविश्लेषणाभावेनानर्गलकल्पनायाः समुत्पादकमभवत् । वसिष्ठः शारीरिकतपस्यायाः प्रतिमूर्त्तिरस्ति । विश्वामित्रस्तु पुरुषकारस्य स्वरूपमस्ति । उभयोर्मध्ये प्रगाढा मैत्री आसीत् । वैदिकनृपस्य यज्ञसम्पादने

समानरूपेण द्वावपि सहायकावास्ताम्। तयोर्वैरभावं सङ्घर्षञ्च क्षणिकमस्ति। श्यावाश्व-आत्रेयस्य कथा (ऋग्० ५।६१) ऋषेः गौरवं, प्रेम्णः महिमानं, कवेः साधनाञ्च सुष्ठु रीत्याऽभिव्यक्तं करोति। ऋग्वेदीययुगस्येयं प्रख्याता प्रणयकथाऽस्ति। यस्यां प्रेम्णः सिद्धये श्यावाश्वः एको मन्त्रद्रष्टा ऋषिर्बभूव। दध्यङ्गाथर्वणस्याऽऽख्यानम् ( ऋग्० १।११६।१२; शतप० १४।४।५।१३; बृहदारण्य० २।५; भागव० ६।१० ) राष्ट्रिय-मङ्गल-जीवनदानस्य शिक्षां दत्त्वा क्षुद्रस्वार्थादुपर्युत्थानस्य जनकल्याणस्य चोपदेशं ददाति। पुराणे अस्यैव नाम ऋषिः दधीचोऽस्ति। अयमेव लोकहिताय वृत्रासुरवधाय सुरेन्द्राय स्वास्थिदानमकरोत्। वज्रनिर्माणार्थमस्थिदानं कृत्वाऽऽर्यसभ्यताया रक्षामकरोत्। अनधिकारिणं रहस्य-विद्योपदेशस्य विषमपरिणाममस्मिन् वैदिकाऽऽख्याने प्रदर्शितमस्ति। एतेषामाख्यानानामयमेवोपदेशोऽस्ति यद्—परमेश्वरं प्रति प्रगाढा श्रद्धा जीवात्मना सह प्रेम। विश्वकल्याणायेदमेव मङ्गलमयं मार्गमस्ति।

कतिपयानामृषीणां चारित्रिकदोषाणां तथाऽनैतिकाचरणस्यापि वर्णनं वैदिकाख्यानेषूपलब्धो भवति। अनेनोपदेशग्रहणं कर्त्तव्यम्। एतानि आख्यानानि अनैतिकताया गर्त्ते पतनात् त्राणार्थमेव निर्दिष्टानि सन्ति। तपसा पवित्रजीवनेऽपि प्रलोभनावसरे चारित्रिकपतनस्य सम्भावना भवति। कामिनीकाञ्चनस्य प्रलोभनं सामान्यजनस्य हृदयमाकर्षत्येव। फलतस्ताभ्यां सदैव जागरूको भवितव्यम्। अस्मिन् विषये भारतस्य कथनमिदं ध्यातव्यम्—

**'कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा।**
**न चरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत्॥**
**अनमन्यैरुपालब्धैः कीर्त्तितैश्च व्यतिक्रमैः।**
**पेशलं चानुरूपञ्च कर्त्तव्यं हितमात्मनः॥'**

( महाभा० १२।२९१।१७ )

## वेदेष्वार्षम् आख्यानम्

मन्त्रद्रष्टृणामृषीणामाख्यानाऽऽपि वैदिकवाङ्मये बहुशः उपलब्धानि भवन्ति। एतेषामार्षाऽऽख्यानानामध्ययनेन वैदिकऋषीणां जीवनपरिचर्या आध्यात्मिकोन्नतिसाहित्य-सृष्टयादिविषयेऽमूल्योपलब्धिर्मिलति। अस्मिन् सन्दर्भे प्रथमतः ऋषिभरद्वाजस्य चरितं दर्शनीयमस्ति। तस्य ग्रन्थनिर्माणस्याप्यत्र संक्षिप्तवर्णनमत्र क्रियते।

### वैदिक-ऋषिर्भरद्वाजः

वैदिकऋषीणामुदात्तमण्डल्यां भरद्वाजस्य नामातिशयं महत्त्वं प्रतिपादयति। यतो हि ऋग्वेदस्य षष्ठमण्डलं महर्षिणा भरद्वाजेन तथा तद्वंशजन्मना ऋषिभिः दृष्टानुभूतानां मन्त्राणां श्लाघनीयः सङ्ग्रहोऽस्ति। अस्मिन् मण्डले ७५ सूक्तानि सन्ति। ऐतासु ऋचासु कतिपयास्तु स्वयं मुनिना भरद्वाजेन दृष्टाः सन्ति, कति-

पयाऽन्यास्तु तद्वंशीयैः गार्ग-पायु-ऋजिश्वादिभिर्ऋषिभिर्दृष्टाश्चानुभूताः सन्ति। बृहद्देवताऽनुसारेण ( ५।१०२ ) ऋषिर्भारद्वाजः आङ्गिरसः पौत्रः, बृहस्पतेः पुत्र आसीत्। सर्वानुक्रमणीद्वारेणापि कथनमिदं सम्पुष्टं भवति। अत एवास्य समग्राभिधानमाङ्गिरसबार्हस्पत्यभरद्वाजोऽस्ति। 'आङ्गिरस' ऋग्वेदेऽस्य बहुशः उल्लेखो मिलति—

**'धन्या चिद्धि त्वे धिषणा वष्टि प्रदेवान् जन्म गृणते यजध्यै।**
**वेपिष्ठो अङ्गिरसां यद्ध विप्रो मधुच्छन्दो भनतिरेभ इष्टौ' ॥**

( ऋग्वे० ६।११।३ )

अनेन मन्त्रेण सिद्धो भवति यदयमृषिः आङ्गिरसामृषीणां मण्डलीषु मेधावी, स्तुतिप्रेरकः, स्तवनकर्ता, मधुमच्छन्दसां वक्ता चासीत्। अयं ह्युचथ्यपत्नी-ममता-गर्भाद् बृहस्पतिना वीर्येण प्रसूत आसीत्। श्रूयते, जन्मकाले एवामुं पितरावत्यजताम्। मरुताख्येन देवेनास्य भरणपोषणञ्चाभूत्। भरद्वाजाभिधानस्य तात्पर्यमनया घटनयैव सम्बद्धोऽस्ति। समुत्पन्नस्य पुत्रस्य भरणपोषणविषयकप्रश्नं नीत्वा बृहस्पति-लतयोर्मध्ये विवादमभवत्। तयोर्मध्ये न कोऽपि तस्य शिशोर्भारं वोढुं सन्नद्धोऽभवत्। तेनास्य नाम भरद्वाज इत्यभवत्। इयं कथा बृहद्देव० ५।१०२।१०३; भाग० ९।२०; तथा विष्णुपुराणे ( ४।१९ ) वर्णिताऽस्ति।

**'मूढे भरद्वाजमिमं भरद्वाजं बृहस्पते।**
**यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥'**

काशीराजवंशेन सह भरद्वाजस्य विशिष्टसम्बन्धं प्रकटयितुमैतिहासिकतथ्यमपि समुपलब्धमस्ति। काश्याः संस्थापको राजा दिवोदासः भरद्वाजं स्वकीयराजकुलपुरोहितपदे नियुक्तवान्। विपत्तिकाले तेनाऽपि राजवंशस्य संरक्षणं कृतम्। श्रूयते चैकदा हैहयराजः काशीराज्यं जिगीषुः वीतहव्यः काशीमाक्रम्य काशीनरेशं हर्यश्वं विजित्य सिंहासनासीनो बभूव। राज्याद्विभ्रंशितो निर्वासितश्च यत्र तत्र परिभ्रमन् सुजनैर्भूमिपालैः सत्कारेण मन्दीकृतराज्यविभ्रंशदुःखो मुनेर्भारद्वाजस्याश्रमे न्युवास। अस्योल्लेखः पञ्चविंशब्राह्मणे ( १५।३।७ ), तथाऽनुशासनपर्वणि ( ३०।३० ) मिलति। भरद्वाजाश्रमे निवसत एव स राजा पुत्रेष्टियज्ञमकरोत्। मुनिकृपया सन्तानपरम्परया तस्य राज्ञः 'प्रतर्दनो' नाम सुतमवाप। तं च भरद्वाजो वीतहव्यविजिगीषया जुगोप। अयमेव प्रतर्दनः भरद्वाजसाहाय्येन वीतहव्यं विजित्य काशीराज्यं शत्रु-मुक्तं कृत्वा सिंहासनारूढो बभूव। फलतः महर्षिभरद्वाजो न केवलं सामान्यतपस्वी आसीत्, अपितु सः एको राजनीतिज्ञः, युद्धनीतिविशारदः, व्यावहारिकक्रियामण्डितः, समर्थः, कुशलराजपुरोहितश्चासीत्। ऐतरेयब्राह्मणेऽस्य व्यक्तित्वस्य सङ्केतः समुपलब्धो भवति। तदनुसारेणास्य शरीरं सुगठितम्, सुविस्तृतं वक्षःस्थलम्, आयतं नेत्रं गौरवर्णञ्चासीत्। तपसा कृशकायोऽयं पुरुषो नितान्तोद्दीप्त आसीत्।

तैत्तिरीयब्राह्मणे ( ३।१०।११।३ ) तत्त्वजिज्ञासाविषयकास्यैका रोचिकाऽऽख्यायिका वर्त्तते। समस्तवेदानां यथावदनुशीलनाय तत्परिज्ञानाय चायं दृढसङ्कल्पः अकरोत्। तत्सम्पूर्त्यर्थमिन्द्रस्यायं दीर्घोपासनामकरोत्। इन्द्रः प्रसन्नो भूत्वा तं 'शतायुर्भव' इति वरं दत्तवान्। वरं लब्ध्वा भरद्वाजेन वेदानामनुशीलनं विधिवन्मननञ्च कृतम्। किञ्चैकस्मिन्नेव जन्मनि स्वसङ्कल्पं पूरयितुं नाशक्नोत्। पुनरप्ययं कठोरतपसा इन्द्रं प्रासादयत्। पुनरपि इन्द्रवरं लब्ध्वाऽप्यस्य वेदार्थजिज्ञासा निवृत्ता नाभवत्। यदाऽयं वेदार्थस्यातृप्तजिज्ञासानिवृत्त्यर्थं शतवर्षस्य तुरीयजन्म अयाचयत्, तदेन्द्रेण अस्य सम्मुखे त्रयो विशालाः पर्वताः प्रकटीकृतास्तथा मुष्टिमेयान् धूलिकणान् गृहीत्वाऽवदत्—पश्य, भरद्वाज! शतत्रयवर्षाणामायुर्गृहीत्वाऽपि यज्ज्ञानं त्वयार्जितं तन्मन्मुष्टिस्थितधूलिकणसमोऽपि नास्ति। वेदार्थज्ञानं तव सम्मुखस्थितविशालपर्वतसमूहमिवोत्तुङ्गमलङ्घ्यश्चास्ति। दैवीमनुकम्पां विना मानवीयप्रयत्नेन कथमपि साध्यमिदं नास्ति—**अनन्ता वेदाः'**। ज्ञानस्य न काऽपि सीमा न चाप्यन्तोऽस्ति। इन्द्रेणोपदिष्टः सावित्र्याग्निचयनयज्ञेन भरद्वाजः वेदानां समग्रपारायणो वेदार्थस्य च पूर्णज्ञानं तथा तज्जन्यमोक्षस्य च प्राप्तिमकरोत्। वैदिकाख्यानमिदं भरद्वाजस्य दृढनिष्ठायाः तस्य चातृप्तज्ञानपिपासाया यावत्परिचायकमस्ति तावदेवेदं वेदस्यानन्ततायाः ज्ञानविज्ञानस्य निःसीमतायाश्च द्योतकमस्ति। 'अनन्ता वै वेदाः'--भरद्वाजस्य गम्भीरानुभूत्या विशदाविष्कारकतथ्यानां कथनमस्ति यद् गुरुं विना तपसा बलेन वेदज्ञानस्य विषये एका महनीयाऽऽख्यायिका महाभारते ( वनप० अ० १३५–१३८ ) प्रदत्ताऽस्ति। आख्यायिकेयं यवक्रीतोपाख्याननाम्ना प्रख्याताऽस्ति। भरद्वाजपुत्रो यवक्रीतः केवलं तपसा बलेनैव ज्ञानप्राप्त्यर्थं तपः कृत्वा इन्द्रं प्रासादयत्। किञ्चेन्द्रः 'गुरुमुखादेव वेदस्योपलब्धिर्भवेत् न तु तपसा बलेन' एवमुक्त्वा तं तपसा विरतमकरोत्। सोऽपि स्वपितुर्मित्रस्य रैभ्यमुनेश्चारित्रिकदोषेण रक्षसा हतः। रैभ्यस्यैव पुत्रेणार्वावसुना सः पुनरुज्जीवितः ( महाभाष्यसूत्रम् ४।२।६० दर्शनीयम् )।

भरद्वाजोऽयमात्मविद्याया यादृशो विख्यातपण्डित आसीत् तथैव रणविद्यायामपि प्रकाण्डपण्डितश्चासीत्। अस्याऽपूर्वसामञ्जस्यस्य सङ्केतः ऋग्वेदादारभ्य महाभारतपर्यन्तं मिलति। ऋग्वेदस्य षष्ठमण्डलस्यान्तिमसूक्तं वेदस्य कतिचनेषु सामरिकसूक्तेष्वन्यतममस्ति। अस्मिन् सन्दर्भे मन्त्रद्वयमुदाह्रियते—

**'रथे तिष्ठन् नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः।**
**अभी शूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः॥'**

धनुषः स्तुतिपरका ऋगिति—

**'धन्वना गा धन्वनाऽऽजिं जयेम धन्वना तीव्राः समदो जयेम।**
**धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम॥'**

हस्तघ्न ऋग्यथा—

**'अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।**
**हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परिपातु विश्वतः ॥'**
( ऋ० ६।७५।१४ )

महाभारतकालिककौरवाणां पाण्डवानाञ्च गुरुर्द्रोणाचार्यः गङ्गाद्वारनिवासिनो महर्षिभरद्वाजस्यैव पुत्र आसीत् ( द्रष्टव्यः महा० आदिप०, अ० १२१)। भरद्वाजजीवनस्य वेदशास्त्रोक्ता एतावत्येव घटना वर्त्तते। किञ्चाध्यात्मिकव्याख्याऽनुसारेण मन एव भरद्वाजोऽस्ति। शतपथब्राह्मणस्याध्यात्मिकव्याख्याऽनुसारेण भरद्वाजो मनसः प्रतिनिधिरासीत्—

**'मनो वै भरद्वाजः ऋषिरन्नं वाजो यो वै मनो बिभर्त्ति ।**
**सोऽन्नं वाजं भरति । तस्मान्मनो भरद्वाज ऋषिः ॥'**

## वैदिकगाथाया विवरणम्

गाथा वैदिकसाहित्ये प्रयुक्तैको विशेषार्थसूचकः शब्दोऽस्ति। नायं शब्दः सीमितोऽस्ति वेदमभिव्याप्यैव, प्रत्युत जैन-बौद्ध-पारसीकादिवाङ्मयेष्वपि प्रयुक्तोऽस्ति। ऐतिहासिकविकासदृष्ट्याऽस्य तुलनात्मकं गवेषणात्मकञ्च विवरणं प्रस्तूयतेऽत्र।

वैदिकसाहित्यस्य महत्त्वपूर्णोऽयं 'गाथा'-शब्दः ऋग्वेदीयसंहितायां केवलं गीतार्थे मन्त्रार्थे वा प्रयुक्तोऽभवत् ( ऋग्वे० ८।३२।१; ८।७१।१४ )। 'गै'-धातोः निष्पन्नत्वेन 'गीत' एवास्य व्युत्पत्तिलभ्योऽर्थः प्रतीतो भवति। सत्यपि 'गाथ'-शब्दस्योपलब्धिः आकारान्त-'गाथा'-शब्दस्यैव प्रयोगो लोकप्रियोऽस्ति ( ऋ०-९।९९।४ )। गाथाशब्देन निर्मितशब्दानां सत्ताऽस्य बहुलप्रयोगस्य सूचिका वर्त्तते। 'गाथानी'-शब्दस्यापि प्रयोगः गायकत्वार्थे एवाऽस्ति ( ऋ० ८।९२।२ ), किञ्च 'गाथिन्'-शब्दस्य प्रयोगः केवलं गायकार्थे भवति (५।४४।५ )। यद्यप्यस्य पूर्वोक्तः सामान्यार्थ एव बहुशोऽभीष्टोऽस्ति, तथापि ऋग्वेदस्य मन्त्रेऽस्मिन्नस्यापेक्षा कृतविशिष्टाशयो वर्तते, यतोऽत्रायं 'नाराशंसी' तथा रैभ्या सहवर्गी कृतोऽस्ति ( ऋग्वे० १०।८५।६ )—

**'रैभ्यासीदनुष्ठेयी नाराशंसी न्योचनी ।**
**सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम् ॥'**

ऋग्वेदाद्भिन्नेऽप्यन्यग्रन्थेष्वपि गाथायाः प्रयोगो बहुशः समुपलब्धो भवति। यथा—तैत्तिरीयसंहितायाम् ( ७।५।११।२ ); काठकसंहितायां ( ५।२ ); ऐतरेयब्रा० ( ६।३२ ); कौषी० ब्रा० ( ३०।५ ); शत० ब्रा० ( ११।५।६।८ ) ( यत्र रैभी नास्ति ); गोप० ब्रा० ( २।६।१२ )।

ब्राह्मणसाहित्यस्यानुशीलनेन, लक्षणोपरि स्वरूपोपरि च पर्याप्तप्रकाशः पतति। अस्य तथ्यस्य सम्पुष्टिः शुनःशेपोपाख्यानाय 'शतगाथम्'-शब्देन

पर्याप्तरूपेण भवति । गाथाया भाषा वैदिकमन्त्राणां भाषातो भिन्ना एवेति । यथा—

'कतरत् त आहराणि दधिमन्थां परिश्रुतम् ।
जाया पतिं विपृच्छति राष्ट्रे राज्ञः परीक्षितिः ॥'

ऐतरेयब्राह्मणस्य राज्ञः दुष्यन्तस्य पुत्रेण भरतेन सम्बद्धा गाथा द्रष्टव्यम्–

'हिरण्येन परिवृतान् शुक्लदतो मृगान् ।
मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च ॥
भरतस्यैष दौष्यन्तेरग्निः साचीगुणेचितः ।
यस्मिन् सहस्रं ब्राह्मणा तद्वशो गा विभेजिरे ॥' ( ८४ )

गाथायाः पारसीकानामवेस्ताग्रन्थेन सह घनिष्ठतमसम्बन्धोऽस्ति । अवेस्ता-गाथाया अर्थोऽपि तदेव भवति यद्वैदिकगाथायाः । यथा अवेस्तायाम्—

तेम्ने जस्ता ईस आमंतो ईस् मिमब्जो ।
ये आन्मेंनी यज्दाओ स्त्रावि अहूरो ॥ ( गाथा ४५।१० )

× × ×

'नो इत् मोईवास्था क्षमत् अन्या ।' ( गाथा २९।१ )

+ + ×

'मऊदाओ सखारे मइरीश्तो ।' ( गाथा २९।४ )

अवेस्तायां 'अहुरमज्द' इत्येतस्य कल्पना षड्गुणैः परिव्याप्ताऽस्ति । कल्पनेयं विष्णोः षाड्गुण्यविग्रहेण सह विशेषरूपेण मिलति । अवेस्ताया अन्यांशेषु ते देवता अथवा फरिस्ता 'आमेषास्पेन्ता' नाम्ना ख्याताः सन्ति । 'आमेषास्पेन्ता' इत्येतस्य पदस्यार्थो भवति 'पवित्रामरशक्तयः' । एतेषां नाम्नः रूपस्य चयः निम्नरूपेण मिलति—

( १ ) अष ( वैदिकऋतम् ) संसृतेः नियामिकाशक्तिः ।
( २ ) बोहुमनो ( सुष्ठुमनः ) प्रेम तथा पवित्रता ।
( ३ ) स्पेन्त आर्मि इति ( धार्मिकैकनिष्ठा ) ।
( ४ ) क्षथ्व इर्य ( क्षत्रवीर्यः ) प्रभुत्वसूचकः शब्दः ।
( ५ ) हऊं वर्त्तात् = सम्पूर्णतायाः सूचकः ।
( ६ ) अमृतात् = अमरता किंवा अमृतत्वम् ।

जरथुश्त्रः अस्य षड्गुणयुक्तस्य बहुरमज्दस्याराधनाकरणाय समुपदेशितवान् । आसु गाथासु चित्रितादर्शः भारतीयाद्वैतवादाद्भिन्नो नास्ति । अद्वैत-वादस्य भारतीयान्दोलनात्पूर्वमेव जरथुश्त्रस्य तस्यां दिशि मनोरञ्जकमाकर्षणं दर्शनीयमस्ति ।

---

# एकादशोऽध्यायः

## वेदाङ्गानि

### वेदाङ्गस्यार्थस्तथा तस्य महत्त्वम्

अङ्गशब्दस्य व्युत्पत्तिलभ्यः अर्थोऽस्ति—'उपकारकः'।—'**अङ्ग्यन्ते ज्ञायन्ते अमीभिरिति अङ्गानि।**' अर्थाद् येन कस्याऽपि वस्तुनः स्वरूपज्ञाने साहाय्यं मिलति तमङ्गमिति कथ्यते। वेदः स्वयमेवैकः दुरूहो विषयोऽस्ति। तदर्थज्ञाने, तस्य कर्मकाण्डस्य प्रतिपादने यान्युपयोगीनि शास्त्राणि सन्ति तान्येव वेदाङ्गानि भवन्ति। वेदस्य यथार्थज्ञानलाभाय षण्णां विषयाणां ज्ञानमपेक्षितं भवति। वेदमन्त्राणामवितथोच्चारणमेव प्रथममावश्यकं वस्त्वस्ति। शब्दमयमन्त्राणां यथार्थोच्चारणाय प्रवर्त्तमानं वेदाङ्गं 'शिक्षा' इत्यभिधीयते। वेदस्य मुख्यप्रयोजनं वैदिककर्मकाण्डस्य यज्ञयागस्य च यथार्थानुष्ठानमस्ति। अस्मिन्नर्थे प्रवृत्तमङ्गं 'कल्प' इति कथ्यते। कल्पस्य व्युत्पत्तिलभ्योऽर्थो भवति—'**कल्प्यते समर्थ्यते यागप्रयोगोऽत्र**' इति। वेदानां रक्षकत्वाद्, वेदार्थावबोधने सहायकत्वात् प्रकृतिप्रत्ययोपदेशपुरःसरपदस्वरूपप्रतिपादकत्वादर्थनिर्णयनकृत्साधनेष्वन्यतमसाधनत्वेन प्रयुक्तत्वाद् व्याकरणं नाम वेदाङ्गं नितान्तमेव महनीयं श्रेष्ठञ्च अङ्गमङ्गेषु स्मृतम्। निरुक्तस्यास्ति विषयः—वैदिकपदानां व्युत्पादनम्। निरुच्यते निश्शेषेणोपदिश्यते तत् तदर्थावबोधनाय पदजातं यत्र तन्निरुक्तमिति कथ्यते। वेदाः सन्ति छन्दोबद्धाः। अतस्तेषामुच्चारणनिमित्ताय छन्दोज्ञानं नितरामपेक्षितम्। वरुणस्य विषये शुनःशेपऋषेः प्रख्यातोऽयं मन्त्रोऽस्ति—

'निषाद धृतव्रतो वरुणः पस्त्यास्वा।
साम्राज्याय सुक्रतुः।'

यज्ञभागा बहुविधाः सन्ति। केचन यज्ञा एवंविधा विधाने नीता ये संवत्सरसम्बन्धिनः सन्ति। केचन क्रतुसम्बन्धिनो वर्त्तन्ते। केचन च तिथि-मास-पक्ष-नक्षत्रपरकाः सन्ति। तस्माज्ज्यौतिषं नाम वेदाङ्गमपि नैजं वैशिष्ट्यं निदधाति।

संक्षेपेण वैदिकमन्त्राणामुचितोच्चारणाय शिक्षायाः, कर्मकाण्डस्य यज्ञीयानुष्ठानस्य च निमित्ताय कल्पस्य, शब्दानां रूपज्ञानाय व्याकरणस्य, अर्थज्ञानाय निर्वचनाय च निरुक्तस्य, वैदिकच्छन्दसां ज्ञानलाभाय छन्दसस्तथाऽनुष्ठानस्योचितकालनिर्णयार्थं ज्योतिषशास्त्रस्य च प्रयोजनमस्ति।

आधुनिकानामितिहासकाराणां कथनमिदं यत् षण्णामपि वेदाङ्गानां निर्माणं वैदिकयुगस्योत्तरार्द्धभागेऽभवत्। शिक्षा, व्याकरणम्, कल्पः, निरुक्तम्, छन्दः, ज्यौतिषञ्च इत्येतानि वेदाङ्गानां सन्ति नामानि। पाणिनीयशिक्षा प्राह—

'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः ।
ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु ॥'

+ + +

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥'

( पा० शि० ४१।४२ )

पतञ्जलिनाऽप्युक्तम्—**'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'** ( पस्पशाह्निके ) ।

षण्णामप्येतेषां वेदाङ्गानामुल्लेखो गोपथब्राह्मणबौधायनधर्मसूत्र-गौतमधर्मसूत्र-रामायणसमेषु प्राचीनग्रन्थेषूपलभ्यते । एतेन तेषां पुरातनतरत्वं सिद्धयति । बुद्धावतारात्प्राग्वर्त्तीकाल उत्तरवैदिककालत्वेन निर्धार्यते बुधैः । वेदानां भाषा भावश्च उभावपि दुरूहौ स्तस्तस्माद् वेदार्थावगमनाय वेदाङ्गानामपेक्षा भवति । वेदार्थबोधाय सहायकत्वात् तेषामुपकारकत्वं स्पष्टमेव ।

## १. शिक्षा

तच्छास्त्रं शिक्षानाम येन वेदमन्त्राणामुच्चारणं शुद्धं सम्पाद्येत । वेदे स्वरस्य प्राधान्यं सर्वविदितम्, स्वरज्ञानं च शिक्षाऽऽयत्तम्, अत एवेदं शिक्षाशास्त्रं वेदाङ्गम् । शिक्षाशास्त्रप्रयोजनमुक्तं तैत्तिरीयोपनिषदारम्भे । यथा—**'अथ शिक्षां व्याख्यास्यामः—वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्तः शिक्षाध्यायः ।'** तत्र वर्णोऽकारादिः, स्वरोदात्तादिः, मात्रा ह्रस्वादिः, बलं स्थानप्रयत्नौ, साम निषादादिः, सन्तानो विकर्षणादिः । एतदवबोधनमेव शिक्षायाः प्रयोजनम् ।

यथा वैदिकविधीनां सम्पादनार्थं ब्राह्मणग्रन्था उपयुज्यन्ते, तथैवोच्चारणप्रयोजनेन शिक्षाया उपयोगो वाञ्छ्यते । वेदानां वैदिकसाहित्यस्य वाऽध्ययनाध्यापनविषयकविधीनां निर्देशः शिक्षाशास्त्रे कृतः । शिक्षा स्वरवर्णाद्युच्चारणानि केन प्रकारेण कर्त्तव्यानीत्येतस्मिन् विषये उपदिशति । सायणस्य ऋग्वेदभाष्यभूमिकायामुक्तम्—**'स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षेति ।'**

वेदपाठावसरे शुद्धमुच्चारणं स्वरक्रिया च युक्ता काम्येते । अशुद्धोच्चारणयुक्तो भ्रष्टस्वरश्च वेदपाठो महद् दुष्फलं जनयति । स परमहानिकृद् भवति । यज्ञयागोपासनादिकं यत्कार्यमिष्टलाभाय क्रियते, तस्माद्विशिष्टलाभो न कदापि अशुद्धेनोच्चारणेन समवाप्तः सञ्जायते । तद्विधमशुद्धोच्चारणयुतं कार्यं तु विपदं महतीमुत्पादयति । श्रूयते यत्पुरा 'इन्द्रशत्रुर्वर्धस्व' इत्येतन्मन्त्रस्याशुद्धोच्चारणं

कृतमभूत्, तेन यजमानम्प्रति तदनिष्टकारकमसिद्धयत्। पाणिनीयशिक्षायामुक्तम्—

**'मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्॥'**

वेदोच्चारणस्य युक्ततायै स्वरक्षाज्ञानमपेक्ष्यते समीचीनम्। स्वर उदात्तानुदात्तस्वरितभेदेन त्रिविधः। 'उच्चैरुदात्तः', 'नीचैरनुदात्तः', 'समाहारः स्वरितः' इत्येतानि पाणिनिना तेषां त्रयाणां लक्षणानि प्रोक्तानि। 'अनुदात्तपदमेकवर्ज्यम्' इत्येतस्मिन् पाणिनीये सूत्रेऽभिहितं यद् वेदस्य प्रतिपदमवश्यमेव केनापि उदात्तेन स्वरेण संश्लिष्टं भवति, अवशिष्टाश्च स्वराः भवन्त्यनुदात्ताः। तेष्वेवानुदात्तेषु स्वरेषु अन्यतमः स्वरो हि परिस्थितिविशेषे स्वरितो जायते। स्वरप्रधानतायाः कारणं वेदेष्वस्ति, तेषां स्वराणामर्थनियन्त्रणत्वम्। केन प्रकारेण स्वराणामर्थनियन्त्रणकारित्वं भवतीत्युपरिष्टादुदाहरणं निधायाभिहितमेव। वेदेषु शुद्धोच्चारणं सर्वप्रथमं वाञ्छितं भवति, तच्च शुद्धोच्चारणं शिक्षा समुपदिशति। एतस्मादेव हेतोः षट्सु वेदाङ्गेषु शिक्षाऽङ्गस्य मूर्धन्यत्वमाम्नातम्। शिक्षाया अभिमतो विषयः प्रातिशाख्येषु दृश्यते। प्रातिशाख्यग्रन्थाः शिक्षाशास्त्रस्य प्राचीनतमाः प्रतिनिधय इव सन्ति। संहितापाठसम्बन्धिनः सर्वेऽपि विषयास्तत्र साङ्गोपाङ्गतया प्रतिपादिताः।

शिक्षाशास्त्रेतिहासः पुरातनतरः। परं न तद्विषयकाः प्राचीनतरा ग्रन्था उपलभ्यन्ते। श्रीवाचस्पतिगैरोला स्वकीये इतिहासे लिखति यत् सत्यकेतुविद्यालङ्कारस्य मतमिदं यत् 'जैगीषव्यस्य शिष्यो बाभ्रव्यः शिक्षाशास्त्रं प्रणिनाय। महाभारते शान्तिपर्वणि आचार्यगालवकृतस्य शिक्षाग्रन्थस्योल्लेखो लभ्यते। भण्डारकरशोधसंस्थान-पूनातो भारद्वाजशिक्षायाः प्रकाशनं जातमस्ति। तत्र नागेश्वरभट्टस्य टीका च वर्त्तते। नागेश्वरमतेन स ग्रन्थो भारद्वाजेन प्रणीतः। शिक्षासङ्ग्रहनामके ग्रन्थे द्वात्रिंशच्छिक्षापुस्तकानां सङ्ग्रहोऽवाप्यते। शिक्षा इमाश्चतुर्णामपि वेदानां भिन्नभिन्नशाखास्वात्मानं सम्बध्नन्ति। श्रीबलदेव-उपाध्यायः स्वकीये 'वैदिक साहित्य और संस्कृति' इत्येतदभिधेये ग्रन्थे याज्ञवल्क्यशिक्षा-वासिष्ठीशिक्षादिसंज्ञकानां विंशतिग्रन्थानामुल्लेखं विदधानो दृश्यते। साम्प्रतं समवाप्ता पाणिनीयशिक्षा प्राचीनशिक्षासूत्राणां साहाय्येन प्रणीताऽभूदिति बुधानां विचारः। अद्यतने युगे पाणिनीयशिक्षां स्वामी-दयानन्द उद्धार। इदमपि स्मरणीयमत्र यदिदानीं शुक्लयजुर्वेदे याज्ञवल्क्यशिक्षा, सामवेदे नारदशिक्षा, अथर्ववेदे माण्डूकीशिक्षा, किञ्च ऋग्वेदे पाणिनीयशिक्षाः प्राप्यन्ते न च अन्या काऽपि।

**उपनिषत्काले शिक्षा—**

वैदिककाले एव वेदाङ्गं प्रति वैदिकानाम् ऋषीणां ध्यानाकर्षणमभवत्। ब्राह्मणग्रन्थेषु शिक्षासम्बद्धनियमानामुल्लेखो यत्र तत्र मिलति। उपनिषत्सु अद्वैत-

विशिष्टाद्वैतश्रुतीनां सद्भावो भाति । अस्मिन्नेव काले मूलरूपेण शिक्षा-सिद्धान्ताऽपि प्रतिपादितोऽस्ति । आचार्यैः शिक्षासिद्धान्तप्रतिष्ठापिकाः श्रुतयः प्रधानत्वेन स्वीकृताः, अन्यासां श्रुतीनां गौणत्वञ्च तैरुपपादितम् । वस्तुत उपनिषत्सु दर्शनानां सर्वेषामपि बीजानि निहितानि सन्ति । न केवलं शिक्षादर्शनस्य अपितु विभिन्नदर्शनानामपि मूलसिद्धान्ताः समुपलभ्यन्ते । सत्यं हि इदं यदुपनिषद् ऋषीणामाध्यात्मिकविचाराणां मनोज्ञो बहुमूल्यशाली च महान् कोषः ।

उपनिषदां प्रधानत्वेन प्रतिपाद्यो विषयोऽस्त्यात्मा । संहितात आरण्यकं यावत् तद् ब्रह्म आत्मनो भिन्नमित्येतेन रूपेण प्रतिपादितमस्ति, तदुपनिषत्सु ततो भिन्नमित्येतेन प्रकारेण व्याख्यातमस्ति । द्वयोरप्यभिन्नत्वाद् दैवाध्यात्मिकतत्त्वयोरेकत्वाच्चात्मैवैकः सर्वत्र न च तं विहाय कोऽप्यन्यः पदार्थ इति ह्युपनिषद्भिर्युक्तिभिः साधु निरणायि । तच्चात्माख्यं तत्त्वं पूर्णमस्ति । तदेव तत्त्वं द्रष्टृ तदेव च दृश्यम् । न द्रष्टृदृश्ये भिन्नतां वस्तुतः श्रयतः । आत्मैव सर्वव्यापी वर्त्तते । विश्वस्य सर्वेष्वपि पदार्थेषु स एव व्याप्तोऽस्ति । तस्मिन्नेव समग्रस्यापि प्रपञ्चस्य लयो भवति । ततो व्यतिरिक्तं न किमपि । अत एव बृहदारण्यकोपनिषदाह—

**'स वाऽयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्रमाणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमयः आपोमयो वायुमय आकाशमयस्तेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयः………… ।'**

एतेन भवतीति स्फुटं यत् संसारस्य यावन्तोऽपि सन्ति स्थूला वा सूक्ष्माः पदार्थाः, सर्वेऽपि नात्मनो भिन्नाः । ते सर्वे आत्मत्वेनैव वेदितव्याः, नात्मनः परं किमपि प्रियतरम् । ऋषिभिर्बहुधा स आत्मा वर्णितः । कथयन्ति ते यत् आत्मैव प्राणापानव्यानोदानवायुरूपेणास्मच्छरीरं भवति । आत्मैव क्षुत्पिपासामोहशोकजरामरणेभ्योऽस्मानुद्धरति । आत्मनो ज्ञानानन्तरमेव मानवः सुतसम्पत्सुन्दरीस्वर्गादिसमवाप्तेरिच्छातो विरतो भूत्वा परिव्राजो जीवनं वहति । पूर्णत्वादखण्डत्वाच्चात्मा सदसल्लघुगुरुदूरादूरान्तर्बहिरादिसकलविरुद्धधर्माणामेकाधारः । सर्वेऽपि दर्शनकारा अत एवेदं परमतत्त्वमात्माऽभिधेयं विभिन्नरूपेण स्वस्वमूलतत्त्वं मत्वा भिन्नभिन्नया दृष्टिसरण्या भिन्नभिन्नानि दर्शनानि व्यरचयन् ।

ब्रह्मतत्त्वं यः कोऽपि जिज्ञासति, ज्ञातुं शक्नुते, यः कोऽपि मानवस्तल्लिप्सति लब्धुं प्रभवति । तदर्थं तपस्या काम्यते अभिलष्यते सत्यानुरागो बलिष्ठा निष्ठा विमलञ्च ज्ञानम् । नायमात्मा वेदाध्ययनेन लब्धुं शक्यो न च सद्धारणाशक्त्यैव । साधको हि यमात्मानं वृणुते, तेनैव स तमवाप्तुमीष्टे । सम्प्रति हि स्वयमेवात्मा स्वकीयं रूपमभिव्यनक्ति । कठोपनिषदाह—

**'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥'**

उप-नि-पूर्वकस्य विशरणगत्यवसादनार्थकस्य 'षद्लृ'-धातोः क्विबन्तस्य रूपमिदमुपनिषदिति । उपनिषदामध्ययनेन दृष्टानुश्रविकविषयवितृष्णमुमुक्षूणां

संसारस्य बीजभूता विद्या नश्यति ब्रह्म प्राप्तं भवति, दुःखानि च क्षीणानि भवन्ति। ब्रह्मणः स्वरूपस्य तदवाप्त्युपायस्य जीवस्य जगतश्च किञ्चात्मादि-विषयाणां सविस्तरं वर्णनपरत्वाद् 'उपनिषद्' इत्येषा संज्ञा युक्तैव सार्थ-कैवास्ति।

उपनिषदां व्यवहारविषयकपक्षो नितरां मनोभिरामः। दार्शनिकानि तत्त्वानि व्यवहारे प्रयुज्योपनिषद्विद्या मानवीयजीवनमतितरां रमयति—इत्येतद्धि तदीयं ललितं वैशिष्ट्यम्। ज्ञानस्य सिद्धिः शिक्षाधीना भवति। तैत्तिरीयोपनिषदः प्रथमवल्ल्यामस्याः शिक्षायाः समस्तमूलसिद्धान्तस्य विवेचन-मुपलब्धं भवति। यथा—

**'शिक्षां व्याख्यास्यामः। वर्णः, मात्रा, बलं, साम, सन्तानः, इत्युक्तः शिक्षाध्यायः'** ( तै० १।२ )।

उपनिषदानुसारेणेत्येतानि षडङ्गानि भवन्ति शिक्षाविषयस्येति। (१) वर्णस्याभिप्रायः अक्षराणि भवन्ति। वेदतत्त्वस्य ज्ञानार्थं संस्कृतवर्णमालायाः ज्ञानं नितान्तमावश्यकमस्ति। पाणिनीयशिक्षातः ज्ञानं भवति यत् संस्कृतवर्णमालायां ६३ अथवा ६४ वर्णा निर्धारिता भवन्ति। न केवलमियं संख्या संस्कृतभाषार्थ-मेव, प्रत्युत वैदिककाले प्रयुक्तं प्राकृतभाषार्थमपि नियता आसीत्। (२) स्वर-स्याभिप्रायः—उदात्तानुदात्तस्वरितैः सहास्ति। (३) मात्राशब्देनोच्चारण-सापेक्षसमय एवास्ति। मात्रा त्रिधा भवति—ह्रस्व-दीर्घ-प्लुताश्चेति। एकमात्रो भवेद् ह्रस्वः, द्विमात्रो दीर्घ उच्यते, तथा त्रिमात्रो प्लुतसंज्ञको भवति। (४) बलेन स्थानप्रयत्नयोर्बोधो भवति। स्वर-व्यञ्जनयोरुच्चारणकाले ताल्वादि यत्स्थानस्य वायुना स्पर्शो भवति तदेव स्थानमिति। स्थानानि चेमान्यष्टसंख्य-कानि भवन्ति। प्रयत्नोऽपि द्विधा भवति—आभ्यन्तरो बाह्यश्चेति। आभ्यन्तर-प्रयत्नः चतुर्धा विभक्तोऽस्ति—स्पृष्ट-ईषत्स्पृष्ट-विवृत-संवृतभेदात्। बाह्य-प्रयत्नोऽपि एकादशधा—विवार-संवार-श्वास-नाद-घोष-अघोष-अल्पप्राण-महा-प्राण उदात्तस्वरिताश्चेति। (५) सामशब्दस्यार्थो भवति—'साम्यम्' अर्थाद् दोषरहितअनुदात्त-माधुर्यादिगुणयुक्तमुच्चारणम्। तद्यथा—

**'माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः।**
**धैर्यं लयसमर्थञ्च षडेते पाठका गुणाः॥'** ( पा० शि० ३३ )

विपरीतमस्याधमपाठकेषु परिगणितप्रकाराणां निर्देशोऽपि तत्रैव। यथा—

**'गीती शीघ्री शिरः कम्पी यथा लिखितपाठकः।**
**अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाऽधमाः॥'**
( पा० शि० ३२ )

शङ्कितभीतादिपाठोऽपि अनर्थको भवति। यथा—

**'शङ्कितं भीतमुत्कृष्टमव्यक्तमनुनासिकम्।**
**काकस्वरं शिरसिगं तथा स्थानविवर्जितम्॥**

उपांशुदष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् ।
निष्पीडितं ग्रस्तपदाक्षरञ्च वदेन्न दीनं न तु सानुनास्यम् ।।'
( पा० शि० ३४।३५ )

( ६ ) सन्तानः—सन्तानशब्दस्यार्थो भवति संहिता, अर्थात् पदानामतिशयसन्निधिः । सत्यपि पदानां स्वतन्त्रास्तित्वे यदा कदा पदद्वयस्यावश्यकतानुसारेण शीघ्रतयैकस्यानन्तरमेकस्योच्चारणं भवति, तदेवोच्चारणं संहितापदेन व्यपदिश्यते । पदेषु प्रथमं संहिता भवति तत्पश्चादेव सन्धिर्भवितुमर्हति । यथा—'वायो आयाहि' अत्र स्वतन्त्रे द्वे वैदिकपदे स्तः । यदैकस्मिन्नेव वाक्ये पदद्वयस्य सहैवोच्चारणं भवति तदा सन्धिकारणेनात्र किमपि परिवर्त्तनं भवति । तदा पूर्वोदाहरणस्य रूपं 'वायवायाहि' भविष्यति । अनेनैव प्रकारेण 'इन्द्राग्नो आगतम्' अत्र प्रकृतिभावो भविष्यति ।

प्रत्येकस्मिन् वेदे वर्णानामुच्चारणं समानरूपेण भवितुं नार्हति । तेषामुच्चारणे पार्थक्यं भवत्येवेति । उदाहरणाय—मूर्धन्यः ष' इत्येतस्य शुक्लयजुर्वेदे रेफेण सहोष्मवर्णेन सह संयुक्ते सति चास्योच्चारणं 'ख' इव भवति । किञ्चान्यवेदेष्वस्योच्चारणं विशुद्धमूर्धन्यः 'ष' इव भवति । यथा पुरुषसूक्तस्य प्रधानमन्त्रगत-'सहस्रशीर्षा पुरुषाः' अत्र ऋग्वेदिनामुच्चारणे यत्र 'शीर्षा' इत्येतस्य 'ष' इति मूर्धन्यः स्पष्टत एव भवति, तत्र माध्यन्दिनशाखीयानामुच्चारणे 'शीरेखा पुरुखः' इत्युच्चारणं भवति । अस्य विशिष्टपरिचयस्तत्तद्वेदस्यैव शिक्षायां विस्तरेण सह प्रदत्तमस्ति । इदमेव कारणमस्ति यत् प्रत्येकस्य वेदस्य स्वकीया शिक्षाऽस्ति । तस्यामेव शिक्षायां तत्तद्वेदविशेषस्योच्चारणस्याऽपि विधानं वर्त्तते ।

## शिक्षासाहित्यम्—

'शिक्षा'-शब्दस्यात्रार्थो भवति वैदिकमन्त्राणामुच्चारणविधेः शिक्षको ग्रन्थः । शिक्षा-प्रातिशाख्ययोः परस्परसम्बन्धविषये मतैक्यं नास्ति । शिक्षायाः साहित्यं पर्याप्तरूपेण विशालमस्ति । प्रधानशिक्षायाः संक्षिप्तपरिचयं दातुं प्रयासः करिष्यते—

## व्यासशिक्षा—

अस्य ग्रन्थस्योपरि महामहोपाध्यायपण्डितवेङ्कटरामशर्मणा रचितो वेदतैजसनाम्ना व्याख्याग्रन्थः समुपलब्धोऽस्ति ।

## भरद्वाजशिक्षा—

अस्य ग्रन्थस्य सम्बन्धं तैत्तिरीयसंहितया सहास्ति । ग्रन्थोऽयं 'संहिताशिक्षा' नाम्ना व्यवहृतोऽस्ति । यतोऽस्य प्रधानलक्ष्यं संहिता-पदानां शुद्धतैवाऽस्ति । तदर्थं विशिष्टनियमानामस्मिन् ग्रन्थे विवरणमस्ति । क्वचिद्विशिष्टशब्दानां सङ्कलनमप्यस्ति । तैत्तिरीयसंहितायां 'वृजिन्'-शब्दस्योपलब्धिर्भवति । किञ्च

जकारस्योदात्तस्वरयुक्तत्वे सति अकारयुक्तः 'वृजन' इत्येवं भवति ( **वृजने 'ज' उदात्तश्चेद् अकारेण सहोच्यते** )। अनेन प्रकारेण 'पर्शु'-शब्दः अन्तोदात्तश्चेत् 'परशु' इत्यस्मिन् रूपे परिणतो भवति। अनेनैव प्रकारेणात्र नियमाः प्रदर्शिताः। अक्षरक्रमेण ग्रन्थस्य सङ्कलनमस्ति। शिक्षाया अन्येषां विषयाणामत्राभावो विद्यते। शिक्षेयं प्राचीना प्रतीता भवति। श्रीनिवासदीक्षितेन रचिता 'सिद्धान्तशिक्षा' अपि अस्याः शिक्षाया विषयप्रतिपादनेऽनुगमनं करोति।

**पाणिनीयशिक्षा—**

शिक्षेयमतिप्रसिद्धा लोकप्रिया चास्ति। लौकिकानां वैदिकानाञ्च शास्त्राणां कृते शिक्षेयं नितान्तमुपयोगित्वेनाधिकमहत्त्वपूर्णाऽस्ति। ग्रन्थेऽस्मिन् षष्टिः श्लोकाः सन्ति। एतेषु श्लोकेषूच्चारणविधिसम्बद्धविषयाणां संक्षिप्तं किञ्चोपादेयं विवरणं प्रदत्तमस्ति। अस्य ग्रन्थस्य रचयितुर्नामाद्यावध्यप्यज्ञात एवाऽस्ति। ग्रन्थान्ते पाणिनेरुल्लेखः दाक्षीपुत्रनाम्ना कृतोऽस्ति।

**'शङ्करः शाङ्करीं प्रादात् दाक्षीपुत्राय धीमते।**
**वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः॥'**

( पा० शि० ५६ )

अनेनोल्लेखेन स्पष्टो भवति यत्पाणिनिरस्य ग्रन्थस्य लेखको नास्ति। पाणिनिमतानुयायी कोऽपि वैयाकरणः अस्योपयोगिनो ग्रन्थस्य निर्माणमकरोत्। अस्य ग्रन्थस्योपरि बहुविधा टीका अप्युपलब्धा भवन्ति। परिमाणे न्यूनत्वेनाप्यस्य सारगर्भितग्रन्थस्यानुशीलनेन संस्कृतभाषाया अस्योपयोगिनो विषयस्य सुष्ठु ज्ञानं प्राप्तुं शक्यते।

शिक्षासङ्ग्रहनामके ग्रन्थे एकत्र प्रकाशितानां द्वात्रिंशच्छाखानां समुच्चयोऽस्ति। एताः शिक्षाश्चतुर्णां वेदानां विभिन्नशाखातः सम्बद्धाः सन्ति। आसामेवात्र संक्षिप्तवर्णनं दास्यते।

**( १ ) याज्ञवल्क्यशिक्षा—**

परिमाणेयं बृहदाकाराऽस्ति। अस्याः श्लोकानां संख्याः २३२ सन्ति। अस्याः सम्बन्धः शुक्लयजुर्वेदीयवाजसनेयीशाखया सहास्ति। अस्यां शिक्षायां वैदिकस्वराणामुदाहरणेन सह विशिष्टं विस्तृतञ्च वर्णनमस्ति। लोपागमविकार-प्रकृतिभावाख्यानां चतुर्विधसन्धीनां विवेचनोऽप्यत्र वर्त्तते। वर्णानां विभेद-स्वरूप-साम्य-वैषम्यादीनामपि वर्णनमस्ति।

**( २ ) वासिष्ठीशिक्षा—**

अस्या अपि सम्बन्धो वाजसनेयीसंहितया सहैवास्ति। अस्यां संहितायां ऋग्-मन्त्र-यजुर्मन्त्रयोः पार्थक्यमतिविस्तरेण सह वर्णितमस्ति। अनया शिक्षयाऽनुसारेण शुक्लयजुर्वेदीयसमग्रसंहितायामृग्वेदीय १४६७ मन्त्राः सन्ति। अत्र

यजुषां संख्या: २८२३ सन्ति। संख्याविभागोऽयमस्य वेदस्याध्ययनकर्तृभ्य: अतीवोपादेयमस्ति।

**( ३ ) कात्यायनीशिक्षा—**

अस्यां शिक्षायां केवलं त्रयोदशश्लोका: वर्त्तन्ते। जयन्तस्वामिनाम्ना कोऽपि विद्वानस्य टीकां लिलेख।

**( ४ ) पाराशरीशिक्षा—**

अस्यां शिक्षायामपि १६० श्लोका: सन्ति। अस्मिन्नपि ग्रन्थे सन्धि-स्वर-वर्णादीनां विषयाणां विवेचनमस्ति।

**( ५ ) माण्डव्यशिक्षा—**

शिक्षेयं शुक्लयजुर्वेदेन सह सम्बद्धाऽस्ति। ग्रन्थेऽस्मिन् वाजसनेयीसंहितायां प्रयुक्तानां नामौष्ठचवर्णानां सङ्ग्रहो विद्यते। अतीवपरिश्रमेण समस्तसंहिताया अध्ययनं कृत्वोपादेयोऽयं ग्रन्थो लिखितोऽस्ति। सामान्यशिक्षाग्रन्थेभ्य: अस्य ग्रन्थस्य विशिष्टताऽपि स्पष्टा एवास्ति। स्वरस्य वर्णस्य च विचारमकृत्वैव केवलमोष्ठेनोच्चारितवर्णानामेवात्र सङ्ग्रह: कृतोऽस्ति।

**( ६ ) अमोघानन्दिनीशिक्षा—**

अस्मिन् ग्रन्थे १३० श्लोका: सन्ति। अत्र स्वरस्य वर्णस्य च सूक्ष्मविचार: कृतोऽस्ति। अस्य ग्रन्थस्य संक्षिप्तसंस्करणमप्यस्ति। अस्मिन् संस्करणे केवलं सप्तदशश्लोका एव सन्ति।

**( ७ ) माध्यन्दिनीशिक्षा—**

ग्रन्थेऽस्मिन् केवलं द्वित्वनियमानां विवेचनमस्ति। द्विविधोऽयं ग्रन्थ:। एक: बृहदाकार:, द्वितीयस्तु लघ्वाकार एवेति। प्रथमो गद्यात्मक:, द्वितीय: पद्यात्मकश्चेति।

**( ८ ) वर्णरत्नप्रदीपिका—**

अस्य ग्रन्थस्य रचयिता भारद्वाजवंशीय: कोऽप्यमरेशनामको विद्वानस्ति। अस्यापि समय: अज्ञात एव। अस्य ग्रन्थस्य श्लोकानां संख्या: २२७ सन्ति। नामानुरूपेणैवास्मिन् ग्रन्थे वर्ण-स्वर-सन्धीनां साङ्गोपाङ्गं विवेचनमस्ति।

**( ९ ) केशवीशिक्षा—**

अस्या रचयिताऽऽस्तिकमुनेर्वंशजो गोकुलदैवज्ञस्य पुत्र: केशवदैवज्ञोऽस्ति। द्विविधेयं शिक्षा समुपलब्धा भवति। प्राथमिकीशिक्षायां माध्यन्दिनशाखात: सम्बद्धपरिभाषाणां विस्तृतं विवेचनमस्ति। प्रतिज्ञा—समस्तानां नवसूत्राणां विस्तृतव्याख्योदाहरणेन सहात्र प्रदत्ताऽस्ति। द्वितीया शिक्षा पद्यात्मिकाऽस्ति, एकविंशतिपद्येष्वत्र स्वरस्य विस्तृतविचारोऽस्ति।

**( १० ) मल्लशर्म-शिक्षा—**

अस्य ग्रन्थस्य रचयिता उपमन्युगोत्रीयः अग्निहोत्री खगपतिमहोदयस्य पुत्रो मल्लशर्मा नामकः कोऽपि कान्यकुब्जब्राह्मण आसीत् । अस्याः शिक्षायाः पद्यानां संख्याः ६५ सन्ति । लेखककथनानुसारेणास्या रचना १७८१ विक्रमाब्देऽभवत् ।

**( ११ ) स्वराङ्कुश-शिक्षा—**

अस्याः शिक्षाया रचयिता जयन्तस्वामीनामकः कोऽपि विद्वानासीत् ।

**( १२ ) षोडश-श्लोकीशिक्षा—**

श्रीरामकृष्णनामकेन विदुषा षोडशश्लोकीशिक्षा नामकं लघ्वेकं ग्रन्थं प्रणीतं, यत्र स्वरस्य व्यञ्जनस्य च विचारं कृतमस्ति ।

**( १३ ) अवसान-निर्णयशिक्षा—**

वैदिकव्याकरणसम्बन्धिपदप्रयोगनियमानां ज्ञानाय स्वरवर्णादिज्ञानसौलभ्याय च शिक्षेयं प्रणीताऽनन्तदेवेन विदुषा ।

**( १४ ) स्वरभक्तिलक्षणशिक्षा—**

स्वरभक्तिप्रयोगनियमानां ज्ञानाय महर्षिणा कात्यायनेन विविधोदाहरणैः संयुतो लक्षणग्रन्थोऽयं रचितः ।

**( १५ ) प्रातिशाख्य-प्रदीप-शिक्षा—**

इदं पाण्डित्यपूर्णं शिक्षाशास्त्रं सदाशिवपुत्रेण बालकृष्णनाम्ना केनाऽपि विदुषा कृतमस्ति । शिक्षेयं परिमाणे गरिष्ठेति । शिक्षाशास्त्रमिदं किमपि प्राचीनमीदृशं शास्त्रमालोक्यैव प्रणीतम् । ग्रन्थेऽस्मिन् कतिपयानि व्याकरणप्रयोगपराणि ग्रन्थान्तरात्पद्यानि समुद्धृतानि सन्ति । स्वरवर्णादिशिक्षायाः समग्रविषयाणां सरसं सरलं साङ्गोपाङ्गञ्च विवेचनमत्रास्ति । शिक्षाशास्त्रस्य यथार्थज्ञानलाभाय ग्रन्थोऽयमतीवोपादेयोऽस्ति ।

**( १६ ) नारदीयशिक्षा—**

सामवेदेन सम्बद्धोऽयं शिक्षाग्रन्थोऽस्ति । अतिविस्तृतेयमुपादेया च शिक्षाऽस्ति । अस्य ग्रन्थस्य शोभाकरभट्टेन विस्तृता व्याख्याऽपि लिखिता । व्याख्येयं नितान्तप्रौढा प्रसिद्धा चास्ति । सामवेदीयस्वराणां रहस्यं विज्ञातुं ग्रन्थोऽयमतीवोपयोगी वर्त्तते । सामवेदीये द्वेऽन्येऽपि शिक्षे स्तः—**( १७ ) गौतमी ( १८ ) लोमेशीशिक्षा चेति ।**

**( १९ ) माण्डूकीशिक्षा—**

अथर्ववेदेन सम्बद्धेयं शिक्षाऽस्ति । अस्याः श्लोकानां संख्याः १७९ सन्ति । अथर्ववेदस्य स्वराणां वर्णानाञ्च सुष्ठुज्ञानाय शिक्षेयं महनीया श्लाघनीया

चास्ति। कतिपयेऽन्येऽपि शिक्षाग्रन्था मिलन्ति, येषां नाम-निर्देश एव पर्याप्तो भविष्यति। ( २० ) **क्रमसन्धानशिक्षा**, ( २१ ) **गलदृक्शिक्षा**, ( २२ ) **मनःस्वार-शिक्षा**। एतेषां ग्रन्थानां रचयिता याज्ञवल्क्यमुनिरस्ति।

उपरिलिखिताः शिक्षाग्रन्थाः प्रकाशिताः सन्ति। किञ्चैतदतिरिक्तान्यपि शिक्षाशास्त्राणि सन्ति, येषां प्रकाशनमद्यावधि नाभवत्। एते ग्रन्था हस्तलिखित-रूपेणैवावतिष्ठन्ते।

एतेषु शिक्षाग्रन्थेषु प्राचीनशिक्षासूत्रमपि विद्यमानमासीत्। आपिशलि-पाणिनि-चन्द्रगोमीत्यादीनि शिक्षासूत्राणि च सन्ति प्रकाशितानि ( द्रष्ट० शिक्षासूत्राणि, काशी० स० २००५)। आपिशलिशिक्षासूत्रे स्थान-करण-अन्तः-प्रयत्न-बाह्यप्रयत्न-स्थानपीडन-वृत्तिकारप्रकरण-प्रकम-नाभितल-प्रकरणादयश्चाष्ट-प्रकरणानि सन्ति। एतेषु प्रकरणेष्वक्षराणामुत्पत्तिः, स्थानप्रयत्नानाञ्च विशदं विवेचनञ्चास्ति। एभ्यः शिक्षासूत्रेभ्यः कतिपयानि शिक्षासूत्राणि वृषभदेवेन वाक्यपदीयटीकायाम्, हेमचन्द्रेण व्याकरणस्य बृहद्वृत्त्यां, न्यासकारेण च स्वन्यासे समुद्धृतानि सन्ति। पाणिनि-शिक्षासूत्रेष्वपि आपिशलिशिक्षासूत्र-मिव क्रम-प्रकरणयोरुल्लेखो विद्यते। उभयोरपि सूत्रेषु समता मिलति। उपरिलिखितेभ्यः शिक्षाग्रन्थेभ्यः एतानि शिक्षासूत्राणि असन्दिग्धरूपेण प्राचीन-तराणि सन्ति। यथाऽष्टाध्यायीमाधारीकृत्य चन्द्रगोमीपण्डितेन स्वं व्याकरणं विरचितं स्यात्तथैव पाणिनिशिक्षासूत्राणि आधारीकृत्यैव स्वकीयवर्णसूत्राणां रचना कृताऽस्ति।

अनेन ज्ञायते यत् प्राचीना ऋषयः भाषाशास्त्रस्यावश्यकाङ्गस्य कीदृशं वैज्ञानिकाध्ययनमकुर्वन्? अद्यतनीयाः प्रतीच्यप्रधयोऽपि उच्चारणविद्यान्तर्गते ( Phonology ) अस्य विषयस्याध्ययनं कुर्वन्ति। सम्प्रति वैज्ञानिकैरुच्चा-रणस्वरूपावबोधनायोच्चारणयन्त्रमपि निर्मितम्। प्राचीनभारते एवंविधस्य यन्त्रस्याप्यभाव आसीत्। तथाऽप्यस्य विषयस्यैवंविधं वर्णनमनुशीलनञ्च प्राचीन-भारतीयानामुच्चारणसम्बन्धीवैज्ञानिकगवेषणाया द्योतकमस्ति (See A Phonetic Observation of Anciant Hindus by Sidheswar Verma )। अद्यापि तत्तद्वैदिकमन्त्राणां तथैवोच्चारणं भवति यथा प्राचीनकाले तेषामुच्चा-रणमभूत्। वैदिकोच्चारणस्य परम्परा एवंविधा विशुद्धाऽस्ति यत् प्रान्तेतराणा-मप्यध्येतारः समानरूपेणैव समानशाखाया उच्चारणं कुर्वन्ति। तेषां विभिन्न-प्रान्तीयानां वैदिकानामुच्चारणे स्तोकमपि पार्थक्यं वैभिन्न्यञ्च परिलक्षितं न भवति। शिक्षाशास्त्रीयमहत्त्वस्य सूचकोऽयमस्ति। शास्त्रमिदं यद्यपि वैदिक-व्याकरणलक्षणप्रयोगज्ञानाय निर्मितमिति प्रतिभाति, तथाऽप्यस्य शास्त्रस्य साहित्यिकं किमपि वैशिष्ट्यं विद्वज्जनमनोरञ्जकाय विद्यते।

## २. कल्पः

वेदानां द्वितीयमङ्गमस्ति कल्पः। ब्राह्मणकाले यागस्य तावान् प्रचारो जातो यत्तेषां यथावज्ज्ञानाय पूर्णपरिचयप्रदायकग्रन्थानामावश्यकताऽनुभूयतेस्म, तामेवावश्यकतां स्वल्पैः शब्दैः पूरयितुं कल्पसूत्राणि विरचितानि। वेदविहितानां कर्मणां व्यवस्थापनं क्रमपूर्वकं कल्पशास्त्रे कल्पितम्। उक्तञ्च—

**'कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्।'**

कल्पसूत्राणि द्विविधानि—श्रौतसूत्राणि स्मार्त्तसूत्राणि च। श्रुत्युक्तयागविधिप्रकाशकानि श्रौतसूत्राणि। स्मार्त्तसूत्राण्यपि द्विधा—गृह्यसूत्राणि धर्मसूत्राणि चेति।

श्रौतसूत्रेषु अग्नित्रयाधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, पशुयागः, नानाविधाः सोमयागाश्चेति विषयाः समुपपादिताः।

मुख्यतः कल्पसूत्राणि सन्ति चतुर्विधानि—१. श्रौतसूत्रम्, २. गृह्यसूत्रम्, ३. धर्मसूत्रम् ४. शुल्वसूत्रञ्चेति।

श्रौतसूत्रे ब्राह्मणग्रन्थवर्णितानां श्रौताग्नियज्ञानां क्रमबद्धं वर्णनं वर्त्तते।

गृह्यसूत्रेषु तेषामनुष्ठानाचारयागानां वर्णनं विद्यते, येषां सम्पादनं त्रैवर्णिकैरवश्यं कर्त्तव्यमिति। षोडशसंस्काराणां विशिष्टं वर्णनमपि गृह्यसूत्रेषु कृतं बोध्यम्। मुख्यतः गृह्यसूत्रे गृह्याग्निसम्बद्धयागानामुपनयनविवाहश्राद्धादिसंस्काराणां विस्तृतं विवरणं विद्यते।

धर्मसूत्रेषु धार्मिकनियमाः, प्रजानां राज्ञाञ्च कर्त्तव्यचर्याः, चत्वारो वर्णाः, चत्वार आश्रमाः, तेषां धर्माः पूर्णतया निरूपिताः। एतानि धर्मसूत्राण्येव स्मृतीनां जन्मनेऽकल्पन्त। धर्मसूत्रे चतुर्णां वर्णानामाश्रमाणाञ्च किञ्च राज्ञामपि कर्त्तव्यानि निर्दिष्टानि सन्ति। इमान्येव त्रीणि वस्तुतः प्रधानानि कल्पसूत्राणि मतानि।

चतुर्थं शुल्वसूत्रं तु वेदिनिर्माणप्रकारं विशेषतः प्रतिपादयति। सूत्रस्यास्य वैज्ञानिकं महत्त्वमस्ति। मुख्यतः शुल्वसूत्रमपि कल्पसूत्रमेव, तत् श्रौतसूत्रान्तर्गतम्। शुल्वं मापक्रिया। इदं सूत्रमेव भारतीयज्यामितिशास्त्रस्य प्रवर्त्तकम्। पाश्चात्यैः 'पिथागोरस'-प्रभृतिभिरिदं ज्यामितिशास्त्रं प्रणीतमिति ये कल्पयन्ति, ते शुल्वसूत्रं दृष्ट्वा दृढीकुर्वन्तु यदिदं ज्यामितिशास्त्रं भारतीयैः पाश्चात्यज्यामितिशास्त्रोत्पत्तेर्बहुदिवसपूर्वमेव प्रकटीकृतमिति।

कल्पसूत्राणि तत्तद्वेदसम्बन्धनिबन्धनभेदयुतानि तत्र—

ऋग्वेदस्य कल्पसूत्रम्—आश्वलायनम्, शाङ्ख्यायनञ्चेति। अनयोरुभयोरपि कल्पसूत्रयोः श्रौतसूत्रं गृह्यसूत्रञ्च सम्मिलितञ्च विद्यते। शुक्लयजुर्वेदस्य कल्पसूत्रम्—कात्यायनश्रौतसूत्रम्, पारस्करगृह्यसूत्रम्, कात्यायनशुल्वसूत्रञ्चेति।

कृष्णयजुर्वेदस्य कल्पसूत्रम्—बौधायनसूत्रम्, आपस्तम्बसूत्रञ्चेति । अनयोः कल्पसूत्रयोः श्रौतगृह्यधर्मशुल्वसूत्राणि सर्वाण्यपि सन्तीति ग्रन्थाविमौ पूर्णरूपौ ।

सामवेदस्य कल्पसूत्रम्—लाटचायनश्रौतसूत्रम्, द्राह्यायणञ्चेति । जैमिनीयशाखायाः श्रौतसूत्रं जैमिनिगृह्यसूत्रम्, गोभिलगृह्यसूत्रम्, खादिरगृह्यसूत्रञ्चेति ।

सामवेदे एव आर्षेयकल्पस्यापि गणना भवति । अयमेव कल्पो मशककल्पसूत्रनाम्नापि प्रथते । सूत्रमिदं लाटचायनश्रौतसूत्रात् प्राचीनं मन्यते ।

अथर्ववेदस्य कल्पसूत्रम्—वैतानश्रौतसूत्रम्, कौशिकसूत्रञ्चेति । वैतानसूत्रं नातिप्राचीनम्, कौशिकसूत्रञ्चाभिचारक्रियावर्णनपरम् ।

श्रौतसूत्रोपपादितो विषयो वस्तुतो दुरूहोऽस्ति । न तत्र जनसामान्यकृते आकर्षणम् । धार्मिकदृष्टचा श्रौतसूत्रस्य विषयो महत्त्वशाली । आधुनिके युगे श्रौतयागानां विधानं विरलतामुपेतम् । प्राचीनस्य युगस्य धार्मिकेषु विधानेषु याज्ञिकेषु कर्मसु च येषां रुचिरानुरागश्च तैरवश्यमेव श्रौतसूत्राणि अनुशीलनीयानि । ऋग्वेदस्याश्वलायनं शाङ्खायनञ्चेत्येते द्वे श्रौतसूत्रे स्तः । आश्वलायनगृह्यसूत्रे चत्वारोऽध्यायाः सन्ति । प्रत्येकस्मिन्नध्यायेऽनेकानि खण्डानि च सन्ति । अत्र गृह्य-कर्मणां विभिन्नसंस्काराणाञ्च वर्णनमतिसुष्ठुतया कृतमस्ति । स्थाने स्थाने च महत्त्वपूर्णानि कथनानि च सन्ति । यथा तृतीयाध्याये ( ३ । ३ ) ऋषितर्पण-प्रसङ्गे प्राचीनानामाचार्याणां नाम्नां निर्देशोऽस्ति, योऽन्यत्र दुर्लभ एवाऽस्ति । तृतीयाध्यायस्य द्वितीयखण्डे वेदाध्ययनस्य विशिष्टनियमानां वर्णनमुल्लेखनीयमस्ति । चतुर्थखण्डेऽपि उपाकरणस्य वर्णनमतीवमहत्त्वपूर्णसूचनया मण्डितमस्ति ।

आश्वलायनगृह्यसूत्रस्य लोकप्रियताया विश्रुत्याश्च परिचायिकाऽस्य टीकासम्पत्तयः सन्ति । अस्य मुख्यटीका रास्तथा तेषां व्याख्या निम्नलिखिताः सन्ति ।

जयन्तस्वामिनो विमलोदयमाला । देवस्वामिनो भाष्यम् । देवस्वामीमहोदयस्तत्वस्य मतस्य मान्यः टीकाकार आसीत् । अयं हि विद्वान् आश्वलायनगृह्यसूत्रस्य श्रौतसूत्रस्य च भाष्यग्रन्थं निबबन्ध । श्रौतभाष्यस्योल्लेखः गार्ग्यनारायणेन, गृह्यभाष्यस्य निर्देशः गृह्यटीकाकर्त्रा नारायणेन च पृथक् पृथक् कृतौ । समयस्तत्वस्य १००० ई०—१०५० ई० खीष्टीयो मन्यते । टीकेयं प्रख्याता प्रसिद्धा प्रकाशिता चाऽस्ति । हरदत्तपण्डितस्यानाविला टीका वर्त्तते । हरदत्तः संस्कृतस्य मान्यटीकाकर्त्तृषु पाण्डित्यपूर्णटीकां प्रणयनाय विशेषरूपेण विश्रुतोऽस्ति । काशिकायाः 'पदमञ्जरी' नाम टीकामप्ययं निरमात् । द्रविडदेशीयोऽयं खीष्टस्य १२०० ई० आसीदित्यनुमीयते । अनेके ग्रन्थकर्त्तारः आश्वलायनगृह्यसूत्रं कारिकाबद्धं कृतवन्तः । तेषु लेखकेषु रघुनाथदीक्षितगोपालकुमारिलप्रभृतीनां विदुषां नाम विशेषरूपेणोल्लेखनीयोऽस्ति । अन्तिमलेखकेन

आश्वलायनगृह्यसूत्रस्य नारायणवृत्तेस्तथाऽनन्तस्वामिनो निर्देशं कृतवान् स्वकीये ग्रन्थे। गृह्यसूत्रे च तदीये आश्वलायनं शाङ्खायनं च स्तः। शुक्लयजुर्वेदस्य श्रौतसूत्रमेकमेव कात्यायनश्रौतसूत्रमस्ति। गृह्यसूत्रञ्चास्यैकमेव पारस्करगृह्यसूत्रं विद्यते। कृष्णयजुर्वेदसम्बद्धानि श्रौतसूत्राणि—बौधायन-आपस्तम्ब-हिरण्यकेशि-वैखानस-भारद्वाज-मानवनामधेयानि सन्ति। एतस्मिन् वेदे बौधायनं गृह्यसूत्रमपि सुलभमस्ति। सामवेदीयकल्पसूत्रेषु आर्षेयं कल्पसूत्रं प्राचीनम्। इदं लाट्यायनात् श्रौतसूत्रादपि प्राचीनतरमिति निगद्यते। वेदस्यास्य मुख्यं गृह्यसूत्रं कौथुमशास्त्रीयं गोभिलगृह्यसूत्रं सुविदितम्। अथर्ववेदस्य श्रौतसूत्रं वैताननामकं किञ्च तदीयं गृह्यसूत्रं कौशिकसंज्ञकं वेद्यम्। गृह्यसूत्रमिदं प्राचीनभारतीययातुविद्याविषयकामनुपमाञ्च सामग्रीं प्रस्तौति। धर्मसूत्राणि कल्पस्य गौरवमयान्यङ्गानि सन्ति, परं न साम्प्रतं प्रत्येकं शाखाया धर्मसूत्राणि लभ्यन्ते। यन्मानवधर्मसूत्रमाधृत्य मनुस्मृतेर्निर्माणं सञ्जातं, तदपि नाद्यपर्यन्तमुपलब्धं भवति। सुतरां बौधायनापस्तम्ब-हिरण्यकेशिकल्पसूत्राणामुपलब्धिः पूर्णतया भवति। अत एव तदीयानि धर्मसूत्राण्यपि प्राप्यन्ते। धर्मसूत्रेषु चतुर्वर्णकर्त्तव्यानि कर्माणि, व्यवहाराः, राजधर्मः, आश्रमधर्मः, विवाहः, दायभागः, प्रायश्चित्तम्, नित्यनैमित्तिकं कर्म—इत्येते अन्ये चानेके विषयाः सन्ति वर्णिताः। धर्मसूत्रेषु प्राचीनतमं गौतमधर्मसूत्रं विद्यते। गौतमधर्मसूत्रं निर्दिशन्तो याज्ञवल्क्य-कुमारिल-शङ्कराचार्य-मेधातिथयः प्राप्यन्ते। बोधायनोऽपि धर्मसूत्रस्य प्राचीनतम आचार्यो मतः। वसिष्ठश्च प्रतिष्ठितेषु धर्मसूत्रकारेषु गण्यते। तदीयं धर्मशास्त्रं यद्यपि लघुकायं परं गुणविपुलत्वेन महनीयमस्ति। वसिष्ठस्य जीवनदर्शनमत्यन्तमुदात्तमाध्यात्मिकमस्ति। सः सदाचारमयं जीवनं यापयितुमुपदिशति। उपदिशति च दुर्बुद्धिप्रियां तृष्णां परिहर्तुम्। वसिष्ठस्य श्लोकबद्धाः स्मृतिः प्रकाशंगताऽस्ति। बहवो मनुस्मृतिश्लोकास्तत्र गद्यात्मकेषु सूत्रेषु दृष्टिगोचरा भवन्ति। विदुषां धारणेयं यद् वसिष्ठस्य धर्मशास्त्रमेव वर्त्तमानमनुस्मृतेः किंवा तदीयात् प्राचीनविशुद्धमूलरूपात् तान् श्लोकान् उद्धृतांश्चकार।

अथात्र क्रमगतैतिहासिकं विवेचनं प्रस्तूयते। शाङ्खायनगृह्यसूत्रे षडध्यायाः सन्ति। विषयोऽपि तदेवास्ति—संस्काराणां वर्णनम्, तथा तत्सम्बद्धानां गृहनिर्माण-गृहप्रवेशादीनां विषयाणां स्थाने स्थाने च वर्णनमस्ति। ऋग्वेदस्य तृतीया शाखा—'कौषीतकि' इत्येतस्य कल्पसूत्राणामपि परिचयः सम्प्रति उपलभ्यते। धारणेयं प्रायः प्रचलिताऽस्ति यत् शाङ्खायन-कौषीतकि उभयोरप्यैकस्यैव शाखान्तर्गते भिन्न-भिन्नमभिधानमस्ति। किञ्च कौषीतकिशाखा शाङ्खायनशाखातः सर्वथा भिन्ना एवास्ति। अस्य विशिष्टग्रन्थानां प्रकाशनं समारभत। कौषीतकिश्रौतसूत्रमद्यापि अप्रकाशितमेवास्ति। किञ्च कौषीतकिगृह्यसूत्रं सम्प्रति मद्रासनगरीतः प्रकाशितमभवत्।

परमेवं प्राधान्येन कर्मचोदनापरेऽप्यतिगम्भीरे सूत्रात्मकेऽस्मिन् वेदभागे तत्र

तत्र प्रसङ्गेन ग्रन्थेऽस्मिन् अन्येऽपि नानाविधा विषया उट्टङ्किता विद्यन्ते । विधिस्तावकेषु प्ररोचनापरेषु अर्थवादवाक्येषु च तादृशा विषयाः प्रायेण समायान्ति । तत्तत्सूत्रकालिकीनां सामाजिक्याद्यवस्थानामध्ययने तद्द्वारा च भारतस्य प्राचीनेतिहासस्यानुसन्धाने तेषां विषयाणामतीवोपयोगिता तु सुतरां सिद्धमेवेति ।

## शुक्लयजुर्वेदीय-कल्पसूत्राणि

कात्यायनश्रौतसूत्रविषयकं ज्ञानं श्रौतसूत्रस्य स्वरूपावबोधनाय नितान्तमावश्यकमस्ति । अस्य साहित्यस्यायं प्रतिनिधिग्रन्थ इति मन्तव्यम् । अनेन सहान्यश्रौतसूत्राणां तारतम्यं परीक्षितुं तुलनात्मकाध्ययनाय ग्रन्थोऽयमतिमहत्त्वपूर्णोऽस्ति । सूत्रमिदं पद्धतौ निबद्धषड्विंशतितमेषु अध्यायेषु विभक्तः नितान्तप्रौढस्तथा समस्तानां यज्ञयागानां प्रतिपादको ग्रन्थोऽस्ति । दशकण्डिकायां विभक्तः प्रथमाध्यायो यज्ञसम्बन्धिनोऽनेकानामावश्यकविषयाणां लक्षणं प्रस्तौति । द्वितीयतृतीयाध्यायौ मिलित्वा समग्रस्य दर्श-पूर्णमासयागस्य वर्णनं कुरुतः । प्रथमाऽध्याये प्रारम्भिकानुष्ठानानां तथाऽन्तिमाध्याये मुख्ययागस्य विवरणमस्ति । चतुर्थोऽध्यायः पिण्डपितृयज्ञ-दाक्षायण-आग्रयण-अग्न्याधान-पुनराधान-अग्न्युपस्थान-अग्निहोत्रादीनाञ्च क्रमशः वर्णनं करोति । पञ्चमाध्याये चातुर्मास्ययज्ञस्य तथा मित्रविन्देष्टेश्च विधिवत् सुव्यवस्थितं वर्णनं करोति । षष्ठाध्यायो निरूढपशुबन्धस्य सविस्तरं विवरणं ददाति । आसप्तमाध्यायाद् दशमाध्यायपर्यन्तम् अग्निष्टोमयागस्य साङ्गोपाङ्गं विवरणं मिलति । एकादशाऽध्यायस्य महत्त्वपूर्णभागेषु-ब्रह्मानामकस्य ऋत्विजः कार्यस्योपयोगस्य च वर्णनमस्ति । द्वादशाऽध्याये द्वादशाहयज्ञस्य, त्रयोदशाध्याये गवामयनस्य, चतुर्दशाध्याये वाजपेयस्य, पञ्चदशाध्याये राजसूयस्य, आषोडशादष्टादशाध्यायपर्यन्तमग्निचयनस्य, ऊनविंशतितमाध्याये सौत्रामणीयागस्य, विंशतितमाध्याये अश्वमेधस्य, एकविंशतितमाध्याये पुरुषमेध-सर्वमेधपितृमेधादीनां विधिवत् सुव्यवस्थितेन रूपेण वर्णनमुपलब्धं भवति । प्रथमोऽध्यायस्तु कात्यायनस्य मौलिकविचाराणां प्रतिपादकोऽस्ति । किञ्चाद्वितीयाध्यायाद् एकविंशत्यध्यायपर्यन्तस्य विषयास्तु शतपथब्राह्मणमाधृत्य निर्मिताः सन्ति । उभयोर्ग्रन्थयोर्मध्ये नितान्तं साम्यं वर्त्तते ।

आद्वाविंशतितमाध्यायात् चतुर्विंशतितमाध्यायपर्यन्तस्य वर्ण्यविषयाः क्रमशः एकाह-अहीन-सत्रैः सह सम्बद्धाः सन्ति । अस्य खण्डस्य मूलाधारस्ताण्डचब्राह्मणमस्ति । पञ्चविंशतितमाध्याये प्रायश्चित्तस्य वर्णनमस्ति । प्रायश्चित्तमिदमुत्पातानां शमनाय तथा यज्ञे विहितदोषाणां मार्जनाय कृतमस्ति । अन्तिमः षड्विंशतितमाध्यायः प्रवर्ग्यस्य विवरणं ददाति । अत्रैव कात्यायनश्रौतसूत्रस्य समाप्तिर्भवति ।

शुक्लयजुर्वेदस्य गृह्यसूत्रं पारस्करगृह्यसूत्रनाम्ना विख्यातमस्ति । अस्य त्रिषु काण्डेषु प्रथमकाण्डे आवसथ्याग्नेराधानम्, विवाहादारभ्यान्नप्राशनपर्यन्तानां

विषयाणां वर्णनमस्ति । द्वितीयकाण्डे चूडाकरणादारभ्य उपनयन-समावर्तन-पञ्च-महायज्ञ-श्रवणाकर्म-सीतादियज्ञानां विवरणमस्ति । अन्तिमे काण्डे श्राद्धान्तरे-ऽवकीर्णि-प्रायश्चित्तादीनां विविधानां विषयाणां प्रतिपादनमस्ति । अस्य व्याख्या-सम्पत्तय एवास्य लोकप्रसिद्धेः परिचायिकाः सन्ति । निम्नलिखितान्यस्य पञ्च-भाष्याणि प्रसिद्धानि सन्ति । तद्यथा—कर्कभाष्यम्, जयरामभाष्यम्, हरिहर-भाष्यम्, गदाधरभाष्यम्, विश्वनाथभाष्यञ्चेति ।

## ( १ ) कर्कः

कर्काऽख्यो विद्वानयमतिप्राचीनस्तथा मान्यो भाष्यकारोऽस्ति । अयं हि कात्यायनस्य श्रौतसूत्रस्य पारस्करस्य गृह्यसूत्रस्य च टीकाग्रन्थं लिलेख । हिमाद्रिनामको विद्वान् स्वीये 'कालनिर्णये' त्रयोदशशतकस्यान्तिमे चरणे त्रिकाण्डमण्डनं समुद्धृतवान् । अनेन स्वकीयग्रन्थे 'आपस्तम्बध्वनितार्थकारिकायां कर्काचार्यमनुस्मृतम् । हेमाद्रिमहोदयेन स्वश्राद्धनिर्णये कर्काचार्यस्य मतमपि खण्डितम् । एभिर्विचार्यमाणैः कर्काचार्यस्य समयो द्वादशशतकस्य मध्यभाग इति वक्तुं शक्यते । कर्काचार्यः 'सिंही'-नामकस्यौषधिविशेषस्य पर्यायः 'रिङ्गणिके'ति प्रदत्तवान् । रिङ्गणिका-शब्दस्य भोजपुरीभाषायां 'रेंगनी' इति मूलरूपमस्ति । अस्य व्याख्याया नाम गृह्यसूत्रभाष्यमस्ति ।

## ( २ ) जयरामः

जयरामो हि 'मेवाड'-निवासी समृद्धकुलसम्भवश्चासीत् । भारद्वाजगोत्रीयः आचार्यापरनामकस्य दामोदरस्यायं पौत्रस्तथाऽस्य पितुर्नाम बलभद्र आसीत् । अस्य भाष्यस्य नाम 'सज्जनवल्लभः' अस्ति । मन्त्राणां व्याख्या एवास्य भाष्यस्य विशेषताऽस्ति । अस्य पाठस्य संशोधने कृतश्रमोऽस्ति । तत्तद्वेदानां पाठा वैदि-कानां मुखाद्देव श्रुत्वैवायं मन्त्राणां पाठनिर्धारणं कृतवान् । अन्यटीकाकारास्तु पद्धतौ तथा अर्थोपरि आग्रहं प्रदर्शितवन्तः, किञ्चायं जयरामः गृह्यसूत्रे उद्धृत-मन्त्राणां व्याख्यामतीव प्रामाणिकरूपेण कृतवान् । इदमेवास्य वैशिष्ट्यमस्ति ।

## ( ३ ) हरिहरः

हरिहरेण स्वटीकायां विज्ञानेश्वरस्य मतं स्मर्यते । अतोऽस्य समयो द्वादश-शतकात् पश्चाद्वर्ती प्रतीयते । षोडशशतके स्थितस्य श्रीदत्तस्य 'आचार्यदर्शे' तथा १२५० ई० स्थितस्य हेमाद्रेः श्राद्धप्रकरणे हरिहरमतनिर्दिष्टेणास्य द्वादश-शतकस्यान्तिमे चरणे स्थितिरनुमीयते । अयं ह्युत्तरीयभारतस्य विशेषतः कान्य-कुब्जस्य निवासी प्रतीतो भवति । हरिहरस्तु स्वभाष्ये गृह्यकर्मकाण्डस्य वर्णनं सविस्तरेण कृतवान् । पारस्करगृह्यसूत्रस्य सर्वापेक्षया लोकप्रिया व्याख्येय-मेवास्ति । अयं हि प्राचीनधर्मशास्त्रीयग्रन्थकारेषु मनु-वृद्धशातातप-याज्ञवल्क्य-यम-अङ्गिरा-हारीत-सुमन्तु-लौगाक्षि-यम-अङ्गिराप्रभृतीनां मतं विशेषरूपेण सस्मार । टीकाया आरम्भे कस्यापि वासुदेवनामकस्याचार्यस्य समादरेणोल्लेखो

र्त्तते। अस्यैव मतानुसारेणेयं पद्धतिर्लिखिताऽस्ति। ग्रन्थकारोऽयमग्निहोत्री आसीत्।

## ( ४ ) गदाधरः

गदाधरेण स्वव्याख्यायां प्राचीनाचार्याणां मतं विस्तरेण स्मर्यते। एवं-विधेष्वाचार्येषु भर्तृयज्ञ-वासुदेव-गङ्गाधर-रेणुदीक्षित-हरिहरादयो मुख्याः सन्ति। हरिहरस्य व्याख्यायाः खण्डनमपि यत्र तत्र परिदृश्यते। ( **अत्र हरिहरमिश्रै-रबुद्ध्वैव पाण्डित्यं कृतमस्ति पृ० ८४** ) **दृढपुरुषः** ( १।८।१० ) इत्यस्यार्थस्य व्याख्यायामनेकेषामाचार्याणां मतं प्रदत्तमस्ति। दृढपुरुषस्यार्थो भवति—कोऽपि बलशालिपुरुषः ( हरिहरः ), जितेन्द्रियः ( भर्तृयज्ञः ), जमाता ( रेणुकस्तथा गङ्गाधरः )। एतेषु गङ्गाधरेण अन्तिमार्थं स्वीकृतम्। गदाधरस्याभिरुचिः ज्योतिषसम्बन्धिनं प्रति वर्त्तते। अनेनान्यत्र ( पृ० १२४ ) कर्क-जयराम-भर्तृ-यज्ञादीनां मतस्य निर्देशं कृत्वा हरिहरस्य मतं स्वीकृतम्। अस्मिन् भाष्ये मनु-याज्ञवल्क्य-हारीत-आपस्तम्ब-व्यास-मिताक्षरा-पराशर-मदनरत्न-वृद्धशातातप-स्मृत्यर्थसार-मदनपारिजात-वसिष्ठ-प्रयोगपारिजातादीनामुल्लेखो वर्त्तते। गदाधर-स्य पितुर्नाम वामनदीक्षितमासीत्। वामनोऽयं 'त्रिरग्निचित्सम्राट् स्थपति महायाज्ञिक' इत्युपाधिना विभूषित आसीत्। हेमाद्रेरुद्धरणेनास्य समयः ख्रीष्टस्य चतुर्दशशतकवर्त्तीति वक्तव्यम्।

## ( ५ ) विश्वनाथः

अयं हि नन्दपुरनिवासी काश्यपगोत्रीयो नागरब्राह्मण आसीत्। विश्वनाथ-स्य पितुर्नाम नरसिंह आसीत्, माता चास्य गङ्गादेवी। एतेषां स्मरणं टीकारम्भे एवानेन कृतम्। अस्य भाष्यस्य नाम 'गृह्यसूत्रप्रकाशिका' अस्ति। भाष्यमिद-मन्ते खण्डितमासीत्। अन्तिमांशस्य पञ्चखण्डानां टीका ग्रन्थकारस्य पितृव्येन अनन्तस्य प्रपौत्रेण लक्ष्मीधरेण १३६५ ख्रीष्टाब्दे कृतेति। स्तम्भतीर्थात् समा-गत्यायं काश्यां न्यवसत्। अत्रैवायं स्वव्याख्यां सम्पूरितवान्। विश्वनाथस्य समयस्तु षोडशशतकस्योत्तरार्द्धं आसीत्। परिमाणे पर्याप्तरूपेण व्याख्या विस्तृताऽस्ति।

## वैजवापगृह्यसूत्रम्

शुक्लयजुर्वेदस्यैकस्यापरस्य गृह्यसूत्रस्यापि परिचयोऽमिलत्। अस्य रचयिता वैजवाप आसीत्। चरणव्यूहः शुक्लयजुर्वेदस्य पञ्चदशशाखायां वैजवापमन्यतमं मन्यते। वैजवापस्य कल्पसूत्रस्य प्रथमनिर्देशः कुमारिलभट्टेन स्वतन्त्रवार्तिके ( १।३।१० ) कृतः। **'आश्वलायनकं सूत्रं वैजवापि कृतम्।'** कात्यायनकल्प-सूत्रस्य सर्वप्राचीनो व्याख्याकार आचार्यपितृभूतिरपि वैजवापश्रौतसूत्रस्यैकं सूत्रं समुद्धृतवान्—**'एवं च वैजवापेनाचार्येण सूचितम्—न सावित्रीमाह इति क्तः।'**

वैजवापरचितगृह्यसूत्रस्योद्धरणानि अनेकेषु प्राचीनेषु तथा मध्यकालिक-धार्मिकेषु निबन्धेषूपलब्धानि भवन्ति । अपरार्को विनायकपूजायाः पूर्णप्रसङ्गः वैजवापगृह्यसूत्रादेव समुद्धृतः । विनायकेनोपसृष्टः पुरुषो बहुविधान् स्वप्नान् पश्यति —'**विनायकोपसृष्टलक्षणं खलु भवति—स्वप्ने सर्पान् पश्यति । अत्यन्त-मपोऽवगाहते । अन्तरिक्षं क्रामति । पांसुकर्दमे चावसीदति । पृष्टतो मां कश्चिद् धावतीति मन्यते । उष्ट्रान् गर्दभान् शुनो दिवाकीर्त्तिमंन्याश्चाप्रयतान् पश्यति ।**' अस्यापक्रमणस्य दूरीकरणायोपायमपि वर्णितमस्ति । (See Fourth Oriental Conference Proceeding Page 59-67, Indian Press, Allahabad 1928 ) ।

कृष्णयजुर्वेदेन सम्बद्धानि निम्नलिखितानि श्रौतसूत्राणि च समुपलब्धानि भवन्ति । बौधायन-आपस्तम्ब-हिरण्यकेशीवासत्याषाढ-वैखानस-भारद्वाज-मानव-श्रौतसूत्राणि च सन्ति ।

## ( १ ) बौधायनश्रौतसूत्रम्

सूत्रमिदं डॉ० कैलेण्डमहोदयेन सम्पादितम् । गोविन्दस्वामिनो भाष्येण सहेदं मैसूरनगरात् प्रकाशितमभवत् । अनेनैव प्रकारेण बौधायनगृह्यसूत्र-धर्मसूत्र-शुल्वसूत्राणामपि सम्पादनं प्रकाशनञ्चाभवत् । बौधायनश्रौतसूत्रस्य सम्पादनं डॉ० कैलेण्डमहोदयेन 'बिब्लियोथिका इण्डिका' कलकत्तानगरीतः १९०४–२४ खीष्ट्राब्देऽभवत् तथा गोविन्दस्वामिनो भाष्येण सह मैसूराच्च । गृह-धर्मयोः प्रकाशनं 'गवर्नमेण्ट-ओरियण्टल-लाइब्रेरी' मैसूरे तथा शुल्वसूत्रस्य संस्करणम् आंग्लभाषायामनुवादश्च डा० थावोमहोदयेन पण्डितपत्रस्य नवमभागे काशी-नगरीतः अभवत् ।

## ( २ ) आपस्तम्बस्य कल्पसूत्रम्

कल्पसूत्रमिदं त्रिषु प्रश्नेषु किंवाऽध्यायेषु विभक्तमस्ति । येषु आदिमास्त्र-योविंशतितमाः प्रश्नाः श्रौतसूत्रमस्ति । चतुर्विंशतितमः प्रश्नः परिभाषाऽस्ति । पञ्चविंशतितमे तथा षड्विंशतितमे प्रश्ने गृहकर्मोपयोगिनां मन्त्राणामेकत्र सङ्कलनमस्ति तथा सप्तविंशतितमः प्रश्नो गृह्यसूत्रमस्ति । अष्टाविंशतितमस्त-थोर्नत्रिंशत्तमौ प्रश्नौ धर्मसूत्रमस्ति । अन्तिमः त्रिंशत्तमः प्रश्नः शुल्वसूत्रमस्ति । अनेन प्रकारेणेदं कल्पसूत्रं पूर्णतया सुरक्षितं तथा सर्वतः परिपूर्णमस्ति । आप-स्तम्बश्रौतसूत्रस्य मुख्यसम्बन्धं तैत्तिरीयब्राह्मणेन सहास्ति । अतो ब्राह्मणस्य यागविधानानां विशिष्टवर्णनमत्र उपलब्धं भवति । आपस्तम्ब-गृह्यसूत्रे त्रिंशत्-खण्डानि सन्ति । अस्मिन् खण्डे विवाह-उपनयन-उपाकर्मोत्सर्जन-समावर्त्तन-मधुपर्क-सीमन्तोपनयनादित्रयोविंशतितमानां विषयाणां मुख्यतया प्रतिपादन-मस्ति । आपस्तम्बधर्मसूत्रे ब्रह्मचर्य-भोजन-विचार-प्रायश्चित्ताद्युपयोगिनां विषयाणां वर्णनमस्ति । आपस्तम्बपरिभाषासूत्रं कपर्दिस्वामिनो भाष्येण सह

तथा हरदत्तस्य व्याख्यया सह प्रकाशितमस्ति । श्रौतसूत्रसाहित्ये बौधायनश्रौत-सूत्रमतिप्राचीनमस्ति । अस्मिन् ग्रन्थे ऊनत्रिंशत् प्रश्नाः सन्ति । प्रत्येकस्मिन् प्रश्ने कण्डिकाः सन्ति । कण्डिकाऽभ्यन्तरे सूत्राणां सत्ताऽस्ति । अस्य शैल्या विशिष्टताऽस्ति यदस्य वाक्यानि सन्धिसम्पन्नरूपेणैव प्रस्तुतानि सन्ति । अस्य सूत्ररूपेऽवान्तरविभाजनस्य न कोऽपि सङ्केतो मिलति ।

## ( ३ ) हिरण्यकेशी अथवा सत्याषाढश्रौतसूत्रम्

कृष्णयजुर्वेदस्य श्रौतसूत्रमिदमस्ति । अस्मिन् सूत्रे चतुर्विंशतिः प्रश्नाः सन्ति । ग्रन्थेऽस्मिन् नानायागविधानानां वर्णनमस्ति । आपस्तम्बश्रौतसूत्रेण सह घनिष्ठं सम्बन्धं स्थापयति सूत्रमिदम् । सत्यपि सूत्रशैलीग्रन्थेऽस्य शैली सुसंयता लघ्वक्षरा च नास्ति । फलतः कात्यायनश्रौतसूत्राणामिवास्मिन् लघ्व-क्षरता सुसङ्गतिश्च नास्ति ।

## ( ४ ) वैखानसश्रौतसूत्रम्

तैत्तिरीयशाखातः सम्बद्धमिदं श्रौतसूत्रमस्ति । अस्योपरि बौधायनश्रौत-सूत्रादिपूर्ववर्णितत्रयाणां सूत्राणामेव विशेषः प्रभावः परिलक्ष्यते । कल्पसूत्रस्य द्वात्रिंशत्तमेष्वध्यायेषु एकविंशतिप्रश्नेषु श्रौतयागानामेव विवरणमुपलब्ध-मस्ति । अस्य ग्रन्थस्य रचनाशैली बौधायनश्रौतसूत्रमिवाऽस्ति । वाक्यानि च दीर्घस्वरूपे समुपलब्धानि सन्ति । एतेषां सूत्राणामपि विभाजनमसम्भवमेव । अतोऽत्र दीर्घदीर्घगद्यानामेव स्थितिर्विद्यमानाऽस्ति । अनेनैव सम्बद्धं वैखानस-स्मार्त्तसूत्रमप्यस्ति, यस्य सम्पादनं तथाऽऽङ्ग्लभाषानुवादश्च डॉ० कैलेण्डमहोदयेन कृतः ।

## ( ५ ) बाधूलश्रौतसूत्रम्

इदमपि तैत्तिरीयशाखा-सम्बद्धश्रौतसूत्रमस्ति । अस्य प्रकाशनम् आङ्ग्ल-भाषानुवादेन, भाषाशास्त्रीयटिप्पणिभिरुपोद्घातेन च सह डॉ० कैलेण्डेन कृतम् । अस्यैकाऽन्याऽपि टीका समुपलब्धा भवति । हस्तलेखस्य छिन्नभिन्न-त्वेनास्य विमर्शात्मकसंस्करणस्य नितान्तमावश्यकता वर्त्तते ।

## ( ६ ) भारद्वाजश्रौतसूत्रम्

महर्षिभरद्वाजस्य सम्बन्धं कृष्णयजुर्वेदस्य तैत्तिरीयशाखातः परिज्ञात-म्भवति । भारद्वाजशाखीयकल्पसूत्रस्यानेके ग्रन्थाः समुपलब्धा भवन्ति । भार-द्वाजगृह्यसूत्रस्य सर्वप्रथमप्रकाशनं हालैण्डनगराद् बभूव । अस्य सम्पादनं डॉ० सालीमन्स, लाइडेन-महोदयेन १९१३ ईशवीये कृतम् । सम्प्रति १९६४ ई० वैदिकसंशोधनमण्डल-पूनानगरीतः भारद्वाजेन सम्वद्धः श्रौतसूत्रस्य परिशिष्ट-सूत्रस्य च प्रकाशनमभवत् । ग्रन्थानामन्तरङ्गपरीक्षणैम प्रतीतो भवति यद्भार-द्वाजश्रौतसूत्रं बौधायनश्रौतसूत्राद उत्तरकालिकमस्ति, किन्त्वापस्तम्बश्रौतात्

प्राक्कालिकमस्ति । भारद्वाजश्रौतसूत्रस्य हस्तलेखो दक्षिणभारते समुपलब्धोऽभवत्, किञ्चैतावता तस्य मूलस्थानं भारतादन्यत्रेति कथनं सर्वथाऽयुक्तिकरमस्ति । भारद्वाजगृह्यसूत्रे सीमन्तोन्नयनस्य प्रसङ्गे श्लोकोऽयं मिलति—

**'सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः ।**
**विवृतचक्रा आसीनास्तीरेण यमुने तव ॥'**

अस्मात् स्थानादग्रे सूत्रकारस्य कथनमस्ति यद्यस्या नद्यास्तटे यजमानस्य निवासोऽस्तु तस्या नद्या नाम 'ऊह' इति कर्त्तव्यम् । अस्योदाहरणं टीकाकारेण प्रदत्तम्—**'तीरेण वेगवतीति तव, तीरेण कावेरि तव ।'** अस्योदाहरणेन टीकाकारस्य देशरुभयोर्वेगवती-कावेर्ययोर्नद्योरञ्चले स्पष्टतः प्रतीतो भवति । तेन हि पूर्वोक्तश्लोको भारद्वाजानां मूलस्थानं यमुनानद्या अञ्चलमर्थादुत्तरभारतं सिद्धं भवति ।

भारद्वाजश्रौतसूत्रे १५ प्रश्ना अर्थादध्यायाः सन्ति । अस्य वर्ण्यविषयाः क्रमशः—दर्शपूर्णमास-आग्न्याधेय-अग्निहोत्र-आग्रयण-निरूढपशुबन्ध-चातुर्मास्य-( वैश्वदेवपर्व-साकमेधपर्व-शुनासीरीयपर्व-काम्यचातुर्मास्य तथा पञ्चसांवत्सरिकाः )-पूर्वप्रायश्चित्त-ज्योतिष्टोमः (प्रातःसवन-माध्यन्दिनसवन-तृतीयसवनः)-ज्योतिष्टोमब्रह्मत्यादयः सन्ति । भारद्वाजपैतृमेधिकसूत्राणां मुख्यो विषयः श्राद्धकर्मणः नानाविधान्यनुष्ठानानि सन्ति । ग्रन्थेऽस्मिन् द्वौ प्रश्नौ स्तः । यत्र क्रमशः प्रेतसंस्कार-श्मशाननयन-दाहचिति-पात्रचय-अस्थिसञ्चयन-श्मशानचिति-यमयज्ञादीनां सूत्रेषु प्रतिपादनमस्ति ।

भारद्वाजधर्मसूत्रस्य सम्प्रति समुपलब्धिर्नास्ति, किञ्च प्राचीनकाले तस्य सत्ताऽऽसीदिति मन्ये । विश्वरूपेण याज्ञवल्क्यस्मृतौ ( १।१५ ) भारद्वाजमतनिर्देशकवाक्यमपि समुद्धृतम्, येन प्रतीतो भवति यत् तस्मिन् काले गुरुः शिष्यान् म्लेच्छभाषापठितुं नादिशत् । शिष्यस्योपानयनं कृत्वा तं संस्कृतपठनाय गुरुः प्रेरयतिस्म । शिष्यं सन्ध्योपासनमग्निकर्मादिकञ्चावश्यमेव कर्त्तव्यमिति—**तथा च भारद्वाजः । न म्लेच्छभाषां शिक्षेत् । म्लेच्छो ह वा एष यदपशब्द इति विज्ञायते । तस्मात् शिष्यमुपनीय साधुशब्दान् शिक्षयेत् सन्ध्योपासाग्नीन्धनानि ।'** एतेन सिद्धो भवति यद् भारद्वाजस्य समग्रकल्पसूत्रमवश्यमेवोपलब्धमासीत् ।

## ( ७ ) मानवश्रौतसूत्रम्

कृष्णयजुर्वेदस्य मैत्रायणीशाखया सम्बद्धमिदं श्रौतसूत्रमस्ति । सूत्रमिदं प्राचीनतमश्रौतसूत्रेष्वन्यतमं मन्यते । समग्रो ग्रन्थः पञ्चस्वध्यायेषु विभक्तोऽस्ति । प्रत्येकोऽध्यायः खण्डेषु विभक्तोऽस्ति । प्रथमोऽध्यायः अष्टखण्डेषु तत्र—दर्शपौर्णमास-पिण्डपितृयज्ञ-अग्न्याधान-अग्निहोत्र-अग्न्युपस्थान-आग्रयण-पुनराधान-चातुर्मास्य-पितृयज्ञ-पञ्चसांवत्सरिकपशुबन्धादीनां विवरणमस्ति । द्वितीयोऽध्यायः पञ्चसु खण्डेषु, तत्र अग्निष्टोमस्य विशदं वर्णनमस्ति । तृतीयोऽध्यायः

अष्टखण्डेषु, प्रायश्चित्तस्य, चतुर्थोऽध्यायः अष्टसु खण्डेषु प्रवर्ग्यस्य, पञ्चमोऽध्यायः खण्डद्वयेषु इष्टेश्च वर्णनं ददाति। अस्य ग्रन्थस्य शैली वर्णनात्मिकाऽस्ति। अस्य प्रारम्भिकान् पञ्चाध्यायान् बनाउएरमहोदयेन सेण्टपीटर्सवर्गेण प्रकाशितम् ( १९०० ई०–१९०३ )। षष्ठोऽध्यायो गैलेण्डरमहोदयेन सानुवादं सम्पादितः ( लाइदेन १९२१ )। मानवगृह्यसूत्रञ्चाष्टावक्रभाष्येण सह गायकवाड-ओरियण्टल-सीरीज-बडौदातः प्रकाशितमस्ति।

## ( ८ ) वाराहश्रौतसूत्रम्

इदमपि सूत्रं मैत्रायणीशाखातः सम्बद्धमस्ति। अस्मिन् त्रयोऽध्यायाः सन्ति। सर्वेऽप्यध्यायाः खण्डेषु विभक्ताः। प्रथमाध्याये दर्शपूर्णमास-अग्न्याधान-पशुबन्ध-चातुर्मास्यादीनां, द्वितीयाध्याये अग्निचयनस्य तथा तृतीयाध्याये वाजपेय-राजसूय-अश्वमेधादीनां वर्णनमस्ति। यागानुष्ठानानां विस्तृतं वर्णनमत्र कात्यायनश्रौतसूत्रमिवोपलब्धं नास्ति। सूत्रञ्च लघ्वाकारमस्ति तथाऽवबोधने सरलं सुबोधञ्चास्ति। सूत्रमिदं होत्र-काम्ययोर्दर्शपूर्णमासस्य वर्णनं न करोति। सूत्रमिदं डॉ० कैलेण्डेन डॉ० रघुवीरेण च सम्पादितं भूत्वा लाहौरनगरीतः ( १९३३ ई० ) प्रकाशितमस्ति। तत्र चरणव्यूहटीकायाः श्लोकोऽयं द्रष्टव्यः—

**'मयूरपर्वताच्चैव यावद्गुर्जरदेशतः।**
**व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता॥'**

मयूरपर्वतादर्थात् महाराष्ट्रप्रान्तस्य नासिकमण्डलान्तर्गतवर्त्तमानमुल्लेरनगरादारभ्य गुर्जरप्रदेशपर्यन्तं मैत्रायणीशाखा प्रतिष्ठिताऽस्ति।

## ( ९ ) काठकश्रौतसूत्रम्

अस्य ग्रन्थस्याल्पांश एवोपलब्धोस्ति। पिण्डपितृयज्ञेन सम्बद्धः अस्य सूत्रस्याल्पभागो व्यूलरमहोदयेन कश्मीरान्वेषणे उपलब्धोऽस्ति। काठककल्पसूत्रस्य गृह्यभागः टीकात्रयस्य सारांशेन सह प्रकाशितोऽस्ति। सूत्रमिदमखण्डितं प्रकाशितं मिलति।

# कृष्णयजुर्वेदीयकल्पसूत्राणि

## ( १ ) बौधायनगृह्यसूत्रम्

गृह्यसूत्रमिदं बौधायनकल्पसूत्रस्यैको विशिष्टांशोऽस्ति। १९२० ख्रीष्टाब्दे गवर्नमेण्ट-ओरियन्टल-लाइब्रेरी-सीरीज-मैसूरनगरीतः प्रकाशितं बभूव। ग्रन्थोऽयं गृह्यशेष-पितृमेधसूत्रैः सह समन्वितोऽस्ति। अस्मिन् चत्वारः प्रश्नाः सन्ति। इतरहस्तलेखेष्वस्य दश प्रश्नाः ( अध्यायाः ) उपलब्धाः सन्ति। ग्रन्थेऽस्मिन् बहुविधस्य परिवर्त्तनस्य परिवर्धनस्य च सङ्केतो मिलति।

## ( २ ) भारद्वाजगृह्यसूत्रम्

भारद्वाजकल्पसूत्रस्यैवायमंशोऽस्ति। सूत्रेऽस्मिन् त्रयोंऽशाः सन्ति। अस्य प्रकाशनं लाइडेनस्य डॉ० सालोमन्समहोदयेन कृतम्। सम्पादकमहोदयेनास्य परि-

वर्धनस्य विषये यदभिमतं प्रकाशितं तत्तु न समीचीनमस्ति। विवाहप्रकरणे कतिचिद्विषयेषु आधुनिकतायाः सङ्केतो मिलति। तेन ह्ययमंशः क्षेपक इति स्वीकर्तुं न शक्यते।

## ( ३ ) आपस्तम्बगृह्यसूत्रम्

आपस्तम्बकल्पसूत्रस्य सप्तविंशतितमः प्रश्नः इदमेव गृह्यसूत्रमस्ति। अस्मिन् गृह्यसूत्रे त्रिंशत् प्रश्नाः सन्ति। गृह्यसूत्रमिदं मन्त्रपाठस्य मन्त्राणां निर्देशं करोति। हरदत्तस्यानाकुलावृत्तिस्तथा सुदर्शनाचार्यस्य तात्पर्यदर्शनव्याख्यया सह चौखम्बा-सीरीजकाशीतः ( १९२८ ई० ) प्रकाशितमस्ति। सूत्रमिदमष्ट-पटलेषु विभक्तमस्ति। प्रत्येकस्य पटलस्याभ्यन्तरे खण्डानि सन्ति। खण्डेषु सूत्राणां स्थितिरस्ति। फलतः समस्तो ग्रन्थः सूत्रेषु विभक्तोऽस्ति। अस्य गृह्य-सूत्रस्यापि विषयस्तथैवास्ति यथाऽन्यगृह्यसूत्रेषूपलब्धो भवति। अस्य द्वौ व्याख्याकारौ स्तः। हरदत्ताचार्यः सुदर्शनाचार्यश्चेति। हरदत्ताचार्यस्य समयस्तु पञ्चदशशतकीयो वर्त्तते, कतिपयैरन्यप्रमाणैर्विद्वानयं पञ्चदशशतकात् प्राचीन-तरो वर्त्तत, इति पुरातत्त्वविदो वदन्ति। हरदत्तोऽयं शैवमतानुयायी, कावेरीतट-वासी दाक्षिणात्यो विद्वानासीत्। आपस्तम्बस्य गृह्यसूत्रम्, गृह्यमन्त्रः, धर्मसूत्रम् परिभाषाप्रभृतिग्रन्थानां व्याख्या अनेन विरचितेति। आश्वलायनगृह्यसूत्रस्य 'अनाविला'-टीका तथा गौतमसूत्रस्य 'मिताक्षरा'-व्याख्याऽनेनैव हरदत्ताचार्येण लिखितेति खीष्टस्य सप्तदशशतकस्य पूर्वार्द्धे रचितनिर्णयसिन्धौ कमलाकरभट्टेन नाम्ना निर्दिष्टोऽयं सुदर्शनाचार्यरर्वाचीनोऽस्ति, इति निश्चयेन वक्तुं शक्यते।

## ( ४ ) हिरण्यकेशिगृह्यसूत्रम्

हिरण्यकेशिगृह्यसूत्रस्यापरं नाम सत्याषाढगृह्यसूत्रमस्ति। हिरण्यकेशिकल्प-सूत्रस्य १९ तथा २० प्रश्नरूपमस्ति। गृह्यानुष्ठानेष्वावश्यकमन्त्राः समग्ररूपे-णात्र प्रदत्ताः सन्ति। एतेषु मन्त्रेषु प्रयुक्ताः शब्दाः पाणिनीयव्याकरणेन सुसङ्गता न सन्ति। अस्य ग्रन्थस्योपरि मातृदत्तस्य प्रौढा व्याख्याऽस्ति। टीकया सह मूलग्रन्थस्य सम्पादनं डॉ० क्रिस्तेमहोदयेन वियनानगरीतः ( १८८९ ईस्वीये ) कृतं प्रकाशितञ्चेति। आङ्ग्लानुवादेन सह 'सेक्रेड बुक्स आफ द ईस्ट' ग्रन्थ-मालायामोल्डनवर्गेण सूत्रमिदं प्रकाशितमस्ति।

## ( ५ ) वैखानसगृह्यसूत्रम्

तैत्तिरीयशाखातः सम्बद्धमिदं गृह्यसूत्रमवान्तरकालिकमिति मन्यते। इदं सूत्रमनुष्ठानेषु प्रयोजनीयमन्त्राणां प्रतीकस्यैवोल्लेखं करोति। एतेषां मन्त्राणां स्वतन्त्रं सङ्कलनं 'वैखानसीया मन्त्रसंहिता' इति नाम्ना कृतमस्ति। गृह्य-मन्त्रसंहितयोः पारस्परिकसम्बन्धविषये विद्वत्सु ऐक्यं नास्ति। कति-चिज्जना मन्त्रसंहितां गृह्यात् प्राचीनतरं मन्यन्ते, चान्येऽर्वाचीना समकालिका वेति मन्यन्ते। डॉ० कैलेण्डेनास्य प्रकाशनमाङ्ग्लभाषानुवादेन सह कृतमिति।

## ( ६ ) अग्निवेशगृह्यसूत्रम्

अस्य गृह्यसूत्रस्य रचयिताऽग्निवेशनामको वैदिकाचार्योऽस्ति । अयमेवाचार्यः तैत्तिरीयाणां बाधूलशाखाऽन्तर्गतेऽग्निवेशोपशाखायाः प्रवर्त्तनं कृतवान् । अन्येभ्य गृह्यसूत्रेभ्योऽस्य वर्ण्यविषयस्तथा रचनाकौशलं नितान्तं भिन्नं दृष्टिगोचरं भवति । अस्मिन् वर्णितानुष्ठानेषु नारायणबलि-यतिसंस्कार-संन्यासविधि-वानप्रस्थविधिप्रभृतीनामुपरि अवान्तरकालिकधार्मिकसम्प्रदायानां प्रभावः स्पष्टतः परिलक्षितो भवति । फलतः सामान्यगृह्यसूत्रेभ्योऽस्य दिशा भिन्ना एवेति । ग्रन्थोऽयं अनन्तशयन-संस्कृतग्रन्थमाला, त्रिवेन्द्रमनगरीतः प्रकाशितोऽभवत् ।

## ( ७ ) मानवगृह्यसूत्रम्

अस्यापरं नाम मैत्रायणीयमानवगृह्यमप्यस्ति । मैत्रायणीयशाखायाश्चरणव्यूहे निर्दिष्टा भेदाः—मानव-वराह-दुन्दुभ-छागलेय-हारिद्रवेय-श्यामानीयानां 'मानवः' अन्यतमो विभेदोऽस्ति । अस्मिन् गृह्यसूत्रे द्वौ पुरुषौ वा प्रकरणौ स्तः । प्रत्येकस्मिन् पुरुषे अनेकाः कण्डिकाः सन्ति । अस्मिन् ग्रन्थे विनायकपूजाया विशिष्टं वर्णनमस्ति । अष्टावक्रस्य भाष्येण सह बड़ौदानगरीतः प्रकाशितोऽयमस्ति । भाष्यकारः अस्य रचयितुर्नाम 'मानवाचार्य' इति कथयति । अस्य व्यक्तित्वविषयेऽस्माकमल्पज्ञानमेवास्ति ।

## ( ८ ) वाराहगृह्यसूत्रम्

मैत्रायणीशाखाऽन्तर्गते वाराहोपशाखायारुल्लेखः चरणव्यूहे पूर्वमेव कृतो मया । फलतो गृह्यसूत्रमिदं मैत्रायणीसंहिताया मन्त्राणां प्रयोगं करोति । अस्य बहूनि सूत्राणि काठकगृह्यसूत्रमिव तथा मानवगृह्यसूत्रमिव सन्ति । गृह्योपयोगिनीनां विशिष्टवस्तूनामभावादेवायं ग्रन्थः तद्वन्महत्त्वपूर्णो नास्ति ।

## ( ९ ) काठकगृह्यसूत्रम्

काठकगृह्यसूत्रमपि मानवगृह्यसूत्रान्मिलति । अस्यैवापरो नाम 'लौगाक्षिगृह्यसूत्रम्' अस्ति । अस्य ग्रन्थस्य द्वौ प्रकारकौ विभागौ स्तः प्रथमविभागानुसारेण ग्रन्थेऽस्मिन् ७३ कण्डिकाः सन्ति । द्वितीयविभागानुसारेणास्मिन् पञ्चाध्यायाः सन्ति । अनेनैव पञ्चाध्यायीविभागेनास्य लोकप्रियो नाम 'गृह्यपञ्चिका' वर्त्तते । अस्य त्रिषु टीकाकारेषु आदित्यदर्शनः प्राचीनतमः श्रेष्ठतमश्चास्ति । माधवाचार्यस्य पुत्रो ब्राह्मणबलस्य व्याख्या टीका न भूत्वाऽधिकांशतः पद्धतिरेवास्ति । हरिपालस्य पुत्रो देवपालस्य टीका भाष्यनाम्ना ख्याताऽस्ति । १९८१ विक्रमाब्दे त्रिभिर्व्याख्याभिः संवलितं सुष्ठुसंस्करणं कैलेण्डमहोदयेन लाहौरनगरीतः प्रकाशितम् ।

## सामवेदीयकल्पसूत्राणि

## ( १ ) आर्षेयकल्पसूत्रम्

सामवेदीयकल्पसूत्रेष्वस्य नाम सर्वोपर्यस्ति । मशकाख्यः ऋषिरस्य कर्त्ता आसीत् । विशालोऽयं ग्रन्थोऽस्ति । ग्रन्थेऽस्मिन्नेकादशाध्यायाः सन्ति । कस्मिन्

यागे कस्य विशिष्टसाम्नो गायनं सम्पन्नं कर्त्तव्यमिति प्रदर्शनमेवास्य ग्रन्थस्य मुख्योद्देश्यमस्ति। इदं तु प्रसिद्धमेव यत्सोमयागस्त्रिविधो भवति। तद्यथा— एकाहः, अहीनः, सत्रयागश्चेति। आर्षेयकल्पस्य सम्बन्धः ताण्ड्यब्राह्मणेन सहास्ति। अर्थादिदं सामवेदीयब्राह्मणयागानां येन क्रमेणोल्लेखः करोति, तेनैव क्रमेण तस्य क्रमस्यानुवर्त्तनमपि कल्पसूत्रमिदं करोति। एतेषां यागानामतिरिक्तोऽत्र चतुर्णामभिचारयागानामप्युल्लेखोऽस्ति। तद्यथा—श्येन-इषु-सन्दंश-वज्र इति।

ज्योतिष्टोमसंस्थाऽपि चतुर्धा भवति—अग्निष्टोमः, उक्थ्यः, षोडशी तथा अतिरात्र इति। अग्निष्टोमसोमयागानामन्तरग्निष्टोमनामकसामगायनेन भवति। उक्थ्ययागानामन्तरुक्थ्यस्तोमैर्भवति। षोडशीयागस्यान्तः षोडशीसाम्ना भवति। तथाऽतिरात्रयागस्यातिरात्रिष्टोमेन भवति। अत्र ध्यातव्योऽयमस्ति यत् ज्योतिष्टोमे प्रयुक्तो 'ज्योतिः'-शब्दः पारिभाषिकशब्दोऽस्ति। यः त्रिवृत्-पञ्चदश-सप्तदश-एकविंशस्तोमानां वाचकोऽस्ति। अग्निष्टोमसंस्थायां बहिष्पवमान-आज्यमाध्यन्दिन-पृष्ट-आर्भवाश्च अग्निष्टोमसाम्ना सह नियतक्रमे सम्बन्धं रक्षति। आर्षेयकल्पस्यैकः पूरकोऽपि ग्रन्थोऽस्ति क्षुद्रकल्पसूत्रमिति। आर्षेयकल्पे एकादशाध्यायाः सन्ति। अस्य प्रतिपाद्यविषयाणां निम्नलिखितं विवरणमस्ति—

( १ ) प्रथमाध्याये गवामयनस्य विवरणमस्ति। अस्यान्तर्गते प्रायणीयमहः, अभिप्लवषडहः ( ज्योतिः, गौः, आयुः ) गौः, आयुस्तथा ज्योतिः तथा पृष्टषडहस्य विस्तृतं निरूपणमस्ति।

( २ ) द्वितीयाध्याये गवामयनस्याग्रिमं विवरणमस्ति, यस्यान्तर्गते—अभिजित्, स्वरसामानः, विषुवान्, आवृत्तः, स्वरसामानः, महाव्रतः, उदयनीयानां क्रमशो वर्णनमस्ति।

( ३ ) तृतीयाध्यायादारभ्य पञ्चमाध्यायपर्यन्तमेकाहस्य वर्णनमस्ति। तृतीयाध्याये ज्योतिष्टोम-गौ-आयु-श्येन-एकत्रिक-व्रात्य-स्तोम-बृहस्पतिसव-इषु-सर्वस्वारादीनां विवरणमस्ति।

( ४ ) चतुर्थाध्याये—चातुर्मास्यस्य विस्तृतं विवरणमस्ति। अस्मिन्नेवाध्याये वाजपेयस्य राजसूयस्य च सविस्तरं निरूपणमस्ति।

( ५ ) अस्याध्यायस्यान्तर्गते—राट्-विराट्-औपशद्-गरुत्स्तोम-इन्द्रस्तोम-सन्दंश-वज्रादीनां वर्णनमुपलब्धमस्ति।

( ६ ) षष्ठाध्यायादारभ्याष्टाध्यायपर्यन्तमहीनयागानां वर्णनमस्ति। अस्मिन्नध्याये ज्योतिष्टोम-अतिरात्र-आप्तोर्याम-एकस्तोम-द्विरात्र-त्रिरात्रादीनां निरूपणमस्ति।

( ७ ) सप्तमाध्यायस्य विषयमस्ति—चतूरात्र-पञ्चरात्र-षडह-सप्तरात्र-अष्टरात्र-नवरात्रादियागानां निरूपणम् ।

( ८ ) अष्टमाध्याये दशरात्र-एकादशरात्रभागादारभ्याहीनयागपर्यन्तं वर्णनमस्ति ।

( ९ ) नवमाध्याये साम्नो वर्णनमस्ति, यस्यान्तर्गते द्वादशरात्रादारभ्यैक-षष्टिरात्रयागपर्यन्तं क्रमशो वर्धिष्णुयागानां वर्णनमस्ति ।

( १० ) दशमाध्याये तथा एकादशाध्याये नानाप्रकाराणामयनानां वर्णन-मस्ति, येषु प्रमुखाः सन्ति—आदित्यानामयन-अङ्गिरसामयन-सारस्वत-मयनादयः । अत्र दशविधानां यागानां निर्देशोऽस्ति । ग्रन्थोऽयं सर्पराात्र-प्रजापतेः-सहस्रसंवत्सर-विश्वसृजामयनादीनां संक्षिप्तेन वर्णनेन सह समाप्तो भवति ।

## ( २ ) क्षुद्रकल्पसूत्रम्

सत्स्वपि बहुषु कल्पसूत्रेषु गृहीतसूत्रशैल्यामस्य गणना नास्ति । अस्य लेखनशैली ब्राह्मणशैली इवास्ति । ग्रन्थोऽयमार्षेयकल्पस्य पूरको मन्यते; यतस्त-स्मिन्नवर्णितयागानामिदं वर्णनं कृत्वा विषयस्य पूर्त्ति करोति । अत एवापर-टीकाकारः श्रीनिवासः इदमुत्तरकल्पसूत्रं स्वीकरोति ।

अस्य टीकाकारो दक्षिणभारतवासी वैष्णवब्राह्मणः श्रीनिवासोऽस्ति । अयं स्वजन्मना वैदिककुलमेकं सभाजितवान् । अस्य ग्रन्थस्य टीकायाः पुष्पि-कायामस्य पितुर्नाम 'श्रीरामानुजसिद्धान्तस्थापनाचार्य-शतक्रतु-ताताचार्य' इति निर्दिष्टमस्ति ।

**'शतक्रतुं तातगुरुं वेदवेदाङ्गपारगम् ।**
**वेदान्तानां गुरुं वन्दे वेदान्ताचार्यलक्षणम् ॥ ६ ॥**
**श्रीश्रीनिवासगुरुणा शतक्रतुतनूभुवा ।**
**चतुराम्नाय-षट्सूत्री-पारगेन हरेर्मुदे' ॥ ७ ॥**

## ( ३ ) लाटचायनश्रौतसूत्रम्

अग्निस्वामिनो भाष्येण सह १८७२ ख्रीष्टाब्दे प्रकाशितोऽयं ग्रन्थोऽस्ति । सामवेदेन सम्बद्धमिदं सूत्रं सामगायनानां वर्णनं करोति । अग्निष्टोमादिसाम-यागेष्विदं गायनं प्रयुक्तं भवति ।

## ( ४ ) द्राह्यायणश्रौतसूत्रम्

द्राह्यायणश्रौतसूत्रमपि अनेनैव वेदेन सह सम्बद्धमस्ति । ग्रन्थेऽस्मिन् द्वात्रिंशत्पटलानां सत्ता विद्यते । सर्वाणि पटलानि चात्र न प्रकाशितानि सन्ति । लाटचायनश्रौतसूत्रेण सहास्य विपुला समानता विद्यते । प्रारम्भतः एकादश-पटलपर्यन्तं जे० एन० रायटरमहोदयेन सूत्रमिदं प्रकाशितमस्ति ।

## ( ५ ) जैमिनीयश्रौतसूत्रम्

सामवेदस्य जैमिनीशाखातः सम्बद्धमिदमपि सूत्रमस्ति । ग्रन्थेऽस्मिन् षड्-विंशतिः कण्डिकाः सन्ति । अग्न्याधेयस्याग्निहोत्रहोमस्य चात्र वर्णनमस्ति । १९०६ खीष्टाब्दे गास्ट्रामहोदयेनास्य प्रकाशनं सम्पादनञ्च कृतम् ।

## ( ६ ) गोभिलगृह्यसूत्रम्

अस्य प्रकाशनमनेकेभ्यः स्थानेभ्योऽभवत् (क्नाउएर १८८५-८६; विब्लि० ई० १८७१-७९; सत्यव्रतसामश्रमी १९०६ ) अन्यैर्विषयैः सह पिण्डपितृ-यज्ञस्य वर्णनं करोतीदं सूत्रम् । गोभिलगृह्यसूत्रस्याङ्ग्लानुवादः 'सेक्रेड बुक आफ ईस्ट' इत्याख्यसंस्थातः ओल्डेनवर्गमहोदयेन कृतः । खदिरगृह्यसूत्रस्याङ्ग्लानुवादः २९७ खण्डे प्रकाशितोऽभवत् । गृह्यसूत्रमिदं रुद्रस्कन्दस्य टीकया सह प्रकाशित-मस्ति मैसूरनगरादिति । १९२२ खीष्टाब्दे डॉ० कैलेण्डमहोदयेन लाहौरनगरात् जैमिनीयगृह्यसूत्रं प्रकाशितम् ।

त्रिषु प्रमुखसामवेदीयसूत्रेषु गोभिलगृह्यसूत्रमतिप्रख्यातमस्ति । बहुप्रचलि-तात् कौथुमशाखातः सम्बद्धमिदं सूत्रमतीव लोकप्रियमप्यस्ति । इदं मन्त्रब्राह्मण-नामकसामवेदीयमन्त्रसङ्ग्रहात्मकग्रन्थादनुष्ठानावसरे मन्त्राणामुद्धरणं ददाति, किञ्च प्रतीकरूपेणैव सामसंहिताया मन्त्रोऽप्युद्धृतोऽस्ति ।

## ( ७ ) खादिरगृह्यसूत्रम्

सामवेदस्य राणायणीयशाखातः सम्बद्धेदं गृह्यगोभिलसूत्रस्योपरि सर्वात्म-नाऽऽधारितमस्ति । तस्यादेशो नियमश्चात्र संक्षिप्तरूपेण प्रस्तुतोऽस्ति । फलतः सूत्रमिदं गोभिलगृह्यसूत्रस्यैव संक्षिप्तसंस्करणमस्ति ।

## ( ८ ) जैमिनीयगृह्यसूत्रम्

खण्डद्वयेषु विभक्तमिदं सूत्रमस्ति । प्रथमखण्डे चतुर्विंशतिः कण्डिकाः सन्ति, द्वितीयखण्डे नव कण्डिकाश्चेति । अस्य सुबोधिनीटीका श्रीनिवासाध्वरीमहोदयेन कृता । अस्याः टीकायाः कतिपयानि महत्त्वपूर्णोद्धरणानि मूलग्रन्थेन सह कैलेण्डेन प्रकाशितानि सन्ति ।

## अथर्ववेदीयकल्पसूत्रम्

### वैतानश्रौतसूत्रम्

अथर्ववेदस्यैकमेव कल्पसूत्रमस्ति । वैतानश्रौतसूत्रमिदं गोपथब्राह्मणोपरि आधारितमस्ति । कात्यायनश्रौतसूत्रेणापि सूत्रमिदं घनिष्ठतया सम्बद्धोऽस्ति । ग्रन्थेऽस्मिन्नष्टाध्यायाः सन्ति । अध्यायाश्च कण्डिकायां विभक्ताः सन्ति । श्रौत-सूत्राणामितिहासे इदं सर्वाधिकावान्तरकालिको ग्रन्थोऽस्ति । परिमाणे स्वल्प-मिदमस्ति । ब्रह्मानामक ऋत्विज् तस्य सहायको भवति । यजमानस्य कर्त्तव्य-

मुपदिशति । अनुष्ठानानां विवरणमपि ददाति । गोपथब्राह्मणस्यानुसरणमनेकांशेषु करोतीदम् । कात्यायनश्रौतसूत्रस्यापि विशिष्टप्रभावः परिलक्ष्यते ।

कौशिकगृह्यसूत्रमप्यथर्ववेदस्यैकमात्रं गृह्यसूत्रमस्ति । चतुर्दशाध्यायेष्विदं सूत्रं विभक्तमस्ति । अत्र हारिलस्य केशवस्य संक्षिप्तव्याख्याऽपि समुपलब्धा भवति । ग्रन्थोऽयं भारतीययातुविद्यायाः परिचयार्थमनुपमसामग्रीं प्रस्तौति । अस्य ग्रन्थस्य साहाय्येनाथर्ववेदस्य नानाऽनुष्ठानानां विधिविधानं पूर्णरूपेण ज्ञातुं शक्यते । वैद्यकशास्त्रस्यौषधिभ्यो ग्रन्थोऽयमक्षयनिधिरस्ति । अतोऽस्यानुशीलनस्याभावेऽथर्वस्य रहस्योन्मीलनं कर्त्तुं न शक्यते, इयमेवास्योपादेयताऽस्ति ।

## धर्मसूत्राणि

अद्यतनीया भारतीया यान् मनुस्मृति-याज्ञवल्क्यस्मृतिप्रभृतीन् ग्रन्थान् स्वकीये समुदाचारविषये धर्मशास्त्रत्वेन गृह्णन्ति, तानि पुरातनतराणि कल्पसूत्राणि उपजीवन्तीति सर्वेषामेव विपश्चिद्वराणां साधु विदितमेव ।

श्रौतसूत्र-धर्मसूत्र-गृह्यसूत्र-शुल्वसूत्रभेदेन कल्पसूत्राणि सन्ति चतुर्विधानि । तत्र धर्मसूत्राणि संस्कृतवाङ्मये विशिष्टं सम्मानमादरञ्चाधितिष्ठन्ति । महाभारते भगवान् वेदव्यासः शङ्खलिखित-गौतमापस्तम्बादीनां धर्मसूत्रकाराणां नामानि सादरं संस्मरन् समवाप्यते । स कस्यचन धर्मकारस्य मतमुद्धरन् ब्रवीति—

**'अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति ।**
**यदाऽनृताः स्त्रियस्तात सहधर्मः कृतः स्मृतः ॥'** ( महा० )

यद्यपि सम्प्रति धर्मसूत्रप्रतिपादितेषु धर्मेषु केचन धर्मा जनैः न प्रयुज्यन्ते परं लोको धर्मसूत्रेषु स्वकीयां बलवतीमास्थां निदधाति । सदाचारसम्बन्धिनो धर्मास्तु समये समये परिवृत्तिं यान्त्येव । परं सन्त्वेवंविधा बहवो धर्माः पुरातनाः येषां प्रचारो भारतीयेषु गृहेषु साम्प्रतमपि विलोक्यते । यथा भारतीयाः पुरातनतरे समये तेषां पालनं कृतवन्तस्तथैवाद्यत्वेऽपि अद्यतना भारतीयास्तेषु व्यवहरन्ति । धर्मसूत्रप्रतिपादिता एते सर्वे धर्माः सूत्रकारैर्न स्वयं प्रकल्पिताः अपि तु तैः प्राक्तनेभ्यः स्त्रोतोभ्यः सङ्गृह्य यथासमये व्याख्याताः । यथा चाह बौधायनः—**'उपदिष्टो धर्मः प्रतिवेदम्, तस्यानुव्याख्यास्यामः ।'** एतदेव मतमनुसरन् आपस्तम्बो ब्रूते—**'अथातः सामयाचारिकान् धर्मान् व्याख्यास्यामः ।'** इत्थं धर्मसूत्राणि प्राक्तनानामेव धर्माणां व्याख्यानरूपाणि सन्ति । सर्वे सूत्रकाराः स्मृतिकाराश्च वेदमेव धर्मस्यादिमं मूलं मन्यन्ते । परं ये धर्माः प्रत्यक्षरूपेण वेदेषु प्राप्यन्ते, तेषां मूलं वेदविदां स्मृतौ शीले च प्राप्यन्ते ।

धर्मसूत्रकारैर्मन्त्रब्राह्मणात्मको वेदः प्रमाणत्वेन स्वीकृतः । तस्मादेव कारणाद् बहुधा तैर्मन्त्रैः सह ब्राह्मणवाक्यान्यपि श्रुतिवचनत्वेन उद्ध्रियन्ते ।

इदं हि तथ्यमुदाहरणानि निधाय चेत् स्पष्टीकृतं स्यात् तदा समुचितमेव स्यात्। शतपथब्राह्मणे ब्रह्मचारिणो ये धर्माः प्रोक्ताः सन्ति, तान् धर्मान् उद्धरन्तोऽनुसरन्ताश्चानेके सूत्रकारा आसाद्यन्ते । आपस्तम्बप्रणीतधर्मसूत्रे उद्धृतेभ्यो ब्राह्मणवाक्येभ्यो विदितं सञ्जायते यद् ब्रह्मचारिधर्मा न केवलं शतपथब्राह्मणे निरूपिताः, परं तेषां निरूपणन्तु तद्भिन्नेष्वपि ब्राह्मणेषु समुपलब्धं भवति। वर्त्तमानानेहसि न तानि ब्राह्मणानि समवाप्तानि सञ्जायन्ते । यथा चापस्तम्बोद्धृते एते ब्राह्मणवचसी न सम्प्रति कस्मिन्नपि ब्राह्मणे समवाप्येते—

**'यदि स्मयेतापि गृह्य स्मयेतेति ब्राह्मणम् ।**
**रजस्वलो रक्तदन्सत्यवादी स्यादिति ब्राह्मणम् ॥'**

शतपथब्राह्मणस्य ब्रह्मचारिधर्मविषयकं वाक्यं बौधायनधर्मसूत्रे उद्धृतं सद्वीक्ष्यते । आपस्तम्बे च उपनयनविधानविषयके ये द्वे वाक्ये समुपलभ्येते, तेऽपि वस्तुतः कस्यापि ब्राह्मणान्तरस्यैव स्तः, न तद् ब्राह्मणमधिगतं भवति । ते वाक्ये एते—

**'सर्वेभ्यो वेदेभ्यः सावित्र्यनूच्यत इति ह ब्राह्मणम् ।' 'तमसो वा एषतमः प्रविशति यम विद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम् ।'**

इत्थं ब्रह्मचारिधर्मा वहुभिः सूत्रकारैरुद्धृताः, ते च ब्राह्मणेषु सम्यक् प्रतिपादिताः ।

स्नातकधर्मसम्बन्धीनि च श्रुतिवाक्यानि धर्मसूत्रेषूद्धृतानि सन्ति । तथाहि शतपथब्राह्मणस्य समुपस्थापयन् वसिष्ठः प्राह—

**'भार्यया सह नाश्नीयादवीर्यवदपत्यं भवतीति वाजसनेयके विज्ञायते ।'**
( वा० ध० सू० )

अपरञ्च स्नातकधर्ममधिकृत्य वसिष्ठः काठकश्रुतिं संस्मारयन् तं धर्मं विवृणोति । स्नातकः सत्रादन्यत्र शिखां न वापयेदिति धर्मं व्याख्यातुमापस्तम्बः श्रुतिमुद्धरति—

**'अथाऽपि ब्राह्मणम् । रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपि धानं यच्छिखेति । सत्रे तु वचनाद् वपनं शिखायाः ।'**

वर्णाश्चत्वार इत्येतदधिकृत्य ऋग्वेदोऽभिदधाति—

**'ब्राह्मणोऽस्य मुखमासीद् बाहूराजन्यः कृतः ।**
**ऊरु तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ॥'**

अत्र वर्णशब्दो न जातिवाचकत्वेन गृहीतः । वर्णस्योल्लेखो न केवलं श्रुतावन्यत्राऽपि दृश्यते । काठकसंहितायां 'वर्ण' इत्येतत्पदं जात्यर्थे च प्रयुक्तम् । 'आर्यवर्णमुज्जापयति' । ब्राह्मणेषु च वर्णशब्दो वणार्थे एव प्रयुक्तः प्राप्यते । शतपथब्राह्मणं हि वर्णान् एव वर्णयति—

**'चत्वारो वै वर्णाः । ब्राह्मणो राजन्यो वैश्यः शूद्रः ।'**

ऐतरेयब्राह्मणेऽपि **'शूद्रो वर्णः'** इति प्रयोगोऽधिगम्यते। तैत्तिरीयब्राह्मण-मेतस्मिन् विषये निगदति—

**'देव्यो वै वर्णो ब्राह्मणः।' 'आर्यवर्णमुज्जापयन्ति।'** इत्येष प्रयोगः पञ्च-विंशब्राह्मणे विलोक्यते।

एवंविधानि वेदवाक्यानि आलम्ब्य धर्मसूत्रकारा वर्णधर्मान् व्याचक्षाणाः आसाद्यन्ते। वसिष्ठः साक्षादेव वर्णविषयकं मन्त्रमुद्धरन् दृश्यते—

**'प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च। ब्राह्मणोऽस्य मुखमासीद् बाहूराजन्यः कृतः। ऊरु तदस्य यद् वैश्यः पद्भ्यां शूद्रोऽजायत'**—इत्यपि निगमो भवति' ( वा० ध० सू० ४, १–२ )। अन्ये सूत्रकाराः शतपथब्राह्मण-मनुसृत्य वर्णान् परिगणयन्ति। यथा धर्मसूत्रेषु वर्णानां कर्मणां वर्णनं विधीयते तथा श्रुतावेषां कर्मणां स्पष्टं विधानं न दृष्टं जायते। परं चतुर्णां वर्णानां कर्मणां पृथक्त्वं वेदे अनेकविधतया वीक्षितं भवति। केषुचित् कर्मसु वर्णविषय-स्यैवाधिकारो दृश्यते। यथा च ब्राह्मणवर्णस्य याजनाधिकारं प्रतिपादयच्छतपथ-ब्राह्मणं ब्रवीति—

**'य उ वैकश्च यजते ब्राह्मणीभूयेव यजते।'**

ब्राह्मणानां याजनाधिकारो मैत्रायणीसंहितायामेवं वर्णितम्—

**'द्वया वै देवा आहुतादो यद् ब्राह्मणाः।'**

ब्राह्मणेष्वपीदृशं वचनं विलोक्यते—

**'एता वै प्रजा हुतादो यद् ब्राह्मणाः'** ( ऐतरेयब्राह्मणम् )।
**एते वै देवाः अहुतादो यद् ब्राह्मणाः'** ( गो० ब्राह्मणम् )।

दानप्रतिग्रहे सोमपाने च ब्राह्मणानामधिकारं विदधानमैतरेयब्राह्मण-माचष्टे—

**'स यदि सोमं ब्राह्मणानां स भक्षो ब्राह्मणानांस्तेन भक्षेण जिन्विष्यसि ब्राह्मणकल्पस्ते प्रजाया मा जनिष्यत आदाय्यापाय्यावसायी यथा काम प्रयाप्यो यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पोऽस्य प्रजायामजायत ईश्वरो ह्यस्माद् द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः स ब्रह्मबन्धवेन जिज्यूषितः।'**

ऋत्विक्त्वेन ब्राह्मणवर्ण एव श्रुतौ प्रतिपादितः। तं विहाय न वर्णान्तरं हि ऋत्विक्त्वां परिग्रहीतुं प्रभवति। ब्राह्मणस्याधिकाराः कर्त्तव्यानि च शतपथेन विधीयन्त एवम्—**'प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभिनिष्पादयति—ब्राह्मण्यं प्रतिरूपचर्या यशो लोकपक्तिम्, लोकः पच्यमानः चतुर्भिर्धर्मैर्ब्राह्मणो भुनक्ति—सर्वथा च दानेन चाज्येयतया चावध्यतया च।'** शतपथब्राह्मणस्यापरं वचनमपि बोधयति यत् तस्मिन् काले अध्यापने ब्राह्मणस्यैवाधिकार आसीत्—

**'स होवाचाजातशत्रुः प्रतिलोमं वै तद् यद् ब्राह्मणः क्षत्रियमुपेयाद् ब्रह्म-मेव वक्ष्यतीति।**

ईदृशानि वेदवचनान्यालम्ब्य ब्राह्मणधर्मान्निवं व्याचक्षते—

**'द्विजातीनामध्ययनमिज्यादानम् । ब्राह्मणस्याधिकाराः प्रवचन-याजन-प्रतिग्रहाः'** ( गौ० ध० सू० ) ।

**'ब्रह्म वै त्वं महिमानं ब्राह्मणेष्ववदधादध्ययनाध्यापनयजनयाजनदानप्रतिग्रहंयुक्तं वेदानां गुप्त्यै'** ( बौ० ध० सू० ) ।

**'स्वकर्मब्राह्मणस्याध्ययनमध्यापनं यज्ञो यजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छः'** ( आप० ध० सू० ) ।

**'षट्कर्माणि ब्राह्मणस्य स्वाध्यायाध्ययनमध्यापनं यज्ञो यजनं दानं प्रतिग्रहश्चेति'** ( वा० ध० सू० ) ।

श्रुतिविधानमनुसृत्यैव धर्मसूत्रकारैर्ब्राह्मणस्यावध्यत्वमाम्नातम्—

**'अवध्यो वै ब्राह्मणः सर्वापराधेषु'** ।

**गौतमः प्राह—**

**'अवध्यश्चावन्ध्यश्चादण्डयश्चाबहिष्कार्यश्चापरिहार्यश्चेति ।'**

मनुः प्राह—

**'न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम् ।'**

यद्यपि कतिपयेषु यज्ञेषु ब्राह्मणस्य विशेषाधिकारः श्रुतिभिर्विधीयते परं प्रायेण सर्वेषां द्विजानां ब्राह्मणक्षत्रियवैश्यानाम्—अध्ययने यज्ञे च समानोऽधिकारः प्रतिपादितः । द्विजेषु 'आर्य' इति शब्दोऽपि श्रुतिषु प्रयुक्तः । सूत्रकारा अपि तत्कृते 'आर्य' इति शब्दं प्रयुञ्जाना दृश्यन्ते । ते इज्यायां दाने अध्ययने च तेषामधिकारं स्वीकुर्वन्ति ।

क्षत्रियस्य मुख्यो धर्मः प्रजानां पालनमेव प्रोच्यते धर्मविद्भिः । वसिष्ठः प्रब्रवीति—

**'शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत् ।'**

गौतमश्चाभिदधाति—

**'राज्ञोऽधिकं रक्षणं सर्वभूतानाम् ।'**

क्षत्रियधर्ममधिकृत्य ऐतरेयब्राह्मणं यद् वदति तदिदम्—

**'क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताऽजन्यमित्राणां हन्ताऽजनि ब्राह्मणानां गोप्ताऽजनीति ।'**

शतपथब्राह्मणमपि क्षत्रियस्य प्रमुखो धर्मः कः ? इत्यत्र निगदति—

**'एष वै प्रजापतेः प्रत्यक्षतमां यद्राजन्यस्तस्मादेकः ।**
**सन् बहूनामीष्टे यद्वेदेव चतुरक्षरः प्रजापतिश्चतुरक्षरो राजन्यः ॥'**

शतपथब्राह्मणोक्तमिदं मतं काठकश्रुतिमनुमन्यते—

**'राजन्यो वै प्रजानामधिपतिः ।'**

राजसम्मानमुद्दिश्य गौतम आचष्टे—

**'तमुपर्यासीनमधस्तादुपासीनन्नन्ये ब्राह्मणेभ्यः तेऽप्येनं मन्येरन्' ।**

इदं हि सर्वं श्रुतिमाधृत्यैव प्रोक्तम्—

**'तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते ।'**

पशवो वैश्यस्य धनत्वेन श्रुतौ मतम् । अस्मिन् विषये पञ्चविंशब्राह्मणः प्रोक्तमिदम्—

**( क ) 'एतद् वै वैश्यस्य समृद्धं यत् पशवः ।'**

**( ख ) 'तस्मादु बहुपशुर्वैश्वदेवो हि जागतो वर्षा ह्यस्य वैश्यस्य ऋतुस्तस्माद् ब्राह्मणस्य च राजन्यस्य चाद्योधरो हि सृष्टः ।'**

पशुशब्दोऽत्र कृषेरप्युपलक्षणमस्ति । अत एव सूत्रकाराः पशुपालनं कृषिश्च वैश्यस्य प्रधानो धर्म इति कथयन्ति । तस्मादेव सम्वन्धाद् वाणिज्यमपि वैश्यस्य धर्मत्वेन स्वीकृतम् ।

ऋग्वेदे शूद्र इति पदं सकृत्प्रयुक्तम् । न तत्र शूद्रस्य धर्ममुद्दिश्य किमपि प्रोक्तम् । तस्य जन्म पद्भ्यां जातमित्येव निगदितम् । ऋग्वेदाद् व्यतिरिच्य अन्येषु वेदेषु ब्राह्मणेषु च शूद्रशब्दस्य प्रयोगोऽसकृत्कृतः । तेषु तस्य कर्म किमित्येतदपि निरूपितम् । पञ्चविंशब्राह्मणे कथितं यत् पादप्रक्षालनं शूद्रस्य कर्म विद्यते, यज्ञे च तस्याधिकारो नास्ति—

**स यत्तस्य एष प्रतिष्ठाया एकविंशमसृज्यतं । तमनुष्टुप्छन्दोऽन्वसृज्यत न कश्चन देवता शूद्रो मनुष्यस्तमाच्छूद्रे उत वहु पशुरयज्ञियो विदेवो हि, न हि तं काचन देवताऽन्वसृज्यत, तस्मात्पादावनेजयन्नातिवर्द्धते पत्तो हि सृष्टः ।'**

यदुपरिष्टे पञ्चविंशब्राह्मणे प्रोक्तं तदनु मन्यमानम् ऐतरेयब्राह्मणमपि दृष्टं भवति—

**'अथ यद्यपः शूद्राणां स भक्षः शूद्रांस्तेन भक्षेण जिन्विष्यसि शूद्रकल्पस्ते प्रजायमाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथा कामवध्यः ।'**

इमानि वचनान्यवलम्ब्य धर्मसूत्राणि च सेवामेव शूद्रस्य प्रधानं धर्मं मन्यन्ते । तथाहि—

**'शूद्रेषु पूर्वेषां परिचर्या'** ( बौ० ध० सू० ) ।

**'परिचर्या चोत्तरेषाम्'** ( गौतमधर्मसूत्रम् )।

यथा वर्णधर्ममधिकृत्य बहुश्रुतायुक्तं तथैवाश्रमधर्ममुद्दिश्याऽपि तच्च भृशमभिहितम् । ब्रह्मचारिणां के धर्माः ? इत्यत्र शतपथब्राह्मणे विशदतयाऽऽम्नातम् । उद्वाहविषये च तत्र प्रचुरं प्रोक्तम् । ऋग्वेदस्य दशममण्डलस्थं पञ्चाशीतितमं सूक्तम्—

**'रैभ्यासीदनुदेयी नाराशंसी न्योचनी ।**
**सूर्याया भद्रमिद् वासोगाथयैति परिष्कृतम् ........॥'**

सूर्याविवाहवर्णनच्छलेन स्वयुगस्य विवाहविषयकं वर्णनं समीचीनतया विदधानं विलोक्यते। अथर्ववेदे च विषय एष प्रतिपादितः। गृह्यसूत्राणां विवाहवर्णने एतेषां मन्त्राणां विनियोगः क्रियते। उद्वाहसम्बन्धिनो वेदमन्त्रा एव आचार्यैर्गृहस्थाश्रमविषये प्रमाणत्वेन गृहीताः सन्ति।

श्रुतिषु ऋणत्रयविधानं यत्कृतं तद्ब्रह्मचर्यं गार्हस्थ्यञ्च लक्ष्यीकृत्य कृतमिति सूत्रकाराणां स्मृतिकाराणाञ्च मतमस्ति। ब्रूते चात्र बौधायनः—

**'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति।'** एवम् ऋणसंयोगादीन्यसंख्येयानि भवन्ति। श्रुतिवचांस्याश्रित्यैव धर्मसूत्रकारैर्गार्हस्थ्यं प्रतिपादितम्, तद्धर्माश्च निरूपिताः। तैत्तिरीयसंहितायां हि ऋतुमतीधर्मा ये विहितास्ते च सूत्रकारैः स्वसूत्रग्रन्थेषु व्याख्याताः।

वानप्रस्थस्य संन्यासस्य च वर्णनं धर्मसूत्रेषु प्राप्यते। परं केचन सूत्रकाराः तत्र विप्रतिपत्तिमुपस्थापयन्तोऽपि दृश्यन्ते। केचन आचार्या नैष्ठिकं ब्रह्मचर्यं, वानप्रस्थं संन्यासञ्च नानुमन्यन्ते। बौधायनोऽत आह—**'ऐकाश्रम्यं त्वाचार्या अप्रजनत्वादितरेषाम्। प्राह्लादिर्ह वै कपिलो नामासुर आस। स एतान् भेदांश्चकार देवैस्सह स्पर्धमानस्तान् मनीषी माऽद्रियेत।'** केचन आचार्या एतदपि आश्रमद्वयमनुमन्यमानाः प्राप्यन्ते। तैत्तिरीयसंहितायामिह विषये 'ये चत्वारः' इति वचोऽवाप्यते यत्तद्धर्मस्य चतुर्विधत्वं करोतीति तेषां मतम्। परं मतमिदं प्रतिवदन् बौधायन आचष्टे यत् 'ये चत्वारः' इत्येष कर्मवाद एवास्ति—ऐष्टिकपाशुकसौमिकदार्वीहोमाणाम्। ज्ञानमेव मुक्तेः कारणमिति मत्वा केचन आचार्याः संन्यासं परिपुष्णन्ति, किञ्च ज्ञानप्रशंसात्मिकानि श्रुतिवचनानि प्रमाणत्वेन प्रस्तुवन्ति। शतपथब्राह्मणस्य अधःस्थितं वचनं संन्यासपरिपोषकाणां मतं द्रढयति—

**'तमेवं वेदानुवचनेन विविदिषन्ति। ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति। एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजान्न कामयन्ते किम्प्रजया करिष्यामो येषान्नोऽयमात्मा यँल्लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थापयाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः।'**

आपस्तम्बधर्मसूत्रन्तु पक्षद्वयमप्युपन्यस्यति।

यद्यपि श्रुतिकाराः स्मृतिकाराश्च कालधर्ममवेक्षमाणाः संन्यासं न सर्वथा प्रत्याचक्षते संन्यासधर्मांश्चापि प्रतिपादयन्ति तथापि ते वेदविरुद्धतां न कदाऽपि सहन्ते। तेषां वेदाज्ञा सर्वथा माननीयाऽस्ति। तेभ्यः परं न किमप्यस्ति तेषां दृष्टौ। अतएवापस्तम्बधर्मसूत्रे प्रोक्तम्—

**'त्रैविधवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते व्रीहियवपश्वान्यपयः कपालपत्नीसम्बन्धान्युच्चैर्नीचैः कार्यमिति ते विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते।'**

एवमेव वसिष्ठो ब्रवीति—

**'संन्यसेत् सर्वकर्माणि वेदमेकं न संन्यसेत्।**
**तेषां संन्यसनाच्छूद्रस्तस्माद् वेदं न संन्यसेत्॥'**

तामेव प्रव्रज्यां, वस्तुतः धर्मसूत्राण्यनुमन्यन्ते या वैदिकधर्ममर्यादासंरक्षिणी भवति।

तैत्तिरीयसंहितोक्तं 'मनुपुत्रेभ्यो दायं व्यभजत्' इति वच उद्धरन्तो धर्मसूत्रकारा दायस्य वेदसमतत्त्वमुपपादयन्तीति। सूत्रव्याख्यातॄणां कथनमिदं यत्पिता पुत्रेभ्य एव दायं विभजेन्न तु दुहितृभ्यः। बौधायनधर्मसूत्रदर्शनात् पुत्रस्यैव दायभागाधिकारिता सिद्धचति। बौधायनः स्पष्टमेव आनमति यत् पितरि जीवति पितुरनुज्ञयैव दाय-विभजनं भवेत्। केषाञ्चनाचार्याणामिदमपि मतं यज्ज्येष्ठः पुत्रोऽधिकस्य दायभागस्याधिकारी अस्ति। एते आचार्याः स्वं मतं परिपोषयितुं बौधायनं प्रमाणत्वेनाऽपि उपन्यस्यन्ति। केषाञ्चनाचार्याणामिदमपि मतं यज्ज्येष्ठपुत्रः समस्तमपि दायभागं लभेत। परमापस्तम्बो मतमिदं प्रत्याचष्टे। स इह आह यदेतादृशो विभागो न शास्त्रानुकूलः। सर्वेऽपि पुत्राः समदायसंलब्ध्यधिकारिणः सन्ति। श्रुतिः समदायविभागपक्ष एव वर्त्तते। समदायविभागस्य वेदमूलत्वं प्रमाणयितुमापस्तम्बस्तदेव श्रुतिकथनमुद्धरति यद्बौधायनेन प्रयोजनान्तरमुदाहृतम्। बौधायनोदाहृतस्य, श्रुतिवचनस्य विधित्वमस्वीकुर्वाण आपस्तम्बो न्यायविदां मतमुपस्थापयति—**अथापि नित्यानुवादमविधिमाहुर्न्यायविदः'**। एतस्य हि व्याख्यानस्योद्देश्यमिदं यदेवंविधानि वेदवाक्यानि दृष्टार्थमात्रमनुवदन्ति। एतेन विवेचनेनेदमपि स्फुटीभवति यद्धर्मसूत्रकाराः श्रुतिवाक्यानि व्याख्याय धर्मं प्रतिपादयन्ति। धर्मसूत्राणां सर्वेषां चेत् सम्यगध्ययनं विधीयेत तदेवं निश्चीयते यच्छ्रुतिव्याख्याभेदादेव दायविभागपरो भेदः सञ्जातः। 'दुहिता वा' इत्येतदापस्तम्बीयं वचो निशम्य विदितं जायते यद् दुहिताऽपि विकल्पेन दायं लभते। गौतममते पत्नी सपिण्डादिभिः सह रिक्थं भजते।

केषाञ्चन धर्माणां मूलन्तु सूत्रकाराः स्मृतिकाराश्च वेदविदां स्मृतिं शीलञ्च मन्यन्ते। यदा कोऽप्येतादृशस्य शीलस्य एतादृश्याः स्मृतेर्या प्रमाणत्वमाक्षिपति तदा धर्मविदस्तत् समादधाना ब्रुवन्ति यद् याभ्यः शाखाभ्यो वेदविदां स्मृतिः शीलं वा प्रावर्तत ताः शाखास्तदा प्रावर्तन्त परं ता गच्छता कालेन व्यनश्यन्। गोविन्दस्वामी वक्ति च यद् बौधायनेन प्रोक्तः शिष्टागमः सम्प्रति प्रलीनशाखामूलो वर्त्तते।

धर्मसूत्रग्रन्थालोचनेन विदितं सञ्जायते यद् धर्मसूत्रकाराणामभिमतमिदं यत् कस्मिन्नपि विषये 'धर्मोऽयम्' इत्येतत्कथनं न तावत् सम्भवं यावच्छ्रुतिर्नानुसन्धीयते। धर्मसूत्रकारास्तत् सर्वमपि प्रतिवदन्ति यदस्ति श्रुतिविरुद्धम्।

धर्मविदो धर्मं चतुर्षु भागेषु विभजन्ते—(१) साधारणधर्मः, (२) विशेषधर्मः, (३) असाधारणधर्मः, (४) आपद्धर्मश्च।

साधारणधर्मो दान-तपो-यज्ञभेदेन त्रिविधः स्मृतः, अर्थदान-ब्रह्मदान-अभयदान-भेदेन दानमपि तत्र त्रिविधम्, तपोऽपि शरीरतपो, मानसतपो वाक्तपो भेदेन त्रिधाऽस्ति। यज्ञस्य सन्ति अष्टादश भेदाः। तत्र नित्यनैमित्तिककाम्याध्यात्माधिदैवाधिभूतभेदैः कर्मयज्ञः षड्विधः प्रोक्तः। उपासनायज्ञश्च नवविध उक्तः—(१) निर्गुणोपासना, (२) सगुणोपासना, (३) अवतारोपासना, (४) ऋषिपितृदेवतोपासना, (५) भूतप्रेतासुराद्युपासना, (६) मन्त्रयोगः, (७) हठयोगः, (८) लययोगः, (९) राजयोगश्च।

श्रवण-मनन-निदिध्यासनभेदेन ज्ञानयज्ञस्त्रिप्रकारकः प्रतिपादितः। इत्थं हि अष्टादशविधा यज्ञा भवन्ति। दानतपोयज्ञानां संख्यायाः सङ्कलनेन चतुर्विंशतिभेदाः सञ्जायन्ते। एषा हि संख्या सात्त्विकत्वादिगुणत्रयत्वात् त्रिगुणीकरणेन द्विसप्ततित्वं याति। द्विसप्ततिभेदं धर्ममिमं पुरो निधाय यदा तत्र दृक्पातः क्रियते तदा जगति न कोऽपि एतादृग् धर्मः समवाप्तो जायते यो नास्मिन् सनातनधर्मेऽन्तर्भूतः स्यात्। सनातनधर्मस्येदं साधारणं स्वरूपं सर्वलोककल्याणकरं महत्त्वं निदधाति।

विशेषधर्मो भवति अधिकारिविशेषाणां कृते। तथा हि पुरुषस्य कृते पुरुषधर्मो नार्याः कृते नारीधर्मः। गार्हस्थ्यस्य कृते प्रवृत्तिधर्मः। संन्यासिनां कृते निवृत्तिधर्मः। एवमेव ब्राह्मण-क्षत्रिय-वैश्यादीनां कृते पृथक् पृथग् धर्मो य उक्तः सो विशेषधर्म इत्युच्यते।

असाधारणधर्मस्य विलक्षणताऽन्यैवास्ति। असाधारणधर्मार्थं विशेषयोगशक्तिरात्मबलञ्चापेक्ष्यते। न साधारणा मनुष्यास्तदधिकारिणो भवितुमर्हन्ति। विश्वामित्र-द्रौपदी-प्रभृतयो हि विरला जनास्तदधिकारिणः पुरा अजनिषत।

आपद्धर्मस्यापि चमत्कारोऽन्य एव। स धर्मो भावप्रधानः। विपदि निपत्य जीवः स्वं मुख्यमुद्देश्यं लब्धुं चेत् पापमापद्धर्मत्वेन मत्वाऽऽचरति तदा न स पापभाक्। श्रूयते यत्पुरा बहुवर्षव्यापिनि दुर्भिक्षे सति विश्वामित्रः सारमेयपिशितं जग्राह तेन च बलिवैश्वदेवयज्ञं विधाय भोक्तुं तदुपचक्रमे। आत्मरक्षायै एषाऽपद्धर्मो धर्मविद्भिर्विहितः।

धर्मस्य लक्षणं मनुरेवञ्चकार—

**'धृतिक्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥'**

यद्यपि धर्मजिज्ञास्यमानानां प्रमाणं परमं श्रुतिस्तथापि महाभारतमेवमप्याह—

**'वेदस्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**
**एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥'**

श्रुतिमूलो हि धर्मो न कश्चिद्द्वेष्टि । अत एव धर्माचार्याः प्राहुः—

**'श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।**
**आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥'**

धर्मस्योपादेयत्वं महनीयत्वञ्चेत्थं गीतं धर्मज्ञैः—

**'धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति ।**
**धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति ॥'**

व्यासो धर्मस्याहेयत्वे प्राह—

**'न जातु कामान्न भयान्न लोभाद् धर्मं त्यजेज्जीवितस्यापि हेतोः ।**
**नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ॥'**

धर्मस्य निषेवणीयत्वं कियदुपकारकृदित्यत्र व्यास एवमभिदधाति—

**'ऊर्ध्वबाहुर्विरौम्येष न कोऽपीहि शृणोति माम् ।**
**धर्मादर्थञ्च कामश्च तं धर्मं किन्न सेवसे ॥'**

धर्मं संरक्ष्य न कोऽपि कदाऽप्यवसीदति, तस्मादेव कारणाद् वेदमनूच्य आचार्योऽन्तेवासिनमनुशास्ति—

**'धर्मं चर, धर्मान्न प्रमदितव्यम् ।'**

धर्मसूत्रकारा धर्मस्य यद्रूपमिदमनुसन्दधुस्तद् वस्तुतः श्रेयः प्रेयश्च विश्वम्प्रतिनिदधाति । इत्थं वदत्यस्मिन् विषये डॉ० रमेशचन्द्रः । इतः परं क्रमेण व्याचष्टेऽस्य विषयस्यैतिहासिकः संक्षिप्तः परिचयः —

## ( १ ) गौतमधर्मसूत्रम्

धर्मसूत्रेषु प्राचीनतमोऽयं ग्रन्थोऽस्ति । अस्योल्लेखो गोभिलेन स्वकीये गृह्यसूत्रे कृतोऽस्ति । बौधायनधर्मसूत्रेऽस्माद्धर्मसूत्रात् प्रायश्चित्तविषयकं विचारमपि सङ्कलितम् । ग्रन्थेऽस्मिन् २८ अध्यायाः सन्ति । अत्र वर्णधर्म-राजधर्म-नित्यकर्म-प्रायश्चित्तादीनां विशिष्टं प्रतिपादनमस्ति । कुमारिल-शङ्कराचार्य-मेधातिथि-प्रभृतयो विद्वांसः अस्य ग्रन्थस्य निर्देशं कृतवन्तः । अस्याविर्भावकालः ६०० वि० पूर्वतः ४०० वि० पर्यन्तं स्वीकर्तुं शक्यते । हरदत्तेन स्वव्याख्यया सूत्रमिदं सरलं कृतम् । आचार्यमस्करीमहोदयस्त्वस्य ग्रन्थस्य बोधगम्यं भाष्यं लिलेख ।

## ( २ ) बौधायनधर्मसूत्रम्

बौधायनकल्पसूत्रस्यांशमात्र एवायं ग्रन्थोऽस्ति । अस्य धर्मसूत्रस्य चत्वारः प्रश्नाः सन्ति । प्रथमप्रश्ने—ब्रह्मचर्य-शुद्धाशुद्धविचार-राजकीयविधि-अष्टविधविवाहादीनां विषयाणां वर्णनमस्ति । द्वितीयप्रश्ने—प्रायश्चित्त-उत्तराधिकार-

आश्रमव्यवस्था-गार्हस्थ्यधर्म-श्राद्धादीनां विषयाणां विवरणमस्ति । तृतीयप्रश्ने—संन्यासधर्म-चान्द्रायणप्रभृतीनां व्रतानां वर्णनं मिलति । चतुर्थप्रश्ने—काम्य-सिद्धयादीनां वर्णनमस्ति ।

तैत्तिरीयशाखाया बौधायनकल्पसूत्रं कल्पसाहित्यस्येतिहासेषु प्राचीनतम-मस्ति । तैत्तिरीयसंहितायाः टीकाकृता भास्करमिश्रेण स्वीयां टीकायामस्य बौधायनस्य नाम्नोल्लेखः कृतोऽस्ति—

**'प्रणम्य शिरसाऽऽचार्यान् बौधायनपुरःसरान् ।**
**व्याख्यैषाऽध्वर्युवेदस्य यथाबुद्धि विधीयते ॥'**

डॉ० व्यूलरमतेनायं विद्वान् दक्षिणभारतीय आसीत् । किन्च कतिपयै-रन्तरङ्गप्रामाण्यैरयं विद्वानुत्तरभारतीयः प्रतीतो भवति । अस्य मतानुसारेणा-ऽऽर्यावर्त्तस्य सीमानिर्देशो द्रष्टव्यः—**'प्राग्दर्शनात् प्रत्यक्कालिकवनाद् दक्षिणेन हिमवन्तमुदक् पारियात्रमेतावद् आर्यावर्त्तम् । तस्मिन् य आचारः प्रमाणम् ।'**
( बौ० ध० सू० १।२।१०-११ )

हिरण्यकेशीगृह्यसूत्रेऽपि सीमन्तोन्नयनप्रसङ्गे गङ्गायारुल्लेखेनाप्युत्तरभार-तीयोऽयमित्येव सिद्धो भवति—

**'सोम एव नो राजेत्याहुः ब्राह्मणीः प्रजाः ।**
**विवृतचक्रा आसीनास्तीरे तुभ्यं गङ्गे ॥'**
( हि० के० गृ० सू० ३।१।३ )

## ( ३ ) आपस्तम्बकल्पसूत्रम्

कल्पसूत्रमिदमापस्तम्बधर्मसूत्रनाम्ना ख्यातोऽस्ति । डा० व्यूलरमहोदय-मतानुसारेणापस्तम्बोऽयं दाक्षिणात्य आसीत् । कथनमिदं प्रमाणयितुमनेन धर्म-सूत्रस्यान्तरङ्गप्रमाणमुद्धृतम्—**'उदीच्यवृत्तिश्चेदासनगतेषूदपात्रानयनम्'** ( आ० धर्म० सू० १।१७।१७ ) किन्च वस्तुस्थितिस्तु विपरीतैवास्ति । आपस्तम्ब-गृह्यसूत्रे वीणावादनकाले मन्त्रद्वयस्य गानस्य विधानमस्ति—

**'योगन्धरिरेवं नो राजेति साल्वीरवादिषुः ।**
**विवृतचक्रा आसीनास्तीरेण यमुने तव ॥**
**सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः ।**
**विवृतचक्रा आसीनास्तीरेणासौ तव ॥'**

अस्य प्रथमे मन्त्रे यमुनातटवासिनां साल्वदेशीयप्रजानामुल्लेखः ऐति-हासिकमहत्त्वं रक्षति । आधुनिक-पञ्जाब-प्रदेश एव तदा साल्वदेश आसीत् । पाणिनिः साल्वदेशस्योल्लेखो राजशासितजनपदस्वरूपे एव कृतवानस्ति । 'साल्वावयव-प्रत्यग्रथकलकूटाश्मकादिञ्' ( ४।१।१७३ ) । कतिपयानामेता-दृशानामवयवानामुल्लेखो नामोल्लेखपूर्वकं काशिकायां कृतवान्—

'उदुम्बरास्तिलखला भद्रकारा युगन्धराः ।
भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः ॥'

एभिः प्रमाणैरापस्तम्बस्य जन्मस्थानमुत्तरभारत एवासीदित्यनुमीयते ।

## ( ४ ) हिरण्यकेशीधर्मसूत्रम्

अस्याः शाखायाः कल्पसूत्रस्याऽपि द्वावेव प्रश्नौ स्तः । ग्रन्थोऽयं स्वतन्त्र इत्यपि वक्तुं नोचितमस्ति । ग्रन्थोऽयमापस्तम्बधर्मसूत्रस्यैव संक्षिप्तं प्रवचनमस्ति । अयं हि विद्वान् आपस्तम्बधर्मसूत्रादेव शताधिकमन्त्राणामवतरणं स्वग्रन्थे कृतवान् । अस्य सूत्राणां पाठः पाणिनिकृते विशेषोऽनुकूलोऽस्ति । अस्य टीकाकारो महादेवः स्वभाष्येऽनेकावश्यकविषयाणां वर्णनमकरोत् । तेन हि भाष्यमिदमत्युपादेयं सङ्ग्राह्यश्चाभवदिति ।

## ( ५ ) वसिष्ठधर्मसूत्रम्

धर्मसूत्रकारेषु महर्षिवसिष्ठस्य स्थानमत्युच्चं प्रतिष्ठितञ्चास्ति । आकारेण स्वल्पकायः सन्नपि गुणे विपुलकायोऽस्ति ग्रन्थोऽयम् । ग्रन्थेऽस्मिन् त्रिंशदध्यायाः सन्ति । ग्रन्थेऽस्मिन् स्त्रीधर्म-श्राद्ध-अशौच-विष्णुमूर्त्तिप्रतिष्ठा-विष्णुपूजनादीनां विषयाणां विशिष्टं वर्णनमस्ति ।

## ( ६ ) वैखानसधर्मसूत्रम्

अस्मिन् धर्मसूत्रे वैखानसस्मृतिसूत्रस्य अष्टम-नवम-दशमप्रश्नाः सन्ति । त्रयः प्रश्नाः मिलित्वैवेमं ग्रन्थं निष्पन्नं कुर्वन्ति । आश्रमाणां वर्णानाञ्च विशदं विवेचनमेवास्य ग्रन्थस्य महती विशिष्टताऽस्ति । वानप्रस्थ-संन्यास-गृहस्थाद्याश्रमाणामवान्तरप्रकारकस्यैतादृशं विशदं वर्णनमत्रोपलब्धो भवति यदन्यत्र धर्मशास्त्रान्तरे दुर्लभमस्ति । सङ्करजातीनामप्यत्र विशिष्टप्रकारकं वर्णनमत्रोपलब्धो भवति, किञ्च राज्ञः कर्त्तव्यम्, न्यायस्य विधानम्, श्राद्धस्यानुष्ठानञ्चादि धर्मशास्त्रेषु नियमतः प्राप्तविषयाणामत्र वर्णनस्य सर्वथाऽभावोऽस्ति । अस्याङ्ग्लानुवादः सम्पादनञ्च डॉ० कैलेण्डेन कृतम् ।

## ( ७ ) विष्णुधर्मसूत्रम्

इदमेवैकं धर्मसूत्रमस्ति यत् कस्यापि मानवग्रन्थकारस्य रचना न भूत्वा स्वदिव्योत्पत्तौ श्रद्धां सन्दधाति । अस्मिन् गद्यात्मकसूत्राणां तथा पद्यानामेकत्र सन्निवेशोऽस्ति । अस्य स्वरूपस्य विषये पर्याप्तमतभेदोऽस्ति । मनुस्मृत्या सहास्य सूत्रस्य सम्बन्धः तथा पौर्वापर्यविप्रतिपत्तेर्विषयश्चास्ति । अस्य धर्मसूत्रस्य १६० श्लोका मनुस्मृतौ अक्षरशो मिलन्ति । विष्णुधर्मसूत्रगताः श्लोका मनुस्मृतेः श्लोकानां छायामनुहरन्ति । एतादृश्या तुलनया धर्मसूत्रमिदं मनुपरवर्त्तिनं मन्यन्ते । परमियतैव सादृश्येन परवर्त्तिता नियमस्यैव पूर्ववर्त्तिता नियमस्यापि कर्त्तुं शक्यत्वेन निश्चयस्य कस्यापि कर्त्तुमशक्यत्वात् । एतेषां धर्मसूत्राणामति-

रिक्तः शङ्खलिखितस्य धर्मसूत्रमप्युपलब्धमस्ति । विष्णुधर्मसूत्रस्याङ्ग्लानुवादेन सहास्य सम्पादनं प्रकाशनञ्च कलकत्तानगरीतः १८८० ईस्वीये जालीमहोदयेन कृतम् ।

## शुल्वसूत्राणि

भारतवर्षे रेखागणितस्य पुरातनेतिहासस्य ज्ञानाय शुल्वसूत्राणामध्ययनं नितान्तमावश्यकमस्ति । शुल्वसूत्रं वेदाङ्गान्तर्गतकल्पसूत्रस्यान्यतममङ्गमस्ति । वैदिककर्मकाण्डमेव शुल्वसूत्रस्य मुख्यविषयोऽस्ति । शुल्वशब्दस्यार्थो भवति 'रज्जुः' । अतः 'रज्वा मापितवेद्या रचना' शुल्वसूत्रस्य प्रतिपाद्यविषयोऽस्ति ।

सैद्धान्तिकदृष्टया प्रत्येकस्या वैदिकशाखायाः स्वं विशिष्टं शुल्वसूत्रं भवति, किन्तु व्यवहारत एवं न भवति । कर्मकाण्डेन सह मुख्यतः सम्बद्धत्वेन यजुर्वेदस्यैव शाखायां शुल्वसूत्राण्युपलब्धानि भवन्ति । यजुर्वेदस्यैवानेकशाखायां शुल्वसूत्राणामस्तित्वं मिलति । शुक्लयजुर्वेदेन सम्बद्धमेकमेव कात्यायनशुल्वसूत्रमस्ति, किन्तु कृष्णयजुर्वेदेन सम्बद्धानि षट् शुल्वसूत्राणि मिलन्ति । तद्यथा— बौधायन-आपस्तम्ब-मानव-मैत्रायणीय-वाराह-वाधुलशुल्वसूत्राणि चेति । एतदतिरिक्तः आपस्तम्बशुल्वसूत्रस्य टीकायां ( ११।११ ) करविन्दस्वामिना मशकशुल्वसूत्रस्य हिरण्यकेशीशुल्वसूत्रस्य चोल्लेखः कृतः । आपस्तम्बशुल्वसूत्रे ( ६।१० ) हिरण्यकेशीशुल्वसूत्रादेकमुद्धरणमप्युपलभ्यते ।

एतेषु सप्तोपलब्धसूत्रेषु बौधायनशुल्वसूत्रमेव प्रायः सर्वाधिकं प्राचीनमस्ति । अस्मिन् त्रयः परिच्छेदाः सन्ति । प्रथमपरिच्छेदे ११६ सूत्राणि सन्ति । द्वितीयपरिच्छेदे ८६ सूत्राणि सन्ति । तृतीयपरिच्छेदे ३२३ सूत्राणि सन्ति । यज्ञयागादिविषय एवास्य ग्रन्थस्य मुख्यवर्ण्यविषयोऽस्ति ।

आपस्तम्बस्य शुल्वसूत्रं षट् पटलेषु विभक्तमस्ति । अस्य ग्रन्थस्याभ्यन्तरेऽन्यावान्तरवर्गाः सन्ति । अनेन प्रकारेणास्मिन्नेकविंशतितमाऽध्यायास्तथा २२३ सूत्राणि सन्ति । अन्तिमाध्याये काम्येष्टचै आवश्यकविभिन्नवेद्या आकारप्रकारस्य विशदं विवेचनमस्ति ।

## बौधायनशुल्वसूत्रस्य टीकाकाराः

### ( क ) द्वारकानाथयज्वा

निश्चयेनायमार्यभटस्य पश्चाद्वर्त्ती प्रतीतो भवति । स्वीयां टीकायामनेनार्यभटः स्मृतः । अस्य टीकाया नाम शुल्वदीपिकाऽस्ति । द्वारकानाथयज्वा स्वटीकायाः पुष्पिकायाम् 'महात्मजः' इत्येवं लिखितवान् । एतावदेवास्य विषये ज्ञातो भवति । आङ्ग्लानुवादेनालोचनात्मकटिप्पणीभिश्च सहितेयं टीका डा० धीवोमहोदयेन प्रकाशिता । अस्य सुष्ठु संस्करणं पुनर्मुद्रणञ्च महालक्ष्मी-पब्लिशिंग-हाउस, नई दिल्लीतः १९८० खीष्टाब्देऽभवत् ।

### ( ख ) वेङ्कटेश्वरदीक्षितः

अस्य टीकाया नाम शुल्व-मीमांसाऽस्ति । यज्वनोऽपेक्षयाऽर्वाचीनोऽयं ग्रन्थकारः प्रतीतो भवति ।

## आपस्तम्बशुल्वस्य टीकाकाराः

टीकादृष्टया शुल्वसूत्रमिदमतिलोकप्रियमस्ति । अद्यावधि अस्य चतस्रः टीकाः समुपलभ्यन्ते

### ( क ) कपर्दिस्वामी

एतेषु टीकाकारेषु सर्वाधिकः प्राचीनोऽयं प्रतीतो भवति । आपस्तम्बश्रौत-सूत्र-आपस्तम्बसूत्रपरिभाषा-दर्शपौर्णमाससूत्र-भारद्वाजगृह्यसूत्रादीनां ग्रन्थानां टीका कृताऽनेनेति । एतेषां ग्रन्थानामुद्धरणं शूलपाणि-हेमाद्रि-नीलकण्ठादिप्रतिष्ठितैराचार्यैः कृतमतोऽस्य प्रियता प्रमातुं शक्यते । शूलपाणेः समयस्तु ११५० खीष्टाब्दस्य पार्श्ववर्त्ती वर्तते । वेदार्थदीपिकाया रचयितुः षड्गुरुशिष्यस्य ( ११४१ ई०–११९३ ई० ) अयं गुरुरासीत् । हेमाद्रेः कालस्तु त्रयोदशतमशती आसीत् । महादेवो देवगिरिवंश्यो राजाऽऽसीत् । त्रयोदशे चेशवीये शतकेऽस्य वंशस्योत्तरभारते प्रचुरः प्रभाव आसीत् । अस्योत्तराधिकारी रामचन्द्रः ( १२७१ ई०–१३०९ ई० ) आसीत् । महादेवरामचन्द्रौ मिलित्वा १२६० ईशवीतः—१३०९ ई० पर्यन्तं राज्यं चक्रतुः । अतः कपर्दिस्वामिनः स्थितिकालो चतुर्दशशतकस्य पूर्वार्द्धभागो मन्यते । विद्वानयं दक्षिणभारतस्य निवासी प्रतीतो भवति ।

### ( ख ) करविन्दस्वामी

अयं हि विद्वान् आपस्तम्बस्य सम्पूर्णश्रौतसूत्रोपरि स्वव्याख्यामलिखत् । समयस्त्वस्य निश्चयेन किमपि वक्तुं न शक्यते । नामनिर्देशं विनैवायमार्यभटप्रथमस्य ( जन्मकालः ४७६ ई० ) आर्यभटीयग्रन्थस्य (रचनाकालः ४९९ ई०) कतिपयनिर्देशान् स्वग्रन्थेषूल्लिखितवान्, येनायं पञ्चमशतीतः निश्चितरूपेणार्वाचीनः प्रतीतो भवति । अस्य टीकाया नाम शुल्वप्रदीपिकाऽस्ति ।

### ( ग ) सुन्दरराजः

अस्य टीकाया नाम शुल्वप्रदीपोऽस्ति । ग्रन्थोऽयं ग्रन्थकारस्य नामोपरि 'सुन्दरराजीय' नाम्नाऽपि ख्याताऽस्ति । अस्यापि समयस्योचितरीत्या ज्ञानं न भवति । अस्य ग्रन्थस्य प्राचीनहस्तलेखस्य समयः १५८१ खीष्टाब्दोऽस्ति । इयं पाण्डुलिपिः तञ्जोर-राजकीयपुस्तकालये सुरक्षिताऽस्ति । फलतोऽस्य समयः षोडशशताब्दीतः प्राचीनः स्वीक्रियते ।

### ( घ ) गोपालः

अस्य व्याख्याया नाम—आपस्तम्बीयशुल्वभाष्यमस्ति । अस्य पितुर्नाम गातर्यनृसिंहसोमसुत इत्यस्ति । अनेन प्रतीतो भवति यदयं कर्मकाण्डेन दीक्षिते वैदिकपरिवारे समुत्पन्नोऽभवत् । कर्मकाण्डीयपरम्परयाऽयं पूर्णपरिचित आसीत् ।

## कात्यायनशुल्वसूत्रम्

अस्य ग्रन्थस्य प्रसिद्धं नाम कात्यायनशुल्वसूत्रपरिशिष्टमस्ति, अथवा कातीयशुल्वपरिशिष्टम् । इदं भागद्वये विभक्तोऽस्ति । प्रथमो भागः सूत्रात्मकोऽस्ति । अस्मिन् भागे सप्त कण्डिकास्तथा ९० सूत्राणि सन्ति । द्वितीयभागः श्लोकात्मकोऽस्ति । अस्मिन् खण्डे ४० अथवा ४८ श्लोकाः सन्ति । पूर्ववर्णितयोर्द्वयोः शुल्वसूत्रयोरपेक्षया अत्र कतिपया रोचकविशिष्टता मिलन्ति । अस्य द्वे टीके स्तः ।

### (क) रामः अथवा रामवाजपेयः

आधुनिकं लखनऊपार्श्ववर्त्ति नैमिषस्थानं तत्र जातेन रामेण कतिपया ग्रन्था अरच्यन्त । तेषु मुख्याः क्रमदीपिका-कुण्डलाकृतिशुल्ववार्त्तिक-स्वीयाख्यायनगृह्य-पद्धतिसमरसार-समरसारसङ्ग्रह-शारदातिलकतन्त्रव्याख्या-कातीयशुल्वसूत्र-व्याख्याप्रभृतयः सन्ति । कुण्डलाकृतेः रचनाकालः १४४९ खीष्टाब्दोऽस्ति । फलतः रामस्य पञ्चदशशतकस्य मध्यवर्तित्वं सुप्रतीतम् ।

### (ख) महीधरः

महीधरः काशीनिवासी प्रकाण्ड-वैदिक आसीत् । वेदविषयकस्य तथा तन्त्रविषयकस्य चानेके ग्रन्थरत्ना अद्याप्यस्य मिलन्ति । अयं हि विद्वान् शैवदर्शनाचार्यस्तन्त्ररहस्यज्ञो वेदपारङ्गमश्चासीत् । 'मन्त्रमहोदधि'-नामकस्य तस्य तन्त्रग्रन्थस्य रचनाकालः १५८९ खीष्टाब्दः तथा विष्णुभक्तिकल्पलताप्रकाशस्य रचना १५९७ खीष्टाब्दो मन्यते ।

महीधरेण स्वकीयं कात्यायनशुल्वसूत्रस्य भाष्यभूमिकायामनेकेषां ज्ञातव्य-विषयानां परिचयं प्रदत्तम् । स्वगुरो रत्नेश्वरमिश्रस्याऽऽज्ञया विद्वानयं भाष्य-वृत्त्यानुसारिणीं विवृतिं निरमात् । भाष्यन्तु कर्काचार्यस्यैव प्रतीतं भवति । रामवाजपेयीमहोदयस्य विवृत्यन्तरमेवास्य विवृतेः रचनाऽभवत् । कातीयशुल्व-सूत्रस्य पुष्पिकायामस्य परिचयः—

'रसवेदाङ्गभूवर्षे भाष्यन्ते धवले दले ।
त्रयोदश्यां रवेर्वारे वाराणस्यां महीधरः ॥
श्रीरत्नेश्वरमिश्रस्य गुरोः केशवजन्मनः ।
आज्ञया विवृतिं शौल्वीं भाष्यवृत्त्यनुसारिणीम् ॥
विदुषां सुखबोधाय व्यधाद् बुद्ध्यनुसारतः ।
भाष्यं रामकृतावृत्तिं सूत्राण्यालोच्य तत्त्वतः ॥'

(द्रष्टव्यः—डॉ० गाडे—स्टडीज इण्डियन लिटरेरी हिस्ट्री, भा० २ पृ० १०७-१२१ ।)

### (ग) महामहोपाध्यायो विद्याधरगौडः

महामहोपाध्यायविद्याधरगौडोऽपि कात्यायनश्रौतसूत्रस्य कातीयशुल्वसूत्रस्य च स्वकीयां सरलां सुबोधाञ्च व्याख्या निर्माय एतान् ग्रन्थान् जनसाधारणेभ्योऽपि

बोधगम्यमकरोत् । ख्रीष्टस्य १८८६ ईशवीये विद्याधरमहोदयो जन्मपरिग्रहं चकार । अस्य पितुर्नाम महामहोपाध्याय-पण्डितप्रभुदत्त इत्यासीत् । प्रभुदत्तस्तु कर्मकाण्डस्याद्वितीयो विद्वानासीत् । पितापुत्रावुभावपि महामहोपाध्यायावास्ताम् । अयं हि विद्याधरः काशीहिन्दूविश्वविद्यालये वेदविभागस्याध्यक्ष आसीत् । विद्याधररचितस्य कात्यायनश्रौतसूत्रस्य 'सरला'-नाम्नी व्याख्या कर्काचार्यस्य भाष्यस्य बहुशोऽनुगमनं करोति । किञ्च भाष्यस्य काठिन्यस्थलेऽत्र सारल्यस्य च धारा प्रवाहिता भवति । सरलावृत्तेश्चोपोद्घाते श्रौतयागविषयकस्य समस्तानां प्रमेयाणामतीव सरलशैल्यां सविस्तरेण प्रतिपादनमस्ति । अस्मिन् प्रतिपादने ग्रन्थकारस्य वैदिकशास्त्राणामालोडनमेवं मीमांसाशास्त्रस्य च गम्भीराध्ययनं स्पष्टतः परिस्फुरितो भवति । कातीयशुल्वसूत्रस्य टीकाया अप्येवंविधैव विशिष्टता वर्त्तते । विषयस्य प्रतिपादनं सुबोधरीत्या सोदाहरणं कृतमस्ति । निधनञ्चास्य काश्यामेव १९४१ ईशवीयेऽभवत् । शुल्वसूत्रेषु बौधायन-आपस्तम्बकात्यायनसूत्राणि त्रीण्येव प्रमुखानि सन्ति । एतदतिरिक्तान्यपि कतिपयानि सामान्यशुल्वसूत्राणि सन्ति—

## ( क ) मानवशुल्वसूत्रम्

यद्यपि लघुकायिके ग्रन्थेऽस्मिन् गद्यपद्ययोर्मिश्रणमुपलभ्यते, तथापि नासौ चम्पूप्रकारः । ग्रन्थेऽस्मिन्नभिनववेदीनां वर्णनं मिलति । अत्र सुपर्णचितिनाम्ना तत्प्रसिद्धवेद्या वर्णनमस्ति या 'श्येनचितिः' इति नाम्नाऽन्यत्र प्रसिद्धाऽस्ति ।

## ( ख ) मैत्रायणीयशुल्वसूत्रम्

मानवशुल्वस्यैव द्वितीयसंस्करणमिदमस्ति । उभयोः सूत्रयोर्मध्ये न केवलं विषयस्य समानत्वमस्ति, प्रत्युत श्लोकानामपि समरूपता मिलति । किञ्चोभयोर्मध्ये कतिपयान्यन्तराण्यपि सन्ति, विशेषतः क्रमव्यवस्थायाञ्चेति ।

## ( ग ) वाराहशुल्वसूत्रम्

शुल्वसूत्रमिदं मानवशुल्वसूत्रमिवैवाऽस्ति । मैत्रायणीयशुल्वसूत्रस्यापीदं छायामनुहरति । कृष्णयजुर्वेदेनैव सम्बद्धोऽयं ग्रन्थोऽस्ति ।

**टीकाकारः—**

काशीनिवासी नारदस्य पुत्रः शिवदासनामको विद्वान् आसीत् । अस्य जन्म विद्यापीठतया प्रथिते काश्यामेवाभवत् । अत्रैव विद्यापीठे स्थित्वा मानवशुल्वसूत्रस्य टीकाग्रन्थं निबबन्ध । शिवदासस्यानुजः शङ्करभट्टो मैत्रायणीयशुल्वसूत्रोपरि स्वकीयां टीकां निरमात् । द्वाभ्यां भ्रातृभ्यां स्व-स्वटीकाग्रन्थे श्रीरामवाजपेयीमतानि स्मर्यन्तेस्म, यतः शिवदासः रामवाजपेयीमहोदयस्य मतमित्युदाजहार । अयं हि महोदयः सायणस्य मतमपि समुद्धृतवान् । तेनास्य चतुर्दशशतकात्परवर्त्तित्वं सुप्रतीतमस्ति । शुल्वसूत्रैः सह सम्बद्धस्य प्राचीनसाहित्ये इयमेव रूपरेखा वर्त्तते ।

## ३. व्याकरणम्

वेदानां रक्षकत्वाद्, वेदार्थाविबोधने सहायकत्वात्, प्रकृतिप्रत्ययोपदेशपुरस्सरपदस्वरूपप्रतिष्ठापकत्वादर्थनिर्णयनकृत्साधनेष्वन्यतमसाधनत्वेन प्रयुक्तत्वाद् व्याकरणं नाम अङ्गं नितान्तमेव महनीयं श्रेष्ठञ्च तदङ्गेषु स्मृतम्। व्याकरणस्य व्युत्पत्ति( व्याक्रियन्ते शब्दा अनेनेति व्याकरणम् )लभ्योऽर्थोऽस्ति पदमीमांसाकरं शास्त्रम् । तद्वेदस्य मुखत्वेन स्मृतम्--

'मुखं व्याकरणं स्मृतम् ।'

भाषा लोकव्यवहारं प्रवर्तयति । यदि भाषा न स्यात् तर्हि जगदिदमन्धेतमसि मज्जेत् । यथोक्तं दण्डिना—

'इदमन्धंतमः कृत्स्नं जायते भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।।'

भाषायाः शुद्धये व्याकरणस्य अपेक्षा भवत्येव । न हि व्याकरणज्ञानशून्यः साधून् शब्दान् प्रयोक्तुमीशः ।

स्वयम् ऋक्संहितायामस्य व्याकरणशास्त्रस्य प्रशंसायाम् अनेके मन्त्रा भिन्न-भिन्नस्थानेषूपलब्धा भवन्ति । ऋग्वेदस्यैकस्मिन् सुप्रसिद्धमन्त्रे व्याकरणं वृषभस्य रूपकत्वेन प्रतिपादितमस्ति—

'चत्वारि शृङ्गाः त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्ता सोऽस्य ।
त्रिधाबद्धो वृषभो रोरवीति महोदेवो मर्त्याम् आविवेश ।।'
( ऋ० ४।५८।६ )

इत्यादिशब्दैस्तत्प्रशंसा श्रूयते । अस्य वृषभरूपी व्याकरणस्य चत्वारि शृङ्गाणि सन्ति—नामाख्यातोपसर्गनिपातरूपाणि । त्रिपादोऽस्य भूत-भविष्यवर्त्तमानाः । सुप्तिङन्तञ्च द्वे शीर्षे स्तः, सप्तविभक्तयश्च सप्तहस्ताः सन्ति । उरसि शिरसि च कण्ठे त्रयो बद्धो वृषभोऽयमस्ति । एवंविधव्याकरणज्ञानाद् योऽनभिज्ञोऽस्ति सः जानन्नपि न जानाति, पश्यन्नपि न पश्यति, शृण्वन्नपि न शृणोति। किञ्च यो हि जनो व्याकरणशास्त्रज्ञोऽस्ति, तत्सन्निधौ वाणी सुसज्जिता कामिनीव समागत्य सर्वतोभावेन समर्पिता भवति—

'उतत्वः पश्यन् न ददर्श वाचम् उतत्वः शृण्वन् न शृणोत्येनाम् ।
उतोत्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः ।।'
( ऋग्वे० १०।७१।१ )

आचार्यवररुचिर्व्याकरणशास्त्रस्य महनीयतां गायन् यदातदध्ययनप्रयोजनानि पञ्च प्रतिपादयति तदा महर्षिः पतञ्जलिस्तदध्ययनप्रयोजनानि त्रयोदश ब्रूते । तेन हि व्याकरणशास्त्रं नितरां प्राचीनं शास्त्रमस्ति । न हि व्याकरणज्ञानशून्यः साधून् शब्दान् प्रयोक्तुमीशः । वेदस्य रक्षार्थं व्याकरणाध्ययनमत्यावश्यकम् । 'रक्षार्थंवेदाध्ययनमध्येयं व्याकरणम्, लोपागमवर्णविकारज्ञो हि पुरुषः सम्यग्

**वेदान् परिपालयिष्यति**' इति पतञ्जलिः । वेदरक्षाक्षमतयैव व्याकरणस्य वेदाङ्गत्वमपि समर्थ्यते । व्याकरणस्य सर्वाणि प्रयोजनान्युक्तानि महाभाष्ये—'**रक्षोहागमलघ्वसन्देहाः प्रयोजनम् ।**' रक्षार्थं वेदानामध्येयं व्याकरणम् । ऊहः खल्वपि, न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः, ये चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः, तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् । एवमन्यान्यपि अपभाषण-दुष्टशब्द-अर्थज्ञान-धर्मलाभ-नामकरणादीनि प्रयोजनानि व्याख्यातानि महाभाष्ये ।

व्याकरणशास्त्रं तु नितरां प्राचीनशास्त्रमस्ति । वैदिकमन्त्रेषूपलभ्यमानास्तत्तत्पदविषयिण्यो व्युत्पत्तयोऽप्युपर्यभिहितमभिधानं परिपुष्णन्ति—

१. '**यज्ञेन यज्ञमजयन्त देवाः**' (ऋग्० १।१६४।५०) । यजयाचेत्यादिनङ् ।

२. '**ये सहांसि सहसा सहन्ते**' ( ऋग्० ६।६६।९ ) । सहधातोरसुन् उणादौ ।

३. '**धान्यमसि धिनुहि**' ( यजु० १।२० ) । धिनोतेर्धान्यम्, महाभारते ।

४. '**केतपूः केतं नः पुनातु**' ( यजु० ११।७ ) । क्विप् च ।

५. '**तीर्थैस्तरन्ति**' ( अथर्व० १८।४।७ ) । पातृतुदिव···इति स्थक्० उ० ।

व्याकरणशास्त्रस्य प्रमाणभूत आचार्यः पतञ्जलिर्व्याकरणशास्त्रस्य उपरिनिर्दिष्टानि प्रयोजनानि वर्णयन् 'चत्वारि शृङ्गाः' 'चत्वारि वाक्', 'उतत्वः', 'सक्तुमिव', 'सुदेवोऽसि'—इत्येतन्मन्त्रपञ्चकमुद्धरतिस्म । व्याख्याञ्च तदीयां व्याकरणशास्त्रपरकाञ्चकार । पतञ्जलेरपि प्राचीनतरो यास्कोऽपि 'चत्वारि वाक्' इत्येतस्य मन्त्रस्य व्याख्यां व्याकरणशास्त्रपरकमेव कुर्वाणोऽवाप्यते । व्याकरणमित्येतत्पदं यस्माद्धातोः निष्पद्यते, तस्यापि मूलार्थो यजुषि—'**दृष्ट्वा रूपे व्याकरोत् सत्त्वाऽनृते प्रजापतिः**' इत्येतस्मिन् वाक्ये प्रयुक्तः प्राप्यते ।

व्याकरणशास्त्रस्योत्पत्तिमधिकृत्य तु न निश्चप्रचतया किमपि कथनं सम्भवम् । इदं तु वक्तुं शक्यं यदुपलब्धवैदिकपदपाठेभ्यः प्राग् व्याकरणं शास्त्रं पूर्णतां गतं बभूव । प्रकृतिप्रत्ययधातूपसर्गसमासवत्पदविभागश्च कृत्स्नतया निर्धारितो जातो यदा तस्यानेहसो गतस्यानेकसहस्राब्दा व्यतीताः । वाल्मीकिरामायणस्य रचनाकाले व्याकरणशास्त्रस्याध्ययनमध्यापनञ्च सुव्यवस्थिततया प्रचलितमासीदित्येतद्धि—

> **'नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।**
> **बहु व्याहरताऽनेन न किञ्चिदपभाषितम् ।।'**

इत्यादिश्लोकेभ्यो विदितं जायते । महाभारतयुद्धकालवर्त्तिनि यास्क-निरुक्ते बहूनां व्याकरणाचार्याणामुल्लेखो दृश्यते । आचार्यः शाकटायनस्तु नैजं व्याकरणं यास्कादपि प्राक् लिलेख । तैत्तिरीयसंहितायामस्य विषयस्य सर्वंप्रथमस्तथा प्राचीनतमरुल्लेखो मिलति—

"वाग् वै पराच्य व्याकृताऽवदत्। ते देवा इन्द्रमब्रुवन्—'इमां नो वाचं व्याकुर्विति। सोऽब्रवीत्'—वरं वृणे, मह्यं चैवैष वायवे च सह गृह्यता इति। तस्माद् ऐन्द्रवायवः सह गृह्यते। तामिन्द्रो मध्यातोः वक्रम्य व्याकरोत्। तस्मा-दियं व्याकृता वामुद्यते।' ( तै० सं० ६।४।७।३ )

आचार्यपतञ्जलिः स्वकीये महाभाष्ये लिलेख—

'बृहस्पतिश्च वक्ता। इन्द्रश्च अध्येता। दिव्यं वर्षसहस्रमध्ययनकालः। अन्तं च न जगाम' ( महाभाष्ये पस्पशाह्निकम् )।

इत्थमगाधमनन्तञ्च शब्दार्णवमस्ति। अत एव पण्डितसमाजे एका प्रचलिता प्रसिद्धा गाथा चास्ति—

'समुद्रवद् व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।
तद्भागभागाच्च शतं पुरन्दरे कुलाग्रबिन्दूत्पतितं हि पाणिनौ॥'

पतञ्जलिमुनिर्लिखति—

'पुरा कल्प एतदासीत् संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते'। इत्येतेनापि व्याकरणं प्रति लोकस्य प्रवृत्तिश्चिरादासीदिति ज्ञायते।

यदा काऽपि भाषा व्यवहारातीततां प्रयाति तदा तस्या भाषाया ज्ञानं व्याकरणमन्तरेण न प्रतिपत्तुं शक्यं भवति। व्याकरणमेव भाषायाः स्वरूप-सङ्घटनं सर्वात्मना कुरुते। तस्माद् व्याकरणमेव भाषाज्ञानलाभाय सर्वेषामपि अष्टानां शक्तिग्राहकाणां मध्ये मूर्धन्यं स्थानमध्यास्ते। व्याकरणस्य नितान्त-मेवोपादेयतां श्रेष्ठताञ्च तत्र तत्रावलोक्यैव तन्महिम्नि बुधैरभिहितमिदम्—

'यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।
स्वजनः श्वजनो मा भूत् सकलं शकलं सकृच्छकृत्॥
शब्दशास्त्रमनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे।
बन्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना॥'

व्याकरणानि बहुभिर्वैयाकरणैर्महर्षिभिः प्रणीतानि। तेषु व्याकरणकर्त्तृषु विद्वत्सत्तमेषु—इन्द्रः, चन्द्रः, काशकृत्स्नः, आपिशलिः, शाकटायनः, पाणिनिः, अमरः, जैनेन्द्रः, इत्येतेऽष्टौ सन्ति सुप्रथिताः। न केवलमेतेषामष्टानामेव व्याकरणकर्तॄणां व्याकरणान्यपि तु अन्येषामपि आचार्याणां व्याकरणानि श्रूयन्ते। यथा—कौमारं सारस्वतं शाकलञ्च व्याकरणम्। व्याकरणकारान् अथ च व्याकरणान्यधिकृत्यैतच्छ्लोकद्वयं प्रथितमस्ति—

'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥
ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥'

अपरञ्च व्याकरणान्यष्टौ—

'प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमुच्यते ।
याम्यं प्रोक्तं ततो रौद्रं वायव्यं वारुणं तथा ॥
सावित्रञ्च तथा प्रोक्तमष्टमं वैष्णवं तथा ॥'

( भविष्यपुराणे ब्राह्मपर्वणि )

लघुत्रिमुनिकल्पतरुकृतस्तु नव व्याकरणानि स्मरन्ति—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥'

अनेन व्याकरणानामष्टविधत्वमेव प्रसिद्धम् । यथोक्तं भास्करेण—**'अष्टौ व्याकरणानि षट् च भिषजां व्याचष्टा ताः संहिताः'** इति भविष्यपुराणोक्तानि व्याकरणानि तु प्रसिद्धानि । ऐन्द्रादीन्येव प्रसिद्धानि ।

एतैर्निर्देशैरिन्द्रेण व्याकरणस्य रचना कृतेत्यस्य वर्णनं स्फुटमेव प्रतिभाति । व्याकरणमिदं ग्रन्थरूपे आसीदित्यस्यापि प्रमाणं मिलत्येव । यथा—

नन्दिकेश्वरः 'काशिका'-वृत्तेः तत्त्वविमर्शिनीव्याख्यायामुपमन्युना लिखितम्—**'तथा चोक्तम् इन्द्रेण अन्तर्वर्णसमुद्भूता धातवः परिकीर्त्तिता'** इति ।

वररुचिः ऐन्द्रनिघण्टुरित्येतस्यारम्भे एवास्य निर्देशं कृतवान्—

'पूर्वं पद्मभुवा प्रोक्तं श्रुत्वेन्द्रेण प्रकाशितम् ।
तद्बुधेभ्यो वररुचिः कृतवानिन्द्रनामकम् ॥'

वोपदेवेन संस्कृतस्य मान्येषु व्याकरणसम्प्रदायेषु प्रथमस्थानमिन्द्रमेव प्रदत्तम्—

'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥'

सारस्वतप्रक्रियायामनुभूतिस्वरूपाचार्येण निगदितम्—

'इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः ।
प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं कथं नरः ॥'

डा० वर्नलमहोदयस्य कथनानुसारेण तमिलभाषाया आद्यव्याकरणं 'तोलक़प्पियमि'त्याख्ये व्याकरणे ऐन्द्रव्याकरणादेव साहाय्यं गृहीतम् । वररुचिः 'भवन्ती' 'अद्यतनी' 'ह्स्तनी' इत्यादीनां पारिभाषिकशब्दानामुल्लेखं कृतवान्, ते पाणिनेः 'लट्, लुङ्, लिट्' इत्यादिशब्देभ्यः प्राचीनमस्ति । एतेषां प्रयोगः ऐन्द्रव्याकरणेऽप्यस्ति इत्यनुमीयते ।

**'वर्त्तमाने लट् ( ३।२।१२३ )—वार्त्तिक-प्रवृत्तस्य विरामे शिष्या भवन्त्या-वर्त्तमानत्वात् । भवन्तीति लटः पूर्वाचार्यसंज्ञा' ( कैयटः ) ।**

गोपथब्राह्मणे व्याकरणविषयाः सन्ति निर्दिष्टाः । स्पष्टतो व्याकरणशास्त्रस्येतिहासावलोकनेन विदितं भवति यद् भारते पुरा अनेके व्यारकणकर्त्तार

आचार्या बभूवुः । तत्र आपिशलि-शाकटायन-गालवेन्द्रादीनां व्याकरणकर्त्तॄणा-मुल्लेखः कृतोऽवाप्यते । परं साम्प्रतं तु पाणिनीयं व्याकरणमेव प्राप्यते । तत्कृतो ग्रन्थः—'अष्टाध्यायी' सर्वाङ्गसुललितो भूत्वा विभाति । तत्र वैज्ञानिक्या पद्धत्या व्याकरणं प्रतिपादितमस्ति । यादृशं हि सुललितं देववाण्याः शास्त्रीयं विवेचनं तत्र दृश्यते, नान्यत्र तादृशं क्वाऽपि विलोक्यते । तत्र लौकिकं वैदिकमुभयविध-मपि व्याकरणमाम्नातम् ।

अधुना सर्वत्र प्राधान्येन पाणिनीयं व्याकरणमेव प्रचलितं वर्त्तते । इदं हि पाणिनीयं व्याकरणं नितरामेव सुसमृद्धं, सुसम्पन्नं, सुललितं सर्वाङ्गीणं व्याप-कञ्च विद्यते । श्रीसत्यव्रतसामश्रमिप्रभृतीनां विचारविचक्षणानां तु मतमिदम्—

'पाणिनितः प्राचीनमेवंविधं सर्वतोमुखं व्याकरणं नासीदेव । इन्द्रचन्द्रादयस्तु आदिशाब्दिका एव बभूवुर्न च व्याकरणकर्त्तारः । शाब्दिकत्वं तु शब्दशास्त्र-पारङ्गतत्वम्, शब्दशास्त्रप्रचारकत्वमित्यादिभिरनेकैः प्रकारैर्व्यवहर्त्तुं शक्यमस्ति । शब्दशास्त्रपदेन च न केवलं व्याकरणमपि तु कोश-मीमांसादिकमपि गृह्यते । शब्दपदेन च पदं वाक्यञ्चोभयमपि सङ्ग्रहीतुं शक्यमतो वाक्यार्थनिर्णायिका मीमांसाऽपि शब्दशास्त्रं ये चैतेऽष्टौ शाब्दिकाः कीर्त्तितास्तेषु विभिन्नप्रकारकमेव शाब्दिकत्वं प्रमाणान्तरैः सिद्ध्यति । ते हि शब्दकोशरूप-व्याकरणनिर्मातार एव सिद्ध्यन्ति ।' इदं हि स्वीयं मतं प्रकाशयन्तः श्रीमन्तः सामश्रमीसत्यव्रतमहाशया मन्यन्ते यत् पाणिनेः पूर्वं कस्यापि व्याकरणस्य सत्ता नानुमातुं शक्या भवति । इतरप्रमाणदर्शनाभावात् । अतः पाणिनिरेव प्रथमो व्याकरणकर्त्ता स्वीकार्यः ।

पाणिनिरेव प्रथमो व्याकरणकर्त्तेत्यत्र न सर्वे विद्वद्वराः श्रद्दधते । तेषां कथनमिदं यद्यपीदानीं पाणिनीयव्याकरणात् प्राक्तनं किमपि व्याकरणं सर्वाङ्ग-पूर्णं न प्राप्यत इति सत्यं, किन्तु पाणिनेः पूर्वं किमपि व्याकरणं नाऽऽसीदेवेति नाभ्युपगन्तुं शक्यम् । सन्ति तत्र कानिचन साक्षीणि तत्त्वानि, तैः सिद्धं भवति यत् पाणिनिमहर्षेः प्रागपि व्याकरणस्य सत्ताऽऽसीदेव । तथा हि पाणिनिरेव 'आङि चापः' इति तृतीयाविभक्तेरेकवचनमाङ्शब्देनाह, न च तृतीयैकवचनं तेन 'आङ्' इति पठितं, किन्तु 'टा' इति । तत्र 'आङिति टा संज्ञा प्राचाम्, इत्येव व्याख्यातारो ब्रुवते । तेनेदमेव सिद्ध्यति यत् प्राचीनेषु व्याकरणेषु तृती-यैकवचनं 'आङ्' इत्येव श्रुतमासीत्, तत स्वपरिभाषायां ङित्वप्रयुक्तानि कर्माणि परिहर्त्तुं पाणिनिना 'टा'-रूपतां प्रापितम्, परं प्राक्तनव्याकरणसंस्कारवशात् तस्यापि स्मरणरक्षणार्थञ्च सूत्रम् 'आङ्' अपि निर्देशितं तेन । तथैव 'औङ् आपः' इत्यपि । न हि प्रथमाद्वितीययोर्द्विवचने 'औङ्'-प्रत्ययः पाणिनिना स्वाध्यायकर-णेऽभ्युपगतः, अपितु 'औ ''औट्' इति । प्राक्तनव्याकरणसंस्कारवशात् तु सूत्रे 'औङ्' इत्यप्युच्चारितम् ।

अन्यच्च 'कर्मणि द्वितीया' 'कर्त्तृकरणयोस्तृतीया' इत्यादिषु 'द्वितीया' 'तृतीया' नाम्ना विभक्तयः पाणिनिना विहिताः, न तु द्वितीयातृतीयादिसंज्ञाः

स्वशास्त्रे कृताः, तत्राऽपि प्राक्तनव्याकरणदृष्टसंज्ञाभिरेवाऽत्र व्यवहार इति व्याचक्षते व्याख्यातारः। अन्यच्च—'त्रितुत्रथसिसुसरकसेषु च' इति दशसु कृत्प्रत्ययेषु पठ्यन्ते, तस्माद् व्याकरणान्तरस्थाऽप्यत्रानूदिता इत्येव वक्तव्यं स्यात्। किञ्च स्तम्भु-स्तुम्भुप्रभृतिधातवो न पाणिनीये धातुपाठे दृश्यन्ते। ते धातवश्च पूर्वव्याकरणसंस्कारेणैव पाणिनिना स्वसूत्रेषु निबद्धाः, इत्येव स्वीकर्त्तुमापतति। एवं 'चर्करीतञ्च' इत्यदादिगणे पाणिनिना, यङ्लुगन्तं तेन गृह्यते इति व्याख्यातार आहुः। न हि पाणिनीये व्याकरणे यङ्लुगन्तं चर्करीतमिति परिभाष्यते, प्राक्तनेष्वेव व्याकरणेषु कारितमिति णिजन्तं, चिकीर्षितमिति सन्नन्तं, चेक्रीतमिति यङन्तं, चर्करीतमिति यङ्लुगन्तं व्यवहृतमासीत्। तस्मात्प्राचीनव्याकरणसंस्कारमात्रेणैव पाणिनिना 'चर्करीतञ्च' इत्यादौ सन्निवेशितम्। इदं दिङ्मात्रप्रदर्शितमपि स्पष्टमेव द्रढीयस्कतया ज्ञापयति यत् पाणिनेः प्रागपि व्याकरणस्य सत्ता आसीत्।

पाणिनिरष्टाध्याय्यां स्वकीयायां दश प्राचीनान् व्याकरणाचार्यान् स्मरति सादरमेतेषु सूत्रेषु—'वा सुप्यापिशलेः ६।१।९२, तृषिमृषिकृषेः काश्यपस्य १।२।२५, ओतो गार्ग्यस्य ८।३।२०, तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ७।१।७४, ई ३ चाक्रवर्मणस्य ६।१।१३०, ऋतो भारद्वाजस्य ७।२।६३, लङः शाकटायनस्यैव ३।४।१११, लोपः शाकल्यस्य, ८।३।१९, अवङ् स्फोटायनस्य ६।१।१२३, गिरेश्च सेनकस्य ५।४।११२।

मीमांसकयुधिष्ठिरः 'संस्कृत-व्याकरणशास्त्र का इतिहास' इत्येतन्नामके स्वकीये ग्रन्थे पाणिनेः प्राग्वर्तिनस्त्रयोदश आचार्यानन्यानपि निर्दिशति, तेनोल्लेखेन सिद्ध्यतीदं यत्ततः प्राक् त्रयोविंशत्याचार्या उद्बभूवुः। बहूनि प्रमाणानि समुद्धृत्याचार्यमीमांसको मन्यते यत् सञ्जातस्य पाणिनेः साम्प्रतिकात् कालात् ४८२१ वर्षाणि व्यतीतानि। परमाधुनिकानां प्रतीच्यानां विपश्चितां तु मान्यतेयं यत्पाणिनेर्जातस्य प्रायेण प्रायः २७०० वर्षाणि व्यतीतानि।

सम्प्रति व्याकरणरूपी वेदाङ्गस्य प्रतिनिधिर्व्याकरणमेकमेवाऽस्ति 'पाणिनीयं व्याकरणम्'। महर्षिपाणिनिना प्रायः ४००० अल्पाक्षरैः सूत्रैः संस्कृतभाषाया नितान्तं वैज्ञानिकं व्याकरणं प्रस्तुत्य विदुष आश्चर्यचकितं कृतम्। वैज्ञानिकदृष्ट्या देवभाषाया यावत् सुष्ठु शास्त्रीयविवेचनं पाणिनिना कृतम्, तादृशं विवेचनमन्यत्र दुर्लभमस्ति। पाणिनिरिव भाषामर्मज्ञो वैयाकरणः संसारेऽन्यत्र समुपलब्धो नाऽस्ति। पाणिनेर्ग्रन्थः अष्टास्वध्यायेषु विभक्तोऽस्ति, तेनैव कारणेनास्य ग्रन्थः 'अष्टाध्यायी' इति नाम्ना ख्यातोऽस्ति। समयस्त्वस्य ईसापूर्व-षष्ठशतकमस्ति।

पाणिनीयस्य व्याकरणस्य परममहत्त्वपूर्णमङ्गं कात्यायनस्य वार्तिकपाठोऽस्ति। इममन्तरेण वस्तुतः पाणिनीयं व्याकरणमपूर्णमेव प्रतिभाति। पाणिनि-

नाऽऽख्यातान् संस्कृतसाहित्ये प्रयुक्तान् शब्दान् व्याख्यातुमेव ईसापूर्वचतुर्थशतके कात्यायनेन वार्त्तिकानां रचना कृतेति। कात्यायनस्य वार्त्तिकपाठमिदं पाणिनीयस्य व्याकरणस्य महत्त्वपूर्णमङ्गमस्ति। इममन्तरेण वस्तुतः पाणिनीयं व्याकरणमपूर्णम् एव प्रतिभाति। पतञ्जलिः कात्यायनस्य वार्त्तिकपाठमवलम्ब्यैव तत्र नैजं महाभाष्यमरचयत्। पतञ्जलिभगवत एषा हि महाभाष्याख्या रचना पाणिनीयं व्याकरणं सरलया सरसया च रीत्या व्याचष्टे। सकलेऽपि संस्कृतवाङ्मये महाभाष्यं वस्तुतोऽद्वितीयो ग्रन्थः। सर्वेऽपि विद्वांसो मुक्तकण्ठतया प्रशंसन्ति ग्रन्थमिमम्। ईसापूर्वद्वितीयशतकेऽस्य ग्रन्थस्य निर्माणमभवत्। व्याकरणस्य दार्शनिकसिद्धान्तानां मीमांसा प्रथमत अत्रैवोपलब्धा भवति। व्याकरणस्य पाणिनिः, कात्यायनः, पतञ्जलिरेव मुनित्रयमस्ति।

महाभाष्यानन्तरं व्याकरण-दर्शनस्य सर्वाधिकप्रधानो ग्रन्थो वाक्यपदीयोऽस्ति। अस्य ग्रन्थस्य रचयिता षष्ठशतकोद्भवो भर्त्तृहरिरासीत्। वाक्यपदीये व्याकरणशास्त्रस्य दार्शनिकस्वरूपं स्फुटरूपेणाभिव्यक्तं भवति। व्याकरणन्तु शैवागमान्तर्गतमेवास्ति। अस्य स्वीया विशिष्टा साधनप्रक्रियाऽस्ति। भर्त्तृहरिः शब्दाद्वैतस्य संस्थापक आसीत्। तस्य विचारे 'स्फोट' एवैकमात्रं परमतत्त्वमस्ति। जगदिदं तस्यैव विवर्त्तरूपमस्ति। काश्मीरनिवासिना कैयटेन विरचितं 'भाष्यप्रदीपम्' महाभाष्यीयसिद्धान्तस्य प्रदीपमिव प्रकाशयिता एकमात्रो ग्रन्थरत्नमस्ति। प्रदीपस्योद्योताख्या व्याख्या नागेशभट्टेन लिखिताऽस्ति। व्याकरणशास्त्रस्येतिहासे भट्टोजिदीक्षितेनैकस्याभिनवयुगस्य स्थापना कृता। अस्य त्रयः सुप्रसिद्धा ग्रन्थाः सन्ति—(१) सिद्धान्तकौमुदी, (२) शब्दकौस्तुभः, (३) मनोरमा चेति। दीक्षितपरम्परायामेव नागेशभट्टः उद्भटवैयाकरणोऽभवत्। अस्य विदुषः प्रतिभा बहुमुखी आसीत्। अस्य परिभाषेन्दुशेखरः पाणिनिव्याकरणस्य सर्वमान्यग्रन्थोऽस्ति। अस्य शब्देन्दुशेखरः मनोरमाया विस्तृता व्याख्याऽस्ति। अस्य 'लघुमञ्जूषा' शब्दार्थयोः सिद्धान्तस्य मीमांसकः सर्वश्रेष्ठग्रन्थोऽस्ति। नागेशभट्टः काशीनिवासी आसीत्। अष्टादशशतकस्य पूर्वार्द्धेऽयं विद्यमान आसीत्।

व्याकरणस्य यानि प्रयोजनानि पतञ्जलिर्महाभाष्ये निजगाद तत्र यदि मनागपि दृक्पातो न क्रियेत तदा व्याकरणस्य महनीयता तदीयोपादेयता तन्महत्ता च सम्यगवबोद्धुं नास्ति शक्या। ऋषिर्ब्रूते यद्वेदानां रक्षायै व्याकरणस्याध्ययनमपेक्ष्यते। यो जनो लोपागमवर्णविकारज्ञो भवति स एव वेदान् साधु रक्षितुमर्हति। तथा हि—वेदे 'जहार' इत्येतस्य क्रियापदस्य स्थाने 'जभार' इत्येतत् क्रियापदं प्रयुज्यते। व्याकरणानभिज्ञस्य दृष्टचा 'जभार' इत्येतत्क्रियापदं न शुद्धम्, स 'जहार' इत्येतदेव शुद्धं मत्वा 'जभार' इत्येतत्पदमनुच्चार्य 'जहार' इति प्रयोक्तुमुपक्रान्तो भविष्यति। कुफलञ्चैतदीयमिदं स्याद् वेदोऽनेकपरिवर्त्तितपदवान्। अयं हि महाननर्थो व्याकरणज्ञानशून्यतया निपातितो भवेत्। तस्माद् व्याकरणस्याध्ययनमतितरामपेक्ष्यते।

व्याकरणाध्ययनेन विभक्तिविपरिणामस्य च बोधो जायते तस्माद् व्याकरणमवश्यमध्ययनीयमस्ति । न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्राः सन्ति निगदिताः । ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्या भवन्ति । नावैयाकरणस्तान् यथायथं विपरिणमयितुं शक्नोति । तथाहि 'अग्नये त्वा जुष्टं निर्वपामि' इत्येतदस्ति वेदवाक्यम् । इदं हि वाक्यमग्निदेवताकं वर्त्तते । निर्वापकाले अग्निदेवतामुद्दिश्य मन्त्रोऽयं पठितो भवति । परं यदा सूर्यदेवतां लक्ष्यीकृत्य निर्वापः कृतो भवति तदा सूर्याय त्वा जुष्टं निर्वपामि, इत्येतेन विपरिणामेन पठनीयो भवति मन्त्र एषः । इमं हि विपरिणामं वैयाकरण एव सम्यग् यथायथं कर्त्तुं पारयति ।

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'—इत्येतस्मादपि हेतोर्व्याकरणस्याऽध्ययनं परमापेक्षितं भवति । वेदस्य षडङ्गत्वात् षटत्स्वङ्गेषु च व्याकरणस्य प्रधानत्वात् ।

सुलभतया यथार्थज्ञानं व्याकरणं विना न भवितुमर्हति अतोऽपि व्याकरणस्य पठनमपेक्ष्यते । इदं तु विदितमेव वर्त्तते यद् जिज्ञासुनाऽवश्यमेव शब्दस्य कार्यं ज्ञानम् । शब्दस्य ज्ञानं व्याकरणं विहाय न केनाप्यन्येन सुलभेनोपायेन शक्यम् ।

संशयराहित्यनिमित्तेनाऽपि व्याकरणमध्येयमस्ति । याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति तस्यां सन्देहोऽयमस्ति—स्थूला चासौ पृषती च स्थूलपृषतीति कथनमभिप्रेतं किं वा स्थूलानि पृषन्ति यस्याः सा स्थूलपृषतीकथनमिष्टम् ? अवैयाकरणस्तां न स्वरतोऽध्यवसति । यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः । अथान्तोदात्तत्वं ततस्तत्पुरुष इति ।

एतेन विवेचनेन व्याकरणस्योपादेयत्वं तन्महत्त्वञ्च समुपस्थापयन् आचार्यपतञ्जलिस्तस्यान्यानि च कतिपयानि महत्त्वानि प्रस्तौति । स आह यद् व्याकरणं हि यो नरो न जानाति स शुद्धमपि वक्तुं न शक्नोति । शुद्धोच्चारणलाभाय व्याकरणस्याध्ययनं कर्त्तव्यम् । अशुद्धोच्चारणकर्त्ता शिक्षितसमाजे निन्दितो भवति । तस्माद् विज्ञेन सततमुच्चारणस्य शुद्धता समुपासनीयेति ।

अध्ययनं तदेव लाभप्रदं भवति यदर्थाभिधारणपूर्वकं विधीयते । अर्थावधारणायाः कृते व्याकरणस्य ज्ञानमपेक्षितं जायते । यदध्ययनं विनाऽर्थावबोधं कृतं जायते तदध्ययनं सदैवाध्येतारं दुनोति । तदध्ययनं तु तदर्थं भाररूपमेव जायते । मया यत्किमपि पठितं तन्न जाने किं पठितमिति विचार्य सखिन्नमना जायते । अतस्तस्मात् स जुगुप्सते । कथनस्य प्रयोजनमिदमेव यद् यत् किमपि पठनीयं जनेन तद्बोधपूर्वकं पठनीयम् । बोधपूर्वकं पठनं तदैव सम्भवं भवितुमर्हति यदा व्याकरणस्य ज्ञानं स्यात् । इत्थं हि विद्वान् पतञ्जलिर्व्याकरणस्य महत्त्वं विदधानोऽग्रे पुनराह—मानवेन शब्दप्रयोगे प्रवीणेन भवितव्यम् । कः

शब्दः केन प्रकारेण प्रयोक्तव्य इत्येतद् यो जानाति सः स्वीयेनैकेनाऽपि शब्देन नैजं प्रभावं जनताया मानसे समुपस्थापयितुं शक्नोति । जनतां स तां दिशां नेतुमर्हति यां दिशं प्रति तस्या आवर्जनं तस्येष्टं भवति ।

शब्दज्ञ एव समुदाचारस्य विधिं प्रयोक्तुमर्हति । अस्य कथनस्य तात्पर्यमिदमस्ति यत् समुदाचारे किं वा सामाजिकव्यवहारे शब्दस्य पदस्य चोच्चारणं केन विधिना कार्यमित्यपि कोऽपि शब्दज्ञ एव साधु वेत्ति यतः स एव यथाऽवसरे ह्रस्व-दीर्घप्लुतोच्चारणस्य महत्त्वं जानाति, तेन व्याकरणाध्ययनस्य प्रयोजनं सुस्पष्टमेवेति । वैयाकरण एव यज्ञे प्रयुक्तान् मन्त्रान् सविभक्तिकान् विधाय पठितुं समर्थो भवति, तदर्थमपि व्याकरणस्याध्ययनमपेक्षितमस्ति । यज्ञकर्मणि स एव विद्वान् अधिकारी भवितुमर्हति यः पदोच्चारणं तथा करोति यथा न किमपि पदं न कोऽपि स्वरो न च किमप्यक्षरमस्फुटं स्यात् । यज्ञाधिकारस्य लाभार्थमपि व्याकरणमध्येतव्यम् । 'शब्दो ब्रह्मः' तेन हि शब्देन सह तादात्म्ये सति शब्दस्य परब्रह्मभूतेनार्थेन सहापि तादात्म्यं भवितुं शक्नोतीत्येतस्मादपि व्याकरणस्य ज्ञानमपेक्षितम् । वाक्यगतस्यार्थज्ञानस्यापि लाभाय व्याकरणं पठनीयमस्ति । नापि श्रुतेन न चापि लिखितेन वाक्येन न तावत् किमपि कार्यं भवितुमर्हति यावद् वाक्यगतार्थस्य साधुज्ञानं न जायते । वस्तुतः तदनवगतार्थं वाक्यन्तु तिरश्चां वचनमिव निरर्थकमेव, तदर्थमपि व्याकरणस्य ज्ञानं काङ्क्ष्यते ।

आचार्यपतञ्जलिवर्णितानि व्याकरणाध्ययनप्रयोजनानि ह्युपर्यभिहितान्येतानि व्याकरणस्य महत्तां तदीयामनन्यगामिनीञ्चोपादेयतामुच्चैरुद्घोषयन्ति ।

## ( ४ ) निरुक्तम्

निरुच्यते निश्शेषेणोपदिश्यते तत् तदर्थावबोधनाय पदजातं यत्र तन्निरुक्तमिति कथ्यते । निरुक्तं निघण्टोर्महत्त्वपूर्णा टीकाऽस्ति । निघण्टौ वेदस्य कठिनशब्दानां समुच्चयमस्ति । निघण्टुग्रन्थस्य सङ्ख्याविषये पर्याप्तं मतभेदमस्ति । सम्प्रति समुपलब्धो निघण्टुग्रन्थ एक एवास्ति, किञ्च प्राचीनपरम्पराया अनुशीलनेन ज्ञातो भवति यन्निघण्टुग्रन्था अनेके सन्ति । ( द्रष्ट० दुर्गावृत्तिः पृ० ३ ) निरुक्तस्यारम्भे 'निघण्टुम्' 'समाम्नाय' इत्येतेन पदेनाभिधीयते । तेनास्य प्राचीनत्वं प्रमाणितं भवति । महाभारतस्य मोक्षधर्मपर्वानुसारेणास्य निघण्टो रचयिता प्रजापतिकश्यप आसीत्—

**'वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत ।**
**निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम् ॥**
**कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।**
**तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥'**

( महा० मो० ध० प० अ० ३४२, श्लो० पृ० ८६–८७ )

वर्त्तमाने निघण्टुग्रन्थे 'वृषाकपिः' शब्दः सङ्गृहीतोऽस्ति। अतः पूर्वोक्त-कथनानुसारेण ज्ञातो भवति यन्महाभारतकालेऽस्य निघण्टुग्रन्थस्य निर्मातृपदेन प्रजापतिः कश्यप एव प्रख्यात आसीत्। निघण्टौ पञ्चाध्यायाः सन्ति। आदिम-स्त्रयोऽध्याया 'नैघण्टुककाण्डम्' इत्यभिधीयते। चतुर्थोऽध्यायो नैगमकाण्डम्, पञ्चमोऽध्यायो दैवतकाण्डमिति पदेन व्यपदिश्यते। प्रथमतस्त्रिष्वध्यायेषु पृथिव्यादिबोधकानामनेकशब्दानामेकत्र सङ्ग्रहोऽस्ति। द्वितीयकाण्डमेकपदीयमपि कथ्यते। 'नैगमः' इत्येतस्य पदस्य तात्पर्यमिदमस्ति यदेतस्य प्रकृतिप्रत्ययस्य यथार्थावगमनं न भवति—**'अनवगतसंस्कारांश्च निगमान्।'** दैवतकाण्डे देवतायाः स्वरूपस्थानयोर्निदेशो मिलति।

## निघण्टु-व्याख्याकाराः

सम्प्रति निघण्टुग्रन्थस्यैका एव व्याख्या समुपलब्धा भवति। अस्या व्याख्याया रचयिता देवराजयज्वाऽस्ति। अस्य पितामहस्यापि नाम देवराज-यज्वा एवासीत्। अस्य पितुर्नाम यज्ञेश्वरोऽस्ति। अयं हि विद्वान् 'रंगेशपुरी' इत्याख्यस्य नगरस्य पार्श्ववर्त्तिनः कस्याऽपि ग्रामस्य निवासी आसीत्। नाम्ना प्रतीतो भवति यदयं विद्वान् सुदूरदक्षिणभारतस्यैव निवासी आसीत्। अस्य समयस्य विषये मतद्वयं प्रचलितमस्ति। केषाञ्चिद्विदुषां मते विद्वानयं सायणा-त्परवर्त्ती आसीत्, किञ्च यथार्थतः सायणात्पूर्ववर्त्ती एवायमासीत्। आचार्य-सायणेन ऋग्वेदीयमन्त्रस्य (१।६२।३) स्वकीये भाष्ये निघण्टुभाष्यवचनस्यो-ल्लेखः कृतः। उल्लेखोऽयं देवराजयज्वनः भाष्येऽपि किञ्चित्पाठान्तरेण समुप-लब्धो भवति। अस्माद्भाष्यादतिरिक्तं न कमप्यन्यं निघण्टुभाष्यं विद्यमान-मस्ति। देवराजयज्वा स्वभाष्यस्योपोद्घाते क्षीरस्वामिनस्तथाऽनन्ताचार्यस्य निघण्टुव्याख्यायारुल्लेखं कृतवानस्ति। यथा—**'इदं च·······क्षीरस्वामी अनन्ता-चार्यकृतां निघण्टुव्याख्यां·······निरीक्ष्य क्रियते।'** अनन्ताचार्यस्योल्लेखोऽत्र प्रथम एवास्माकं मिलति। क्षीरस्वामिनो मतस्योल्लेखोऽत्र बहुलतया कृतोऽस्ति। क्षीरस्वामी अमरकोशस्य प्रसिद्धः टीकाकारोऽस्ति। यज्वन उद्धरणम् 'अमर-कोशोद्घाटने' यथावदुपलब्धं भवति। अतो निघण्टुव्याख्यया यज्वनेऽभिप्रायः अस्यामरकोशस्यैव व्याख्यया प्रतीतो भवति। अस्य भाष्यस्य नाम—'निघण्टु-निर्वचनमस्ति। स्वप्रतिज्ञानुसारेण देवराजयज्वा नैघण्टुककाण्डस्यैव निर्वचन-मधिकेन विस्तरेण कृतवान् (**'विरचयति देवराजो नैघण्टुककाण्डनिर्वचनम्'—श्लो० ६**)। अन्यकाण्डानां व्याख्याऽत्यल्पाऽऽकाराऽस्ति। अस्य भाष्यस्योपोद्घातो वैदिकभाष्यकर्तॄणामिति वृत्तावबोधनाय नितान्तं प्रयोजनीयोऽस्ति। अस्मिन्नु-पोद्घाते स्कन्दस्वामिनः ऋग्भाष्यटीकातः, महेश्वरस्य निरुक्तभाष्यटीकातश्च साहाय्यं गृहीतमस्ति। प्राचीनप्रामाण्यादपि सुष्ठूद्धरणानि सन्त्यनेकानि च। सायणात्पूर्ववर्त्तित्वेनास्य व्याख्यायास्तथा निरुक्तेश्च विशेषं महत्त्वमस्ति।

## निरुक्तकालः

**निरुक्तयुगम्**—निघण्टुकालानन्तरं निरुक्तानां समयः प्रारम्भो भवति। दुर्गाचार्यानुसारेण निरुक्तं चतुर्दशसङ्ख्यकमासीत्। (**'निरुक्तं चतुर्दशप्रभेदम्'**—दुर्गवृ० १।१३)। यास्कस्योपलब्ध-निरुक्ते द्वादशनिरुक्त-कर्तॄणां नामानि मतानि च निर्दिष्टानि सन्ति। एतेषां नामाक्षरक्रमेणैवमस्ति—१. अग्रायणः, २. औपमन्यवः, ३. औदुम्बरायणः, ४. और्णवाभः, ५. कात्थक्यः, ६. क्रौष्टुकिः, ७. गार्ग्यः, ८. मालवः, ९. तैटिकिः, १०. वार्ष्यायणिः, ११. शाकपूणिः, १२. स्थौलाष्ठिविश्च। त्रयोदशस्तु स्वयं यास्क एवास्ति। एतेषां त्रयोदशतमानामाचार्याणामतिरिक्तः कोऽस्ति चतुर्दश आचार्यः? इति त्वज्ञात एवास्ति। एतेषु ग्रन्थकारेषु शाकपूणेर्मतमाधिक्येनोद्धृतमस्ति। बृहद्देवतायामपि अस्य मतस्योल्लेखो मिलति। बृहद्देवतायां तथा पुराणेषु च शाकपूणेः 'रथीतर-शाकपूणि'नाम्ना स्मृतोऽस्ति।

## यास्कस्य निरुक्तम्

निरुक्तं वेदानां षडङ्गेषु अन्यतममस्ति। सम्प्रति यास्करचितनिरुक्तमेवास्य वेदाङ्गस्य प्रतिनिधिग्रन्थोऽस्ति। अस्मिन् निरुक्ते द्वादशाध्यायाः सन्ति। अन्ते द्वावध्यायौ परिशिष्टरूपेण स्तः। अनेन प्रकारेण समग्रग्रन्थोऽयं चतुर्दशाऽध्यायेषु विभक्तोऽस्ति। परिशिष्टभागमप्यर्वाचीनमिति वक्तुं न शक्यते। यतो यास्क इव उव्वटोऽपि परिशिष्टभागात्परिचित आसीत्। उव्वटः स्वकीये यजुर्वेदभाष्ये (१८।७७), निरुक्ते (१३।१३) समुपलब्धं वाक्यं निर्दिष्टमकरोत्। अतोऽस्यांशस्य भोजराजात्प्राचीनत्वं स्वतः सिद्धमस्ति। यास्ककृतं निरुक्तन्तु निघण्टुग्रन्थस्य व्याख्याऽस्ति। अतोऽस्य वेदाङ्गत्वमनुपपन्नमित्याशङ्क्य समाधत्ते—**'अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्।'** अन्यच्च—**'एकैकस्य पदस्य सम्भाविता अवयवार्था यत्र निःशेषेण उच्यन्ते तदपि निरुक्तम्।'** अतोऽस्य वेदाङ्गत्वं सिद्धम्।

यास्कस्य प्राचीनतायां नाऽत्र लेशतोऽपि सन्देहस्यावकाशः। पाणिनेरपि प्राचीनतरोऽयमस्ति। संस्कृतभाषाया यो विकासो यास्कस्य निरुक्ते मिलति तत्पाणिनेरष्टाध्याय्यां व्याख्यातरूपतः प्राचीनतरमस्ति। महाभारतस्य मोक्षपर्वानुसारेण निघण्टोः कर्त्ता यास्को नाऽऽसीत्। अस्य रचयिता कोऽपि प्रजापतिः काश्यप आसीत्—

**'वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत।**
**निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम्॥'**
**'कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते।**
**तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः॥'**

(महा० मो० प० अ० ३४२, श्लो० ८६-८७)

तत्रैव निघण्टोर्व्याख्याता यास्क आसीत्, इत्यस्य प्रमाणमपि समुपलब्धमस्ति—

'लिपिविष्टेति चाख्यायां हीनरोमा च योऽभवत् ।
तेनाविष्टं तु यत्किञ्चित् शिपिविष्टेति च स्मृतः ।।
यास्को मामृषिरव्यग्रोऽनेकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद् गुह्यनाम परोह्यहम् ।।
स्तुत्वा मां शिपिविष्टेति यास्कः ऋषिरुदारधीः ।
मत्प्रसादादधोनष्टं निरुक्तमधिजग्मिवान् ।।'

( म० भा० शा० प० श्लो० ६९–७१ )

इत्यादिना प्रमाणितस्य यास्कस्य कः काल इति विचारे प्रस्तुते—( क ) महाभारतस्योपरिलिखितपद्यद्वयस्योद्धरणात् ततोऽर्वाचीनो महाभारतः, ( ख ) पाणिनिः स्वकीये **'वासुदेवार्जुनाभ्यां वुन्'** ४।३।९८ इत्यस्मिन् सूत्रे 'कृष्णाऽर्जुनौ' स्मृतवानिति ततोऽयं प्राचीनः। पाणिनिः पाण्डुपुत्रादर्जुनात्परवर्त्ती सिद्धो भवति । पाण्डुपुत्राणां समयस्तु राजतरङ्गिण्याम्—

'शतेषु षट्सु सार्ऽर्धेषु त्र्यधिकेषु च भूतले ।
कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः ।।'

इदं सर्वं विचार्य ख्रीष्टपूर्वनवमशतकस्य पूर्वार्द्धे यास्करजायतेति प्रतीयते । यास्कस्यास्य ग्रन्थस्य महत्ताऽत्यधिकाऽस्ति । ग्रन्थस्यारम्भे यास्को निरुक्तस्य सिद्धान्तस्य वैज्ञानिकं प्रदर्शनमकरोत् । वेदार्थानुशीलनाय तदाऽनेकपक्षा आसन् । येषां नामानि अनेन प्रकारेण प्रदत्तानि सन्ति—(१) अधिदैवतः, (२) अध्यात्मः, ( ३ ) आख्यातसमयः ( ४ ) ऐतिहासिकाः, ( ५ ) नैदानाः, ( ६ ) नैरुक्ताः, ( ७ ) परिव्राजकाः, ( ८ ) याज्ञिकाश्च ।

अनेन मतनिर्देशेन वेदार्थानुशीलनस्येतिहासोपरि विशिष्टरूपेण प्रकाशः प्रसरति । यास्कस्य प्रभावः अवान्तरकालिकभाष्योपरि अस्ति । सायणस्तु अस्याः पद्धत्या अनुसरणं कृत्वा वेदभाष्यरचनायां कृतकार्योऽभवत् । यास्कस्य प्रक्रियाऽऽधुनिकभाषावेत्तॄणां प्रधानतो मान्याऽस्ति । निरुक्तस्यैकमात्रप्रतिनिधित्वेन निरुक्तग्रन्थस्य सर्वातिशायि महत्त्वमस्ति ।

निरुक्तं तु स्वयं भाष्यरूपमेवास्ति । तथाऽपि यत्र तत्रैतादृशं दुरूहमस्ति यत्तस्य अर्थावबोधने विद्वान् टीकाकारोऽपि काठिन्यमनुभवति । निरुक्तं व्याख्यातुं विक्रमाब्दात् पूर्वमेव विदुषां ध्यानाऽऽकृष्टोऽभवत् । अस्य साक्षी पतञ्जलेर्महाभाष्यमस्ति । **'शब्दग्रन्थेषु चैषा प्रभूततरागतिर्भवति । निरुक्तं व्याख्यायते । न कश्चिदाह पाटलिपुत्र व्याख्यायत इति ।'**

किञ्च पतञ्जलेः सङ्केतः कस्यां दिशि वर्तते ? इति तु ज्ञातुं न कोऽपि कथयति ।

# निरुक्तस्य टीकाकाराः

## ( १ ) दुर्गाचार्यः

निरुक्तस्य प्राचीनोपलब्धष्टीकाकारो दुर्गाचार्य एवास्ति। किञ्चायं नाद्यष्टीकाकारोऽस्ति। स्वकीयां दुर्गवृत्त्यामयं प्राचीनटीकाकर्तृणामुल्लेखं कृतवान्। अस्यामेव वृत्त्यां चतुर्षु स्थलेषु अनेन कस्यापि वार्तिककृतोल्लेखः कृतः (निरुक्तवृत्तिः १।१, ६।११, ८।४१, ११।१३)। स्कन्दस्वामी अप्यस्य पूर्वटीकाकारस्योल्लेखं कृतवान्। **'तस्य पूर्वटीकाकारैर्बर्बरस्वामिभगवद्दुर्गप्रभृतिभिर्विस्तरेण व्याख्यातस्य।'** अस्यां वृत्त्यां निरुक्तस्य तथा तस्मिन्नुल्लिखितमन्त्राणां सविस्तरेण व्याख्यामकरोत्। अत्र निरुक्तस्य प्रतिशब्दः समुद्धृतोऽस्ति। निरुक्तं वस्तुतः स्वयमेव भाष्यं मूलतः, परं नितान्तदुरूहत्वात् टीकाकारास्तदर्थावगमनाय कठोरतरं श्रमं कृतवन्तः। दुर्गाचार्येण अस्मिन् विषये कथितम्—**'ईदृशेषु शब्दार्थन्यायसङ्कटेषु मन्त्रार्थघटनेषु दुरवबोधेषु मतिमतां मतयो न प्रतिहन्यन्ते, वयं त्वेतावदत्रावबुद्ध्यामह इति'** (७।३१)। क्वचित् क्वचिदनेन स्वयमभिनवपाठस्य योजनाऽपि कृतेति। यद्यस्माकमियं वृत्तिः समुपलब्धा न भवेत् तदा निरुक्तस्यावबोधनं दुरूहो व्यापारोऽभवत् किञ्च दुर्गाचार्यस्य विषयेऽस्माकमैतिहासिकं ज्ञानमतिस्वल्पमस्ति। ४।१४ निरुक्तेऽयं स्वं कापिष्ठलशाखाध्यायी वसिष्ठगोत्रीयो ब्राह्मणमलिखत्। प्रत्येकस्याऽध्यायस्यान्तिमायां पुष्पिकायामनेन प्रकारेण लिखितमस्ति—**'इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ—अध्यायः समाप्तः।'** अनेन ज्ञातो भवति यदयं जम्बूमार्गाश्रमस्य निवासी आसीत्। किञ्च स्थानमिदं कुत्रास्तीति कोऽपि न जानाति। डा० लक्ष्मणस्वरूपमहोदयस्त्वेनं काश्मीर-राज्यस्य प्रसिद्धनगरं 'जम्बू' मन्यते। किञ्च भगवद्दत्तमहोदयस्येदमनुमानमस्ति यदयं दुर्गाचार्यो गुर्जरप्रान्तस्य निवासी आसीत्। यतोऽनेन मैत्रायणीसंहितायाः स्वव्याख्यायामुद्धरणानि प्रदत्तानि। प्राचीनकाले संहितेयं गुर्जरप्रान्ते एव विशेषरूपेण प्रसिद्धा आसीत्। ईदृशमनुमानेऽयमेवाधारोऽस्ति।

अद्यापि यथार्थरीत्या दुर्गाचार्यस्य समयनिरूपणं नाभूत्। अस्या वृत्त्याः प्राचीना हस्तलिखिता वृत्तिः १४४४ विक्रमाब्दस्यास्ति। अतो दुर्गाचार्यः अस्मात् कालात्प्राचीनतरोऽस्ति। ऋग्वेदस्य भाष्यकार उद्गीथो दुर्गाचार्यस्य वृत्त्या परिचित आसीत्। आचार्य-उद्गीथस्य समयः विक्रमाब्दस्य सप्तमशतकमस्ति। अतो दुर्गाचार्यमपि सप्तमशतकाद् अर्वाचीनं कथितुं न शक्यते। निरुक्तप्रतिपादिता विषया अधःस्थितेन श्लोकेनोपस्थाप्यन्ते—

**'वर्णागमो वर्णविपर्ययस्य द्वौ चापरौ वर्णविकारनाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥'**

## ( २ ) स्कन्दमहेश्वरः

निरुक्तस्यापरासु टीकासु महेश्वरस्य टीका लाहौरनगरीतः प्रकाशिताऽभवत् । टीकेयं प्राचीना पाण्डित्यपूर्णा चाऽस्ति । अयं सैव स्कन्दस्वामी वर्त्तते यो हि ऋग्वेदस्य भाष्यं लिलेख । अयं गुर्जरस्य प्रख्यातस्य 'बलभी'-नगरस्य निवासी आसीत् । अस्य पितुर्नाम भर्तृध्रुव आसीत् । अस्य समयस्तु विक्रमाब्दस्य सप्तमशतकस्योत्तरार्द्धमस्ति । अस्य ऋग्वेदस्य भाष्यं प्रामाणिकश्चास्ति । अल्पाक्षरत्वेनापि सारगर्भितमासीत् । एवंविधेन विशिष्टविदुषा विरचितत्वेनेयमपि टीका स्वकीयां विशिष्टतां स्थापयति ।

## ( ३ ) निरुक्तनिचयः

निरुक्तनिचयस्य रचयिता कोऽपि वररुचि आसीत् । इयं नास्ति निरुक्तस्य साक्षाद् व्याख्या, अपितु निरुक्तसिद्धान्तस्य प्रतिपादकानां शताधिकानां श्लोकानां स्वतन्त्रा व्याख्याऽस्ति । निरुक्तस्यासां टीकानामनुशीलनेन भाषाशास्त्रीयज्ञातव्य विषयस्य वयं ज्ञानं प्राप्नुमः । निरुक्ते तथा तस्य वृत्त्यां प्रदत्तसङ्केतं गृहीत्वैव मध्यकालिका विद्वांसो वेदभाष्यरचनायां साफल्यमाप्नुवन् । मध्यकालिकभाष्यकर्त्तारो विद्वांसः स्वसिद्धान्तनिर्माणे एभिर्ग्रन्थैरेव प्रेरणामलभन्त । नाऽत्र लेशतोऽपि सन्देहस्यावकाशः । एतेषां ग्रन्थानामैतिहासिकमहत्त्वं वेदस्यार्थानुचिन्तनस्य विषये विशिष्टमस्ति । अस्य ग्रन्थस्योद्धरणं प्रतिष्ठितैराचार्यैः कृतमतोऽस्य प्रियता प्रमातुं शक्यते ।

## निरुक्तस्य महत्त्वम्

निरुक्तशब्दस्य व्याख्या सायणाचार्यानुसारेण—**'अर्थावबोधे निरपेक्षतया पदजातं यत्र तद् निरुक्तम् ।'** अस्मिन् प्रसङ्गे दुर्गाचार्यस्य कथनमिदमस्ति—**'प्रधानं चेदमितरेभ्योऽङ्गेभ्यश्च अर्थपरिज्ञानाभिनिवेशात् । अर्थो हि प्रधानः तद्गुणः शब्दः, स च इतरेषु व्याकरणादिषु चिन्त्यते । यथा शब्दलक्षणपरिज्ञानं सर्वशास्त्रेषु व्याकरणाद् एवं शब्दार्थनिबन्धनपरिज्ञानं निरुक्तात् ।**

( दुर्गाचार्यवृत्तिः, पृ० ३ )

निरुक्ते वैदिकशब्दानां निरुक्तिरस्ति । निरुक्तिशब्दस्यार्थो भवति व्युत्पत्तिः । निरुक्तस्य सर्वमान्यमतमिदमस्ति यत्प्रत्येकः शब्दः केनाऽपि धातुना सहावश्यमेव सम्बद्धो भवति । अतो निरुक्तकारः शब्दानां व्युत्पत्तिं प्रदर्शयन्, धातुना सह विभिन्नप्रत्ययानां निर्देशमपि दर्शयति । निरुक्तानुसारेण सर्वे शब्दा व्युत्पन्ना भवन्ति । वैयाकरण-शाकटायनस्याऽपीदमेव मतमासीत् । अस्योल्लेखो यास्केन पतञ्जलिना च स्व-स्वग्रन्थे कृतोऽस्ति ।

**'तत्र नाना आख्यातजानीति शाकटायनो निरुक्तसमयश्च ।'**

(निरु० १।१।२।२ ।)

'नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम् ।

( महा० )

शब्दानां व्युत्पत्तिर्बहुविधाऽस्ति । दुहिताशब्दस्य व्युत्पत्त्या विषये यास्को वदति—'दुहिता दुर्हिता । दूरे हिता । दोग्धेर्वा ।' अर्थाद् दूरे विवाहिता दुहिता एव हितकरा भवति अथवा यत्र प्रदत्ता तत्रैवाहितकरा भवति, अथवा दोग्धे:— अथवा सा हि नित्यमेव पितुः सकाशाद् द्रव्यं दोग्धि ।

निरुक्तं यस्मिन्नाधारे प्रवृत्तं भवति—अर्थात् प्रत्येकं संज्ञापदं धातुना व्युत्पन्नोऽभवत्, इत्याधारस्तु नितान्तं वैज्ञानिकमस्ति । अस्यैव सम्प्रति नामास्ति 'भाषाविज्ञानम्' । अस्योन्नतिः पाश्चात्यजगति शतवर्षाभ्यन्तरे एवाऽभवत् । सोऽपि संस्कृतभाषाया प्रचारो यदा तत्राऽभवत् तदैवेति । किञ्चाद्यतः त्रिसहस्रवर्षं प्राग् वैदिका ऋषयः अस्य शास्त्रस्य सिद्धान्तानां वैज्ञानिकरीत्या निरूपणं कृतवन्तः । भाषाशास्त्रस्येतिहासे भारतवर्ष एवास्य मूलोद्गमस्थानमस्ति । नात्र लेशतोऽपि सन्देहः । निरुक्तस्यारम्भेऽस्य विषयस्य येषां नियमानां प्रतिपादनं समुपलब्धं भवति तत्तु विशेषरूपेण महनीयमस्ति ।

## निरुक्तस्य प्रतिपादनशैली

निरुक्तं भाषाशास्त्रदृष्टया एकमनुपमं रत्नमस्ति । निरुक्तस्य मान्यः सिद्धान्तोऽस्ति यन्निरुक्ते नाम धातुजमस्ति । वैयाकरणेषु शाकटायनस्यैवेदं मतमासीत्—'सर्वधातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्' । अस्य मतस्य समीक्षा युक्तिपूर्वकेण केनाऽपि गार्ग्याचार्येण कृताऽऽसीत्, यस्य खण्डनं प्रबलतराभिर्युक्तिभिः कृतं यास्केनेति । भाषायाः मूलं धातुरेव भवति, अस्य तथ्यस्योद्घाटनं यास्केन सहस्रत्रयवर्षं पूर्वमेव कृतम् । तथ्यमिदमाधुनिकभाषाविज्ञानस्य मेरुदण्ड एवास्ति । यास्कः स्वस्य वैज्ञानिकमतस्य प्रस्थापनं युक्तिपूर्वकं कृतवानस्ति ।

गार्ग्यस्य प्रथमाऽऽपत्तिरसङ्गताऽस्ति । कस्याऽपि वस्तुनः क्रियानुसारेण नामकरणेनानेकानां वस्तुनामेकक्रियात्वेनानेकानामेकनाम भवितुं शक्यते । तुल्यकर्मकर्त्तृषु जनेष्वपि तेनैव कर्मणा व्यक्तिविशेषस्य श्रेणीविशेषस्य वा नाम भवति न तु सर्वेषाम् । लोकव्यवहारस्येयमेव शैली अस्ति । तक्षणः=कर्मकस्य, एवं परिव्रजनम्=परितः भ्रमणम्, इत्यादि क्रिया बहुभिर्जनैः सम्पादिता भवति, तथापि 'तक्षा'-पदेन कर्मकारस्यैव बोधो भवति एवञ्च परिव्राजकपदेन संन्यासिनां बोधो भवति । कस्यापि शब्दस्य स्वभाव एक एवास्ति यत् कयाऽपि क्रियया कस्याप्येकस्यैव वस्तुनो बोधो भवति नान्यस्य । एकेन वस्तुना सह बहूनां क्रियाणां योगे सत्यपि एकैव क्रियानुसारेण तस्य नाम भवति । शब्दस्यायं स्वभावः तथा लोकप्रसिद्धव्यवहारोऽप्यस्ति । 'तक्षा' एवं परिव्राजकः अन्यापि क्रियायाः सम्पादनं करोति, किञ्च क्रियाया वैशिष्टयेन तक्षण-परिव्रजनक्रिया-

ऽनुसारेण तयोर्नामकरणमभूत् । निष्पन्नेन नाम्नैव कस्यापि वस्तुनः क्रियायाः परीक्षणं नासङ्गतं भवति । यतो नाम्नः निष्पन्ने सति तस्य योगार्थस्य परीक्षणं भवितुं शक्यते (**'भवति हि निष्पन्नेऽभिव्यवहारे योगपरीष्टिः—'** निरु०।११) । नाम्नो निष्पन्नत्वाभावे कस्य परीक्षणं भविष्यति ? **'प्रथनात् पृथिवी'** विस्तृतत्वेनेदं नाम पृथिव्या भवति । शाकटायनस्यास्यां व्याख्यायां गार्ग्यस्येदं कथनं नितान्तमयुक्तिकरमस्ति यदियं केन विस्तारिता ? तर्कहीनमिदं कथनमस्ति, यतः पृथिव्याः पृथुत्वं प्रत्यक्षदृष्टमस्ति । अस्याः कथनस्य विषये प्रश्न एव निरर्थकोऽस्ति । अतो गार्ग्यस्येयमप्यापत्तिरसङ्गतैवास्ति ।

शाकटायनेन पदानां निरुक्त्यै एकस्याभिन्नपदस्य व्याख्याऽनेकेषां धातूनां योगेन निष्पादिता । सत्य-शब्दः शाकटायनेन भागद्वये विभाजितः, यथा सत + य=सत्यम्, यस्मिन् प्रथमांशः 'अस्ति'-शब्दान्निष्पन्नो भवति तथा द्वितीयांशः 'इण्'-धातोः 'आयाति'-शब्दात् निष्पन्नोऽस्ति । **'सन्तमेव अर्थम् आयाति गमयतीति सत्यम् ।'** अर्थाद् यो विद्यमानार्थस्य ( यथार्थस्य ) ज्ञानं कारयति तत् सत्यम् । अस्योपरि गार्ग्यस्यापत्तिरस्ति महती । यास्कस्य प्रतिवचनमस्ति— शब्दान् स्वपक्षप्रतिपादनं विद्यासम्पादयन्नपि शाकटायनस्य निरुक्तिरनुगतार्थाऽस्ति, अतो नामान्योऽस्ति । अनन्वितार्थे शब्दस्य संस्कर्त्ता पुरुषो निन्दनीयो भवति, शास्त्रगर्हा तु नास्त्येव—**'सैषा पुरुषगर्हा न शास्त्रगर्हा'** निरुक्त्याः पदस्य चान्वयो न्याय्योऽस्ति । तदर्थं पदविभाजनं नानुचितमस्ति । ब्राह्मणग्रन्थेषु निरुक्तिक्रमोऽयं ग्राह्योऽस्ति, न गर्हणीयः । शतपथब्राह्मणम् ( १४।८।४।१ ) हृदयशब्दं भागत्रयेषु विभज्य तस्य निरुक्तिः हृ, दा, इण् ( आययति रूपात् ) धातोर्निष्पन्नमकरोत् । फलतः शाकटायनस्य मतं यथार्थमस्ति ।

परभाविन्या क्रियया पूर्वजातस्य वस्तुनो नामकरणं नोचितमित्यपि गार्ग्यस्यापत्तिरकिञ्चित्करैवास्ति । लोके परभाविन्या क्रियया पूर्वजातस्य वस्तुनः संज्ञा वा व्यपदेशो बहुषु स्थलेषु परिलक्षितो भवति । भविष्यद्योगेन सम्बन्धसाहाय्येन च कस्यापि जनस्य विल्वादः अथवा लम्बचूडको नामकरणं लोके भवति । मीमांसादर्शनस्याप्ययमेव सिद्धान्तोऽस्ति । रूढशब्दानामपि व्युत्पत्तिरनावश्यकैवास्ति । इदं कथनमपि नोचितमस्ति । वेदे रूढशब्दानां व्युत्पत्तिरनेकत्र दृग्गोचरा भवति—**'यदसर्पत तत् सर्पिः'** । सर्पिषो व्युत्पत्तिर्गमनार्थकस्य सृप्धातोर्निष्पन्नो भवति । अनेन प्रकारेण यास्केन युक्तिव्यूहैः स्पष्टतः प्रतिपादितस्य समस्तं नाम धातुजं भवति तथा वर्त्तमानभाषाशास्त्रस्यायमेव मान्यः सिद्धान्तः अस्ति ( निरु० १।१४ ) ।

## ( ५ ) छन्दः

छन्दो वेदस्य पञ्चमाङ्गमस्ति । वेदाः सन्ति छन्दोबद्धाः, अतस्तेषामुच्चारणनिमित्ताय छन्दोज्ञानं नितरामपेक्षितम् । छन्दोभिधेनैतेनाङ्गेन छन्दसां सर्वेषा-

मुच्चारणविधिस्तद्गतिप्रकारस्तद्गानरीतिश्च विदिता जायन्ते। तस्माद्वैदिक-मन्त्रोच्चारणप्रयोजनेन तदध्ययनं पूर्वमुचितम्। विना छन्दोज्ञानं यो वेदाऽध्ययन-यजनयाजनादिकार्याणि करोति तस्य तानि सर्वाणि कार्याणि न भवन्ति फलदा-यकानि। उक्तञ्चात्र स्पष्टतया कात्यायनेन—

**'यो ह वा अविदितार्षेयच्छन्दो दैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं बर्च्छेति गर्त्ये वा पात्यते प्रमीयते वा पापीयान् भवति।'**

( सर्वानुक्रमणी १।१ )

संहिताब्राह्मणेषु छन्दोनाम्नामुपलभ्यत्वात् प्रतीयते यच्छन्दोऽङ्गस्याऽप्युत्पत्ति-र्वैदिकयुग एव संवृत्ता। अस्य वेदाङ्गस्य प्रतिनिधि-ग्रन्थोऽस्ति पिङ्गलाचार्यकृतं 'छन्दःसूत्रम्'। अस्य ग्रन्थस्य रचयिता कदा बभूव? अस्य पर्याप्तपरिचया-ऽभावोऽस्ति। ग्रन्थोऽयं सूत्ररूपेऽस्ति। ग्रन्थोऽयमष्टाध्यायेषु विभक्तोऽस्ति। प्रारम्भात् चतुर्थाऽध्यायस्य सप्तमसूत्रपर्यन्तं वैदिकच्छन्दसां लक्षणं प्रदत्तमस्ति। तदनन्तरं लौकिकच्छन्दसां वर्णनमस्ति। अस्य ग्रन्थस्य हलायुधकृता 'मृत-सञ्जीवनी' व्याख्याऽतीव प्रसिद्धाऽस्ति।

लौकिककाव्येषु छन्दसः पादबद्धतायाश्च सम्बन्धमेतावद्घनिष्ठमस्ति यत् पद्येष्वेव छन्दसो योजना मन्यते, तथा गद्यन्तु छन्दोहीनरचनारूपेण सर्वं स्वीकृतं भवति। वैदिकच्छन्दसो विषये धारणेयममान्याऽस्ति। प्राचीनार्यपरम्परानुसारेण गद्यमपि छन्दोबद्धरचना एव मन्यते। दुर्गाचार्येण निरुक्तस्य स्ववृत्त्या ( ७।२ ) कस्याऽपि ब्राह्मणस्य वाक्यं समुद्धृतम्, यस्याशयोऽस्ति छन्दोविना वाणी समुच्च-रिता न भवति—**'नाच्छन्दसि वागुच्चरति'**। भरतमुनिनाऽपि छन्दोविरहितं शब्दं नैव स्वीकरोति—

**छन्दहीनो न शब्दोऽस्ति, न छन्दः शब्दवर्जितम्।'**

( ना० शा० १४।४५ )

कात्यायनमुनेर्नाम्ना प्रख्यातं ऋग्यजुष-परिशिष्टं पूर्वोक्तं तथ्यं स्वी-करोति—

**'छन्दोभूतमिदं सर्वं वाङ्मयं स्याद् विजानतः।**
**नाच्छन्दसि न चापृष्टे शब्दश्चरति कश्चन॥'**

पूर्वोक्तमतानुसारेण वेदस्य न कोऽप्येवंविधो मन्त्रोऽस्ति यः छन्दसो माध्यमेन न निर्मितोऽस्ति। फलतो यजुर्वेदस्य मन्त्रोऽपि यो हि निश्चयेन गद्यात्मकोऽस्ति, छन्दोविरहितो नास्ति। तेन हि प्राचीनाचार्याः प्रथमाक्षरादारभ्य १०४ अक्षर-पर्यन्तं छन्दसां विधानं स्वस्वग्रन्थेषु कृतवन्तः ( द्रष्ट०—'वैदिकछन्दोमीमांसा' पृ० ८।९, रच० युधिष्ठिरमीमांसक )।

**ऋग्वेदस्य सामवेदस्य च सर्वे मन्त्राः छन्दोबद्धाः सन्ति। हृदयस्थकोमल-भावानामभिव्यक्त्या नैसर्गिकमाध्यमं छन्द एवास्ति। अन्तःस्थलस्य मर्मस्पर्शिनो**

भावस्याभिव्यक्तीकरणाय कविगणाः छन्दसां कमनीयकलेवरमेवान्विष्यन्ति। मन्त्राणां प्रधानमुद्देश्यं यज्ञेषूपास्यदेवतायाः प्रसादनकार्ये एवाऽस्ति तथेदमपि निश्चयेन वक्तुं शक्यते यद् देवतायाः प्रसादनस्य प्रमुखसाधनं मन्त्राणां गायनमेव भवितुं शक्यते। मन्त्राणां छन्दोबद्धतया छन्दसां ज्ञानं विना वेदमन्त्राः साधु उच्चारयितुं न शक्यन्तेऽतश्छन्दोऽपि वेदाङ्गमवश्यज्ञेयञ्च। शौनकविरचिते ऋक्प्रातिशाख्ये चरमभागे छन्दसां पर्याप्तं विवेचनं विद्यते। अस्य छन्दःशास्त्रस्य पिङ्गलच्छन्दःसूत्रनामा ग्रन्थः सर्वाधिकप्रसिद्धः अस्ति। 'छन्दःपादौ तु वेदस्य।'

'छन्दः' इत्येतस्य पदस्य व्युत्पत्तिरियम्—छन्दयति ( पृणाति ) इति छन्दो वा छन्दयति ( आह्लादयति ) इति छन्दोऽथवा छन्द्यतेऽनेनेति छन्दः। छन्दांसिच्छादनादि'त्येतद् यास्ककथनाद् वेदार्थवाचकं छन्द इत्येतत्पदं छद्( छादने )-धातोर्निष्पन्नम्। वेदावरणकारित्वात् छन्द इति पदं युक्तमेव। दुर्गाचार्यं आह—

**'यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यतः, तत् छन्दसां छन्दस्त्वम्।'**

वाक्यमिदं छान्दोग्योपनिषद्यपि पाठभेदेन प्राप्यते ( १।४।२ )। 'छन्दांसि छादनात्' (नि० ७।१९) अस्यैवार्थस्य सम्पुष्ट्यां दुर्गाचार्यस्य पूर्वोक्तवाक्यमस्ति। श्रुतिषु छन्दसो महनीयता भृशं गीता। असुरकृतेभ्यो विघ्नबाधाभ्यो रक्षकत्वात्तस्य, तच्छक्तिशाली सैनिक इव मतम्। उक्तञ्च—**'दक्षिणतोऽसुरान् रक्षांसि त्वष्ट्रान्यपहन्ति त्रिष्टुब्भिर्वज्रो वैरविष्टुब्।'** वैदिकानि छन्दांस्यनेकभेदोपभेदवन्ति सन्ति। प्रधानेषु वैदिकेषु छन्दःसु इमानि गण्यन्ते—गायत्री, उष्णिक्, अनुष्टुप्, प्रकृतिः, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती, अतिजगती, शक्वरी, अतिशक्वरी, कृतिः, आकृतिः, विकृतिः, संस्कृतिः, अभिकृतिः, उत्कृतिश्च। वैदिकच्छन्दसां विशिष्टतेयं यत्तानि अक्षरगणनायां भवन्ति नियतानि। न तत्राक्षराणां गुरुलघुक्रमस्य कश्चिन्नियमविशेषः। उक्तञ्च कात्यायनेन—**'यदक्षरपरिमाणं तच्छन्दः।'** किञ्च लौकिकसंस्कृतस्य छन्दःसु वार्तेयं नास्ति। तत्र तु वृत्तस्य अक्षराणां गुरुता लघुता निश्चितैवास्ति। इत्यपि स्मरणीयमस्ति शताब्दचनन्तरं लौकिकच्छन्दसां विकासः पूर्वोक्तेभ्यो वैदिकच्छन्देभ्यो जातः। लौकिकछन्दःसु चत्वारः चरणा भवन्ति किन्तु वैदिकच्छन्दःसु नियमोऽयं न भवति।

भारतीयाचार्याणां मतानुसारेण वैदिकच्छन्दसां लक्षणनिर्धारणेऽस्य तथ्यस्य नाधिकं महत्त्वमस्ति यत्तस्मिन् कोऽक्षरो लघुर्वा कोऽक्षरो गुरुरस्ति। किञ्च, आचार्यशौनकेनास्मिन् विषये विचारं कृतम्। तस्य महत्त्वपूर्णं कथनमस्ति प्रातिशाख्ये १७।३९ अष्टाक्षरस्य पादो गायत्रे, द्वादशाक्षरस्य पादो जागते, उपोत्तमाक्षरो लघुर्भवति। दशाक्षरस्य पादे वैराजे तथैकादशाक्षरस्य पादे त्रैष्टुभे उपोत्तमाक्षरो गुरुर्भवति। वर्णिकच्छन्दः वृत्तमप्यभिधीयते। शौनकस्येदं कथनं

ऋग्वेदीयच्छन्दःसु सुसङ्गतं भवति । पाश्चात्यविद्वांसोऽपि एवंविधानां तथ्यानामाविष्कारं स्व-स्वानुशीलनेन कृतवन्तः ।

प्रत्येकस्य वेदस्य छन्दसां वर्णनमनुक्रमणीषु अतीव सूक्ष्मतया कृतमस्ति । कात्यायनेनातीवप्रामाणिकतया ऋग्वेदीयस्य प्रत्येकस्य मन्त्रस्य छन्दसो निर्देशः सर्वानुक्रमण्यां कृतोऽस्ति । प्रातिशाख्येषु, विशेषतः ऋक्प्रातिशाख्यस्य षोडशपटले, अष्टादशपटले च छन्दसां विस्तृतं विवेचनमस्ति । लौकिकच्छन्दसां वैदिकछन्दसाञ्च विशिष्टं वर्णनं पिङ्गलकृतं पिङ्गलसूत्रेऽस्ति । अस्मच्छन्दःसूत्रस्य भट्टहलायुधकृता 'मृतसञ्जीवनी'-व्याख्या प्रसिद्धाऽस्ति ।

पूर्वमेव निगदितं यद्वैदिकछन्दःसु अक्षराणां गौरवलाघवस्य विचारमकृत्वैव तेषां संख्याया एव विचारः क्रियते । यदा कदाऽन्यपादाक्षराणां समसंख्यकत्वे सत्यपि एकस्मिन् पादे संख्याऽल्पतरा भवति तथा कुत्राप्यधिकतरेति । अनियमतेयं यथेप्सितं न भवति, अपितु नियमत एव एवम्भवति । एक-द्वावक्षरयोरधिकता वा न्यूनता छन्दसः परिवर्त्तनस्य कारणं भवितुं न शक्यते । अनेनास्य स्वरूपस्य हानिर्न भवति । यदि कस्यापि छन्दसः एकाक्षरः ऊनो भवति तदा तं 'निचृत्' इति कथ्यते, यदि सैवैकाक्षरः अधिको भवति तदा तं 'भुरिक्' इत्यभिधीयते । नियमतः त्रिपदा अष्टाक्षरा गायत्र्या अक्षराणां संख्या ( ८×३ ) २४ भवति; किञ्च २३ अक्षराणां गायत्री 'निचृद्गायत्री' तथा २५ अक्षराणां 'भुरिग्गायत्री' कथ्यते । अनेन प्रकारेण यत्र द्वौ अक्षरौ यत्र हीनौ भवति तत्र 'विराट्' भवति, तथा यत्र द्वावक्षरावधिकौ स्तस्तत्र 'स्वराट्' भवति । विराट्गायत्री ( २४–२ ) २२ अक्षराणामेवं 'भुरिग् गायत्री' ( २४+२ ) २६ अक्षराणां भवति ।

**'ऊनाधिकेनैकेन निचृद्भुरिजौ । द्वाभ्यां विराट्स्वराजौ ।'**

( सर्वानुक्र० पृ० २ )

**'एकद्व्यूनाधिका सैव निचृद् ऊनाधिका भुरिक् ।'**

( ऋक् प्रा० १७।२ )

यदा कदा दृग्गोचरो भवति यत् कस्याप्येकैवाक्षरस्याभावे छन्दः खञ्जः प्रतीतो भवति । एतादृश्यामवस्थायां छन्दः नियमाबद्धं कर्त्तुम् एकैवाक्षरमक्षरद्वयेनावबोधनस्यावस्था सर्वानुक्रमण्यां स्पष्टतः प्रदर्शिताऽस्ति । अस्याः प्रक्रियायाः पारिभाषिकः शब्दः व्यूहनमस्ति । अस्य सूत्रमस्ति—**'पादपूरणार्थं क्षैप्रसंयोगैकाक्षरी भावाद् व्यूहेत्'** (सर्वा० ३।६) । अर्थात् पादपूर्त्यर्थं क्षैप्रसंयोगः तथा सन्धिजन्यैकाक्षराणां पृथक्करणमवश्यमेव करणीयम् ।

( १ ) यत्र यण्सन्धिद्वारेण यकारो वकारो वा भवति तत्र तं संयुक्ताक्षरं पृथक् कृत्वा मूलाक्षरयोरुच्चारणं कर्त्तव्यम् । यथा त्रिपदा उष्णिक्छन्दसः उदाहरणे प्रदत्तमन्त्रस्य द्वितीयचरणे—'पिबति सौम्यं मधु' इत्यस्मिन्नष्टाक्षरेषु

एकाक्षरस्याभावो विद्यते। अतः पादपूर्त्यर्थं 'सौम्यम्' इत्यस्य 'सौमिअं' भवितव्यम्। जगतीछन्दसः अन्तिमचरणे द्युमद्=दिउमद्। तत्सवितुर्वरेण्यं=वरेण्यमित्यत्र वरेणिअमिति।

( २ ) वकारस्य पृथक्करणम्—बहुसंख्यकेषु मन्त्रेषु 'त्वमि'ति पदस्य उच्चारणम् 'तुअम्' भवति। 'क्षिवं गच्छ स्वः पते' इत्यत्र स्वः=सु अः भवितव्यम्।

( ३ ) रेफस्य पृथक्करणम्—अनेकेषु मन्त्रेषु इन्द्रस्योच्चारणम् 'इन्दरः' इति भवति, यथा—ऋ० ७।१९।२, 'त्वं ह्व्यदिन्द्रः' इत्यस्योच्चारणं भवति—'तु अं ह्व्यदिन्दर' इति।

( ४ ) 'ए' तथा 'ओ' गुणस्य एवम्, 'ऐ एवं औ' इत्यनयोर्वृद्धिस्वरस्य पृथक्करणं भवति। ज्येष्ठः=जयिष्ठः ( ऋ० ७।६५।१ ), श्रेष्ठः=श्रयिष्ठः ऋ० ( ७।९३।१ ), प्रब्रह्मै त्विति ( ऋ० ७।३६।१ )='ब्रह्म एतु इति' एवं भवति।

( ५ ) एकारस्यौकारस्य चानन्तरं लुप्ताकारं 'एङः पदान्तादति' ( पाणि० ६।१।१०९ ) इत्यनेन सूत्रेण पुनः स्थापनं कृत्वोच्चारणं कर्त्तव्यम्—'इन्द्रं वाजेषु नोऽव' ( ऋ० १।७।४ ) अत्र नोऽव=नो अव भवति। 'इन्द्रं सखायो नु संरमध्वम्' ( ऋ० १०।१०।३६ ) 'अनु' इत्येतस्य पदस्य पूर्णोच्चारणं भवितव्यम्।

( ६ ) दीर्घसन्धिजन्याकारं द्वावक्षरस्वरूपे एव परिवर्त्तनं कृत्वा उच्चारणीयम्। अस्मिन् विषये षड्गुरुशिष्यस्य पूर्वोक्तसूत्रस्य वृत्तिर्द्रष्टव्या पृ० ६३। यथा—'वदन् ब्रह्मा वदती वनीयान्' ( ऋ० १०।११७।७ )। अत्र भवति—ब्रह्म अवदती। 'आद्याद्या श्वः श्वः' ( ऋ० ८।६१।१७ ), अत्र आद्याद्या—अद्य-अद्या। ऋ० ७।४०।६। अत्र वात=व अत।

कात्यायनेन सर्वानुक्रमण्यामृग्वेदस्य सर्वेषां मन्त्राणां छन्दसां निर्देशः कृतः। तदनुसारेण ऋग्वेदे छन्दसां संख्या—गायत्री २४६७, उष्णिक्=३४१, अनुष्टुप्=८५५, बृहती=१८१, पंक्तिः=३१२, त्रिष्टुप्=४२५३, जगती=१३५८। सर्वसङ्कलने=९७६७ मन्त्रा भवन्ति। प्रायः ३०० मन्त्रा अतिजगती-शक्वरी-अतिशक्वरी-अष्टि-अत्यष्टिप्रभृतिषु छन्दःसु निबद्धाः सन्ति। एकपदा ऋचः ६, तथा नित्यद्विपदा १७ सन्ति। अनेन ज्ञातो भवति यद् ऋग्वेदे सर्वाधिकः प्रियः छन्दः 'त्रिष्टुप्' एवाऽस्ति। अतः परं 'गायत्री'-छन्दोऽस्ति। जगती तु अस्मादपि पश्चाद्वर्त्ति भवति। अतः त्रिष्टुप्, गायत्री, जगती एतान्येव त्रीणि लोकप्रियाणि छन्दांसि सन्ति।

## वैदिकच्छन्दसां विभाजनम्

वेदे प्रयुक्तेषु छन्दःसु लघु-गुरु-मात्रायारनुसरणं नैव क्रियते। केवलमक्षराणामेव गणना भवति। फलतः सर्वाण्येव वैदिकछन्दांसि अक्षरच्छन्दांसि एव सन्ति।

अस्य द्वौ प्रमुखभेदौ स्तः—( १ ) केवलमक्षरानुसारी छन्दः, ( २ ) पादाक्षर-गणनानुसारी च । प्रथम-प्रकारकेषु छन्दःसु केवलमक्षरगणना भवति, येषु छन्दःसु पादविभाजनस्यावश्यकता न भवति तानि च केवलानि अक्षरगणनानुसारीणि छन्दांसि मन्यन्ते । द्वितीयप्रकारकेषु छन्दःसु अक्षराणां पादेषु नियमतो विभाजनस्य व्यवस्था वर्त्तते, अर्थादत्र पादे स्थितानामक्षराणां गणनायामुपरि आग्रहोऽस्ति ।

वैदिकच्छन्दसां मुख्यभेदानां विषये मतैक्यं नास्ति । किञ्च समस्तानां वैदिकच्छन्दसां संख्या २६ मन्यन्ते । एतेषु प्रारम्भिकानि पञ्चच्छन्दांसि वेदेऽप्रयुक्तानि सन्ति । तानि परित्यागावशिष्टानि छन्दांसि त्रिसप्तकेषु विभाजितुं शक्यन्ते । प्रयुक्तेषु छन्दःसु गायत्री प्रथमं छन्दोऽस्ति । अस्य प्रत्येकस्मिन् पादे षडक्षराणि भवन्ति । अतः प्रथमं सप्तकं गायत्र्याः छन्दसः प्रारभ्यते । अस्मात्पूर्ववर्त्तीनि पञ्चच्छन्दांसि 'गायत्रीपूर्वपञ्चकम्' इति नाम्ना ख्यातमस्ति । एतेषां नाम निम्नप्रकारेणास्ति—

गायत्रीपूर्वपञ्चकस्य छन्दसां नामानि—मा (अक्षर-संख्या ४), प्रमा ( अ० सं० ८ ), प्रतिमा ( अ० सं० १२ ), उपमा ( अ० स० १६ ), समा ( अ० सं० ३० ) । एतानि नामानि ऋक्प्रातिशाख्यानुसारेण ( १७।१७ ) एव सन्ति । किञ्च भरतस्य नाटचशास्त्रे इमानि छन्दांसि क्रमशः—उक्त-अत्युक्त-मध्यम-प्रतिष्ठा-सुप्रतिष्ठेत्यादिभिर्नामभिर्विख्यातानि सन्ति ( द्रष्टव्यः—भरतस्य ना० शा० १४।४६ ) ।

( क ) प्रथम-सप्तकस्य सप्तच्छन्दसां नामानि सर्वत्र तुल्यान्येव सन्ति । एतेषां नामानि सन्ति—गायत्री ( २४ अक्षराणि ), उष्णिक् ( २८ अ० ), अनुष्टुप् ( ३२ अ० ), बृहती ( ३६ अ० ), पङ्क्ति ( ४० अ० ), त्रिष्टुप् (४४ अ०) तथा जगती ( ४८ अक्षराणि ) ।

( ख ) द्वितीयसप्तकस्य सप्तच्छन्दांसि 'अतिच्छन्दः' इति नाम्ना ख्यातानि सन्ति । अस्याक्षरसंख्या पूर्वापेक्षया चतस्रोऽधिका वर्त्तते । यथा—( १ ) अतिजगती=५२ अक्षराणि; ( २ ) शक्वरी=५६ अ०; ( ३ ) अतिशक्वरी=६० अ०; ( ४ ) अष्टिः=६४ अ०; ( ५ ) अत्यष्टिः ६८; ( ६ ) धृतिः=७२ अ०; ( ७ ) अतिधृतिः=७६ अ० ।

( ग ) तृतीयसप्तकस्य सप्तच्छन्दसां नामानि—

( १ ) कृतिः=८० अक्षराणि; ( २ ) प्रकृतिः=८४ अ०; ( ३ ) आकृतिः=८८ अ०; ( ४ ) विकृतिः=९२ अ०; ( ५ ) संस्कृतिः=९६ अ०; ( ६ ) अभिकृतिः=१०० अ०; ( ७ ) उत्कृतिः=१०४ अ० ।

सप्तकस्य विभिन्ननामानि सन्ति । भरतस्य नाटचशास्त्रे (१४।११३) एतेषां नामानि क्रमशः दिव्य-दिव्येतर-दिव्यमानुषेत्यादीनि सन्ति । अभिनवगुप्ताचार्यस्तु

अस्य नामकरणस्य सङ्केतं स्वकीये 'अभिनवभारती' नामके ग्रन्थे कृतवान् । प्रथमसप्तकस्य छन्दसां प्रयोगो देवानां स्तुत्यवसरे क्रियते । अतो दिव्यनाम्ना ख्यातमिदमस्ति । मानवसम्बन्धिषु स्तुतिषु बहुशः प्रयुक्तत्वेन द्वितीयसप्तकं दिव्येतरत् अर्थात् मानवनाम्ना ख्यातमस्ति । दिव्यः तथा मनुष्यः उभय-प्रकाराभ्यां व्यक्तिभ्यां प्रयुक्तत्वेन तृतीयसप्तकं दिव्यमानुषनाम्ना प्रख्यातमस्ति ।

लौकिकच्छन्दसां विकास एभ्य एव वैदिकच्छन्देभ्यो जातः । संस्कृतकवयः श्रुतिमाधुर्यं तथा सङ्गीतमयारोहावरोहञ्च ध्यात्वा एतेषु छन्दःसु अक्षराणां गौरवं लाघवञ्च नियमेनाबद्धं कृतवन्तः । अन्येषां लौकिकाऽऽविष्कर्तॄणां नामानि विलुप्तानि जातानि । किञ्चानुष्टुप्छन्दसः आविष्कर्त्ता महर्षेर्वाल्मीकेर्नाम प्रसिद्ध-मस्ति । वैदिकत्रिष्टुप्छन्दस एवैकाक्षराणां छन्दसां, विशेषतः इन्द्रवज्रोपेन्द्र-वज्रयोरुदयं बभूव । जगतीच्छन्दसो द्वादशाक्षरच्छन्दसां वंशस्थादीनां तथा सामगानां प्रियः शक्वरीतो वसन्ततिलकायारुत्पत्तिर्बभूव । अनेनैव प्रकारेणा-न्येषां लौकिकच्छन्दसामुदयो ज्ञातव्यः ।

## छन्दसां विवरणम्

प्रथमसप्तकस्य निर्दिष्टच्छन्दसां भेदः केवलमक्षरानुसारिषु छन्दःसूपलब्धो भवति । एतानि छन्दांसि अष्टप्रकारकाणि भवन्ति । दैव-आसुर-प्राजापत्य-आर्ष-याजुष-साम्न-आर्च-ब्राह्मप्रभृतीनि च । एतेष्वप्यष्टसु छन्दःसु द्वे चातुष्के स्तः । प्रथमचतुर्णां छन्दसां प्रथमचतुष्कं तथाऽन्तिमचतुर्णां छन्दसां द्वितीयं चतुष्कं भवति । ज्ञातव्यमस्ति यत् प्रथमचतुष्कस्य दैव-आसुर-प्राजापत्यादीनां त्रयाणां छन्दसां यावदक्षरा भवन्ति तावदेव आर्षच्छन्दःसु भवन्ति, योऽस्य चतुष्कस्यान्तिमः छन्दोऽस्ति । अनेनैव प्रकारेण द्वितीयचतुष्कस्य याजुष-साम्न-आर्चाणां छन्दसामक्षराणां सम्मिलिता संख्याऽस्य चतुष्कस्यान्तिमच्छन्दः ब्राह्मे समुपलब्धो भवति । यथा—गायत्र्या दैव-आसुर-प्राजापत्य-भेदेषु क्रमशः १, १५ तथा ८ अक्षरा भवन्ति तथाऽस्य सम्मिलिता संख्या २४ आर्षगायत्र्यां भवति । अनेन रूपेण गायत्र्या याजुष-साम्न-आर्षभेदेषु क्रमशः ६, १२, १८ अक्षराणि भवन्ति, यस्य सम्मिलिता संख्या ३६ अक्षराणां ब्राह्मी गायत्र्यामुपलब्धा भवति । एतेषु सर्वेषु आर्षप्रकार एव वेदेषु सर्वप्रधानं तथा बहुशः प्रयुक्तं भवति । उदाहरणानि यथा—

उष्णिक् ( अष्टाक्षराः )=यजुर्वेदे ८।९ ( बृहस्पति···ऋध्यासम् ) ।
बृहती ( षट्त्रिंशदक्षराः )=यजुर्वेदे ४।७ ( आपोदेवी···स्वाहा ) ।
पङ्क्तिः ( चत्वारिंशदक्षराः ) तत्रैव ८।१२ ( यस्ते···भक्षयामि ) ।
त्रिष्टुप् ( चतुश्चत्वारिंशदक्षराः ) तत्रैव ८।१८ (सुगावो देवा···स्वाहा) ।
,, ,, ,, ८।१६ ( संवर्चसा···विलिष्टम् ) ।
जगती ( अष्टचत्वारिंशदक्षराः ) तत्रैव ८।३० ( पुरुदस्मो···स्वाहा ) ।

सम्प्रति ऋक्षु प्रयुक्तच्छन्दसां संक्षिप्तविवरणमत्र दीयते। अत्र पादबद्धाक्षराणां गणना भवति। आर्षच्छन्दसां भेदोपभेदस्य वर्णनं शास्त्रेषु कृतमस्ति।

( १ ) गायत्री—अस्मिन् छन्दसि पादत्रयं भवति। किञ्चास्मिन् एकपादादारभ्य पञ्चपादपर्यन्तं परिदृश्यते। फलतः ऋग्वेदे एकपदा, द्विपदा, त्रिपदा, चतुष्पदा, पञ्चपदेत्यादिस्वरूपेषु गायत्रीच्छन्दः समुपलब्धमस्ति। किञ्चात्र मुख्यतया त्रिपदा गायत्र्याः प्राचुर्यमस्ति। अस्य छन्दसः निम्नलिखिता भेदा भवन्ति—

( क ) त्रिषु पादेषु एकैकाक्षरस्य यदा न्यूनता भवति तदा तच्छन्दः पादनिचृद्गायत्री कथ्यते।

( ख ) यदा त्रयोऽपि पादाः क्रमशः एकैकाक्षरेण वर्द्धन्ते ( ६+७+८=२१ अ० ) तदा सा गायत्री 'वर्धमाना' कथ्यते।

( ग ) अस्य विपरीतपादाक्षरा गायत्री ( ८+७+६=२१ अक्षराणि ) प्रतिष्ठा नाम गायत्री प्रख्याताऽस्ति।

( घ ) यदा पादेषु ७+१०+७=अक्षराणि भवन्ति, तदा सा यवमध्या गायत्री कथ्यते।

( ङ ) यवमध्यातो विपरीतपादाक्षरा गायत्री ( ९+६+९=२४ ) पिपीलिकामध्या नाम गायत्री प्रख्याताऽस्ति।

( २ ) उष्णिक्—अस्मिन् २८ अक्षराणि तथा पादत्रयं भवति। गायत्र्या अस्मिन् चतुर्णामक्षराणामाधिक्यं भवति। अक्षरक्रमेण पादविचारे अस्यापि नानाभेदा भवन्ति।

**( क ) पुर उष्णिक्**—प्रथमे पादे द्वादशाक्षराण्यन्तिमे पादद्वये अष्ट-अष्ट अक्षराणि भवन्ति ( ऋक्० ७।६६।१६ )।

**( ख ) ककुबुष्णिक्**—अस्मिन् छन्दसि मध्यमे पादे द्वादशाक्षराणि भवन्ति, प्रथमे चान्ते पादे अष्ट-अष्टाक्षराणि भवन्ति ( उदा० ऋक्० ५।५३।५ )।

**( ग ) परोष्णिग् अथवा उष्णिक्**—अन्तिमे पादे द्वादशाक्षराणि भवन्ति, प्रथमे द्वितीये च पादे अष्ट-अष्टाक्षराणि भवन्ति ( ऋ० १।७९।४ )।

**( घ ) पिपीलिकामध्या उष्णिक्**—पादेषु क्रमशः ११+६+११=२८ अक्षराणां सत्ता भवत्यस्मिन् ( ऋक्० १०।१०५।२ )।

**( ३ ) अनुष्टुप्**—अस्मिन्नक्षराणां संख्या द्वात्रिंशदस्ति। अत्र प्रधानतः चत्वारः पादा भवन्ति। किञ्च त्रिपादानुष्टुप्-छन्दसां संख्या पर्याप्ताऽस्ति। अस्यानेके भेदप्रभेदा भवन्ति।

**( क ) विराड् अनुष्टुप्**—त्रिपादेषु अक्षरसंख्याः क्रमशः १०+१०+१० =३० भवन्ति ( उदा० ऋक्० ७।२२।४ )।

**( ख ) विराड् अनुष्टुप्**—पादत्रयेष्वक्षरसंख्या प्रत्येकस्मिन् पादे एकादशैव ( उदा० ऋ० ३।२५।४ )।

**( ग ) चतुष्पादानुष्टुप्**—अस्य छन्दसः प्रत्येकस्मिन् पादे अष्टावष्टाक्षराणि एव भवन्ति । ऋग्वेदे चास्यानेकान्युदाहरणानि सन्ति ।

**( ४ ) बृहती**—अस्मिन् छन्दसि अक्षराणां संख्या ३६ तथा चत्वारः पादाः भवन्ति । अस्य प्रधानभेदा निम्ननिर्दिष्टाः सन्ति—

**( क ) पुरस्ताद् बृहती**—पादेषु अक्षराणां संख्या क्रमशः १२+८+८+८=३६ भवन्ति ( ऋ० १०।९३।१५ ) ।

**( ख ) उरोबृहती अथवा स्कन्धोग्रीवी अथवा न्यङ्कुसारिणी**—द्वितीये पादे द्वादशाक्षराणि तथाऽवशिष्टे पादेऽष्टाक्षराणि भवन्ति । ८+१२+८+८=३६ ( उदा० ऋ० ८।१।१ ) ।

**( ग ) पथ्याबृहती**—तृतीयपादे द्वादशाक्षराणि अन्त्ये पादे अष्टावष्टाक्षराणि भवन्ति ८+८+१२+८=३६ ( ऋ० ८।१।१ ) ।

**( घ ) उपरिष्टाद् बृहती**—अन्तिमे पादे द्वादशाक्षराणि शेषे च अष्टावष्टाक्षराणि भवन्ति । ८+८+८+१२=३६ ( ऋ० १।१२६।७ ) ।

**( ङ ) सतोबृहती, महाबृहती**—त्रयः पादा द्वादशाक्षराणां भवन्ति । १२+१२+१२=३६ ( उदा० ऋ० ९।११०।९ ) । इदं छन्दः ऋक्सर्वानुक्रमण्यां 'ऊर्ध्वबृहती'-नाम्ना ख्यातमस्ति ।

**( ५ ) पङ्क्ति-बृहती**—अस्मिन् छन्दसि, चतुर्णामक्षराणां वर्धनाद् एवास्य निर्माणं भवति (४० अक्षराणि भवन्ति)। प्रायोऽस्मिन् चत्वारः पादा भवन्ति । पञ्चपादाः पङ्क्तिरतिस्वल्पा अस्ति । अस्य निम्नलिखिताः प्रमुखभेदा भवन्ति—

**( क ) विराट्पङ्क्तिः**—दशदशाक्षराणां चत्वारः पादा भवन्त्यस्मिन् । १०+१०+१०+१०=४० अक्षराणि ( उदा० ऋ० ८।९६।४ ) ।

**( ख ) सतोबृहतीपङ्क्तिः**—अस्मिन् चत्वारः पादा भवन्ति । प्रतिपादं अक्षराणां संख्या १२+८+१२+८=४० भवन्ति । ( उदा० ऋ० १।३६।१८ ) ।

**( ग ) विपरीताः पङ्क्तिः**—अस्मिन् पूर्वलक्षणस्य विपरीतं लक्षणं भवति । ८+१२+८+१२=४० अक्षराणि ( ऋ० ८।४६।१२ ) ।

**( घ ) आस्तारपङ्क्तिः**—यस्मिन् ८+८+१२+१२=४० अक्षराणां सत्ता क्रमशः पादेषु भवन्ति ( उदा० ऋ० १०।२१।१ ) ।

**( ङ ) प्रस्तारपङ्क्तिः**—यत्र पूर्वस्मात् लक्षणाद् विपरीतं लक्षणं भवति अर्थात् १२+१०+८+८=४० अक्षराणां सत्ता भवन्ति तत्र प्रस्तारपङ्क्तिः छन्दो भवति ( उदा० ऋ० १०।९३।९ ) ।

**( च ) संस्तारपङ्क्तिः**—अस्मिन् छन्दसि क्रमशः १२+८+८+१२=४० अक्षराणां पादा भवन्ति । ( उदा० ऋ० १०।१७२।२ ) ।

**( छ ) विष्टारपङ्क्तिः**—यत्र ८+१२+१२+८ अक्षराणां क्रमशः पादा भवन्ति ( उदा० ऋ० १०।१४०।१ ) ।

( ज ) **पथ्यापङ्क्तिः**—यत्राष्टाक्षराणां पञ्चपादा भवन्ति ( उ० ऋ० १।८१।१ )। अत्र समस्तेन्द्रसूक्तमस्मिन्नेव छन्दसि निबद्धमस्ति।

( ६ ) **त्रिष्टुप्**—अक्षराणां संख्या ४४ पादानाञ्च संख्या चतस्रो भवन्ति। अस्य प्रधानभेदाः सन्ति—

( क ) **त्रिष्टुप्**—अस्मिन् एकादशाक्षराणां चत्वारः पादा भवन्ति ( उ० ऋ० ५।४१।१ )।

( ख ) **अभिसारिणी**—यस्मिन् १०+१०+१२+१२=४४ अक्षराणि भवन्ति। ( उ० ऋ० १०।२३।५ )।

( ग ) **महाबृहती**—अस्य पञ्चपादेषु क्रमशः १२+८+८+८+८= ४४ अक्षराणि भवन्ति। ( उ० ऋ० ८।३५।२३ )।

( घ ) **यवमध्या-त्रिष्टुप्**—अस्य पञ्चपादेषु क्रमशः ८+८+१२+८+८=४४ अक्षराणि भवन्ति ( उ० ऋ० ६।४८।४ )।

( ७ ) **जगती**—अस्मिन् ४८ अक्षराणि तथा चत्वारः पादा भवन्ति। अर्थात् प्रत्येकस्मिन् पादे द्वादशाक्षराणि भवन्ति (उ० ऋ० ५।११।१)। अस्योपभेदाः—

( क ) **उपजगती**—अस्य प्रथमे पादद्वये १२ दशाक्षराणि भवन्ति, अन्तिमे पादद्वये ११ अक्षराणि भवन्ति ( १२+१२+११+११=४६ )। उपजगती नाम्ना प्रसिद्धमिदं छन्दोऽस्ति ( उ० ऋ० १०।२३।४ )।

( ख ) **महासतोबृहती**—अस्मिन् छन्दसि कश्चन त्रिषु पादेषु अष्टावष्टाक्षराणि भवन्ति तथाऽवशिष्टयोर्द्वयोः पादयोर्द्वादश-द्वादशाक्षराणि भवन्ति। ( उ० ऋ० ६।४८।६ ) इदमेव छन्दः 'पञ्चपदा' जगतीत्यपि कथ्यते।

( ग ) **महापङ्क्तिजगती**—अस्मिन् छन्दसि अष्टावष्टाक्षराणां षट्पादा भवन्ति ( उदा० ऋ० ८।४७।१ )।

द्वितीयस्य तृतीयस्य च सप्तकस्य छन्दः 'अतिच्छन्दः' इति नाम्ना प्रख्यातमस्ति। आचार्यशौनकस्य वेङ्कटमाधवस्य च कथनानुसारेण द्वितीयसप्तकस्य छन्दांसि ऋग्वेदे समुपलब्धानि भवन्ति। तृतीयसप्तकस्य छन्दसामत्र नितरामभावोऽस्ति। अतः ऋक्सर्वानुक्रमण्यां तृतीयसप्तकस्योल्लेखो न मिलति। ऋक्प्रातिशाख्ये आचार्यशौनकस्य स्पष्टकथनमस्ति—**'सर्वादशत्रयीष्वेता, उत्तरास्तु सुभेषजे'** ( १६।८७–८८ )। वेङ्कटमाधवोऽप्यस्य तथ्यस्योल्लेखं कृतवान्—**'चतुरधिकच्छदांसि दर्शितानि चतुर्दश। यानि दशतयीष्वासन् उत्तराणि सुभेषजे ॥'**

द्वितीयसप्तकस्य छन्दसां क्रमशो वर्णनमनेन प्रकारेणास्ति—

( १ ) **अतिजगती**—द्वापञ्चाशदक्षराणामस्मिन् छन्दसि पञ्चपादा भवन्ति। उदा०—**'तमिन्द्रं जोहवीमि मघवानमुग्रम्।'** ( ऋ० ८।९७।१३ )।

( २ ) **शक्वरी**—षट्पञ्चाशदक्षराणामस्मिन् छन्दसि सप्तपादा भवन्ति। उदा०—**'प्रोष्वस्मै'** ( ऋ० १०।१३३।१ )।

( ३ ) **अतिशक्वरी**—षष्टिः ( ६० ) अक्षराणामस्मिन् छन्दसि पञ्चपादा भवन्ति (१६ + १६ + १२ + ८ + ८)। उदा०—'सुषुमा यातमद्रिभिः' ( ऋ० १।१३७।१ )।

( ४ ) **अष्टिः**—( ६४ ) चतुःषष्टिरक्षराणामस्मिन् छन्दसि पञ्चपादा भवन्ति ( १६ + १६ + १६ + ८ + ८ )। उदा०—'त्रिकद्रुकेषु महिषो यवाशिरम्' ( उदा० ऋ० २।२२।१ )।

( ५ ) **अत्यष्टिः**—अष्टाषष्टिरक्षराणामस्मिन् छन्दसि सप्तपादा भवन्ति (१२ + १२ + ८ + ८ + ८ + १२ + ८ = ६८) उ०—'अदर्शिगातुरवे वरीयसी'। ( ऋ० १।१३६।२ )।

( ६ ) **धृतिः**—द्वासप्ततिरक्षराणामस्मिन् छन्दसि सप्तपादा भवन्ति (१२ + १२ + ८ + ८ + ८ + १६ + ८ = ७२)। उ०—'सखे सखायमस्या०'। (४।१।३।)

( ७ ) **अतिधृतिः**—षट्सप्ततिरक्षराणामस्मिन् छन्दसि अष्टपादा भवन्ति। उदा०—'स हि सर्धो न मारुतम्' ( ऋ० १।१२७।६ )।

ऋक्प्रातिशाख्ये ( १७।४६-४७ ) ऋग्वेदस्य सर्वाधिकायतस्य द्वयोः ऋचोर्निर्देशोऽस्ति। यदि अविकर्षं भवति, अर्थाद् व्यूहाभावे सति 'अवर्मह इन्द्र' ( ऋ० १।१३३।६ ) सर्वाधिकायता ऋचा भविष्यति या भाष्यकारस्य उव्वटस्य मतानुसारेण सप्ततिरक्षराणां छन्दो भविष्यति। विकर्षे सति 'स हि सर्धो न मारुतम् ( ऋ० १।१२७।६ ) सर्वाधिकाऽयता ऋग् भविष्यति, उव्वटानुसारेण षट्सप्ततिरक्षराणामस्यामृचि अष्टपादा भवन्ति।

## ( ६ ) ज्यौतिषम्

यज्ञभागाः सन्ति बहुविधाः। केचन यज्ञा एवंविधा विधाने नीता ये संवत्सरसम्बन्धिनः सन्ति। केचन एतादृशाः सन्ति ये क्रतुसम्बन्धिनो वर्त्तन्ते। केचन च तिथि-मास-पक्ष-नक्षत्रपरकाः सन्ति। भावोऽयं देवेषु यज्ञभागादीनां विधानं भिन्न-भिन्नकालेषु कृतमवाप्यते। तैत्तिरीयब्राह्मणं ददति—

**'वसन्ते ब्राह्मणोऽग्निसादधीत, ग्रीष्मे राजन्य आदधीत। शरदि वैश्य आदधीत'** ( तै० ब्रा० १।१ )।

अष्टकायां फाल्गुन्यां पूर्णमासे च दीक्षाया विधानं विदधत् ताण्ड्यब्राह्मणं दीक्षितं भवति—**'एकाष्टकायां दीक्षेरन् फाल्गुनीपूर्णमासे दीक्षेरन्'** ( ताण्ड्य-ब्रा० ५।९।१७ )। प्रातः सायञ्चाग्नौ दुग्धाज्येन हवनस्य विधानमस्ति—**'प्रातर्जुहोति, सायं जुहोति'** ( तै० ब्रा० २।१।२ )। यज्ञस्य साफल्यं न केवलमुचित-विधानेऽस्ति प्रत्युत उचितसमयस्य नक्षत्रस्याऽप्यावश्यकता वर्त्तते। असुराणां परिभाषां निर्दिशन्त्याः श्रुतेर्वचनम्—**'ते असुरा अयज्ञा अदक्षिणा अनक्षत्राः। यच्च किञ्चाकुर्वत तां कृत्यामेवाकुर्वत।'** एतद्विधाया वेदाज्ञायाः पालनं ज्यौतिष-शास्त्रज्ञाने सत्येव यथायथं भवितुमर्हति। तस्माज्ज्यौतिषं नाम वेदाङ्गमपि नैजं

वैशिष्ट्यं निदधाति । ज्यौतिषमिदं कालविज्ञापकं शास्त्रम् । मुहूर्त्तं शोधयित्वा क्रियमाणा यज्ञादिक्रियाविशेषाः फलाय कल्प्यन्ते, नान्यथा, तन्मुहूर्त्तज्ञानञ्च ज्यौतिषायत्तमतोऽस्य ज्यौतिषशास्त्रस्य वेदाङ्गत्वं स्वीकृतम् । उक्तञ्चायमर्थ आर्चज्योतिषे, यथा—

**'वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः ।**
**तस्मादिदं कालविधानशास्त्रं यो ज्यौतिषं वेद स वेद यज्ञान् ॥'**

( आर्चज्यौतिषम् ३६ )

चतुर्णामपि वेदानां पृथक् पृथग् ज्यौतिषशास्त्रमासीत्, तेषु सामवेदस्य ज्यौतिषशास्त्रं नोपलभ्यते, त्रयाणामितरेषां वेदानां ज्यौतिषाण्यवाप्यन्ते ।

( १ ) ऋग्वेदस्य ज्यौतिषम्—आर्चज्यौतिषम्, षट्त्रिंशत्पद्यात्मकम् ।

( २ ) यजुर्वेदस्य ज्यौतिषम्–याजुषज्यौतिषम्, ऊनचत्वारिंशत्पद्यात्मकम् ।

( ३ ) अथर्ववेदस्य ज्यौतिषम्—आथर्वणज्यौतिषम्, द्विषष्टि-उत्तरशत-पद्यात्मकम् ।

एतेषां त्रयाणामपि ज्यौतिषाणां प्रणेता लगधो नामाचार्यः । तत्र याजुष-ज्यौतिषस्य प्रामाणिकं भाष्यद्वयमपि प्राप्यते, एकं सोमाकरविरचितं प्राचीनं, द्वितीयं सुधाकरद्विवेदीकृतं नवीनम् । एतस्य ज्यौतिषशास्त्रस्य त्रीणि वर्त्मानि, तदिदं शास्त्रं त्रिस्कन्धमुच्यते । तदुक्तम्—

**'सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम् ।**
**वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमनुत्तमम् ॥'**

लगध-प्रणीतस्य वेदाङ्गज्यौतिषग्रन्थस्य श्लोकानां रहस्यं किमित्येतद् वस्तुतो विद्वद्धौरेयाणामपि दुर्गमम् । ग्रन्थस्यास्यावतीर्णस्य ३४०० वर्षाणि व्यतीतानीति शङ्करबालदीक्षितस्य विचारः । लोकमान्यतिलक-सुधाकरद्विवेदि-डॉ० थीबो-प्रभृतयो विद्वांसो ग्रन्थस्यास्य श्लोकान् व्याख्यातुं प्रायतन्त । भारतीयस्य ज्यौतिष-शास्त्रस्य ग्रन्थ एष आद्यः । मन्ये, न ततः प्राक् ज्यौतिषि क्वापि काचित् कृतिर्लिखिताऽभूत् । वेदाङ्गज्यौतिषशास्त्रस्य कर्त्ताऽसन्दिग्धरूपेण लगध आसीत् ।

**'प्रणम्य शिरसा कालमभिवाद्य सरस्वतीम् ।**
**कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः ॥'**

( आर्चज्यौतिष श्लो० २ । )

किञ्च कोऽयं लगधः ? इति कोऽपि न जानाति । यज्ञविधानाय ज्यौतिष-शास्त्रस्येदं महत्त्वं भास्कराचार्येणाऽपि स्वीकृतम्—

**'वेदास्तावत् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण ।**
**शास्त्रादस्मात् कालबोधो यतः स्यात् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात् ॥'**

( सिद्धान्तशिरोमणिः )

वेदाङ्गज्यौतिषस्य सम्मत्यां ज्यौतिषसमयो वेदाङ्गेषु मूर्धस्थानीयोऽस्ति—

'यथा शिखामयूराणां नागानां मणयो यथा।
तद्वद् वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितम् ॥'

( वेदाङ्गज्यौ० ४ )

गच्छता कालेन शास्त्रमिदं संहितागणितजातकाख्येषु त्रिषु भागेषु आत्मानं प्रकटीचकार। आर्यभट्ट-वराहमिहिर-ब्रह्मगुप्त-भास्कराचार्यप्रभृतयोऽगाधवैदुष्यवन्तः प्रतिभाशालिनो विश्वविदिता ज्योतिर्विदोऽद्भुतान् सिद्धान्तान् अवतार्य शास्त्रमिदमभिनवेन रूपेण विभूषयाञ्चक्रुः। शास्त्रमिदं त्रिकालवर्त्तिनीमपि स्थितिं करतलामलकवत् करोति। एतेन परोक्षं भाविकालस्थितञ्च वस्तु प्रत्यक्षं जायते। उक्तं सत्यमेवास्य महिम्नि—

'वेदस्य निर्मलं चक्षुः ज्योतिःशास्त्रमकल्मषम्।
विनैतदखिलं श्रौतं स्मार्तं कर्म न सिद्ध्यति ॥'

सर्वाण्यपि दर्शनानि, सकलानि शास्त्राणि, सर्वाश्चोपनिषदो येषां हि परमरहस्यभूतानां वेदानां सौन्दर्यसुधां सततमहर्निशं पिबन्त्योऽपि न तृप्यन्ति, तेषां वेदाननुशीलयितुं यथा शाकल्य-आत्रेय-गार्ग्य-स्कन्दस्वामि-माधवभट्ट-नारायण-उद्गीथ-वेङ्कटमाधव-आनन्दतीर्थ-भवस्वामि-गुरुदेव-क्षुर-भट्टभास्करमिश्र—उव्वट-महीधर-भरतस्वामि-गुणविष्णु-सायणप्रभृतयः प्रीत्या भक्त्या च नितान्तमेव प्रयासं चक्रिरे तथैव देशान्तरीया अपि विपश्चितो वेदामृतं पातुं तान् व्याख्यातुं वाऽध्येतुं प्रायतन्त।

वेदस्य षट्स्वङ्गेषु ज्यौतिषनामाङ्गं नितान्तं महत्त्वपूर्णमङ्गमस्ति। यज्ञानां प्रतिपादनायैव वेदाः प्रवृत्ता अजायन्त। तेषां हि यज्ञानां विधानं चेत् समुचिते काले विधीयते तदैव तत्फलं लभ्यते। ज्यौतिःशास्त्रं यज्ञविधानस्य युक्ततरं कालं निर्दिशति, तस्मात् शास्त्रं तत्कालविधायकशास्त्रमित्येतेन च नाम्ना भुवि सर्वत्र प्रख्यातं वर्त्तते।

मानवः स्वभावेनैव स्वकल्याणाभिनिवेशी प्राणी वर्त्तते। सः सर्वदैवाभिलषति यत्तदीयं कार्यं शुभे समये मङ्गलवर्षिण्यां वेलायां प्रारब्धं स्यात्, येन स मनोभिलषितं संलब्धुं शक्नुयात्। आपदस्तं न निपीडयेयुर्दुःखप्रदा घटना, भयावहा स्थितयो मनोरथविध्वंसिनः प्रत्यूहाः, अनिष्टकारिण्यो दारुणा घटिकाश्च न तं निपातयेयुरित्येतदर्थं स तद्विषये कृत्स्नतया ज्ञानमधिगन्तुं वाञ्छति, येन तदागमनात् प्रागेव सावधानोऽभवत् तन्निवारणाय क्षमः सञ्जायेत। सकलस्यापि भाविनोऽनेहसो ज्ञानमसौ करतलामलकवत् कर्त्तुमुत्कण्ठते। ज्यौतिषं शास्त्रं मानवस्येमामुपरिनिर्दिष्टामाकाङ्क्षां सर्वथैव पूरयति। तच्छास्त्रं मानवं प्रति तदीयं भाविकालं सम्यक् ज्ञापयति। कस्मिन् काले का घटना घटेत, कस्मिन् काले कासां कासामापदामागमनस्य सम्भावनाः, कस्मिन् काले तदीयो भाग्योदयो भवेत्, कस्मिन् काले शत्रुरोगादिकं तं व्यथयेत्, जगति कस्मिन् कस्मिन् काले का का ईतिर्भीतिश्च समागच्छेत्, कदा किं जायत इत्यादिकं निखिलमपि शास्त्र-

मिदं समीचीनतया सर्वाङ्गीणतया बोधयति। तस्मात्कारणात् शास्त्रमेतद् यावद्धितं करोति न तावदन्यत् किमपि शास्त्रम्। लोकपरमोपकारित्वादिदं शास्त्रं सर्वेषां मानवानां नितान्तं प्रियशास्त्रमस्ति। जगद् यादृशीं प्रीतिमत्र निदधाति न तादृगन्यत्र। अतः सर्वत्र सर्वदैव सर्वेषामपि प्राणिनां शास्त्रमिदं पूज्यं शास्त्रमस्ति। लोकः शास्त्रमिदं स्वकीयशुभविधायकं मित्रमवगच्छति। दुःखानां निवारकत्वात् सुखानां विधायकत्वाच्च तस्य तस्य सर्वेऽपि जगतीतलस्य मानवास्तस्मिन् आदरधियं प्रदर्शयन्ति। वस्तुतोऽनन्तहितकारित्वाच्छास्त्रमिदं परमोपादेयमस्ति।

शास्त्रमिदमतिपुरातनमस्ति। अस्य शास्त्रस्य वीजानि वेदेषु दृष्टानि भवन्ति। तत्र—**'एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे।'** इत्यादिषु मन्त्रेषु गणितसिद्धान्तः, किञ्च—**'इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः।'** इत्यादिषु मन्त्रेषु रेखागणितस्य बीजं विलोक्यते। तदेवं शास्त्रस्यास्योद्भवभूः श्रुतय एव सन्ति।

एतत्प्रवर्तका अष्टादशमहर्षयः, ते च—

**'सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।**
**कश्यपो नारदो गर्गो मारीचिर्मनुरङ्गिराः॥**
**लोमशः पुलिशश्चैव च्यवनो यवनो भृगुः।**
**शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्त्तकाः॥'**

वेदाङ्गभूतस्य ज्यौतिषशास्त्रस्य साहित्यं विशदं व्यापकञ्चास्ति। तत्र सूर्यपितामहादिकानां सिद्धान्तग्रन्थाः, गौरीकालजातकादयो दैवग्रन्थाः, पराशरजैमिनीकृतार्षग्रन्थाः, वाराहमिहिरकृत-बृहज्जातकादयः पौरुषग्रन्था वैदिकज्यौतिषसंहितादिकाश्च प्रचुरा ग्रन्था विराजमानाः सन्ति। तस्मादेतच्छास्त्रस्य साहित्यं महीयो विपुलञ्च। अस्त्येतच्छास्त्रं स्कन्धत्रयात्मकम्—

**'सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्।' इति।**

अस्य वेदाङ्गस्यानेके प्रकाण्डपाण्डित्यवन्तो भुवनविदिता आचार्या बभूवुः। तेषां नामानि—वराहमिहिरः, आर्यभट्टः, ब्रह्मगुप्तः, लल्लाचार्यः, उत्पलाचार्यः, श्रीपतिः, भोजदेवः, भास्कराचार्यः, केशवः, गणेशदैवज्ञः, ज्ञानराजः, कमलाकरश्च सन्ति। सर्वेऽप्येते आचार्याः ज्यौतिःशास्त्रविषयकान् उत्तमोत्तमान् ग्रन्थान् प्रणिन्युः! ज्योतिर्विदामाधुनिकः संसारो यन्निधिमेतेभ्यो विद्वज्जनेभ्यः संलब्धवान् तेन स स्पृहणीयं परमगौरवं भजते।

वराहमिहिरस्य बृहज्जातक-लघुजातक-बृहत्संहितादिग्रन्थाः, कमलाकरस्य सिद्धान्ततत्त्वविवेकादिका ग्रन्थाः, भास्कराचार्यस्य सिद्धान्तशिरोमणिप्रभृतिग्रन्थाः, गणेशदैवज्ञस्य ग्रहलाघवादिग्रन्थास्तु स्वप्रभया दिव्यया दैवज्ञानां जगतीं प्रकाशयन्त्येव। तदतिरिक्ता लघुबृहत्पाराशरी-जैमिनिसूत्र-भृगुसंहिता-मीनराजजातकनाडीग्रन्थप्रभृतयः आर्षग्रन्थाश्च ज्यौतिःशास्त्रिणो हि प्रीणयन्ति नितराम्!

ढुण्ढिराजस्य जातकाभरणम्, अनन्तस्य जातकपद्धतिः, नृहरेः जातकसारः, दिवाकरस्य पद्मजातकम्, बलभद्रस्य होरारत्नम्, गोविन्दस्य होराकौस्तुभादि-ग्रन्थाः, प्रत्यहं ज्योतिर्विद्भिरनुशील्यन्ते । केरलमतप्रतिपादका रमलचिन्तामणि-रमलामृतप्रभृतयो ग्रन्थाः, ताजिकभूषणपद्धति-ताजिकतन्त्रसार-ताजिकपद्धति-ताजिकनीलकण्ठीप्रभृतिग्रन्थाः, किञ्च प्रश्नज्ञानसदृशब्रह्मग्रन्था हि बहवो ज्योतिःशास्त्रस्य साहित्ये प्रथिताः सन्ति । शकुनशास्त्रमपि संहितास्कन्धभूत-मेव । तत्राम्रदेवात्मजस्य जैनभूपस्य नृपतिजयचर्या-नाम्नी कृतिः सुप्रसिद्धैव । सूर्यदासपुत्रेण स्वरसारनामकः स्वरशास्त्रस्य च ग्रन्थो विरचितः । ज्योतिषे फलादेशे सामुद्रिकशास्त्रस्य महनीयता केन न ज्ञायते । एतस्मिन् विषये राज-कृतं ह्रस्वसञ्जीवनमतिविश्रुतम् ।

गणितशास्त्रं ज्यौतिर्ग्रहशास्त्राद् व्यतिरिक्तं नास्ति । तस्याप्यन्तर्भावस्त-त्रास्ति । अङ्कगणितं बीजगणितञ्चेत्येतद् द्वयमपि ग्रहविज्ञानस्याङ्गत्वेन मतम् । आर्यभट्टः, ब्रह्मगुप्तः, भास्कराचार्यश्चैते त्रयो विपश्चिद्वरा ग्रहतन्त्रस्य रचयितारः सन्ति । गणितस्य दशमलवपद्धतिर्ग्रहतन्त्रस्याङ्गभूतैव विद्यते । तां दशमलव-पद्धतिमस्मद्देशस्य विद्वांस एव प्रथमाविश्चक्रुरिति । गणितशास्त्रे गणिताध्याय आर्यभट्टीयस्य इत्येतौ द्वावपि ग्रन्थौ महत्त्ववन्तौ स्तः । ब्रह्मगुप्तकृते बाह्यस्फुट-सिद्धान्ते कुक्कुटाध्यायश्च गौरवमतिशयमावहति । अङ्कगणितसम्बन्धी लीलावती-संज्ञको ग्रन्थश्च परमोपयोगिषु ग्रन्थेषु गण्यते ।

भास्कराचार्यस्य सिद्धान्तशिरोमण्याख्यसन्दर्भे बीजगणितमतीव प्रकृष्टतां गाहते, एवमेवाङ्कगणिततन्त्रं भास्कराचार्य-ब्रह्मगुप्तयोः स्वोत्कृष्टतायां सर्वत्र सुविदितम् । शून्यविषये त्रैराशिकविषये विधयस्तत्राकलिताः सन्ति । बीज-गणितमपि परां कोटिमाटीकते । भास्कराचार्यब्रह्मगुप्ताचार्यौ सरलसमीकरण-सिद्धान्तं सविशदं विवृण्वानौ दृश्येते । यज्ज्यामितिशास्त्रमत्र देशे याज्ञिकप्रक्रि-यासु बहुतरं साहाय्यं प्रददौ तदपि तत्र वैशद्येन निरूपितम् । अस्मद्विद्वत्प्रणीतेषु एषु ज्यौतिःशास्त्रविषयकेषु सोऽपि सिद्धान्तं निष्पन्नतां नीतो यः पाइथोगोरस-सिद्धान्त इत्येतेन नाम्ना प्रसिद्धोऽस्ति । त्रिकोणमिति तन्त्रे च भारतीया विद्वांसो-ऽधिकारं निहितवन्तः । इतिहासेषु सन्त्येवंविधा उल्लेखा बहवो येभ्यो यूनानारबदेशनिवासिनां विद्वद्वराणां गणितज्यौतिषविद्याध्ययननिमित्तेन भारतं प्रत्यागमनं विदितं जायते । श्रूयते यदरबदेशीयः खालिफ-आलमान-सरहारून-अलरसीदनामा सम्राट्, जातस्य यस्य १२०० वर्षाण्यतीतानि, मुहम्मदविन-मूसाभिधेन विदुषा बीजगणितं गणितञ्च अरबीभाषायामनूदितम् ।

'हिस्ट्री आफ संस्कृत लिटरेचर' इत्येतन्नामके ग्रन्थे प्रो० मैक्समूलरः कथ-यति यद् अङ्कशास्त्रज्ञानार्जनं यूरोपीया भारतीयेभ्यः कृतवन्तस्तस्मात् ते तेषां सन्त्यधर्मणाः । अन्यैश्च बहुभिर्मनियरविलियमप्रभृतिभिरिदं स्पष्टमेवाभिहितं

यत् प्रतीच्यदेशीया भारतीयेभ्यो गणितविद्यामगृह्णन् । याश्च सामुद्रिक-स्वरोदय-जीवस्वरविज्ञानविषयिकाश्च विद्या भारतीयेभ्योऽतिप्राचीनतमकाले साधु विवेद यूरोपीया विद्वांसोऽद्य तद्विद्यासम्बन्धिनो भारतीयविद्वत्प्रणीतान् ग्रन्थान् विलोक्य विस्मयं गच्छन्ति । किञ्च तेऽपि एतादृशीषु विद्यासु सम्प्रति रुचिं दर्शयन्तो दृश्यन्ते । अस्मद्देशस्य हि उक्तविषयकान् ग्रन्थानधीत्य प्रतीच्याः प्रध्यः स्व-स्वदेशभाषासु च तद्विषये पुस्तकानि प्रकाशयन्तोऽधुना प्राप्यन्ते । तानि पुस्तकानि प्रेक्ष्य तेषां विदुषां तच्छास्त्रज्ञानार्जनसम्बन्धिन्याः प्रगाढाया अभिरुचेः परिचयः प्राप्तो भवति ।

वेवरमहाभागो ज्यौतिःशास्त्रस्य प्राचीनतामधिकृत्य ब्रूते—'शास्त्रमिदं भारतवर्षे, यदा ईसामसीहस्य जातस्य २७८० वर्षाणि व्यतीतान्यभूवंस्तदानीमपि प्रचलितमवाप्यत ।'

काउण्टजोर्णन्स्जानीमहोदयः स्वकीये 'थियोगोनी आफ दि हिन्दूज' इत्येतन्नामधेये ग्रन्थे लिखति यत् कलियुगस्यारम्भादेव भारतवर्षे ज्यौतिःशास्त्रस्यासीत् प्रसारः । सरहण्टरमहोदयः 'इण्डियन-गजेटियर'-मध्ये—'अनेकेषु विषयेषु भारतीयानां ज्यौतिःशास्त्रं यवनप्रणीताज्ज्यौतिःशास्त्रादुन्नततरमदृश्यत' इत्येतदुल्लिखति । कोलब्रूको नाम विद्वान् 'एलिफिस्टोन्स हिस्ट्री आफ इण्डिया, ग्रन्थे—'अयनगतिमुद्दिश्य पृथिव्याः स्वपरिधौ दैनिकश्चावर्त्तनमधिकृत्य भारतीयैः यद्गणितं तदरबदेशीयगणनाशास्त्रादुच्चतरम्' इति वदति । विलसनोऽपि कथयति—भारतीयैर्विद्वद्भिर्ज्योतिर्विद्यायामलौकिकी उन्नतिः कृता । एवंविधा विषया आर्यजातेर्ज्योतिर्विद्याया पारदर्शितां प्रमाणयन्ति । भारतीयविदुषा शङ्करबालकृष्णदीक्षितेन सप्रमाणं सिद्धं कृतं यदस्य वेदाङ्गज्यौतिषशास्त्रस्य ई० पू० १४०० वर्षं प्रागेवाभवत् । सुदूरात प्राचीनकालात् सम्बद्धत्वेनेदं शास्त्रमतिदुरूहं दुर्बोधश्चाभवत् ।

## अनुक्रमणी-साहित्यम्

वेदाङ्गेष्वपरिगणिता अप्यनुक्रमणीग्रन्थाः, प्रातिशाख्यग्रन्थाः, देवताग्रन्थाश्च वेदस्य रक्षार्थमेव प्रणीताः । मन्त्राणां द्रष्टारो ऋषयः के, तेषां देवता काः, तेषां छन्दोऽनुवाकवर्गसूक्तानि च कानि ? इति बोधयितुं ये ग्रन्था विरचितास्ते अनुक्रमणी( सूची )ग्रन्थाः कथ्यन्ते । शौनकेन ऋग्वेदरक्षार्थमार्षानुक्रमण्यादयो दशग्रन्थाः प्रणीताः । अपरेऽपि अनुक्रमणीग्रन्थाः सन्ति । प्रत्येकं वेदस्यानुक्रमण्यः समुपलब्धा भवन्ति । यास्वनेका ग्रन्थाः प्रकाशिताः सन्ति । अनुक्रमण्या रचयितृषु शौनक-कात्यायनौ नितान्तौ प्रख्यातावाचार्यौ स्तः । शौनकेन ऋग्वेदस्य कात्यायनेन च क्रमशः प्रातिशाख्ययो रचना कृता । अस्यानुक्रमण्यो वेदाङ्गत्वाभावेऽपि वेदरक्षार्थं तथा तद्गतावान्तरविषयाणां विवेचनार्थं महत्त्वपूर्णाः सन्ति । ऋक्सर्वानुक्रमणि-वृत्त्या भूमिकायां वृत्तिकारेण षड्गुरु-

शिष्येण शौनकेन ऋग्वेदरक्षार्थं येषां दशग्रन्थानामुल्लेखः कृतस्ते च सन्ति-- ( १ ) सर्वानुक्रमणी, ( २ ) छन्दोऽनुक्रमणी, ( ३ ) देवतानुक्रमणी, ( ४ ) अनुवागनुक्रमणी, ( ५ ) सूक्तानुक्रमणी, ( ६ ) ऋग्विधानम्, ( ७ ) पादविधानम्, ( ८ ) बृहद्देवता, ( ९ ) प्रातिशाख्यम्, ( १० ) शौनकस्मृतिश्च ।

एतेषु प्रारम्भिकपञ्च ग्रन्थेषु क्रमशः ऋग्वेदस्य दशमण्डलानाम्, ऋषीणाम्, छन्दसाम्, देवतानाम्, अनुवाकानाम्, सूक्तानाञ्च संख्या नाम तथा तद्विषयकानां महनीयतथ्यानां क्रमबद्धविवरणमनुष्टुप्पद्येषु प्रस्तुवन्ति । ऋग्विधाने ऋग्वेदीयमन्त्राणां प्रयोगो विशेषकार्यसिद्ध्यर्थमेव प्रदर्शितोऽस्ति । एवंविधा विधानग्रन्था अन्येष्वपि वेदेषु प्रायः समुपलब्धा भवन्ति । सामवेदस्य सामविधानाख्यो ग्रन्थोऽस्ति । सत्यपि अनुक्रमणीग्रन्थे 'सामविधानम्' ब्राह्मणग्रन्थेषु परिगणितमस्ति । अस्मिन् ग्रन्थे साम-प्रयोगो विविधेष्वनुष्ठानेषु विशेषफलकामनायै प्रदर्शितोऽस्ति । शौनकीयप्रातिशाख्यमृग्वेदेनैव सम्बद्धमस्ति ।

## बृहद्देवता-स्वरूपं परिचयश्च

अनुक्रमणी साहित्यस्य 'बृहद्देवता' प्रभापूर्णमेकं रत्नमस्ति । अस्य ग्रन्थरत्नस्यालोके ऋग्वेदीयदेवतानां रहस्यं स्पष्टत आलोकितं भवति । द्वादशशतेषु पद्येषु निर्मितोऽयं ग्रन्थः ऋग्वेदीयदेवतानां विषये प्रामाणिकः, प्राचीनस्तथा पर्याप्तरूपेण विस्तृतोऽप्यस्ति । ग्रन्थोऽयमष्टाध्यायेषु विभक्तमस्ति । प्रत्येकस्मिन्नध्याये प्रायः पञ्चपद्यानामेकः वर्गो भवति, किञ्चास्य विभाजनस्य सम्बन्धमृग्वेदस्याष्टकेन सह कथमपि भवितुं न शक्यते । वर्गाणां विभाजनमपि पूर्णतः अव्यावहारिकं तथा यथेच्छकल्पितमस्ति । अतो यदा कदा आख्यानस्य मध्ये एव कोऽपि वर्गः समाप्तो भवति । बृहद्देवतायाः प्रथमाध्यायस्य द्वितीयाध्यायस्य चादिमपञ्चदशवर्गाः ( १२५ श्लोकाः ) ग्रन्थस्योपादेयभूमिकारूपेण सन्ति । अत्र देवतायाः स्वरूपस्य, स्थानस्य तथा वैलक्षण्यस्य च विवरणं विस्तरेण प्रदत्तमस्ति । भूमिकायाश्चान्तिमानां सप्तवर्गाणां सम्बन्धं व्याकरणेन सहास्ति । निरुक्तेन सम्बद्धविषयाणां निपात-अव्यय-सर्वनाम-संज्ञा-समासादीनां वर्णनं यथेष्टरूपेण मिलति । शब्दविभाजने यास्कस्यापि अशुद्धीनामालोचना वर्त्तते । द्वितीयाध्यायस्य षड्विंशतितमाध्यायादारभ्यान्तपर्यन्तं ग्रन्थोऽयमृग्वेदस्य प्रत्येकं सूक्ताय देवतानां निर्देशं क्रमशः करोति । नास्तीयं शुष्कसूची देवतायाः, अत्र सूक्तानां विषये समुपलब्धानामाख्यानानामपि निर्देशः सुष्ठुतया प्रतिपादितोऽस्ति । अस्मिन् कार्येऽस्य ग्रन्थस्य प्रायश्चतुर्थांशो व्ययोऽभवत् । एतान्याख्यानानि बृहद्देवतायाः प्राणाः सन्ति । काव्यशैल्यां निबद्धान्येतान्याख्यानानि ऐतिहासिकरीत्या महाभारते निर्दिष्टैराख्यानैः सह सम्पर्कं स्थापयन्ति । अनया दृष्ट्या 'बृहद्देवता' कथासाहित्यस्यादिमो ग्रन्थो मन्यतुं शक्यते । महाभारतीयाख्यानैः सह बृहद्देवतागताख्यानानां पारस्परिकं तुलनात्मकं सम्बन्धमद्यापि विवादस्यैव विषयोऽस्ति । किञ्चाधिकांश-विदुषां मते प्राचीनतरस्य बृहद्देवताया एवानु-

करणमवान्तरकालिकस्य महाभारतस्य तत्तद्भागे कृतमस्ति। द्याद्विवेदस्य 'नीति-मञ्जरी' बृहद्देवताया एवानुशीलनस्य परिणतफलमस्ति। सर्वानुक्रमणीग्रन्थे कात्यायनस्तथा वेदभाष्ये सायणश्चैतान्याख्यानानि अत्रत एवोद्धृतवन्तौ। अनेन प्रकारेणाख्यानानां प्राचीनतमसङ्ग्रहत्वेनापि 'बृहद्देवता'-साहित्यस्य सार्वभौम-दृष्टयापि नितान्तो रोचकस्तथा हृदयावर्जको ग्रन्थोऽस्ति।

यास्कस्य निरुक्तं कात्यायनस्य च सर्वानुक्रमणीग्रन्थयोर्मध्यकालवर्त्ती ग्रन्थोऽयं महत्त्वपूर्णोऽस्ति। शौनकेनात्र निरुक्तस्य न केवलं देवताविषय-ककल्पनामेवाङ्गीकृता, प्रत्युत तेषामनेकानि वाक्यान्यप्युद्धृतानि। कात्यायने-नाऽपि बृहद्देवतायाः समुपयोगः स्वरचनायां सर्वानुक्रमण्यां बहुशः कृतः। सत्यपि सूत्ररूपे सर्वानुक्रमण्यां बृहद्देवतायाः प्रायः त्रिशत् श्लोका यथावदल्प-परिवर्त्तनेन सह स्वीकृता उद्धृताश्च सन्ति। अपाणिनीयपदानां बहुलतया प्रयोगेण सर्वानुक्रमणीकारः कात्यायनो वार्त्तिककाराद् वैयाकरणकात्यायनात् सर्वथा भिन्न एवाऽऽसीत्। अनेन प्रणीतस्य बृहद्देवताया उद्धरणानि तेन स्वग्रन्थे दत्तानि, अतः बृहद्देवता पूर्वपाणिनीययुगस्य कृतित्वेन वि० पू० अष्टमशतको-त्तरभागे अवर्त्ततेति कल्पना कर्त्तुं शक्यते।

## सर्वानुक्रमणी

ऋग्वेदस्य समस्तावश्यकविषयाणां ज्ञानाय कात्यायनस्य कृतिः 'सर्वानु-क्रमणी' नितान्ता प्रसिद्धा प्रामाणिका चाऽस्ति। ग्रन्थोऽयं सूत्ररूपेण निबद्धोऽस्ति। प्रत्येकं सूक्तस्यादिपदम्, अनन्तरं ऋचां संख्या, सूक्तस्य ऋषेर्नाम, तथा तस्य गोत्रं, सूक्तानां तथा तदनन्तर्गतमन्त्राणां देवताया निर्देशस्तथा मन्त्राणां छन्दसां क्रमबद्धोल्लेखं कृतवान्। अनेन प्रकारेण ऋग्वेदस्य विषये आवश्यक-सामग्रीसङ्कलनत्वेन ग्रन्थोऽयं विशेषरूपेणोपादेयोऽस्ति। माधवभट्टस्यापि एका ऋग्वेदानुक्रमणी अस्ति। अस्य खण्डद्वये स्वर-आख्यात-निपात-शब्द-ऋषि-छन्द-देवतादीनां तथा मन्त्रार्थ-विषयकस्याष्टानुक्रमणीनामेकत्र सङ्ग्रहोऽस्ति। ग्रन्थोऽय स्वतन्त्रो न भूत्वा माधवभट्टस्य भाष्यान्तर्गतं तत्तद्विषयाणां प्रतिपादकानां श्लोकानां सङ्ग्रहोऽस्ति। सर्वानुक्रमण्या दशा एतद्भिन्नैवास्ति। अस्मिन् बृहद्देव-तायाः श्लोकात्म्कान्युद्धरणान्यपि सूत्ररूपेण परिणतं कृत्वा प्रदर्शितानि। सर्वानु-क्रमणी ऋग्वेदीयदेवताया वर्णने बृहद्देवतामेव स्वकीयाऽधारं मन्यते, अतः शतान्युद्धरणान्यत्र समाविष्टानि सन्ति।

सर्वानुक्रमणीग्रन्थस्य रचयिता कात्यायनमुनिरस्ति। मुनिरयं शुक्लयजु-र्वेदीयश्रौतसूत्रस्य कर्त्तुर्भिन्नः प्रतीतो न भवति। कात्यायनेन प्रणीतः 'शुक्ल-यजुर्वेदीया अनुक्रमणिका' अपि अस्यैव कात्यायनस्य रचना प्रतीता भवति। यतोऽस्य सम्पूर्णभूमिकाभागः सर्वानुक्रमण्या भूमिकातः साम्यं स्थापयति। कात्यायनस्य अस्य ग्रन्थस्य पदेषु बहुविधं वैदिकवैशिष्टयं मिलति। वैयाकरण-

वार्त्तिककारः कात्यायनादयमन्य इति सर्वसम्मतम् । सर्वानुक्रमणीं पूर्वपाणिनि-युगस्य रचनाऽस्ति इत्यसन्दिग्धं वक्तुं शक्यते ।

### याजुष-अनुक्रमणी

शुक्लयजुःसर्वानुक्रमसूत्रस्याऽपि रचयिता कात्यायन एवाऽस्ति । ग्रन्थेऽस्मिन् पञ्चाध्यायाः सन्ति । एतेषां सूत्राणामर्थावबोधनायास्य ग्रन्थस्य भाष्यमपि प्रकाशितमस्ति । अस्य भाष्यस्य रचयिता महायाज्ञिकस्य प्रजापतेः पुत्रो महायाज्ञिकः श्रीदेवोऽस्ति । अस्य परिचयः प्रत्येकमध्यायस्यान्ते प्रदत्तपुष्पिकातो मिलति । ग्रन्थेऽस्मिन् माध्यन्दिनसंहिताया देवता, ऋषिस्तथा छन्दसां विस्तृतं विवरणं प्रदत्तमस्ति । ग्रन्थारम्भे ऋषेश्छन्दसो ज्ञानस्य महिमा प्रतिपादितोऽस्ति । अस्य ज्ञानं विना वेदाध्ययनं मरणमिव कष्टप्रदं भवति—'**अथान्तराश्वगर्तं वाऽऽपद्यते स्थाणुं वच्छेति प्रमीयते वा पापीयान् भवति** ( पृ० १० ) ।' अत्र यागविधानस्य निमयस्तथाऽनुष्ठानानां वर्णनं विशेषरूपेण मिलति । छन्दसां विस्तृतविवेचन-मस्यानुक्रमण्या महती विशिष्टताऽस्ति ।

## सामवेदीयग्रन्थाः

सामवेदस्य श्रौतयागेन सम्बद्धा अनेके ग्रन्था उपलभ्यन्ते । एतेषु ग्रन्थेषु कतिपये हस्तलिखितरूपेणैव मिलन्ति । तेषां क्रमशः परिचयः प्रदीयते—

### ( १ ) कल्पानुपदसूत्रम्

कल्पानुपदसूत्रे द्वौ प्रपाठकौ स्तः । प्रत्येकं प्रपाठको द्वादशपटलेषु विभक्तोऽस्ति । आर्षेयकल्पस्य तथा क्षुद्रसूत्रस्य च परिशिष्ट इवेदं प्रतीतं भवति । यतोऽत्र नामनिर्देशं विनैवोभाभ्यां ग्रन्थाभ्यामुद्धरणानि सङ्गृहीतानि सन्ति । सूत्रमिदं सभाष्यं काशीतः प्रकाशितमस्ति ।

### ( २ ) उपग्रन्थसूत्रम्

ग्रन्थेऽस्मिन् चत्वारः प्रपाठकाः सन्ति । सायणानुसारेण (ताण्ड्य० ७।४।८) कात्यायन एवास्य कर्त्ताऽस्ति । अस्यान्तिमप्रपाठकसामप्रतिहारभागस्य परिचायकः स्वतन्त्रो ग्रन्थोऽस्ति । अवशिष्टप्रपाठकास्तु क्षुद्रसूत्रस्यैव परिशिष्टभागो यो हि सत्यव्रतसामश्रमीमहोदयेन 'उषा'-नाम्नि पत्रिकायां १८९७ ख्रीष्टाब्दे कलकत्तानगरीतः प्रकाशितोऽस्ति ।

### ( ३ ) अनुपदसूत्रम्

ग्रन्थोऽयं दशप्रपाठकेषु विभक्तोऽस्ति । पञ्चविंशब्राह्मणस्यायं संक्षिप्ता व्याख्याऽस्ति ( अप्रकाशितम् ) ।

### ( ४ ) निदानसूत्रम्

दशप्रपाठकेषु विभक्तमिदं सूत्रमस्ति । अस्य ग्रन्थस्य प्रणेता पतञ्जलिः प्रतीतो भवति । ताण्ड्यभाष्ये ( १४।५।१२ ) सायणेन यान्युद्धरणानि दत्तानि,

तेषां निदानं सूत्रे मिलति— 'तथा निरालम्बरूपता भगवता पतञ्जलिना उक्तं सप्तमेऽहन्यर्कः कृताकृतो भवत्यब्राह्मणविहितत्वादिति ।' उद्धरणमिदं निदानसूत्रे ( ४।७ ) उपलब्धं भवति । अन्येषु प्रमाणेष्वपि पतञ्जलिरेवास्य निदान-सूत्रस्य रचयिता प्रतीतो भवति ( प्रकाशितमिदं सूत्रम् ) ।

## ( ५ ) उपनिदानसूत्रम्

अस्मिन् सूत्रे द्वौ प्रपाठकौ स्तः । अस्मिन् प्रथमतः छन्दसां सामान्यवर्णन-मस्ति । तदनन्तरमुभयोरार्चिकयोर्मन्त्राणां छन्दसां विवरणमस्ति ( अप्रका-शितम् ) । इमौ द्वौ ग्रन्थौ छन्दोविषयकस्य विवरणकर्तारौ स्तः ।

## ( ६ ) पञ्चविधानसूत्रम्

सूत्रेऽस्मिन् द्वौ प्रपाठकौ स्तः । साम्नः पञ्चविभागानां यद्वर्णनमुपरि कृतमस्ति तेषां विभाजनप्रकाराणामत्र वर्णनमस्ति ( प्रकाशितम् ) ।

## ( ७ ) लघु-ऋक्तन्त्रसङ्ग्रहः

ऋक्तन्त्रस्य संक्षिप्तं संस्करणं न भूत्वा ग्रन्थोऽयं स्वतन्त्रोऽस्ति । अस्मिन् संहितापाठं पदपाठरूपेण परिणतमस्ति । अनेन परिणतेन या विशिष्टता परि-लक्षिताऽभवत् तस्यैको विपुलः सङ्ग्रहोऽत्र प्रस्तुतोऽस्ति । अत्र एतादृशानां मन्त्राणां निर्देशोऽस्ति, यत्र संहितायां 'ष' इत्यस्ति तत्र पदपाठे 'स' इत्यस्ति ( श्लो० २५—३९ ) । यत्र संहितायां 'ष्ट' इति पदमस्ति, तत्र पदपाठे 'स्त' इति भवति (श्लो० ४०-४३) । अनेनैव प्रकारेण गुण-वृद्धि-पूर्वरूप-प्रकृतिभावा-दीनां स्थलानां निर्देशोऽस्ति । मन्त्राणां सरूपज्ञानाय नितान्तमुपादेयोऽस्ति ( प्रकाशितः ) ।

## ( ८ ) सामसप्तलक्षणम्

अस्मिन् पद्यबद्धलघुकायिके ग्रन्थे सामसम्बन्धिज्ञातव्यतथ्यानां सङ्कलनमस्ति ( प्रकाशितम् ) ।

### अथर्ववेदीयग्रन्थाः

अथर्ववेदेन संश्लिष्टाऽनेकशो ग्रन्थाः सन्ति । एभिर्ग्रन्थैरथर्वस्य विभाजन-मन्त्र-उच्चारण-विनियोगादीनामावश्यकोपकरणं प्रदत्तमस्ति । अथर्ववेदीयपरि-शिष्टान्तर्गते ऊनपञ्चाशत्तमं परिशिष्टं चरणव्यूहोऽस्ति । अस्यानुसारेणास्य वेदस्य पञ्च लक्षणग्रन्थाः सन्ति—( १ ) चतुराध्यायी, ( २ ) प्रातिशाख्यम्, ( ३ ) पञ्चपटलिका, ( ४ ) दन्त्योष्ठविधिः, ( ५ ) बृहत्सर्वानुक्रमणी । एतेषां पञ्चलक्षणग्रन्थानां प्रारम्भिकयोर्द्वयोर्ग्रन्थयोर्विवरणं शिक्षाप्रसङ्गे प्रदत्तमेवास्ति । पञ्चपटलिकायां पञ्चाध्यायाः सन्ति, येष्वध्यायेषु अथर्वस्य काण्डानां तथा तद्गतमन्त्राणां संख्याया विवरणमस्ति । अथर्वस्य मन्त्रसंख्याया विषये विद्वत्सु पर्याप्तो मतभेदोऽस्ति । ब्लूमफील्ड-ह्विटनीप्रभृतयः पाश्चात्यविद्वांसः अष्टादश-

काण्डपर्यन्तमेवाथर्ववेदस्य मूलं कथ्यन्ते तथा चान्तिमे द्वे काण्डेऽवान्तरकालिका रचना मन्यन्ते । किञ्चास्मिन् लक्षणग्रन्थे विंशत्याः काण्डस्य सूक्तसंज्ञा ऋषि-देवतादीनां स्पष्टतया निर्देशो मिलति । आश्वलायनस्य क्रमानुसारेणायं निर्देशोऽस्ति । अस्य मतस्य कारणमिदमस्ति यदस्य काण्डस्य सर्वे मन्त्रा ऋग्वेदादेव गृहीताः सन्ति । अत एव पञ्चपटलिकाऽऽस्य काण्डस्य ऋष्यादि-विवेचने ऋग्वेदीयाश्वलायनस्यैव क्रमो गृहीतः ।

## दन्त्योष्ठविधिः

लघ्वाकारः सन्नपि ग्रन्थोऽयमथर्ववेदीयोच्चारणस्य दृष्टचा अतीवमहत्त्वपूर्णः अस्ति । पवर्गीयो वकारः ओष्ठ्योऽस्ति, किञ्च 'वकारः' दन्त्योष्ठ्यवर्णोऽस्ति । अस्मिन् लक्षणग्रन्थे शब्दानां निर्देशं कृत्वा एतेषां स्वरूपस्याऽपि विवेचनमस्ति । अनेन प्रकारेण निर्णीतपदानां संख्या अत्र ११६ वर्त्तते । शब्दानां स्वरूपनिर्णये तथा तेषामर्थानां निर्णये अस्य स्वल्पकायग्रन्थस्य नैजं महत्त्वमस्ति । अथर्वे—**'एष यज्ञानां विततो बहिष्ठो'** ( ४।३४।५ ) । अत्र 'बहिष्ठः' इति पदं सायण-राथ-ह्विटनीप्रभृतयो विद्वांसो वकारादिर्मन्यन्ते, किञ्चास्य लक्षणग्रन्थस्यानुसारेण ( २।३ ) पदमिदमोष्ठ्यबकारादिरेवास्ति । पाण्डुरङ्गपण्डितेन सम्पादिताथर्व-संहितायां तथाऽन्यहस्तलेखानामाधारे अप्ययमेव पाठो विशुद्ध इति मन्यन्ते । अनेन प्रकारेण—**'यावद् रोधसी विबबाधे अग्नि'** (अ० ८।९।५) । अस्मिन् मन्त्रे अपि 'विबबाधे' इत्यत्रापि द्वितीयवर्णस्य स्वरूपस्य निर्णयमस्ति, स्पर्शवर्णोऽय-मस्ति ( १।११ ) । अस्मिन् ग्रन्थे द्वौ अध्यायौ स्तः । प्रथमे अध्याये द्वादश श्लोकाः सन्ति तथा द्वितीयेऽध्याये एकादश श्लोकाः सन्ति ।

## बृहत्सर्वानुक्रमणी

अस्मिन्नुपयोगिनि ग्रन्थे प्रत्येकस्य काण्डस्य सूक्तानां मन्त्र-ऋषि-देवता-छन्दप्रभृतीनां पूर्णविवेचनमस्ति । सर्वानुक्रमण्या यत्स्थानमृग्वेदीयसाहित्येऽस्ति तदैवास्य ग्रन्थस्यापि महत्त्वमथर्ववेदीयसाहित्येऽस्ति । ग्रन्थोऽयं विस्तृतोऽस्ति तथा संहितावद्विंशतिकाण्डेषु विभक्तोऽस्ति ।

सायणाचार्यः अथर्ववेदीयभाष्यस्योपोद्धाते पञ्चोपयोगिग्रन्थानां विषयस्य निर्देशं कृतवानस्ति, यस्मिन् कौशिक-वैतानसूत्रयोः परिचयः प्रदत्तोऽस्ति प्रागेव । तृतीयो ग्रन्थो नक्षत्रकल्पोऽस्ति । ग्रन्थेऽस्मिन् त्रिंशन्महाशक्तीनां निमित्तभेदेन वर्णनमस्ति । अत्रामृतशान्तिः प्रथमाऽस्ति, अभयाशान्तिश्चान्तिमाऽस्ति । चतुर्थग्रन्थे आङ्गिरसकल्पे अभिचारस्य कालस्थानादीनां निर्देशोऽस्ति । कर्त्ता, कारयिता तथा सदस्यादीनाञ्चात्मरक्षा तथा शत्रुकृताभिचाराणां निवारणस्यापि उपायः प्रदर्शितोऽस्ति । शान्तिकल्पनामके पञ्चमे ग्रन्थे विनायकग्रहेण गृहीतस्य जनस्य लक्षणं तथा विनायकीशान्त्यर्थमुपयुक्तहोमादीनां वर्णनमस्ति । अथर्व-परिशिष्टेऽन्याथर्ववेदीयविषयाणां विवरणमस्ति । अथर्वस्येदमपि साहित्यमन्येषां वेदानां साहित्यमिवोपयोगिन उपादेयञ्चास्ति ।

अनेनैव विभागेन सम्बद्धौ द्वौ ग्रन्थौ एवंविधौ स्तः, यौ सत्यप्यतीतकालिकौ तथापि तावतीव महत्त्वशालिनौ स्तः। अनयोर्ग्रन्थयोर्मध्ये एको महर्षिशौनकप्रणीतं चरणव्यूहसूत्रम्, द्वितीयश्च द्याद्विवेदविरचिता नीतिमञ्जरी चेति। चरणव्यूहे पञ्च खण्डानि सन्ति, येषु ऋग्-यजुः-सामाथर्वादीनां शाखानां क्रमशः प्रतिखण्डं विवरणं तथा चान्तिमे खण्डे फलश्रुतिरस्ति। १५५६ ख्रीष्टाब्दे काश्यां निवसन्महीदासः एका प्रमेयबहुला विवृतिर्लिलेख। अस्मिन् मूलार्थस्य सम्पुष्टिः पौराणिकविशिष्टोद्धरणानां साहाय्येन कृताऽस्ति। नीतिमञ्जर्या वैशिष्ट्यमिदमस्ति यदृग्वेदे समुपलब्धानां सर्वेषामाख्यानानां तथा तज्जन्योपदेशानां श्लाघ्यसङ्कलनमत्रास्ति। ऋग्वेदीयाख्यानानां निर्देशो बृहद्देवतायां तथा तदनुसारेण सायणभाष्ये च तत्तत्प्रसङ्गे विशेषरूपेणैवाऽस्ति। अस्य ग्रन्थस्य रचयिता द्याद्विवेदमहोदयेनाष्टकक्रमेण समग्रऋग्वेदादाख्यानं सङ्कलितम्। कस्या अपि घटनायाः कस्या अपि मनोरमाया व्यावहारिकशिक्षायाः समुपलब्धिरभवत्, सा चैकस्मिन् श्लोके निबद्धा। ऋग्वेदीयाख्यानस्य तथा तदुपदेशस्य च सङ्ग्रहः एकस्मिन्नेव श्लोके कृतस्तेनेति। प्रतिश्लोकं निर्दिष्टानां मन्त्राणां व्याख्या प्रामाणिकवैदिकग्रन्थानामुल्लेखेन सहातीव मार्मिकतया प्रगाढपाण्डित्येन सह ग्रन्थकारेण कृताऽस्ति। द्याद्विवेदो गुर्जरप्रान्तनिवासी आसीत्। १४९४ तमे ख्रीष्टाब्दे द्याद्विवेदमहाशयेन 'नीतिमञ्जरी'-ग्रन्थस्य रचना कृता। अस्य ग्रन्थस्य भाष्ये चतुर्दशशतकात् सायणभाष्यात् तथा षड्गुरुशिष्यस्य द्वादशशतकात् ( ११८४ ई० ) वेदार्थदीपिकाख्यग्रन्थादतीव साहाय्यं गृहीतमनेन ग्रन्थकारेण। अनेन प्रकारेण ऋग्वेदीयाऽऽख्यानानामनुशीलनार्थं 'नीतिमञ्जरी' एकोऽद्वितीयो ग्रन्थोऽस्ति। मन्त्रभाष्ये द्याद्विवेदमहाशयेन स्वप्रगाढपाण्डित्यस्य वैदिकानुशीलनस्य च विशिष्टपरिचयः प्रदत्तः। सत्यपि सायणाचार्यस्य भक्तोऽयं तस्यान्धानुकरणं न कृतवान्। ऋग्वेद-व्याख्यानिमित्तापि 'नीतिमञ्जरी' एकः उपयोगिग्रन्थोऽस्ति। प्राचीनकाले अस्मिन् देशे एवंविधः बहुशोऽनुक्रमणीग्रन्थाः प्रणीता अजायन्त एव, परमस्मिन् वर्त्तमानेनेहस्यपि प्रतीच्या विचक्षणा एतस्मिन् क्षेत्रेऽपि कार्यं कृतवन्तः। तत्र ब्लूमफील्डमहोदयस्य 'वैदिककान्कार्डेन्सः' सुप्रसिद्धो ग्रन्थो विराजते। वेदे वैदिके च विषये लिखितानां ग्रन्थानां लेखानाञ्च पूर्णतया परिचयकारी ग्रन्थो फ्रेञ्चभाषायां 'बिब्लियोग्राफी वेदीक' नामधेयो हि विदुषा लईनेरोमहाभागेनालेखि। ग्रन्थश्चायमुपादेयः। इत्थं पाश्चात्यानामपि पण्डितानां वेदवेदाङ्गे अन्येषु च वैदिकेषु विषयेषु प्रशंसनीयानि कार्याणि वीक्ष्यन्ते।

## प्रातिशाख्य-साहित्यम्

नानाविधज्ञानविज्ञानप्रतिपादकत्वेनातिगम्भीरं सुविस्तृतं च खलु वैदिकं वाङ्मयमिति नाविदितं विदुषाम्। तस्यैव तद्भागक्रमेण विचारणीयान् विवेचनीयांश्च विषयानधिकृत्येदं प्रातिशाख्यसाहित्यं प्रातिशाख्यं वेदस्य लक्षणग्रन्थो-

ऽस्ति । अनेन ग्रन्थेन वेदस्य बाह्यस्वरूपं निर्दिष्टं भवति । वेदाभ्यासस्तु पञ्चधा विभज्यते—( १ ) अध्ययनम्, ( २ ) विचारः, ( ३ ) अभ्यासः, ( ४ ) जपः ( ५ ) अध्यापनञ्चेति । ऋक्प्रातिशाख्यस्य सूत्रेषु एतेषां पञ्चप्रकारकाणां वेदाभ्यासस्य विधिवद् वर्णनमस्ति । एतेष्वध्ययनं तु वेदश्रवणस्य द्योतकमस्ति । विचारोऽपि द्विधा भवति—अर्थतो लक्षणतश्चेति । निरुक्तकृता यास्केन कथितम्—

**'स्थाणुरयं भारहरः किलाभूत्**
**अधीत्य वेदं न विजानाति योऽर्थम् ।**
**योऽर्थज्ञ इत सकलं भद्रमश्नुते-**
**नाकमेति ज्ञानविधूतपाप्मा ॥'** ( नि० १।१६ )

यः पुरुषो वेदं पठित्वा तस्यार्थं न जानाति सः स्थाणुरिव भारहारी भवति । यो हि पुरुषो वेदार्थं विजानाति सैव समस्तं कल्याणमाप्नोति । ज्ञानेन पापं विनाश्य स्वर्गं प्राप्नोति । एतदर्थमेव शास्त्रं कथयति—

**'लक्षणं यो न वेत्त्यृक्षु न कर्मफलभाग्भवेत् ।**
**लक्षणो हि मन्त्राणां सकलं भद्रमश्नुते ॥'**

यो हि जनः ऋक्-लक्षणमज्ञात्वैव कार्यं करोत्यसौ कर्मफलं प्राप्तुं न शक्नोति । मन्त्रलक्षणज्ञातैव समग्रकल्याणफलमश्नुते । फलतो लक्षणस्य वर्णनमर्थज्ञानात्प्रागेव भवति, यतोऽर्थज्ञानं लक्षणपूर्वमेव भवति । शास्त्रीयवचनमस्ति—

**'स्वरो वर्णोऽक्षरो मात्रा दैवं योगार्षमेव च ।**
**मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ॥'**

तात्पर्यमिदमस्ति यत् मन्त्रार्थजिज्ञासून् जनान् प्रथमतः स्वर-वर्ण-अक्षर-मात्रा-देवता-विनियोगार्षाणां ज्ञानं प्राप्तव्यम् । एतेषां पदार्थानां ज्ञानाय प्रातिशाख्यस्योपयोगोऽस्ति । प्रातिशाख्यस्याध्ययनस्य परिनिष्ठितफलमस्ति—मन्त्राणां लक्षणज्ञानम् । अस्य स्पष्टनिर्देशः ऋक्प्रातिशाख्यस्य मङ्गलश्लोके एव सूत्रकारेण शौनकेन मुनिना कृतमस्ति—

**'तं पद्मगर्भं परमं त्वादिदेवम् ।**
**प्रणम्यर्घां लक्षणमाह शौनकः ॥'**

फलतः ऋक्प्रातिशाख्यस्यापरं नाम ऋक्लक्षणमस्ति । प्रातिशाख्यस्य विधिवदध्ययनकर्त्तैवाचार्यपदस्याधिकारी भवति नान्यदिति । अस्मिन् विषये ऋक्प्रातिशाख्यस्य स्पष्टकथनमस्ति—

**'पदक्रमविभागज्ञो वर्णक्रमविचक्षणः ।**
**स्वरमात्राविशेषज्ञो गच्छेदाचार्यसम्पदम् ॥'**

( प्र० व० श्लो० ८ )

तेन हि प्रातिशाख्यस्यानुशीलनं वेदस्याचार्यत्वसम्पादनाय प्राथमिकाऽऽवश्यकता वर्त्तते। प्रातिशाख्यानामध्ययनेन ज्ञातो भवति यत्तासु शाखासु कस्याप्येकस्यैव शाखानियमानां निर्देशो नास्ति, अपितु तासु एकैकस्य चरणस्य शाखानियमानामुल्लेखो मिलति। महर्षिणा यास्केन कथितम्—**'पदप्रकृतीनि सर्वचरणानां पार्षदानि'** ( नि० १।१७ )। पारिषदानां प्रातिशाख्यानाञ्च सम्बन्धः चरणैः सह सिद्धो भवति। प्रातिशाखा-शब्दः चरणायैव व्यवहृतः प्रतीतो भवति। साम्प्रतिकं शाखाशब्दाय विष्णुपुराणे अनुशाखाशब्दस्य प्रयोगो मिलति ( वि० पु० अं० ३, अ० ४ )।

प्रातिशाख्यस्य विषये उव्वटकृतस्य ऋक्प्रातिशाख्यभाष्यस्यारम्भे पद्यमिदमुपलब्धं भवति, येनास्याः प्रयोजनस्य परिचयो मिलति—

**'शिक्षा छन्दो व्याकरणैः सामान्येनोक्तलक्षणम्।**
**तदेवमिह शाखायामिति शास्त्रप्रयोजनम्॥'**

अयमाशयोऽस्ति—शिक्षा छन्दोव्याकरणयोः सामान्यनियमस्य वर्णनं करोति। ते एव नियमाः तत्तद्वैदिकीशाखायां केन प्रकारकेणास्ति, अस्य कथनमेव प्रातिशाख्यस्य मूलप्रयोजनमस्ति। निष्कर्षोऽयमस्ति यत् प्रातिशाख्यस्य क्षेत्रं पूर्वोक्तानि त्रीणि वेदाङ्गानि समाहरति, तथा तस्य विशिष्टशाखायां तत्तद्विशेष नियमानां विवरणं प्रस्तौति। प्रातिशाख्यं पूर्वोक्तस्य वेदाङ्गत्रितयस्य नियमानां विशेषरूपेण व्यवस्थापकमस्ति। शिक्षा-छन्द-व्याकरणेषु यस्य नियमस्य विधानमस्ति तद्भिन्ननियमानां विधानमस्मिन् शास्त्रे भवति। एवंविधा विषयाः सन्ति—पद-क्रम-क्रमहेतु-पारायणादयः। प्रातिशाख्यमिदं कस्यापि शास्त्रस्याङ्गकथनेनास्य पूर्णताया ह्रासो भवति। इदमस्ति अनिन्द्यम्, आर्षं पूर्णवेदाङ्गञ्चेति। स्वयं मुनिना शौनकेन कथितम्—

**'कृत्स्नं च वेदाङ्गमनिन्द्यमार्षम्।'** ( ऋक् प्रा० १४।६९ )

चतुर्णां वेदानां चत्वारि प्रातिशाख्यानि सन्ति। तानि च—ऋक्प्रातिशाख्य-वाजसनेयिप्रातिशाख्य-तैत्तिरीयप्रातिशाख्य-सामवेदीयप्रातिशाख्य-अथर्ववेदीयप्रातिशाख्यानि च। एतेषु प्रातिशाख्यग्रन्थेषु ऋग्वेदप्रातिशाख्यं शीर्षस्थानीयमस्ति। विषयप्रतिपादनदृष्टया वैदिकशब्दानां वेदमन्त्राणाञ्च व्याकरणप्रक्रियाप्रदर्शनमेव प्रातिशाख्यानामुद्देश्यम्। संक्षेपतो वैदिकव्याकरणसम्बन्धिपदप्रयोगनियमानां ज्ञानाय अन्यव्याकरणजन्यज्ञानसौलभ्याय च प्रातिशाख्यग्रन्थाः प्रणीताः सन्ति।

## देवता

**देवताग्रन्था वेदमन्त्राणां देवताः प्रतिपादयितुं लिखिताः। पूर्वमत्र विभागे बहवो ग्रन्था आसन्, परं सम्प्रति एक एव प्रसिद्धो बृहद्देवता नामा ग्रन्थः प्राप्यते। वेदेषु देवतानां स्थानमतिमहत्त्वपूर्णमस्ति। प्रकृतिदेवताया लीला बहु-**

विधाः सन्ति। वैदिकऋषयस्तस्यास्तत्तल्लीला अवधारयितुमनेका देवता अकल्पयन्। मानवानामखिलानि कार्याणि आसां देवतानुकम्पयैव सम्पद्यन्ते इति तेषां विश्वासः। घटमानानामखिलानां घटनानामपि संसारे कारणभूता देवता एवेति। यास्कमतानुसारेण देवतासु काश्चन पृथिवीस्थानीयाः, काश्चन अन्तरिक्ष-स्थानीयाः, काश्चन द्युस्थानीयाः सन्ति। अग्नि-इन्द्र-सूर्य-विष्णुप्रभृतीनां देवतानां स्थाननिर्देशः पूर्वमेव मया कृतः। किम्बहुना ऋग्वेदस्यादिमे युगे बहुदेवतानां सत्ताऽभ्युपेता बभूव। परं पश्चिमीयानामेषदेवताविषयको विचारो नावितथः। देवतावादो न भौतिक एतावान्। वैदिकऋषयस्तां तां देवताविषयकशक्तिं साध्वभिज्ञाय तत्तद्द्वारेणात्मानमुपकुर्युरित्येतदर्थं श्रुतिमातरस्तासां रूपाण्य-स्मत्पुरः समुपस्थापयन्ति। एवं संक्षेपतः परिचितो वेदवेदाङ्गग्रन्थ इति।

---

# परिशिष्टम् ( क )

## वैदिकी संस्कृतिः

वैदिकवाङ्मयाध्ययनेन वैदिकयुगस्य भौगोलिकी स्थितिः आर्याणां निवासस्थलानि, दस्युपणिप्रभृतीनां विवरणं, सामाजिकमार्थिकं, राजनैतिकं धार्मिकञ्च जीवनमित्यादिकाः सर्वेऽपि विषयाः प्रकाशमायान्ति । अस्मदीयाः पूर्वजाः भानु-शशि-व्योम-भूमिप्रभृतितत्त्वानां ज्ञानं सम्यक्तया निदधतिस्म । ते समुद्र-नदी-पर्वत-वनादीनामुपादेयतां सर्वाङ्गीणतया विदन्तिस्म । ते दीर्घदीर्घतरां समुद्रयात्रां कुर्वन्तिस्म । तेषां सविधे महान्ति महान्ति जलयानान्यासन्, तैस्ते सामुद्रिकं व्यापारञ्चक्रुः ।

**'अनारम्भणे तदवीरयेथामनास्थाने अग्रभागे समुद्रे ।'** इत्यादिवैदिकमन्त्रा अत्र प्रमाणम् । वैदिके काले का नदी केन नाम्ना, को देशो जनपदो वा केन नाम्ना पर्वतो वा केन नामधेयेन व्यवहृतोऽभवदिति वैदिकेभ्यो ग्रन्थेभ्यो यथायथं ज्ञातुमर्हति । तस्मिन् युगेऽस्मद्देशे कुरु-पाञ्चाल-कीकट-मद्र-महावृष-काशी-कोशल-विदेह-मगध-अङ्गनामका बहवो जनपदा अशोभन्त । ब्राह्मणग्रन्थेषु कुरु-पाञ्चालानां प्रकृष्टा प्रशंसा दृष्टा भवति । नदीनां वर्णनं वेदेषु बहुधा कृतमवलोकितं भवति । ऋग्वेदस्य दशममण्डले सम्पूर्णसूक्तमेवैकं नदीनां स्तुत्यां प्रयुक्तमस्ति । नदीसूक्तनाम्ना ख्यातेऽस्मिन् सूक्ते ( १०।७५ ) कतिपयानां नदीनां नामोल्लिखितमस्ति—

**'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्णया ।**
**असिक्न्या मरुद्वृधे वितस्तयाऽर्जीकीये श्रृणुह्या सुषोमया ॥'**

गंगा-यमुना-सरस्वती-शुतुद्री-परुष्णी-असिक्नी-मरुद्वृधा-वितस्ता-आर्जीकीया-सुषोमाप्रभृतिनद्यः प्रवहन्तिस्य । एतदतिरिक्तानां कतिपयानां सिन्धोः सहायक-पश्चिमीयनदीनामपि नामोल्लेखो नदीसूत्रस्य षष्ठमन्त्रे मिलति—

**तुष्टा मया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्याया ।**
**त्वं सिन्धो कुभता गोमतीं क्रमुं मे हन्त्वा सरथं याभिरीयते ॥'**
( ऋ० १०।७५।६ )

**'मावो रसानितभा कुभा क्रमुर्मा वः सिन्धुर्निरीरमत् ।**
**मावः परिष्ठात् सरयूः पुरोषिण्यस्मै इतसुम्नमस्तु ॥'**
( तथैव )

एतदतिरिक्ता विपाश् ( ऋ० २।३३।१।३; ४।३०।३१ ), आपया ( ऋ० ३।२३।४ ), दृषद्वती ( ऋ० ३।२३।४ ), दृषद्वतीप्रभव्या ( वा० श्रौ० सू०

१०।१९।९ ), सदानीरा ( शत० ब्रा० १।४।१।१४ ), अनितभा ( ऋ० ५।५३।९ ) प्रभृतयो नद्यस्तदा प्रवहन्तिस्म। सिन्धुसरितो वर्णनं नितान्तमेव रुचिरायां भाषायां विहितमवाप्यते—

**'अभित्वा सिन्धो शिशुमिव मातरो या सा वर्षन्ति पयसेव धेनवः।'**

इत्यादिमन्त्रे पश्यन्तु प्रेक्षावन्तो यदभिरामोपमामाश्रित्य सिन्धोर्वर्णनं कुर्वन्ति वैदिकऋषयः। सरस्वत्या माहात्म्यमृग्वेदे भृशं वीक्षितं जायते। आर्यनिवासस्येयमप्येका भूरिप्रशंसिता नद्यस्ति। कालान्तरे प्रसिद्धिलाभ-कर्तृ-नद्योः गङ्गा-यमुनयोरुल्लेखोऽतिस्वल्पोऽस्ति। सरस्वत्याः प्रशंसायामनेका मन्त्रा अत्रोपलब्धा भवन्ति। अस्या एव तटे वैदिका ऋषयः सामगायनं कुर्वन्तो दत्तचित्ता बभूवुः—

**'युवं वेदवे पुरुवारमश्विनास्पृधां श्वेतं तरुतारं दुवस्यथः।'**

( ऋ० वे० २।४१।१६ )

एवम्—

**'सुमित्रिया न आप ओषधयः सन्तु।'**

\+ \+ \+

**'एकाश्च मे तिस्रश्च मे।'**

\+ \+ \+

**'अम्बितमे नदीतमे देवितमे सरस्वति।**
**अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि॥'** ( तत्रैव )

इत्यादिकाः सन्ति बहवो मन्त्राः एवंविधा ये ज्ञापयन्ति यत् तदानीन्तना भारतीयाः साधु तासु तासु विद्यासु विज्ञानेषु कलासु च पूर्णमेवाभिज्ञतां निहितवन्तः।

वेदाध्ययनेन स्पष्टतः ज्ञातो भवति यद्गोमत्याः पार्श्ववर्त्तिनः पार्वत्यप्रदेशेषु आर्यनिवासस्थलमासीत्। अस्या एव नद्यास्तटे पार्वत्यप्रदेशेषु राजा रथवीतिदार्भ्यः राज्यमकरोत्।

**'एष क्षेति रथवीतिर्मघवा गोमतीरनुपर्वतेष्वपश्रितः।'**

( ऋ० ५।६१।१९ )

अत्रिवंशीयः अर्चनाना ऋषिः अस्य नृपस्य सोमयागे प्रधानहोतुः कार्यमकरोत्। अस्यैव ऋषेः पुत्रस्य नाम श्यावाश्व आसीत्। मरुताऽनुग्रहेणायं ऋषिः ऋषित्वं लब्ध्वा रथवीतिनृपतेः कन्यया सह विवाहमकरोत्। रथवीतेः राज्यादीषदारात्तरन्तनृपस्य राज्यमासीत्। अस्य दानशीलामहिष्या नाम 'शशीयसी' आसीत् ( ऋ० वे० ५।६१।६ )। अस्माद्राज्यादारात् पुरुमीढराज्यमकरोत्। अस्य पितुर्नाम विददश्व आसीत्। तेनायं 'वैददश्वि'-नाम्ना प्रख्यात आसीत्। अस्यार्यनिवासस्य चतुःसीमायारुल्लेखः ऋग्वेदीयमन्त्रेषु स्पष्टाक्षरेषु प्रतिपादि-

तोऽस्ति । ऋग्वेदस्य दशममण्डलस्य १३६तमसूक्तस्य पञ्चमे मन्त्रे पूर्वसमुद्रस्यापरसमुद्रस्य च निर्देशो मिलति ।

**'वातस्याश्वो वायोः सखाथो देवेषितो मुनिः ।**
**उभा समुद्रा वाक्षेति यश्च पूर्व उतापरः ॥'**

( ऋ० १०।१३६।५ )

ऋग्वेदीययुगे एकस्य विपुलसागरस्यास्तित्वं ज्ञातो भवति, यस्मिन् सागरे दृषद्वत्या सह सरस्वती-विपाश्-शुतुद्रीप्रभृतय नद्यः न्यपतन् ।

**'एका चेतत् सरस्वतीनां शुचिर्यती गिरिभ्यः आसमुद्रात् ।'**

( ऋ० ७।९५।२ )

**'इन्द्रेषिते प्रसवं भिक्षमाणे अच्छा समुद्रं रथ्येव याथः ।'**

( ऋ० ३।३३।२ )

ऋग्वेदस्यानुशीलनेनाऽऽर्यनिवासस्योत्तरस्यां दिशि तरङ्गायितस्यैकस्यान्यसागरस्याऽपि ज्ञानं भवति । ऋग्वेदे चतुःसमुद्रस्य सुस्पष्टं निर्देशो मिलति । सप्तगुः ऋषिः इन्द्रं प्रार्थयति—

**'स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणाम् ।**
**चर्कृत्यं शंस्यं भूरिवारं अस्मभ्यं चित्रं वृषणं रयिं दाः ॥'**

( ऋ० वे० १०।४७।२ )

त्रितोऽपि ऋषिः सोमं प्रार्थयति—

**'रायः समुद्रांश्चतुरोऽस्मभ्यं सोमविश्वतः आ पवस्व सहस्रिणः ।'**

( ऋ० ७।३३।६ )

मद्र-महावृष-कुरुपाञ्चाल-काश्व-कोशल-विदेह-मगध-अङ्ग-काम्पिल-त्रिप्लक्ष-नैमिषवनादीनां च देशानां चर्चा वेदे मिलति । एतेषां स्थानविशेषाणां प्रकृतेः सर्वावस्थासु परिवर्त्तितानि तानि तानि चित्राण्यत्र प्रस्तुतानि यानि प्रत्यक्षदृष्टानीव हृदयं रञ्जयन्ति । तेन ज्ञायते सारस्वतक्षेत्रमिदमेवाऽऽर्याणामादिभूमिरस्ति । अत्रैव ब्राह्मणयुगे आर्यसंस्कृतेः सभ्यतायाश्च प्रसारोऽभवत् । ऋग्वेदीयमन्त्रेषु एवंविधानां भौगोलिकतथ्यानां वर्णनं मिलति ये उत्तरीयध्रुवप्रदेशे एव यथार्थतः समुपलब्धा भवन्ति । लोकमान्यतिलकमहोदयः उत्तरीयध्रुवमेव आर्याणां मूलस्थानममन्यत ।

वेदकालिकः समाजः पितृप्रधान आसीत् । पिता एव सर्वेषां गृहाणां नेता एवं पुरस्कर्त्ता आसीत् । स्त्री-पुत्र-पुत्री-वध्वादीनां जीवनं तस्यैव छत्रच्छायायां सुखेन व्यतीतोऽभवत् । वैदिकेऽनेहसि सर्वेऽप्याश्रमाः समृद्धाः सुखिनश्चासन् । पुत्राः पुत्र्यश्चोच्चशिक्षां तदा प्राप्तवन्तः । ललितकलानाञ्च तदा प्रसार आसीत् । विवाहस्तदा सुव्यवस्थितप्रथां वहन् दृग्गोचरो भवति । वैदिका आर्याः सङ्ग्रामप्रिया जातय आसन् । अतो मन्त्रेषु वीरपुत्राणां प्रसूतये देवतानां भव्या प्रार्थना कृताऽस्ति—**'यथाहं शत्रुहोऽसान्यसपत्नः सपत्नहा ।'** ( अथर्ववे० १।२९।९ ) ।

विवाहकालस्येयं प्रार्थनाऽस्ति—हे इन्द्रदेव ! इमां स्त्रीं दशपुत्रान् देहि—**'दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि'** ( ऋ० १०।८५।४५ )। ऋग्वेदकालेऽभ्रातृका कन्याया विवाहो बहुधा नाभवत्, यतस्तस्याः पुत्रः स्वपितुः सम्पदधिकारं विहाय मातामहस्य समृद्धेरधिकारमवहत्। ऋग्वेदे तस्य पितुः प्रसन्नताया वर्णनमस्ति यः स्वदुहितुर्वरान्वेषणे सफलोऽभवत्—**'पितानत्र दुहितुः सेकमृज्जन् संशग्म्येन मनसादधन्वे'** ( ऋ० ३।३१।१ )। शतपथब्राह्मणे सुकन्याया निःसन्दिग्धकथनमस्ति यन्मम पितरौ यस्मै वराय मां समर्पितौ तं जीवनपर्यन्तं न परित्यजामि। **'सा होवाच यस्मै मां पिताऽदान्नैवाहं तं जीवन्तं हास्यामीति'** ( शत० ४।१। ५।९ )। ऋग्वेदे विवाहस्य सर्वमान्यं सूक्तमिदमस्ति—

**'सोमो वधूयुरभवदश्विना ता उभा वरा।**
**सूर्यायत् पत्ये शसन्तीं मनसा सविता ददात्॥'**

( ऋ० १०।८५।९ )

वैदिकयुगे नारीणां सम्मानमासीत्। मातृ-दुहितृ किंवा जायारूपेण वैदिकयुगे नारी सर्वथा सम्माननीयाऽऽसीत्। **'जायेदस्तम्'** अर्थात् गृहिणी गृहमुच्यते। तस्मिन् युगे स्त्री सहधर्मिणी आसीत्। अपत्नीको जनो यज्ञाधिकाराद्वञ्चितोऽभवत्। **'अयज्ञो वा ह्येष योऽपत्नीकः'** ( तै० ब्रा० २।२।२।६ )। स्त्रियाः प्रेम पत्ये आदर्श आसीत्। सा समरसतायाः प्रतिमूर्त्तिममन्यत। न केवलं गार्हस्थ्यजीवनस्यैव सा स्वामिन्यासीत् प्रत्युत स्वपत्यौ तस्याः पूर्णप्रभुत्वमासीत्। सा गृहलक्ष्मी आसीत्। कन्याः सुवध्वः सन्तु एतदर्थं तदानीमुदारशिक्षणस्य व्यवस्थाऽऽसीत्। लोपामुद्रा स्वपत्या मुनिनाऽगस्त्येन सह सूक्तस्य दर्शनं कृतवती (ऋ० १।१७९ )। अपाला (१०।९१) रोमशयोः संसर्गेण सूर्यपुत्री सूर्याऽपि ऋषिकाऽऽसीत्। ऋग्वेदीयसमाजे सामान्यतः सर्वत्र धर्मस्य समादर आसीत्। अस्मिन् समाजे पुरुषाः सदाचारवन्तः पुरुषार्थप्रियाः शक्तिशालिनो बभूवुः। कृषिकर्मणि पशुपालने च जनता सदा तदा निरतावाप्यत। ग्रामेषु जनता निवासं चक्रे। पुरदुर्गादीनां वर्णनं वैदिके साहित्ये पर्यवलोक्य विदितं जायते यत् तदानीन्तना जनाः सभ्यतायां संस्कृतौ च प्रशंसनीयामुन्नतिं गता आसन्। **'शतभुजिभिस्तमभिसुतेरधात् पुंभी रक्षता·······भिषक्'** प्रभृतिमन्त्राः सन्त्यस्मिन् विषये प्रमाणम्। **'कारुरहं ततो भिषग्।'** इत्यादिमन्त्रा बोधयन्ति यत् तदानीन्तना जनाः जीवनयापनायार्थोपार्जनार्थाय च बहूनि उद्यमनानि जगृहुः।

वैदिकः कालः शासनपद्धत्यां परमकुशलो बभूव। शासनपद्धतिश्च तदाऽनेकविधा प्रचलिताऽऽसीत्। ऐतरेयब्राह्मणस्यैन्द्रमहाभिषेकस्य ( ८।३ ) अध्ययनेन वैदिकयुगे प्रचलिताऽनेकविधाभिः शासनपद्धतिभिरस्माकं परिचयो मिलति। किन्तु, आसां पद्धतीनां यथार्थरूपस्य ज्ञानमवान्तरकालिकस्य राजनीतिशास्त्रस्य ग्रन्थानां तथा तत्कालिकानां राज्ञां शिलालेखानां साहाय्येनाऽभवत्। इन्द्रस्याभि-

षेको दक्षिणस्यां दिशि 'भौज्याय' अभवत्। भौज्यं ब्राह्मणयुगस्यैका शासनपद्धतिरासीत्। अस्मिन् पद्धत्यां गणराज्यस्य स्थापना मान्याऽऽसीत्। ऐतरेयानुसारेणेयं पद्धतिः सात्वतराज्ञेषु (यादवेषु) प्रचलिताऽऽसीत्। अतो भौज्यशासनं गणराज्यस्य विशिष्टप्रकारकं शासनमासीत्। स्वाराज्यस्य राजनैतिकं विधानं तया प्रणाल्या सह सम्बद्धमासीत्, यस्यां प्रणाल्यां गणानामुपरि एकः अध्यक्षः शासनमकरोत्। वाजपेययज्ञकरणात् स्वाराज्यस्य प्राप्तिर्भवति। **'य एवं विद्वान् वाजपेयेन यजति, गच्छति स्वाराज्यम्। अग्रं समानानां पर्येति। तिष्ठन्तेऽस्मै ज्येष्ठाय'** (तैत्ति० ब्रा० १।३।२२)। गणस्य सर्वे सभासदः **'सदृशाः सर्वे'** मन्यन्तेस्म। अत एव—**'अग्रं समानां पर्येति'** इत्येतस्य पदस्य तात्पर्यं गणराज्यस्याध्यक्षपदेनास्ति। फलतः स्वाराज्यशासनमपि गणतन्त्रीयशासनविधानमस्ति। वैराज्यपद्धत्याः प्रचलनं ऐतरेयानुसारेणोदीच्यदेशेषु हिमालयादप्यग्रे आसीत्, यत्रोत्तरकुरुः, उत्तरमद्राख्या जातयो निवसन्तिस्म। वैराज्यस्यार्थो भवति नृपतिविहीनो देशः। फलतः इयमेका विशिष्टा शासनपद्धतिरासीत्। यस्यां राज्ञो नितान्तमभाव आसीत्। ऐतरेये साम्राज्यपद्धत्याः प्रचलनमप्यासीत्। छान्दोग्ये पाञ्चालानां नृपतेर्नाम 'प्रवाहणजैबलिः' प्रदत्तमस्ति। अनेन प्रकारेण वैदिकयुगे गणतन्त्र-राजतन्त्रयोरुभयोः प्रकारकयोः शासनविधानस्य दृष्टान्तं मिलति। वैदिक आर्यः शासनदृष्टचापि एकस्य सुव्यवस्थितराज्यस्याधीन आसीत्। राजानः प्रजावत्सला आसन्। प्रजा राष्ट्रे राजनि च भक्तिभावं निदधौ—**'ध्रुवोऽच्युतः प्रमृणी हि शत्रून्,'** **'त्वां विशो वृणतां राज्याय'**, **'इयं ते राट्'** **'यां च रात्रिमजायेऽहम्'** इत्यादि मन्त्रेषु तात्कालिक्या राजनीतिकदशाया मनोज्ञं दर्शनं जायते। **'युञ्जते मन उत युञ्चते धियो विप्रा विप्रस्य विहितो विपश्चितः।'** प्रभृतिमन्त्राः सन्ति साक्षिणो यद् वेदकालिकं भारतं धार्मिकं पावनं पवित्रचरित्रं जीवनमुवाह।

इयं वैदिकी संस्कृतिरेव आध्यात्मिकी संस्कृतिर्वा भारतीयाः संस्कृतिरित्यभिधीयते। स्वकीयेभ्य आप्तेभ्यः पितृपितामहादिभ्यः कुलपरम्परायाः सकाशाच्चास्य देशस्य जनता यानाचारान् विचारान् व्यवहारान् रीतिनीतिक्रियाकलापांश्चाधिगम्य आचरणे च परिणमय्य नैजं जीवनं यापयति त आचार-विचारादय एव 'भारतीयसंस्कृतिः' इत्येतेन शब्देन प्रोच्यते।

लोकाः जीवन-यापनहेतुना तादृशमेव सदनं भोजनं वसनं पानं क्रीडनं मनोरञ्जनमन्यच्च सकलमभ्युपगच्छन्ति, यादृशं देशकाल-जल-पवनादिकं भवति। इदं देशकालादिकं जनताया बुद्धौ मानसे शरीरे मस्तिष्के च नियततयैव नैजं प्रभावममोघं क्षिपति। सा तेषां सर्वेषां सान्निध्यात् तदीयैः संस्कारैः संस्कृता जायते। तस्यास्तद्विधा संस्कृतैव संस्कृतिरिति बुधैर्गीयते। विश्वामित्र-वसिष्ठ-कश्यप-गौतमात्रिभरद्वाजादिगोत्रोद्भूतानां, राम-कृष्ण-बुद्धादिभरतभूसम्भवानां महापुरुषाणां संस्कृतिर्वैदिकी संस्कृतिरिति नाम्ना विश्वविख्याता-

ऽस्ति। इयं संस्कृतिः— **'आनीदवातं स्वधया तदेकम्'** (ऋग्वेदः १०।१२९।२) अथ च **'सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्'** (ऋग्वेदः १०।१९१।२) इत्येवं विधाभ्यः आचारधाराभ्यो विविधकलाकलितनिकेतनकृतवासानां, विश्वोपकारि-कर्मपरायणानाञ्चेयं संस्कृतिरस्ति। एषा संस्कृतिर्विश्वसंस्कृतिरित्यपि कथ्यते। तस्यास्त्रिकालवर्त्तिसकलदेशस्थप्राणिमात्रोपकारकयज्ञाख्यकर्मनिष्ठत्वात्, भारतौ-कसां महर्षीणां विचारैर्जीव्यमानत्वाच्च। देशेऽस्मिन् प्रचलतां मतमतान्तराणां सम्प्रदायानाञ्च मूले स्थिरीभूय एषा निषीदति, अत एव सर्वेषामपि सम्प्रदायानां प्रतिपाद्यो विषयः एकः स एव यं भारतीयासंस्कृतिरभिनन्दति। स्थान-समय-भेदेन भिन्नतामाददानाऽपि भारतीया: संस्कृतिः सुरधुनीधारेवाजस्रं स्वकीयामे-कात्मतां पूततां च न जहाति। इदमेव कारणं यद् भरतावनौ चिरात्प्ररूढास्वपि सा कालवैविध्यजनितविकृतिरजोधूसरासु साम्प्रदायिकतासु निपत्यापि न म्लानतां गता वीक्ष्यते। यथेश्वरो मायोपहितः सन्नपि न मायया वशीकर्त्तुं शक्यते, तथैव सम्प्रदायोपधर्मविधर्माद्युपहिताऽपि न सा तैः सम्प्रदायादिभिः कदापि स्वपथात् पातयितुं प्रभवति।

यत्कर्म यज्ञार्थं न विधीयते तत्कर्मनिकान् दोषानुत्पादयति। तद्विधानि कर्माणि सततं मानवं दुन्वन्ति। स जनुर्निधनचक्रपतितोऽहर्निशं विषीदति। यज्ञार्थककर्माणि तु तेभ्यो नितान्तं विपरीतानि। तानि मानवे निष्कामभावना-मुद्भावयन्ति। निष्कामेषु कर्मसु यदा रुचिरुदेति तदा रागद्वेषादिका दोषा असद्भावाश्च मनोभुवं हित्वा दूरं पलायन्ते। मानवोऽनिर्वचनीयां प्रीतिं भजमानो जीवनस्य चरमनुद्देश्यमवाप्तुमभिधावति। भारतीयसंस्कृतौ निष्काम-कर्मवीचयः सर्वत्र उच्छलन्त्यः प्रवहन्त्यश्च संलक्ष्यन्ते—

**'तस्मादसक्तः सततं कार्यं कर्म समाचर।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः॥'**

---

# परिशिष्टम् ( ख )

## वैदिकधर्मः

वेदकालिकानामार्याणां जातिः धर्मप्रधानाऽऽसीत्। तेषां देवतानां सत्तासु दृढविश्वास आसीत्। तेषां कल्पनायां जगदिदं त्रिषु विभागेषु विभक्तमासीत्। ते च पृथ्वी, अन्तरिक्षः, आकाशश्चेति। प्रत्येकस्मिन् लोके देवतानां निवास आसीत्। आर्याः अग्नेरुपासका वीरपुरुषाश्चासन्। ते अग्नौ सोमरसस्याहुतिं विभिन्नदेवताः समुद्दिश्य ददतिस्म। यज्ञसंस्था तेषां धर्मस्याविभाज्यमङ्गमासीत्। ऋग्वेदीयकाले संस्थेयमतिलघ्वी आसीत्। किञ्च यादृशमार्याणां प्रभावः प्रभुत्वञ्चैधाञ्चक्रिरे तादृशैवास्याः संस्थायाश्च विकासोऽभवत्। देवतायाः स्वरूपस्य, प्रभावस्य, महत्तायाश्च परिचयः ऋग्वेदाध्ययनेनैवालभत। वैदिकधर्मे बहुदेववादी यज्ञ एव प्रधान-धर्म आसीत्। अस्य कतिपयेषु मन्त्रेष्वेव सर्वदेवतावादी धारणा दृग्गोचरीभवति।

देवानामाकृतिर्मनुष्य इवास्ति। तेषां शारीरिकावयवा बहुषु स्थलेषु तत्प्राकृतिकदृश्यानां रूपात्मकः प्रतिनिधिरस्ति, येषां ते वस्तुतः प्रतीकानि सन्ति। अनेन प्रकारेण सूर्यस्य बाहू तस्य किरणाः सन्ति। अग्नेर्जिह्वा तथा तस्याङ्गञ्च ज्वालैवास्ति। कतिपयारिन्द्रादिका देवता योद्धारः सन्ति, कतिपयाश्चाग्निर्बृहस्पत्यादयो यज्ञकारयितारः ऋत्विजः सन्ति। देवा रथारूढा भूत्वा आकाशे गमनं कुर्वन्ति। देवानां भोजनान्यपि मानव इव दुग्ध-घृत-अन्नमांसादीनि सन्ति। तेषां सर्वाधिकः प्रियः पेयः उत्साहवर्धकः सोमरस एवास्ति। देवानां निवासः स्वर्गेऽथवा विष्णोस्तृतीये पदेऽस्ति, यत्र ते सोमरसपानं कुर्वन्तः सुखेन जीवनं यापयन्ति।

## भारोपीय-धर्मः

पाश्चात्यविपश्चितानां दृष्ट्यां वैदिकधर्माऽभ्यन्तरेऽनेकानि वस्तून्येवंविधानि सन्ति यानि भारोपीयधर्मस्याविभाज्याङ्गानि सन्ति। अस्य धर्मस्येयमेव विशिष्टताऽस्ति यदस्मिन् धर्मे ईरानीधर्मस्याऽपि कतिपयांशे समता वर्त्तते। यतस्तेषां मान्यतानुसारेण प्राचीनकाले भारतीया आर्याः यूरोपीयाऽऽर्यैः सह भारताद् बहिः कस्मिंश्चिदपि विशिष्टस्थाने सहैव न्यवसन्। अस्य मूलनिवासस्थानस्य विषये विद्वत्सु पर्याप्तं मतभेदोऽस्ति। मैक्समूलरमहोदयस्य मते आर्याणामियमादिभूमिः एशियामहादेशस्य मध्ये कुत्राप्यासीत्। श्रोदरः तथा मेयरस्य च मतानुसारेणेयं भूमिर्यूरोप-एशियाप्रदेशयोः सीमावर्तिनी आसीत्। वेण्डरस्य मते भाषागतसाम्यस्य प्रामाण्यस्योपरि 'लिथुएनिया'-नगरस्य समीपस्य कस्मिंश्चिदपि

प्रदेशे विद्यमाना आसीत्। डॉ० गाइल्समहोदयस्य मतं नवीनतममस्ति। अस्य मतस्यानुसारेण आर्याणां मूलदेशः 'आस्ट्रिया-हङ्गेरी' देशे कुत्राप्यासीत्। आर्याः स्वमौलिकधर्मस्य विविधान् वैशिष्टयान् नीत्वैव भारतेऽभिनवधर्मस्य स्थापनां कृतवन्तः। ईरानदेशेऽपि ते पारसीकैः सह बहुकालपर्यन्तं न्यवसन्। फलतः ईरानीधर्मस्यापि कतिपयांशा वैदिकधर्मे मिलन्ति। भारोपीयधर्मस्य यानि विशिष्टलक्षणानि वैदिकधर्मे मिलन्ति तानि निम्नलिखितानि सन्ति।

( १ ) देवो द्युतिमान् भवति। प्राचीनार्यभाषायां देवद्योतकाः सर्वे शब्दाः प्रकाशनार्थक-दिव्धातोर्निष्पन्ना भवन्ति।

( २ ) अस्य जगतः आदिमः पिता 'द्यौः' तथाऽऽदिमा माता पृथ्वी मन्येते। अत एव वैदिकभाषायां 'द्यौस्पितरः' ग्रीकभाषायां 'जुएसपेटर', लैटिनभाषायाम् 'जुपिटर' प्राचीनायरलैण्डभाषायां 'टायर' इति भवन्ति। द्यावापृथिव्यौ एव मानवानां पितरौ स्तः।

( ३ ) अधिकतरोपास्यदेवते द्वे आस्ताम्—अग्निस्तथा 'उषस्'। अनयोरुभयोर्देवयोर्द्योतकः शब्दः सर्वत्र समान एवास्ति। वैदिकभाषायाम्—'अग्निः' लैटिनभाषायाम्—'इग्-निस', लिथुएनियनभाषायाम्—'उग्नीस', रूसीभाषायाम्—'आगोन'। वैदिक-उषस्, ग्रीक—'एआर्स', लैटिन—'आरोरा' इति।

( ४ ) ऊर्ध्वलोकनिवासिनामेतेषां देवानामाराधना हव्याहुतिना कृताऽऽसीत्। मरणोपरान्तजीवसत्तायां जनानां दृढ-विश्वासः प्रतीतो भवति। यतो भाषागतप्रामाण्यमेवास्य साधकोऽस्ति।

( ५ ) 'आत्मन्'-शब्दः प्राचीनजर्मनभाषायाम् 'आतुम्' आधुनिकजर्मनभाषायाम् 'आतेम्' इति।

( ६ ) भारोपीयदेशेषु विशेषतः रूस-लिथुएनिया-ग्रीस-रोम-भारतादिषु देशेषु सर्वत्र पितृ-पूजा मान्या धार्मिकसंस्थाऽऽसीत्। परलोकगतानां पितॄणां नामानि प्रायः सर्वत्र समानानि एवोपलब्धानि भवन्ति। वैदिकः 'पितर्' ग्रीक—पैटर्, लैटिन—द पेरेन्टीज्, रूसी—पेतामहादिशब्दाः एकैव भावनायाः समर्थकाः सन्ति। एतेषु देशेषु अस्मदीयः श्राद्ध इव समादरसूचको विधिविधानामनुष्ठानमद्यापि मिलति।

## भारतीय-पारसीकधर्मः

अस्य युगस्य धार्मिकसंस्थानां साम्यं समुपलब्धं भवति।

देवानां पितॄणाञ्चोपासना न केवलमबाधगत्या एव प्रचलितास्ति प्रत्युत साऽतीव लोकप्रियाऽपि आसीत्। भारतीयानां तथा पारसीकानां धार्मिको भावः समान एवास्ति। अवेस्ताभाषायाम् 'पितरम्', 'फ्रवसी'-शब्देनाभिहितमकरोत् सोमः, अवेस्तायां 'हओम'-शब्देन देवानां पूजाऽभवत्। यमवैवस्वतः 'अवेस्तायाम्—'यिम विवन्ह्वत' अस्य भूतलस्य प्रथमः पार्थिवोऽस्ति, यो हि सोमयागस्यानुष्ठानमकरोत्। अयमेव मरणोपरान्तं परलोकस्य मार्गनिर्माता

स्वर्गनिवासी प्रथमो मानवोऽस्ति ( द्रष्टव्यः ऋ० १०।१४।१ )। उभयोरुपास्य-देवता एक एवास्ति। वेदे 'भगः' अवेस्तायां 'भगः' वे० अर्यमन्, अ० 'एरयमन्' इत्यादयः। बोधाजकोई नामके स्थाने समुपलब्धा वरुण-इन्द्र-मित्र-नासत्यादीन् डॉ० ओल्डनवर्गः जरथुष्ट्रेण कृता धर्मसंशोधनात्पूर्ववर्त्तिनः ईरानीदेवता मन्यते, यदा तत्र वरुणस्य प्रधानता आसीत्। पश्चात् वरुणस्य स्थाने 'अहुरमज्दा' प्रतिष्ठितोऽभवद् अन्यदेवाश्च असुरेषु परिणता अभवन्।

**ऋत्विज्संस्थायारुदयः—**

जरथुष्ट्रेण संस्कृतसमाजस्य प्रधानतमः पुरुषः अथूवन्=वैदिकः अथर्वन् अर्थाद् ऋत्विग् आसीत्। अयं समाजोऽपि चतुर्षु वर्णेषु विभक्त आसीत्। 'हओम' यागायाष्टानामृत्विजामावश्यकताऽभवत्। पत्न्या साहाय्येन प्रातःकाले अग्नौ हवनस्य नियम आसीत्। 'हओम' रसं विशोधनाय स्वर्णस्याथवा रजत-पात्रस्योपयोगोऽभवत्।

**सङ्घर्षस्य कल्पना—**

जगति द्वे तत्त्वे जागरूके अमन्येताम्, ये सर्वदा सङ्घर्षे संलग्नौ आस्ताम्। अनयोरेकोऽस्ति परमेश्वरस्य सद् रूपम्। द्वितीयोऽस्त्यसद्रूपमिति ( द्रष्ट० दि रिलीजन ऑफ अरथुष्ट्र पृ० ४८।५८ )। अनयोः सततं विरोधं सङ्घर्षश्च भवति। अस्मिन् जगति चान्ते असत्योपरि सत्यस्य, दुर्वृत्तोपरि सद्वृत्तस्य, अन्धकारस्योपरि प्रकाशस्य विजयो भवति तथा जगतः कल्याणं भवति। वैदिके धर्मे इन्द्रवृत्रयोर्युद्धस्यापीदमेव रहस्यमस्ति। दानववृत्रोपरि इन्द्रस्याक्रमणं तथा विजयः अस्यैव सङ्घर्षस्य द्योतकं तथ्यमस्ति। असत्योपरि सत्यस्य विजयोऽय-मस्ति।

**नियमस्य सुव्यवस्थायाश्च कल्पना—**

वैदिकधर्मे 'ऋत' इव अवेस्तायाम् 'अष' इत्यस्य कल्पनाऽस्ति। इयं भावना पारसीकेष्वपि प्राचीनकालादेव प्रचलिताऽऽसीत्। खीष्टात्पूर्वचतुर्दशशतके 'तेल-एल-अमर्ना'-नामके शिलालेखे 'अर्त्त'-शब्दधारी नाम मिलति तथा अर्तोऽयमपि 'अष'-शब्दस्यैव प्राचीनता द्योतकः शब्दो मन्यते। ऋतस्य त्रिविधा—आर्थिकी, सामाजिकी तथा नैतिकी भावना इव 'अष'-शब्दस्यापि धारणाऽस्ति। अस्यैवा-षस्य स्तुतौ यस्नस्य कथनमस्ति यज्जगति एक एव पन्था अस्ति तदषस्यैव। एतदतिरिक्ताः सर्वे पन्थानो मिथ्या एव सन्ति—

**'अ एवो पन्ताओ यो अशहे, वीस्पे अन्य एसां अपन्ताम्'।**

**नैतिकदेवस्य कल्पना—**

बहूनां विदुषां मान्यताऽस्ति यदवेस्तायाः सर्वश्रेष्ठो देवता 'अहुरमज्दा' वैदिको देवता वरुणः ( असुरो वरुणः ) एवास्ति। अस्य प्रमाणमिदमेवास्ति

यदुभावेव असुरः ( असुः=प्राणः, रः दायकः अत एव जीवनदाता ) उपाधिर्धारणं कुरुतः। उभौ मित्रेणसहाविभाज्यरूपेण संश्लिष्टौ स्तः। वेदे 'मित्रावरुणौ' द्वन्द्वदेवतास्वरूपेण गृहीतौ स्तः, तथैव अवेस्तायाम् 'अहुरमज्दायाः' सम्बन्धं 'मिथ्रॄण' सह विद्यमानमस्ति।

अनेन प्रकारेण वैदिकधर्मस्यानेकाः कल्पनास्तथा मान्यता भारोपीयधर्मेण तथा भारत-ईरानीधर्मेण सह आश्चर्यमयरूपेण साम्यं स्थापयतः। भारतीयपण्डितानां मते आर्या भारतस्यैव मूलनिवासिन आसन्। यदा ते एतेषु विभिन्नेषु देशेषु स्वकीयमुपनिवेशं स्थापितवन्तस्तदा तेषु देशेषु स्वकीयानां धार्मिकानुष्ठानानामपि प्रचुरं प्रचारं कृतवन्तः। अस्य साम्यस्येदमेव रहस्यं प्रतीतं भवति।

## वैदिकदेवताः

ऋग्वेदस्य द्वौ विभागौ स्तः। प्रथमस्तु अनुष्ठानविषयको विभागः कर्मकाण्डम्, अपरोऽस्ति दार्शनिको विभागः ज्ञानकाण्डम्। कर्मकाण्डमेव वेदस्य विशालो विभागोऽस्ति। ज्ञानकाण्डं तु तदपेक्षयाऽत्यल्पमस्ति। यद्यपीदं वैदिकसिद्धान्तस्यान्तिमा परिणतिरस्ति, तेनेदं 'वेदान्त'-नाम्नाऽभिहितोऽस्ति। वेदे निर्दिष्टकर्मानुष्ठानां यागः कथ्यते, यस्य लक्षणमस्ति—**'देवतोद्देशेन द्रव्यत्यागो यागः'** अर्थाद् देवतामुद्दिश्य कस्यापि द्रव्यस्य दानम्। नास्त्यैतावतैव देवताया ज्ञानाय कमपि विशिष्टकारणमस्ति। अस्मिन् प्रसङ्गे यास्केन कस्यापि ब्राह्मणस्य वचनमिदमुद्धृतम्—**'यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद् वषट् करिष्यन्'** (निरु० ८।२२)। अस्याशयोऽस्ति यद् अनुष्ठानस्यान्ते 'वौषट्'-करणात्पूर्वं होतृनामकमृत्विजं यां देवतां निमित्तं कृत्वाऽध्वर्युर्हव्यं गृह्णाति सा देवता मनसि ध्यातव्या। अनेन प्रकारेण यागे देवतायाः प्राधान्यं भवत्येव।

ऋग्वेदस्यादिमे काले बहुल-देवतानां सत्ताऽऽसीद् यां विद्वांसो बहुदेववादस्य ( पालीथीजम ) संज्ञां ददाति। कालान्तरे यदा वैदिकार्याणां मानसिको विकासोऽभवत् तदा ते एतेषां बहुदेवतानामधिपतेः अथवा प्रधानरूपे एकस्यैव देवविशेषस्य कल्पनां कृतवन्तः। अस्यैव नाम अस्ति एकेश्वरवादः (मनोथीजम)। अतो बहुदेवतावादस्य बहोःकालात् पश्चात् एकेश्वरवादस्य जन्म बभूव, तस्मादपि अवान्तरकाले सर्वेश्वरवादस्य कल्पनाऽभवत्। सर्वेश्वरवादस्य (पैनथीजम) सूचकः पुरुषसूक्तस्य दशमम्रण्डलस्य नवतितमं सूक्तमस्ति। सूक्तमिदं पाश्चात्यगणनानुसारेण दशत्रयीमण्डलेषु सर्वाधिकमर्वाचीनमस्ति।

वैदिकधर्मस्यैकं वैशिष्टयं ध्यातव्यमस्ति। यस्य देवस्य स्तुतिर्मन्त्रैः क्रियते, तमेव देवं स्तुतिकाले सर्वाधिकव्यापकं जगतः स्रष्टारं तथा लोकोपकारिणं मन्यते। वरुणस्य स्तावकेषु सूक्तेषु सैव सर्वेषां देवानां मध्ये महान् तथा सर्वापेक्षया महत्त्वशाली अमन्यत। अन्यदेवगणास्तस्मादेव वरुणात्समुत्पन्ना भवन्ति। तस्यैव शासने स्थित्वा स्वस्वनिश्चितकार्यस्य निर्वाहं कुर्वन्ति।

स्तुतिकाले इन्द्र एव सर्वश्रेष्ठो देव इत्यभ्युपगम्यते। अन्येषां देवानामुद्गमस्तस्मादेव सम्पन्नो भवति। अन्येषां देवानां विषयेऽपीदमेव तथ्यं मिलति। इयं विशिष्टता वैदिकदेवानां विषये एव पूर्णतया समुपलब्धा भवति। मैक्समूलरमहोदयस्य मतानुसारेणातिप्राचीनधर्माणामयमेकः प्रकारोऽस्ति। तदनुसारेणास्य संज्ञा—'हैनोथीजम' अथवा 'केनोथीजम' इति भवति।

पाश्चात्यविपश्चितां सम्मतौ वैदिकस्य देवतावादस्योत्पत्त्यास्तथा विकासस्यायं संक्षिप्तक्रमोऽस्ति, किञ्च भारतीयानामियं दृढतमा धारणाऽस्ति यद्वैदिकधर्मस्यायं विकासक्रमो नितान्तं निराधारोऽस्ति।

पाश्चात्यपण्डिता इमा वैदिकदेवताः प्रकृत्या एव प्रतिरूपं मन्यन्ते, किञ्च भारतीयविदुषां दृशि चैतन्यहीना जडाप्रकृतिः कदाचिदपि देवरूपेण ग्रहीतुं न शक्यते। वस्तुतः प्रकृतेः शक्तीनामुपरि प्रशासनकर्तृणां चैतन्यदेवानां पूजैवाभीष्टं भवति। बादरायणः स्ववेदान्तसूत्रे—**'अभिमानि व्यपदेशस्तु विशेषानुगतिभ्याम्'** ( २।१।५ ) इत्येव देवतत्त्वं मन्यते।

## देवानां सङ्ख्या

देवानां संख्याविषये वेद-पुराणयोर्मध्ये पर्याप्तं मतभेदमस्ति। यास्कस्य मतानुसारेण त्रिलोक्याः प्रतिलोकम् एकैकस्य देवस्याधिपत्यं भवति। पृथिव्यामग्नेः, अन्तरिक्षे इन्द्रस्य अथवा वायोः, एवमाकाशे सूर्यस्याधिपत्यमस्ति ( निरुक्त ७।५)। ऋग्वेदस्य मन्त्रेष्वपि देवानां संख्याविषये विशिष्टा वार्त्ता प्रदत्ताऽस्ति। ऋग्वेदे ( १।१३९।११ ) त्रयस्त्रिंशत्तमानां देवानामुल्लेखोऽस्ति। पृथिव्यामेकादशतमा देवाः सन्ति, अन्तरिक्षे एकादशतमा देवास्तथाऽऽकाशे एकादशतमाः सन्ति। अन्यस्मिन् मन्त्रे ( ८।२८।१ ) इयमेव संख्या पुनरुल्लिखिताऽस्ति—**'त्रयस्त्रिंशत् देवाः'** किन्त्वैतेषां देवानां नाम्नः सङ्केतस्य नितरामभावोऽस्ति। सङ्केतोऽयमुपलब्धो भवति शतपथब्राह्मणे ( ११।६।३।५ ) यस्यानुसारेणाष्टवसवः, एकादशरुद्राः, द्वादशादित्याः, इन्द्रः तथैव प्रजापतिः। ऐतरेयब्राह्मणे इयं संख्या द्विगुणिताऽभवत्। अत्र त्रयस्त्रिंशत् सोमपास्तथा त्रयस्त्रिंशदसोमपा देवाः सन्ति। ऋग्वेदस्यैकेन विशिष्टोल्लेखानुसारेण देवानां संख्या ३३३९ वर्त्तते। अस्याः संख्याया उल्लेखः शतपथब्राह्मणे ( ११।६।३।४ ) तथा शाङ्खायनश्रौतसूत्रेऽपि मिलति। फलतो देवानां भूयसी संख्या ऋग्वेदः स्वयं निर्दिशति।

प्रतीतो भवति यदेतावत्या बृहत् संख्यया ऋषीणामपि मनसि भ्रान्तिरुत्पादिता स्यात्। कोऽपि नेमभार्गवनामकः ऋषिरिन्द्रस्य विषये निषेधं प्रकटयति—

**'प्र सु स्तोम भरत वा जयन्त इन्द्राय सत्यं यदि सत्यमस्ति।**
**नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श कमभिष्टवाम॥'**

**( ऋ० ८।१००।३ )**

अस्य सन्देहस्य निराकरणमृग्वेदस्य प्रख्यातसूक्ते ( २।१२।५ ) एवं मिलति—**'श्रदस्मै धत्त स जनास इन्द्रः'**। किञ्च ऋग्वेदस्यान्यविकसित-विचारधारायां देव एक एवास्ति तथा तस्य बहुत्वस्य कल्पना तस्य कस्यापि गुणानामाधारेणैव भवति।

**'एकं सद् विप्रा बहुधा वदन्ति** ( ऋ० १।१६४।४६ )।

**'सुपर्णं विप्रा कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति।'**

( ऋ० १०।११४।५ )

अयं प्रख्यातोल्लेखो देवस्यैकत्वस्यासन्दिग्धरूपेण प्रतिपादकोऽस्ति। फलतः बहुदेववादस्याभ्यन्तरे देवानामेकत्वस्य कल्पना ऋग्वेदस्य मान्यताऽस्ति।

सङ्क्षेपेण यास्को नैरुक्तानां मतस्योल्लेखो निरुक्ते कृतवान्—**'तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानीयः। वायुर्वा इन्द्रो वा अन्तरिक्ष-स्थानः सूर्यो द्युस्थानः'** ( निरुक्तम् )।

नैरुक्तगणा ऋग्वेदीया अधोलिखितमन्त्रमेव स्वकीयाया गणनायाः आधारं मन्वते, इति सम्भाव्यते—

**'सूर्यो नो दिवस्पातु वातो अन्तरिक्षाद् अग्निर्नः पार्थिवेभ्यः।**

( ऋ० १०।१५८।१ )

ऋग्वेदस्यैवान्यस्मिन् मन्त्रे ३ × ११ = ३३ देवानां संख्याया निरूपण-मस्ति—

**'ये देवासो दिवि एकादशस्थ पृथिव्यध्येकादशस्थ।**
**अप्सु क्षितो महिनेकादशस्थ ते देवासो यज्ञमिमं जुषध्वम्॥'**

( ऋ० १।१३९।११ )

यास्कमतानुसारेण अस्य जगतो मूले एकैव महत्त्वशालिनी शक्तिर्विद्यमाना-ऽस्ति। सा शक्तिर्निरतिशयैश्वर्यशालित्वेन ईश्वरपदेनाभिधीयते। तामेवैकां देवतां बहुरूपेण जनाः स्तुवन्ति—

**'महाभाग्याद् देवताया एक एव आत्मा बहुधा स्तूयते।**
**एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति॥'**

( निरु० ७।४।८।९ )

बृहद्देवताऽपि निरुक्तस्यास्य कथनस्यानुमोदनं करोति। सर्वव्यापी सर्वात्मक-ब्रह्मसत्ताया निरूपणमेव ऋग्वेदस्य प्रधानलक्ष्यमस्ति। अस्मिन् प्रसङ्गे ऐतरेया-रण्यकस्यापि कथनं द्रष्टव्यमस्ति—**'एवं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एत-मग्नावध्वर्यवः एवं महाव्रते छन्दोगाः**, (ऐ० आ० ३।२।३।१२)। शङ्कराचार्योऽपि ब्रह्मसूत्रभाष्ये ( १।१।२५ ) अस्य मन्त्रस्योल्लेखं कृतवान्। अस्मिन् विषये ऋग्वेदस्यापि प्रमाणं सुस्पष्टमेवेति।

## उपसंहारः

वेदोऽयमनन्तो गम्भीरश्चास्ति । अद्यावध्ययं नानाविधेभ्यो विचारशीलेभ्यो विद्वद्भ्यः प्रेरणादायकः स्फूर्तिप्रदश्चास्ति । यास्कसमयादेवास्य गम्भीरार्थस्य व्याख्या नानासम्प्रदायस्य वेदज्ञाः स्व-स्वदृष्टचा कृतवन्तः । अद्याप्यस्य मन्त्राणां तात्पर्यं ज्ञातुं ज्ञापयितुञ्च बहुविधाः शैल्यः पुरस्कृता भवन्ति । प्रत्येकाशैली एकस्य नवीनार्थस्योन्मेषं करोति । वेदः अस्मिन् विशाले ब्रह्माण्डे विभिन्नरूपेण जागरूकेषु जनेषु तथा बहुविधाऽभिव्यक्तिषु प्रकाशशीलः एकोऽचिन्त्यशक्त्याः शाब्दिकोन्मेषो वर्णमयो विग्रहश्चास्ति । तत्तु तर्ककर्कश-पद्धतौ व्याख्यात-सिद्धान्तस्य समुच्चयो नास्ति, अपितु प्रातिभचक्षुषा साक्षात्कृतानां तथ्यानां प्रशंसनीयः पुञ्जोऽस्ति । वैदिकयुगस्य मनीषिणां तथा लोकातीताऽऽर्षचक्षु-र्मण्डितानां द्रष्टॄणां वाणीषु सार्वदैशिकनैतिकतायास्तथा सार्वकालिकधर्मस्य च मूलप्रेरणायाः स्फुरणं भवति । अद्याप्यस्मिन् विश्वमानवान् सन्मार्गे नीयमानस्य क्षमताऽस्ति । वैदिकानाम् ऋषीणां दृशि धर्म एव जीवनयात्राया मुख्योपयोगि साधनमस्ति । **'सुगा ऋतस्य पथाः'** ( ऋ० ८।३।१३ ) । धर्मस्य मार्ग सुगमं वर्त्तते । **'सत्यस्य नावः सुकृतमपीपरत्'** ( ऋ० ९।७३।१ ) । सत्यसनौर्धार्मिकं जनं पारं नयति । वेदः अध्यात्मना सह व्यवहारष्य, परलोकेन सह इह लोकस्य मञ्जुलं सामञ्जस्यं स्वकीयेषु भव्योपदेशेषु प्रस्तौति । वेदस्य सर्वातिशायी श्लाघनीयः धर्मो यज्ञोऽस्ति । यज्ञ एव मानवमन्यमानवं प्रति सौहार्दसूत्रे बन्धन-कर्त्तारं कर्म अस्ति । वेदो मानवान् कर्मठतायाः, देशभक्त्याः, परोपकारितायाश्च शिक्षां ददाति । स्वावलम्बिनो जनानां मूलमन्त्रस्य रहस्यं प्रदर्शयत्ययं वेदः । **'न ऋते श्रान्तस्य सख्याय देवाः'** ( ऋ० ४।३३।११ ) । आत्मपरिश्रमं विना देवानां मैत्रीं प्राप्तुं न शक्यते । संगृहीतस्य सम्पदः विभाजनमपि वेद एव शिक्षयति—**'शतहस्तः समाहार सहस्रहस्तः संकिर'** ( अथर्व० ३।२४।४ ) । शत-हस्तैः सङ्ग्रहं कुरु तथा सहस्रहस्तैः विभाज्यताम् ।

**'एकं सद्विप्रा बहुधा वदन्ति'** इत्येतस्य मन्त्रस्य शिक्षको वेदः अद्वैतवादस्य महनीयोपदेष्टा ग्रन्थरत्नमस्ति । जीवमात्रे एकस्यैव चैतन्यस्य सञ्चारो भवति । प्राणिमात्रेण परस्परं सुसम्पृक्तेन भवितव्यम् । अस्या भावनायाः प्रेरकस्य अथर्वस्य ऋषेर्वाक्यमिदं वर्तमानकालिकमनुष्येभ्य आदर्शवाक्यमस्ति—

**'सहृदयं सामनस्यमविद्वेषं कृणोमि वः ।**
**अन्योऽन्यमभिनवतवत्सं जातमिवाघ्न्याः ॥'**

( अथर्वपिप्पलादः ५।१९।१ )

संज्ञानसूक्तमिदं ( अथर्व० ३।३० ) मानवसमाजाय श्लाघनीयमादर्श-श्चास्ति । अस्य भावस्यावबोधनं तदनुकूलाचरणञ्च सांसारिकेभ्यो हितकराय कल्याणसाधनाय च भवति । वेदे विश्वबन्धुत्वस्य परिकल्पना एकं विलक्षणं

वस्त्वस्ति। वेदो मानवमात्रेभ्यः कल्याणकरीं भावनां अग्रेसारयति। वैदिकप्रार्थनासु न केवलं व्यष्टच्यै अपितु समष्टच्यै माङ्गलिकभावनाया स्पष्टं विशदञ्च निदर्शनमस्ति। वैदिकऋषिर्विश्वकल्याणाय मङ्गलाय च प्रार्थनां करोति। मन्त्राणां प्रामाण्यमेवास्मिन् विषये अक्षुण्णमस्ति—

**'विश्वानि देव सवितुर्दुरितानि परासुव।**
**यद् भद्रं तन्न आसुव।'** ( शु० य० ३०। ३ )

विश्वशान्त्यास्तथा विश्वबन्धुत्वस्य चोदात्तभावनया संश्लिष्टेषु वैदिकमन्त्रेषु प्राणिमात्रेषु परस्परसौहार्दस्य, मित्रतायाः साहाय्यस्य च भावनायाः समुपलब्धिः स्वाभावाविकैवास्ति—

**'मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।**
**मित्रस्य चक्षुषा समीक्षामहे।'** ( शु० य० ३६।५८ )

वेदः अपौरुषेयोऽस्ति। वेदो नित्योऽस्ति। वेदो रहस्यमयोऽस्ति। वेदस्य ज्ञानं गम्भीरमस्ति। स विश्वे सर्वत्र व्यापकस्य परमचैतन्यस्याभामयः शाब्दिको विग्रहोऽस्ति। स देशातीतः कालातीतश्चास्ति। स न केवलमेकस्य कस्यापि समाजस्य सम्प्रदायस्य च ग्रन्थोऽस्ति। स तु विश्वमानवानां कल्याणाधायको ग्रन्थरत्नोऽस्ति। व्यवहारस्योपदेष्टाऽस्ति। सः अध्यात्मविषयकस्य शिक्षकोऽस्ति। ज्योतिर्मयस्य विभोरयं प्राणिभ्यो मधुरः सन्देशोऽस्ति। तस्योपासना तस्यानन्तस्य सर्वशक्तिमतः अचिन्त्यशक्तिशालिनो भगवतः मङ्गलमये साक्षात्कारकरणे कृतकार्या भवति।

**'समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति॥'** —ऋ० १०।१९१।४

**ॐ तत् सद् ब्रह्मार्पणमस्तु।**

**सिद्धिर्वस्वङ्कचन्द्रेऽब्दे ज्येष्ठे चन्द्रात्मजे सिते।**
**पूर्णत्वमगमद्ग्रन्थश्चार्द्रायां प्रतिपत्तिथौ॥**
**वैदिकवाङ्मयस्येदं वृत्तं यल्लिखितं मया।**
**तद्भूयात्परमाप्रीत्यै साम्बविश्वेशयोः सदा॥**

**शिवसङ्कल्पमस्तु।**

---

# सन्दर्भ-ग्रन्थानां सूची

## संस्कृत-ग्रन्थाः

१ ऋग्वेदः ( सायणभाष्यम् )—मैक्समूलरसम्पादितः, लण्डन, चौखम्बा प्रकाशन, वाराणसी १९६६ ई० ।
२ ऋग्वेदभाष्यभूमिका—चौखम्बा विद्याभवन, वाराणसी ।
३ ऋक्तन्त्रम्—सूर्यकान्तसम्पादितम्, लाहौर ।
४ मैत्रायणीसंहिता—श्रेडरसम्पादिता, लाइपज़िग १८८८ ।
५ तैत्तिरीयसंहिता—महादेवशास्त्रीसम्पादिता, मैसूर १८८४ ई० ।
६ वाजसनेयिसंहिता—वेबरसम्पादिता, बर्लिन १८५२ ई० तथा वासुदेवशास्त्रीसम्पादिता, निर्णयसागर, बम्बई, १९२९ ।
७ काठकसंहिता—श्रेडरसम्पादिता, लाइपज़िग, १९०० ई० ।
८ सामवेदः—थ्योडरवेनफेसम्पादिता, लाइपज़िग १८४८ ई० ।
९ शुक्लयजुर्वेदसंहिता—महर्षिदेवरात, वाराणसी, १९७३ ई० ।
१० अथर्ववेदः—राथ-ह्विटनीसम्पादितः बर्लिन १८५६, सातवलेकर, पारडी ।
११ कपिष्ठलकठसंहिता—डॉ० रघुवीरसम्पादिता, लाहौर, १९३२ ई० ।
१२ ऐतरेयब्राह्मणम्—ए० हॉग-सम्पादितम्, बम्बई १८६३ ई० सत्यव्रतसामश्रमीसम्पादितम्, कलकत्ता १८९५, सायणभाष्यसहितम्, आनन्दाश्रम, पूना ।
१३ आर्षेयब्राह्मणम्—वर्नेलसम्पादितम्, मंगलोर १८७६, तिरुपति १९६७ ।
१४ पञ्चविंशब्राह्मणम्—आनन्दचन्द्रसम्पादितम्, कलकत्ता १८७० ई० ।
१५ शतपथब्राह्मणम्—वेबरसम्पादितम्, लाइपज़िग १९२४, चौखम्बा १९६५ सभाष्यसंवलितसंस्करणम्, वेंकटेश्वर, बम्बई १९४० ।
१६ कौषीतकिब्राह्मणम्—लिंडेनर-सम्पादितम्, जेना १८८७ ई० ।
१७ तैत्तिरीयब्राह्मणम्—सामशास्त्रीसम्पादितम्, मैसूर १९२१ ई० ।
१८ वंशब्राह्मणम्—सत्यव्रतसामश्रमी, कलकत्ता १८९२ ई०, केन्द्रीयसंस्कृतविद्यापीठ, तिरुपति १९६५ ई० ।
१९ दैवतब्राह्मणम्—जीवानन्द कलकत्ता, केन्द्रीय सं० वि०, तिरुपति १९६५ ।
२० जैमिनीयतवलकारब्राह्मणम्—रघुवीरसम्पादितम्, लाहौर १९३७ ई० ।
२१ जैमिनीय-उपनिषद्ब्राह्मणम्—ओएर्टेल सं० १९२१ ।
२२ छान्दोग्यब्राह्मणम्—दुर्गामोहनभट्टाचार्यसम्पादितम्, कलकत्ता, १९५८ई० ।
२३ काण्वशतपथब्राह्मणम् ( प्रथमकाण्डम् )—कैलेण्डसम्पादितम्, लाहौर ।
२४ संहितोपनिषद्ब्राह्मणम्—वर्नेलसम्पादितम्, मंगलोर, तिरुपति १९६५ई० ।
२५ गोपथब्राह्मणम्—गास्ट्रासम्पादितम्, लीडेन, १९१९ ई० ।
२६ अथर्वणोपनिषद्—जैकबसम्पादिता, बम्बई १८९१ ई० ।

२७ ऋक्प्रातिशाख्यम्—मङ्गलदेवशास्त्रीसम्पादित, इलाहाबाद, १९३१।
२८ अथर्वप्रातिशाख्यम्—सूर्यकान्तशास्त्रीसम्पादितम्, लाहौर १९३९ ई०।
२९ काठकसङ्कलनम्—सूर्यकान्तशास्त्रीसम्पादितम्, लाहौर १९४३ ई०।
३० तैत्तिरीयप्रातिशाख्यम्—रंगाचार्य, मैसूर १९०६। माहिषेयभाष्यसहितम्, मद्रास।
३१ वाजसनेयिप्रातिशाख्यम्—युगलकिशोर पाठक, बनारस १८८८ ई०।
३२ आश्वलायनश्रौतसूत्रम्—मङ्गलदेवशास्त्री, बनारस १९३८ ई०।
३३ आश्वलायनगृह्यसूत्रम्—स्ट्रेन्जलर, लाइपजिग १८६४, हरदत्तभाष्यसहित त्रिवेन्द्रम्, १९२३, गार्ग्यनारायणटीका, कलकत्ता।
३४ अग्निवेश्यगृह्यसूत्रम्—रविवर्मा, त्रिवेन्द्रम् १९४० ई०।
३५ आपस्तम्बगृह्यसूत्रम्—चिन्नस्वामी, बनारस १९२८ ई०, विण्टरनिट्ज वियना १८८७ ई०, महादेवशास्त्री, मैसूर १८९३ ई०।
३६ आपस्तम्बधर्मसूत्रम्—महादेवशास्त्री, मैसूर।
३७ आपस्तम्बशुल्बसूत्रम्—श्रीनिवासाचार्य, मैसूर १९३१ ई०।
३८ आपस्तम्बश्रौतसूत्रम्—आर० गार्वे, कलकत्ता १८८२, चिन्नस्वामी, बड़ौदा १९५५ ई०।
३९ बैजवापगृह्यसूत्रम्—भगवदत्त, लाहौर १९२८ ई०।
४० बौधायनगृह्यसूत्रम्—श्रीनिवासाचार्य, मैसूर, १९०४ ई०।
४१ बौधायनधर्मसूत्रम्—चिन्नस्वामी, बनारस १९३४ ई०।
४२ बौधायनपितृमेधसूत्रम्—कैलेण्ड, लाइपजिग १८९६ ई०।
४३ बौधायनशुल्बसूत्रम्—कैलेण्ड, कलकत्ता १९१३ ई०।
४४ बौधायनश्रौतप्रवरम्— ,, ,, ,, ।
४५ बौधायनश्रौतसूत्रम्— ,, ,, १९१३ ई०।
४६ भरद्वाजगृह्यसूत्रम्—सोलोमन, लीडेन १९१३ ई०।
४७ भरद्वाजश्रौतसूत्रम्—डॉ० काशीकर, पूना १९६४ ई०।
४८ द्राह्यायणगृह्यसूत्रम्—गणेशशास्त्री, पूना १९१४ ई०।
४९ द्राह्यायणश्रौतसूत्रम्—जे० रायटर, लण्डन १९०४ ई०।
५० कात्यायनश्रौतसूत्रम्—कर्कभाष्यम्। विद्याधरशर्मा, चौखम्बा, बनारस १९२८।
५१ कात्यायनशुल्बसूत्रम्—चौखम्बा प्रकाशन, बनारस १९०९ ई०।
५२ कौशिकगृह्यसूत्रम्—चिन्नस्वामी, मद्रास १९४४ ई०।
५३ काठकगृह्यसूत्रम्—कैलेण्ड, लाहौर १९२५ ई०।
५४ क्षुद्रसूत्रम्—कैलेण्ड, लाइपजिग १९०८, राजाराम, लाहौर १९२१ ई०।
५५ गोभिलगृह्यसूत्रम्—सी० भट्टाचार्य, कलकत्ता १९३५, यू० एन० सिंह, मुजफ्फरपुर।

५६ गौतमधर्मसूत्रम्—सेण्टेक्षलर, लण्डन १८७६, श्रीनिवासाचार्य, मैसूर १९१७।

५७ गौतमपितृमेधः—कैलेण्ड, लाइपज़िग १८७६ ई०।

५८ जैमिनीयगृह्यसूत्रम्—कैलेण्ड, लाहौर १९२२ ई०।

५९ जैमिनीयश्रौतसूत्रम्—डी० गास्ट्रा, लीडेन १९०६ ई०।

६० जैमिनीयसूत्रपरिशिष्टम्—गास्ट्रा, लीडेन १९०६ ई०।

६१ जैमिनीयसूत्रकारिका— ,, ,, १९०६ ई०।

६२ जैमिनीयश्रौतसूत्रम्— ,, ,, १९०६ ई०।

६३ लाटचायनश्रौतसूत्रम्—कलकत्ता १९०२, चौखम्बा १९३३ ई०।

६४ मानवगृह्यसूत्रम्—गायकवाड ओ० सीरीज, बडौदा १९२६ ई०।

६५ मानवश्रौतसूत्रम्—नावर ( Knaur ), सेण्ट पीटर्सवर्ग १९०० ई०।

६६ पारस्करगृह्यसूत्रम्—चौखम्बा, वाराणसी।

६७ पिङ्गलसूत्रम्—जीवानन्द १८९२; निर्णयसागर, बम्बई।

६८ वाराहगृह्यसूत्रम्—रघुवीर, लाहौर १९३१ ई०।

६९ वसिष्ठधर्मसूत्रम्—फुहरेर, बम्बई १९१६ ई०।

७० बाधूलश्रौतसूत्रम्—कैलेण्ड १९२४-२८ ई०।

७१ वैखानसगृह्यसूत्रम्—कैलेण्ड, कलकत्ता १९२६ ई०।

७२ वैखानसश्रौतसूत्रम्— ,, ,, १९४१ ई०।

७३ वैखानसधर्मसूत्रम्—रंगाचार्य, मैसूर; मद्रास।

७४ वैतानससूत्रम्—रिचर्ड गार्वे, लण्डन १८७८ ई०।

७५ शाङ्ख्यायनगृह्यसूत्रम्—ओल्डेनवर्ग, लाइपज़िग १८७८ ई०।

७६ हिरण्यकेशिगृह्यसूत्रम्—क्रिस्टे, वियना १८८५ ई०।

७७ सत्याषाढश्रौतसूत्रम्—आनन्दाश्रम सीरीज, पूना १९०७ ई०।

७८ शाङ्ख्यायनश्रौतसूत्रम्—हिलेब्राण्ट, कलकत्ता १८८२ ई०।

७९ ऋग्वेदानुक्रमणी—मैकडोनल, आक्सफोर्ड १८८६ ई०।

८० अथर्ववेदीय-बृहत्सर्वानुक्रमणी—रामगोपाल, लाहौर १९२२।

८१ सामवेदीय-सर्वानुक्रमणी—( नैगेयीशाखा ) वेबर, लाइपज़िग १८८५।

८२ शुक्लयजुः-सर्वानुक्रमणी—बनारस १९९३ ई०।

८३ अथर्व-परिशिष्टम्—बोलिंग तथा जेगलिंग, लाइपज़िग १९०९ ई०।

८४ शिक्षासङ्ग्रहम्—बनारस संस्कृत सीरीज, बनारस १८७३ ई०।

८५ निरुक्तम्—चौखम्बा, वाराणसी।

८६ बृहद्देवता—मैक्डोनल, हारवर्ड १९०४।

---

## हिन्दी के सहायक ग्रन्थ

१ आर्यों का आदि देश—डॉ० सम्पूर्णानन्द, भारती-भण्डार, इलाहाबाद।
२ आर्कटिक होम इन द वेदाज—बालगंगाधर तिलक, पूना।
३ ऋग्वेदिक इण्डिया—डॉ० अविनाशचन्द्र।
४ एन्शियण्ट इण्डियन हिस्टोरिकल ट्रेडीशन ( हि० अ० ) पार्जिण्टर।
५ कैम्ब्रिज हिस्ट्री आफ इण्डिया—प्रथम भाग।
६ गीता-रहस्य—तिलक, पूना।
७ धर्मशास्त्र का इतिहास—काणे, हिन्दी समिति, उत्तरप्रदेश, लखनऊ।
८ प्राचीन भारतीय साहित्य—विण्टरनिट्ज, प्रथम भाग का प्रथम खण्ड, मोतीलाल बनारसीदास, वाराणसी।
९ भारतीय ज्योतिष का इतिहास—डॉ० गोरखनाथ।
१० भारतीय ज्योतिषशास्त्र—शङ्करबालकृष्ण दीक्षित।
११ भारतीय दर्शन—डॉ० पारसनाथ द्विवेदी, श्रीराम मेहरा एण्ड कम्पनी, आगरा।
१२ भारतीय दर्शन—डॉ० राधाकृष्णन्, राजपाल एण्ड सन्स, दिल्ली।
१३ वेदकालीन समाज—डॉ० शिवदत्त ज्ञानी, चौखम्वा विद्याभवन, वाराणसी।
१४ वैदिक वाङ्मय का इतिहास—भगवद्दत्त वैदिक, प्रणव प्रकाशन, दिल्ली।
१५ वैदिक साहित्य—रामगोविन्द द्विवेदी, भारतीय ज्ञानपीठ, काशी।
१६ वैदिक साहित्य और संस्कृति—आचार्य बलदेव उपाध्याय, शारदा संस्थान, ३७, रवीन्द्रपुरी, वाराणसी।
१७ वैदिक वाङ्मय का इतिहास—रमाकान्त शास्त्री, चौखम्वा विद्याभवन, वाराणसी।
१८ वैदिक साहित्य का इतिहास—डॉ० रामकुमार, साहित्य भण्डार, मेरठ।
१९ वैदिक साहित्य और संस्कृति—वाचस्पति गैरोला, चौखम्बा संस्कृत प्रतिष्ठान, नई दिल्ली।
२० वैदिक साहित्य का इतिहास—डॉ० व्रजकिशोर सिंह, विनोद पुस्तक मन्दिर, आगरा।
२१ आचार्य सायण और माधव—आचार्य बलदेव उपाध्याय, वाराणसी।
२२ ऋग्वेदिक आर्य—राहुल सांकृत्यायन।
२३ नारदीयसूक्त—डॉ० सम्पूर्णानन्द।
२४ वैदिक साहित्य—पब्लिकेशन डिविजन, दिल्ली।
२५ वैदिक साहित्य—रामगोविन्द त्रिवेदी।
२६ संस्कृति के चार अध्याय—रामधारी सिंह 'दिनकर', दिल्ली।
२७ संस्कृत साहित्य का इतिहास—प्रथम भाग—मैक्डोनल। चौखम्वा विद्याभवन, वाराणसी।

२८ संस्कृत साहित्य का वृहद् इतिहास—चौखम्बा अमरभारती प्रकाशन, वाराणसी ।
२९ संस्कृत साहित्य का इतिहास—आचार्य बलदेव उपाध्याय, बाराणसी ।
३० हिन्दू-राजतंत्र—काशी प्रसाद जायसवाल ।

---

## Reference Books in English

1 History of Ancient Sanskit Literature : F. Max Muller.
2 History of Indian Literature : A. Webber.
3 History of Indian Literature : ( 2 vols. ), Winternitz.
4 A History of Sanskrit Literature : A. A. Mac Donell.
5 A New History of Sanskrit Literature : Krishnachaitanya.
6 Survey of Sanskrit Literature : C. Kunhan Raja.
7 Thirteen Principal Upnishadas : S. Radhakrishnan.
8 Veda-Brahman : A. B. Keith.
9 Vedic-Index : A. B. Keith & A. A. Mac Donell.
10 Aitareya Brahman : Hog.
11 Vedic. Grammar : MacDonell.
12 Ghates Lectures on tne Vedas : Ghate.
13 The Call of the Vedas : A. C. Bose.
14 History of Indian Culture and Civilization ( Vedic Period ) Bharatiya Vidya Bhawan, Bombay.
15 Advanced History of India : Dutta, Mazumdar, Roy-Choudhury.
16 Religion of and Philosophy the Vedas : A. B. Keith.
17 Vedic Mythology : A. A. MacDonell.
18 The Religions of India : A. Barth. London, 1882.
19 Mythology of Hindus : Goleman, London, 1832.
20 'Brahman', In Encyclopedia Britanica : H. J. Eggelinc.
21 Indian Thought : Past and Present : R. W. Frazer. London 1915.
22 The Religions of India : E. W. Hopkins. Boston 1895.
23 Asiatic Studies : A. C. Lyall. 2 Series, London 1882-99
24 Sanskrit Literature : A. A. MacDonell London, 1900.
25 Indian Theism : N. Mac Nicol. Oxford, 1915.

26 History of Religions : G. E. Moore. Edinburgh, 1913.
27 Myths of the Hindus and Buddhists : M. E. Noble and A. K. Coomaraswamy. London 1873.
28 La Religion Vedique : A. Bergaigne. 4 Vols. Paris, 1817-83.
29 The Religion of the Veda : M. Bloomfield, New york, 1908.
30 Vedische Studien : R. Pischel and K. Geldner. 3 vols. Stuttgart, 1887-1901
31 Cosmology of the Rigveda : H. F. Wallis, London, 1817.
32 Varuna und Mitra : A. Hillebrandt. Breslau, 1877.
33 Some Modern Theories of Religon and the Veda in JRAS : A. B. Keith. 1907,
34 India : What Can It Teach Us ? F. Max Muller, London 1883.
35 Vedic Mysticism ( International Acadmy of Indian Culture Nagpur ) : Raghuvir.
36 Indological Studies : B. C. Law. Calcutta 1952.
37 Religions of the East : E. I. James.
38 Early Indian Religions Thought : P. D. Mehta. London. 1956.
39 A History of Indian Literature from Vedic Times to the Present Day. H. H. Cowen. Appleton, New York. 1931.
40 Vedic Bibliography : R. N. Dandekar.
Vol. I Karnat Publishing House, Bombay 1946
Vol II University of Poona. 1961
41 Vedic Religion : K. Chattopadhyaya. ( B.H.U. 1975 )

---